# विधानपारिजातस्य द्वितीयखण्डे

## उद्धृतानामृषीणां संग्रहकाराणाञ्च अकारादि-वर्णानुक्रमेण नामनिर्घण्टः ।





### अ





### आ

उ



ऋ—



क—

४ । ९६,१४ । १०५,६ । ११९,६ । १२०,१५ । १२१, ९ । १२३,८ । १२४,१८ । १६२,१६ । १६३,६ । १६७,१६ । १६४,१२ ॥

१७०,३,१४ । १७७,१४ । १७८,१ । १९१,१५ ॥

१९७,७,११ । २१३,१२ । २१८,४ । २२६,७ । २३७, १ । २३८,१७ । २४१,१४ । २५७,१,८ । २६५,८ । २६८,१६ । २६९,१५ । २७३,२ । २७७,३ । ३०४, ८,२१ । ३०६,१६ । ३०८,११ । ३०९,२१ । ३१४, ६ । ३२२,५ । [illegible],१६ । ४३०,९,१० । ४३२,६ । ४४०,२ । ४४१,२ । ४४४,११ । ४४५, ५ । ४४६,१,१५ । ४७२,२० । ५४४,१० । ५५२, १८ । ५५५,५ । ५८७,९ । ५९१,१० । ५९६,८ । ५९९, ९ । ६०३,१७ । ६०५,१७ । ६२३,२० । ६६२,१७, २० । ७७१,१८ । ७७२,१८ । ७७५,६ । ७८८,१० । ७९२,१३ । ८०२,१० । ८१३,१६ ।

**कारिकाकारः** ४५,१८ । ११२,१२ । १२३,२० । १२५, १४ । १२७,१० । १२८,५ । १३५,९ ।

**कालनिर्णयदीपिकाकारः** ५५२,४ ।



**काश्यपः** ४५८,२ ।

**कार्ष्णाजिनिः** २६३,११ । २६४,१४ । ३१३,२२ । ५५६, १ । ५९१,१९ । ६००,२२ । ७८६,१७ । ७९१,१३ ।

## ग



## च

## छ



## ज



## त



## द

## ध



## न

प

## म

## य

## ल

## शं

स

## ग्रन्थनामनिर्घण्टः ।

### अ



### आ

## ई

## ख



## ग

## च



## छ



## ज

## ड



## त



## द

## ध

## न

## प

## ब

## भ

म

## य



## र

ल



व

श

## ष

## स

## भ

४८३,२ । ४८४,१ । ४८५,१८ । ४८८,५,१८ । ५२१, ५२८,१ । ५२८,५ । ५३०,८ । ५३४,२१ । ५४१,१६ । ५४२,६ । ५४३,१० । ५४६,१२ । ५४८,४ । ५५१, २० । ५५६,११,१३ । ५६५,१ । ५६६,१ । ५६७, ८ । ५६८,१८ । ५७४,२० । ५७७,३ । ५८१,२१ । ५८६,१० । ५८८,२१ । ५८८,१४ । ५९०,१८ । ५९३,११ । ५९४,२२ । ५९९,३,५ । ६००,१२ । ६०६, ८ । ६०७,४ । ६०८,९ । ६१०,२,४ । ६११,१७ । ६२०,१७,२० । ६२६,१४ । ६३१,१४ । ६३९,२ । ६४०,५ । ६५५,१३ । ६५६,३ । ६५८,१९ । ६५९, ११ । ६६५,१ । ६७२,९ । ६७४,५ । ६७६,१८ । ६७८,३,९ । ६७९,९ । ६८८,१५ । ६९०,१ । ६९१, १ । ६९३,६ । ६९६,१३ । ७०३,२० । ७०५,१७ । ७०८,१५ । ७१०,४,७ । ७१७,१२ । ७२२,६,१६ ॥ ८५०,६ ।

## विषयसूची ।



### अ

प

फ



ब

ह

# शुद्धिपत्रम्



५०३ पृष्ठे १७ पंक्तौ —

तप्तशङ्खचक्रादिमुद्राधारण प्रकरणे —

प्रतेविष्णो अजचक्रे इत्यादिकः सामवेदीयोमन्त्रोऽन्विष्टोऽपि नोपलब्ध इति यल्लिखितं तदादर्श पुस्तकानामशुद्धेः संस्कर्तुश्च प्रमादस्य विजृम्भितं। यतोऽसौ मन्त्रो नियतमन्विष्यमाणश्चिरा न्निर्णयसिन्धावुपलब्धः।

मन्त्रोयथा —

प्रतद्विष्णो अजचक्रे सुतप्ते
जन्माम्भोधीतसंवे चर्षणीन्द्राः।
मूले बाह्वोर्दधन्ये पुराणास्तु
लिङ्गाख्यङ्के ततायुधान्यर्पयन्त॥

इति

मन्त्रमिममुपलभ्य सानन्दा भूयोऽपि सामवेदं निपुण मन्विष्यन्तोऽपि यदेनं नाधिगतवन्तस्तेन नितरां दुःखं विस्मयं च प्राप्तावयमिति।

## शुद्धिपत्रम्

अत्र आह्निक मध्याह्नादयः कृतणत्वाः पूर्वाह्ण पराह्णाद-यश्च शब्दाः प्रायोऽकृतणत्वाएव प्रयुक्ताः ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| सुवर्णार्णा | सुवर्णा | २ | १६ |
| उदक्याः | उदक्या | ४ | २ |
| परिक्रिया | परिष्क्रिया | ८ | १ |
| सपिषा | सर्पिषा | ३३ | ८ |
| पुन्य | पुन | ६० | ११ |
| समस्यन्न | समस्येन | ८१ | २ |
| दग्धां | दग्धा | १०६ | १४ |
| प्रयोगेन | प्रयोगेण | १११ | ४ |
| महैश्वर्य्यं | महैश्वर्य्ये | १३७ | १६ |
| शौचाचमनम् | शौचाचमनम् | १६० | २ |
| प्रदक्षिणम् | प्रदक्षिणाम् | २८४ | ११ |
| पालाशतो | पलाशतैः | २८७ | १८ |
| समेषु | ममेषु | २९९ | १९ |
| शारदेशे च | शारदेशे | ३०० | ११ |
| भिया | भया | ३०२ | १९ |
| मनुष्यान्न | मनुष्याणा | ३०४ | ९ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| मौतो | भौतो | ३०६ | १४ |
| सुहिम्न | सुहिम्न | ३०७ | १ |
| चनकं | चणकं | ३०८ | १६ |
| संस्पष्टन | संस्पष्टेन | ३०८ | २० |
| समुद्धृत्य | समुद्धृत्य | ३११ | २० |
| कान्वादे | काण्वादे | ३१२ | २० |
| मूतेभ्य | भूतेभ्य | ३१६ | १२ |
| शूद्रानां | शूद्राणां | ३१८ | १७ |
| मन्द्रांश | मन्त्रांश | ३१८ | ७ |
| लोहाभिषं | लोहामिषं | ३४४ | १२ |
| चतुर्थीर्घ्यं | चतुर्थ्यार्घ्यं | ३५७ | १७ |
| खुररज | खुररज | ३६६ | ६ |
| वीदुम्बर्यां | वौदुम्बर्यां | ३७५ | ८ |
| ऽभिहिता | ऽभिहित: | ३८६ | १० |
| पश्यति | पश्यति | ३८८ | ६ |
| वैषम्य | वैषम्य | ४१५ | ३ |
| मध्यमं | मध्यमं | ४२० | ७ |
| द्वयपर्णे | द्विपर्णी: | ४२५ | ११ |
| भर्तुनतुम्रा | भर्तृनतुम्रा | ४३० | ६ |
| चनकान् | चणकान् | ४३० | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| विदाममतम् | विदाम्मतम् | ४३५ | २० |
| द्वादश्यावेव | द्वादश्यामेव | ४३६ | १२ |
| यदीच्छत् | यदीच्छेत् | ४३७ | १२ |
| द्वेवादश्युप | द्वेकादश्युप | ४३७ | १० |
| सहानवम्यु | महानवम्यु | ४६५ | १० |
| साधवा | माधवा | ५०१ | ७ |
| अभूनां | ऋतूणां | ५०८ | ८ |
| पारम्पर्य्यं | पारम्पर्य्यं | ५११ | १२ |
| हस्तानो | हस्तासो | ५१४ | १७ |
| सामनन्ति | मामनन्ति | ५१५ | १० |
| मिथुबस्थं | मिथुनस्थं | ५३२ | ८ |
| त्रिभि | त्रिभिः | ५४८ | ५ |
| सिवाये | सिवार्थें | ५५५ | ५ |
| वह्निपूराणे | वह्निपुराणे | ५५८ | १२ |
| जन्मष्टमी | जन्माष्टमी | ५५८ | १३ |
| जयन्त्युपरासे | जयन्त्युपवासे | ५५८ | १४ |
| जम्नाष्टमी | जन्माष्टमी | ५५८ | १६ |
| पूर्वेऽह्नि | पूर्वेऽह्नि | ५६२ | १ |
| यद्दैकव | यद्येकव | ५८७ | २१ |
| अन्वष्टकासु | अन्वष्टकासु | ६०६ | १२ |
| त्रित्यं | त्रितयं | ६१० | १४ |
| मृत्तिकाभि | मृत्तिकाभि | ६२४ | २० |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| सन्ध्: | मन्त्र: | ६६१ | ९ |
| द्रोगिनी | द्रोगिणीं | ६२८ | २ |
| सारवो | सावरो | ६३० | १६ |
| स्त्रिखे | लिखे | ६३२ | १३ |
| जागरेनिश्चि | जागरेन्निश्चि | ६४७ | १० |
| विष्येऽपि | भविष्येऽपि | ६८५ | ३ |
| यश्मे | यं श्मे | ७२४ | १७ |
| क्षाभ | क्षोभ | ७३२ | १० |
| यमुनाय | यमुनायां | ७३२ | १४ |
| संख्य | संख्या | ७३३ | ६ |
| कृष्णवेण्य | कृष्णवेण्यां | ७३३ | १३ |
| भागीरथ | भागीरथी | ७३३ | १५ |
| मासानात् | मासोनात् | ७४२ | २१ |
| कौर्म | कौर्मं | ७४७ | १४ |
| कत्तव्यम् | कर्त्तव्यम् | ७५० | ५ |
| माप्राप्यैव | मपाप्यैव | ७५० | १५ |
| मिथुनादिवा | मिथुन | ७५९ | १० |
| दत्तन | दत्तेन | ७७१ | ८ |
| जने | जनने | ७८६ | १४ |
| आमश्राद्ध | आमश्राद्धे | ७९४ | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| पुष्पान्तरा | पुष्पाष्टारा | ७८५ | १ |
| दामश्राद्ध | दामश्राद्धे | ७८७ | १४ |
| इयि | इति | ८०० | १७ |
| समासेव | समासेन | ८०७ | ८ |
| तद्दैजात्वं | तद्दैजात्यं | ८२४ | ११ |
| त काल | तंकाल | ८२४ | १६ |
| स्वर्ग | स्वर्गं | ८२५ | १३ |
| यथाश्राद्धं | यथाश्रद्धं | ८२७ | १२ |
| आप्याय | आप्यायस्व इति | ८२८ | १ |
| इति स्वेति | इति | ८२८ | २ |
| परालाका | परोलोको | ८४० | १० |
| सन्निधो | सन्निधौ | ८४८ | ४ |
| मिदो | मिन्दो | ८५५ | १० |
| सुधीः | सुधीः | ८६० | ८ |
| सम्मज्य | सम्मृज्य | ८६८ | १४ |
| पुराषे | पुराषे | ८६८ | २ |

८६८ पृष्ठे २४ पङ्क्तौ अभिनाविति अधिकं पदं मुद्रयितुः प्रमादात् मुद्रितमभूत्। सन्ति चात्र दोषान्तराणि संस्कर्त्तुः प्रमादजातानि तानि विद्वद्भिः कृपया परिशोधनीयानीति सविनयं प्रार्थ्यते मया।

तथा च कालिदासः

"याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा।"

इति

भट्टपल्लीवास्तव्येन मूलाजोड़ संस्कृतविद्यालयाध्यापक-चरेण कलिकाता राजकीय संस्कृतविद्यालय संस्कृत साहित्यालङ्कारा-ध्यापकेन।

विद्यारत्नोपाधिकेन

श्रीताराप्रसन्नशर्म्मणा।

# विधानपारिजातः।

## तृतीयः स्तवकः।

(प्रथमस्तवकात्परम्)

अथ विवाहे उपनयने वा उपक्रान्ते यदि कुमारस्य वधूवरयोर्वा माता रजस्वला तदा विधानमुच्यते।

तथा च शान्तिपटले।

विवाहे व्रतबन्धे च माता यस्य रजस्वला।
मृत्युश्च जड़ता ज्ञेया क्रमान्मनुजसत्तम।
तत्र शान्तिं प्रवक्ष्यामि सर्व्वेषां हितकारिणीम्॥
यस्मिन् दिने समुत्पन्नं मातुर्दोषकरं रजः।
तस्माद्दिनात्समारभ्य कुर्य्यान्मृत्युञ्जयं* जपम्॥
चतुर्थेऽह्नि सम्प्राप्ते पञ्चमे वा समाहितः।

---

* मृत्युञ्जयं मृत्युञ्जयमन्त्रं प्रथमस्तवकस्य ४०० पृष्ठे प्रदर्शितम्।

कुर्य्याच्छिवार्चनं विद्वान् पायसेन यथाविधि ॥
मण्डकैः पूरकैश्चापि तण्डुलैः शर्कराम्वितैः ।
भक्तेन घृतयुक्तेन पक्वान्नैः पूजयेच्छिवम् ॥
अधस्तात्लिङ्गतः कार्य्या पूरकैर्मोदकैस्तथा ।
भक्तस्य परिधिं कृत्वा पायसेनार्चयेच्छिवम् ॥
दीपान् षोड़शसंख्याकानाज्यप्रज्वलितान् शुभान् ।
अर्पयेद्देवदेवाय उपचारैः समन्वितान् ॥
प्रार्थ्य पूरुषसूक्तेन* सतूर्य्यो गृहमाविशेत् ।
तत्र स्थण्डिलमाधाय हवनङ्कारयेद्बुधः ॥
अग्निमीळेति मन्त्रेण† जुहुयादयुतं सुधीः ।
पायसेनैव साज्येन स्वगृह्योक्तविधानतः ॥
वर्णयेत्सप्तजिह्वस्य सप्तजिह्वा नरेश्वर ।
कराली लोहिता श्वेता मङ्गत्पूर्व्वा च लोहिता ।
पीता च पद्मरागा च सुवर्णाख्या तथैव च ॥
लोहिता पूर्व्वतो ज्ञेया मङ्गत्पूर्व्वा शचेर्दिशि ।
सुवर्णा दक्षिणे ज्ञेया पद्मरागा च नैर्ऋते ॥
श्वेता तु वारुणे भागे पीता वायोर्दिशि स्मृता ।
ऐशान्यां (दिशि)दिव्या विख्याता या जिह्वा जातवेदसः ॥
सुवर्णा मध्यभागे स्यात्किञ्चिद्दूधुर्मनीषिणः ।
कराली नाम सा ज्ञेया तया रक्षांसि तोषयेत् ॥

---

* प्रथमखण्डस्य १८४।१८५।१८६ पृष्ठेषु प्रदर्शितेन ।

† प्रथमखण्डस्य ११० पृष्ठे प्रदर्शितव ।

लोहितायां पिशाचाश्च यक्षे विद्वान् क्रतुश्रुती ।
महालोहितया पक्षां तृप्तिमायाति शाश्वतीम् ॥
सुवर्णया यमो देवः पन्नगाः पद्मरागया ।
श्वेतया ग्रहदेवाश्च पीतया चेटकादयः ॥

अथ जिह्वास्तोत्रम् स्कान्दे ।

नमस्ते रसने देवि तपनस्य करालिनि ।
हुते* त्वयि समश्नन्ति राक्षसा बलदर्पिताः ॥
नमस्ते लोहिते जिह्वे ज्वलनस्य सुशोभने ।
पिशाचास्तृप्तिमायान्ति हुते त्वयि हविष्यके ॥
नमस्ते रसने देवि महालोहितसंज्ञके ।
हुते त्वयि समश्नन्ति यक्षगन्धर्वकिन्नराः ॥
नमस्ते वीतिहोत्रस्य सुवर्णरसने शुभे ।
त्वयि तृप्ते यमो देवि ददाति विपुलं सुखम् ॥
पद्मरागि नमस्तुभ्यं देवपन्नगतर्पणि ।
आयते शाश्वतं† देवि हुतं त्वयि हुताशने ॥
ग्रहाणां तर्पणं देवि कुरु जिह्वे हविर्भुजः ।
हुते हविषि विप्रेश ग्रहतृप्तिर्भवेदिह ॥
चेटकाः कामदेवश्च समस्ताः कुलदेवताः ।
पीतायां हवने जाते तृप्तिमायान्ति शाश्वतीम् ॥

---

* हुते इति चार्षं, हुतायामिति पाठो युक्तः, रसनाशब्दस्य स्त्रीलिङ्गत्वात् ।

† सर्वमिति क्वचित् ।

इति जिह्वास्तुतिं कृत्वा समाप्य विधिवद्धुतिम् ।
अभिषेकं ततः कुर्य्यादुदक्याः सूनुना सह ॥
ततस्तु दक्षिणां दत्त्वा आचार्य्याय मनीषिणे ।
अन्येभ्यो ब्राह्मणेभ्यश्च यथाशक्ति समर्पयेत् ॥
कर्म्मविपाचकं दद्यात् सोपधानं सदक्षिणम् ।
प्रेतराजं समुद्दिश्य मन्त्रेणानेन सत्तम ॥

मन्त्रो यथा ।

नमस्ते धर्म्मराजाय देवदेवाय ते नमः ।
मञ्चकस्यास्य दानेन प्रीतो भव मम प्रभो ॥
यस्मिन् वस्त्रे रजो दृष्टं तद्वासस्तु परित्यजेत् ।
अपरं वस्त्रमादाय ब्राह्मणान् भोजयेत्ततः ॥
एवङ्कृते विधानेऽस्मिन् विघ्ना नश्यन्ति तत्क्षणात् ।
नन्दन्ते सुखसन्तानैः सह माघा निजे गृहे ।
अकृत्वैतद्विवाहो यः स लभेद्दुःखमेव च ॥

इति विधानमालायां विवाहे रजोदोषशान्तिविधानम् ।

संग्रहे तु प्रकारान्तरमुक्तं यथा ।

प्राप्तमभ्युदयश्राद्धं पुत्रसंस्कारकर्म्मणि ।
पत्नी रजस्वला चेत्स्यान्न कुर्य्यात्तत्पिता तदा ॥
अलाभे सुमुहूर्त्तस्य रजोदोषे ह्युपस्थिते ।
श्रियं सम्पूज्य विधिवत्ततो मङ्गलमाचरेत् ॥

चौलादावपि एवमेव ज्ञेयम् । सङ्कटे तु वृहस्पतिना एवमेवोक्तम् ।

अथ विधिवदन्याधानमारभ्य विराधनादिव्रतसमाप्तिपर्य्यन्तं मध्यवर्त्तिनि काले अशौचप्राप्तौ तदपोह्य सद्यःशौचमाह चन्द्रिकाकारः ।

तत्र याज्ञवल्क्यः ।

ऋत्विजां दीक्षितानाञ्च यज्ञियं कर्म्म कुर्व्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने वि(वाहे)वाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥ इति ।

ऋत्विजामिति ।

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥

इति मनूक्तवरणसंस्कारसंस्कृतानां तत्प्रयोगपरि(वरण)समाप्तिपर्य्यन्तं ऋत्विजां दीर्घकालाशौचपाते(मध्ये)ऽपि सद्यःशौचं विधीयते इति सम्बन्धः । दीक्षितानामिति । दीक्षणीयेष्ट्यादिसंस्कारवतां यजमानानां दीक्षणात् प्रभृति अवभृथस्नानपर्य्यन्तं दीर्घकालाशौचमध्ये सद्यःशौचं कथ्यते ।

तद्वदुद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।
स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते* ॥

इति ब्रह्मवचनात् ।

सत्रिव्रतिदातृशब्दार्थाः सङ्ग्रहे दर्शिताः । तथाहि ।

---

* अशौचमिति शेषः ।

सत्री गृहीतनियमो यज्ञदानेष्वदीक्षितः ।
चान्द्रायणाद्यनुष्ठाता व्रती त्वब्रह्मचार्य्यपि ॥
श्राद्धे च ज्ञातसङ्कल्पो व्रती भोक्ता च कीर्त्तितः ।
दाता नित्यमनादाता वानप्रस्थोऽत्र कीर्त्तितः ॥ इति ।

ब्रह्मचारिब्रह्मविदौ प्रसिद्धौ । दाने तुलापुरुषादौ, व्याधिपरिहारार्थं दाने वा । विवाहः प्रसिद्धः । यज्ञे संभृतसम्भारस्य कालान्तरासम्भवे देशोपद्रवे महत्यामापदि च एतेष्वपि दीर्घाशौचबाधेन सद्यःशौचं विधीयते इत्यनुषङ्गः । तथाच कन्यादातुः प्रतिग्रहीतुश्च कन्यावरणप्रभृति विवाहसंस्कारनिष्पत्तिपर्य्यन्तं दीर्घकालाशौचप्राप्तावपि सद्यःशौचं द्रष्टव्यम् ।

स्मृत्यन्तरेऽपि ।

नरेन्द्रसत्रिव्रतिनां विवाहोपप्लवादिषु ।
सद्यःशौचं समाख्यातं तत्तत्कार्य्ये विशेषतः ॥ इति ।

तत्तत्कार्य्ये इति विशेषेणाभिधानाद्दैवदेवादिकर्म्मसु आशौचं दीर्घमस्त्येव । तत्र सद्यःशौचविधानाभावात्, यावद्वचनं वाचनिकमिति न्यायश्च ।

यत्तु पैठिनसिवचनम् ।

विवाहव्रतयज्ञेषु यात्रायां तीर्थकर्म्मणि ।
न तत्र सूतकं कुर्य्यात्कामं यज्ञादि कारयेत् ॥

ब्राह्मेऽपि ।

अथ देवप्रतिष्ठायां गणयागादिकर्म्मणि ।
श्राद्धे च पितृयज्ञे च कन्यादाने च नो भवेत् ॥

तदेतदुपक्रान्तयज्ञादिकर्म्मविषयं द्रष्टव्यम् ।

तथाच बृहस्पतिः ।

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्व्वसङ्कल्पितार्थे(र्थे)षु न दोषः परिकीर्त्तितः ॥

माधवीये ।

प्रारब्धात्प्राग्विवाहस्य माता यदि रजस्वला ।
निवृत्तिस्तस्य कर्त्तव्या सद्वृत्तश्रुतिचोदनात् ॥

ब्राह्मेऽपि ।

मङ्कुरार्पणमारभ्य ऋत्विजां वरणं तथा ।
शावके सूतके चैव दोषस्तत्र न विद्यते ॥

षट्त्रिंशन्मतेऽपि ।

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः ॥

परैरसगोत्रैः ।

विष्णुरपि ।

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

आरम्भश्च तेनैवोक्तः ।

आरम्भो वरणं* यज्ञे सङ्कल्पो व्रतसत्रयोः ।

* वरणमिति मधुपर्कपरं, गृहीतमधुपर्कस्य यजमानाद्य ऋत्विजः । पश्चादशौचे पतितिं न भवेदिति निर्णय इति ब्राह्मोक्तेः । मधुपर्कात् पूर्व्वन्तु भवत्येवाशौचमिति शुद्धिविवेकः ।

नान्दीश्राद्धं* विवाहादौ श्राद्धे पाकपरिक्रिया ॥ इति ।

नान्दीमुखावधित्वावश्यकत्वेऽधिक उक्तः ।

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।

त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते ॥ इति ।

तेन एकविंशत्याद्यहरन्तःपाति यथा यज्ञादि भवति तथा आव-श्यके यज्ञादौ पूर्व्वं नान्दीश्राद्धं कुर्य्यादित्यर्थः ।

अथ आरम्भाभावेऽपि कन्याया अधार्थ्यत्वे सन्निहितलग्ना-न्तराभावे च होमादिपूर्व्वकं विष्णुस्मृतिरशौचेऽपि विवाहमाह ।

अनारब्धविशुद्ध्यर्थं कुष्माण्डैर्जुहुयाद्घृतम् ।

गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ॥ इति ।

तथा संग्रहे ।

सङ्कटे समनुप्राप्ते सूतके समुपागते ।

कुष्माण्डीभिर्घृतं हुत्वा गाञ्च दत्त्वा पयस्विनीम् ।

चूड़ोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् ॥

संग्रहस्मृतिरपि ।

उपकल्पितबहुसम्भारस्यापि सन्निहितलग्नान्तराभावे स-म्भारस्य च धारणाशक्तौ अशौचाभावमाह विष्णुः । न देव-प्रतिष्ठाविवाहयोः पूर्व्वसम्भृतसम्भारयोराशौचमिति ।

इति श्रीविधानपारिजाते विवाहादावशौचप्राप्तौ तन्निर्णयः ।

---

* नान्दीमुखमिति ग-पुस्तके पाठः ।

## तृतीयः स्तवकः ।

अथेदानीं कन्यादाता वाग्दानानन्तरं विधिवद्विवाहवेदिं कुर्य्यादिति ।

तत्कालमाह व्यासः ।

कञ्चनदलनयवारक*मण्डपमृद्वेदिवर्णकाद्यखिलम् ।
तत्सन्धि गतागतमृते वैवाहिके कुर्य्यात् ॥ इति ।

तत्प्रकारमाह नारदः ।

हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु (च) सद्मनि ॥
समां तथा (चैव) चतुर्दिक्षु सोपानैरतिशोभिताम् ।
प्रागुदक्प्रवणां रम्यास्तम्भहंसशुकादिभिः† ॥
विचित्रामङ्कितां कुम्भैर्निहितैस्तोरणाङ्कुरैः‡ ।
शृङ्गारपुष्प§निकरैर्वर्णकैः समलङ्कृताम् ॥
विप्राशीर्वचनैः पुण्यैस्त्रिभिर्दीपैर्मनोहराम् ।
वादित्रनृत्यगीताद्यैर्हृदयानन्दिनीं शुभाम् ॥
एवंविधामारुरुचेन्मिथुनं सान्निवेदिकाम् ॥ इति ।

हस्तप्रमाणमत्र संस्कार्य्यीया बध्वा ग्राह्यम्¶ । सोपानकरणं

---

* चित्रसा इति यस्य भाषा इति गोपीनाथः ।

† हंसियकादिभिरित्याकरे पाठः ।

‡ विचित्रैर्वाहितैः कुम्भैर्विविधैस्तोरणाङ्कुरैः इत्याकरे पाठः ।

§ शृङ्गारपुष्पाणि मालतीवकुलादीनि इति गोपीनाथः ।

¶ कन्याहस्तैः पञ्चभिः समभिर्वा कार्य्या वेदिः कूर्म्मपृष्ठोन्नता वा ।
हर्म्ये रम्ये निर्गमाद्वामभागे जायापत्योराशिषैः सम्प्रयुक्ता ॥ इति वचनात् ।

पश्चिमभागे उपरि चतुर्दिक्षु वा अधो वा यथाचारम्। वेद्या-रेमितत्वं सोपानव्यतिरेकेण द्रष्टव्यम्।

इति वेदिकाकरणम्।

अथ विवाहमण्डपकरणप्रकारः।

वशिष्ठः।

षोड़शारत्निकं कुर्य्यान्मण्डपं वा द्विषट्करम्*।
यद्वाष्टहस्तं रचयेच्चतुर्द्वारोपशोभितम्।
मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत्॥ इति।

तथाच यथासम्भवं षोड़शहस्तं द्वादशहस्तमष्टहस्तं वा विवाह-मण्डपं कृत्वा स्तम्भतोरणादिभिरलङ्कृत्य मध्ये चतुर्हस्तकां वेदिकां कुर्य्यादित्यर्थः।

नन्दिनी नलिनी चैव मैत्रा च पशुवर्द्धनी।
आग्नेयादिक्रमात् पूज्या मध्ये ब्रह्माणमर्च्चयेत्॥

इति विवाहमण्डपकरणविधानम्।

शर्व्वरीरमणमण्डलवक्त्रं पुण्डरीकदलसन्निभनेत्रम्।
क्षीरसागरसुतासुकलत्रं संनमामि मम वंशसुमित्रम्॥

अथेदानीं विवाहादौ कर्त्तव्यतया विहितत्वादङ्कुरार्पणविधान-मभिधीयते।

---

* द्विषट्करं द्वादशहस्तम्।

शौनकः ।

यथाङ्कुरार्पणविधिं प्रवक्ष्यामि विशेषतः ।
शौनकोऽहं द्विजातीनां मङ्गलार्थमुदीरितम् ॥
नवमे सप्तमे वापि पञ्चमे दिवसेऽपि वा ।
तृतीये वीजनक्षत्रे शुभवारे शुभोदये ॥
सम्यग्गृहाण्यलङ्कृत्य वितानध्वजतोरणैः ।
सह वादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् ॥
तत्र मृत्तिकताः स्नात्वा गृहीत्वा पुनरागतः ।
मृण्मयेष्वथवा वैणवेषु पात्रेषु वापयेत् ॥
सुमुहूर्त्तेऽथ कल्याणि गोमयेनोपलिप्य च ।
सिताक्षतैः सम्प्रकीर्य्य पालिकाः स्थापयेद्द्विजः ॥
मध्ये चतुर्मुखं विद्यात् पूर्व्वे वज्रिणमेव च ।
दक्षिणे तु यमं विद्यात् पश्चिमे वरुणं तथा ।
उत्तरे शशिनं विद्यात् पालिकानाञ्च देवताः ॥
वल्मीकमृत्तिकां ह्रादं* शुष्कगोमयमेव च ।
एतानि प्रक्षिपेत्तासु पालिकासु यथाविधि ॥
दूर्व्वाश्वत्थपर्णञ्च शिरीषं विल्वपत्रकम् ।
तासां मूलेषु विन्यस्य श्वेतसूत्रेण मण्डिताः ।
मध्ये ब्रह्माणमावाह्य गन्धाद्यैरर्च्चयेत् क्रमात् ॥
इन्द्रादिक्रम एवं स्यादमुष्मै नम एव च ।

---

* ह्रादं ह्रदपङ्कमिति ग्रन्थकारेणैव १८ पृष्ठे ५ पंक्तौ व्याख्यातं ।

तिष्ठन् कर्त्ता जपेन्मन्त्रं पश्चात् प्राङ्मुख एव च ॥
दिशां पतीन्नमस्यामि सर्व्वकामफलप्रदान् ।
कुर्व्वन्तु सफलं कर्म्म कुर्व्वन्तु सततं शुभम् ॥
व्रीहियवमाषतिलमुद्गमिश्रितसर्षपान् ।
तान् प्रक्षाल्य च तोयेषु वापयेदङ्कुरार्पणम् ।
रात्रौ मुहूर्त्ते कल्याणे कारयेदङ्कुरार्पणम् ॥
ब्रह्मजज्ञानमिति तु* मध्ये ब्रह्माणमर्च्चयेत् ।
यत इन्द्र भयामहे† प्राच्यां प्रक्षेपयेद्द्विजः ॥
नाके सुपर्णमिति च‡ ततो दक्षिण एव तु ।
तत्त्वायामीति§ मन्त्रेण प्रतीच्यां वापयेद्द्विजः ।
सोमो धेनुमुदीच्यान्तु¶ ओषधीर्वापयेत् क्रमात् ॥
शुक्लाभिः सिकताभिश्च प्रच्छाद्यापः प्रसेचयेत् ।
विधाय गुप्तये सर्व्वमात्मानमिति मन्यते ॥
मासमात्रजातानां आषष्ठात् पुत्रनाशनम् ।
पञ्चमाद्रत्निमान् विष्णौ सर्व्वकामफलप्रदे ॥
यतथैं चाङ्कुरं विद्यात् पापीयान् जायते तु सः ।

---

* ब्रह्मजज्ञानमिति मन्त्रोऽयं प्रथमखण्डस्य १०९ पृष्ठे प्रदर्शितः ।

† यत इन्द्रेति ऋगियं प्रथमखण्डस्य ११५ पृष्ठे प्रदर्शिता ।

‡ नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षतत्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥
१०म. १२३सू. ६ऋक् ।

§ तत्त्वायामीति ऋगियं द्विविधा, प्रथमखण्डस्य ९८।११८ पृष्ठयोर्दर्शिता ।

¶ सोमो धेनुमिति ऋगियं प्रथमखण्डस्य १२१ पृष्ठे प्रदर्शिता ।

तथाहि सर्व्वकामानामङ्कुराहनि चोद्यते ॥
आयुष्करं श्रीप्रदञ्च शुभेष्वन्येषु सर्व्वशः।
तस्मात्सर्व्वेषु कार्य्येषु वापयेदङ्कुरार्पणम्।
यद्यङ्कुराणां रहितं तत्कर्म्माशुभकारणम् ॥
सद्योऽङ्कुरार्पणं वापि सद्यः कर्त्तुं समीहितः।
अशक्तौ तण्डुलैः शुद्धैः सद्य एव शुभाङ्कुरैः ॥
पालिकानि प्रपूर्य्यैवं पञ्च चैकमेव वा।
अलङ्कृत्य च पद्माद्यैः पुष्पैरापूर्य्यतेऽपि च।
अङ्कुरोक्ताः क्रियाः सर्व्वास्तैस्तैरेव समाचरेत् ॥
ओषधीनाञ्च सर्व्वासां चन्द्रः प्रोक्तोऽधिदैवतम्।
तस्मात्सर्व्वप्रयत्नेन तेन रात्र्यङ्कुरार्पणम् ॥
वास्तुकर्म्मणि चौले च दिवा स्यादङ्कुरार्पणम्।
अन्यत्र रात्रौ कुर्व्वीत न तथाह्नि कदाचन ॥
आधानं गर्भसंस्कारं जातकर्म्म च नाम च।
हित्वाङ्कुरार्पणं विद्यादन्यत्र शुभकर्म्मसु ॥
इति शौनकोक्तमङ्कुरार्पणविधानम्।

अथास्य स्पष्टप्रयोगो लिख्यते। यथा—

गर्भाधानादिनामान्तकर्म्माणि मुक्ता अन्नप्राशनादिविवाहान्तेषु अपत्यसंस्कारेषु नवगृ(ग्र)हप्रवेशाद्यन्येष्वपि शुभकर्म्मसु च करिष्यमाणकर्म्मणः पूर्व्वं नवमे सप्तमे पञ्चमे तृतीये दिने सद्यो वा अङ्कुरार्पणं कर्त्तव्यम्।

तत्रायं क्रमः। पालिकादिसम्भारानुपकल्प्य सुस्नातः पीठोप-

विष्टो यजमानस्तिथ्यादि सङ्कीर्त्य अमुककर्म्मसाफल्यनिरन्तरशुभत्व-सिद्धिद्वारा परमेश्वरप्रीत्यर्थमङ्कुरार्पणाख्यं कर्म्माहं करिष्ये इति सङ्कल्प्य शुभभूमिमुपलिप्य रङ्गवल्ल्यादिभिरलङ्कृत्य तत्र सिता-क्षतान् सम्प्रकीर्य्य तत्र नववेणुपात्रं किञ्चिन्नम्भोरं सूत्रेणावेष्ट्य तदेव पालिकात्वेन संस्थाप्य तत्र वल्मीकमृत्तिकां क्षुद्रपङ्कं शुष्क-गोमयचूर्णञ्च प्रक्षिप्य पालिकामू(ले)लं श्वेततण्डुलैः पूरयित्वा दूर्व्वाङ्कुराश्वत्थशिरीषविल्वपत्राणामुपरि शुभे मुहूर्त्ते तद्वेणुपात्रं प्रक्षिप्य सितरक्तहरितवर्णानि पुष्पाण्यवकीर्य्य मध्यादिपञ्चस्थानेषु ब्रह्मादिदेवान् पूजयेत्।

तत्र ब्रह्मजज्ञानं नकुलो ब्रह्मा त्रिष्टुप्। अनेन पालिकामध्ये ब्रह्माणमावाहयेत्। यत इन्द्र प्रगाथो भग इन्द्रो बृहती। अनेन पूर्व्वभागे इन्द्रम्। नाके सुपर्णं यमो यमस्त्रिष्टुप्। अनेन दक्षिणे यमम्। तत्त्वायामि वरुणस्त्रिष्टुप्। अनेन पश्चिमे वरुणम्। सोमो धेनुं गौतमः सोमस्त्रिष्टुप्। अनेन चोत्तरे सोममावाहयेत्। एवं ब्रह्मादिलिङ्गकैरन्यैर्वा स्वशाखोक्तैर्मन्त्रै-र्ब्रह्मादिपञ्चदेवान् यथाक्रमेणावाह्य ब्रह्मणे नमः। इन्द्राय नमः। यमाय नमः। वरुणाय नमः। सोमाय नमः। इति नाम-मन्त्रैरासनादिक्रमेण* षोडशोपचारैः पदार्थानुसमयेन काण्डानु-समयेन वा पञ्च देवताः सम्यगभ्यर्च्य पालिकापश्चिमतः कर्त्ता प्राङ्मुखस्तिष्ठन् उपतिष्ठेत। तत्र मन्त्राः—

* रासादनादिक्रमेण इति ख-पुस्तके पाठः।

दिशां पतीन्नमस्यामि सर्व्वकामफलप्रदान् ।

कुर्व्वन्तु सफलं कर्म्म कुर्व्वन्तु सततं शुभम् ॥ इत्यादयः* ।

ततो व्रीहियवमाषतिलमुद्गसर्षपान् गोमयतोयेन प्रक्षाल्य ब्रह्मजज्ञानमित्यादिभिः पूर्व्वोक्तैः पञ्चभिर्मन्त्रैः† क्रमेण पञ्चसु स्थानेषु वीजानावपेत् । ततः शुभ्राभिः सिकताभिः प्रच्छाद्य अपः प्रसेचयेत् । त(तः)त्र पञ्चगव्यं समन्त्रकं प्रसिञ्चेदिति ग्रन्थान्तरे उक्तम् ।

सद्योऽङ्कुरार्पणपक्षे ब्रह्मादिदेवतावाहनादि कृत्वा शुभ्रैस्तण्डुलैः ततः सिद्धैर्धान्याङ्कुरैश्च पालिकां प्रपूर्य्य पद्मादिपुष्पैरलङ्कृत्य अङ्कुरोक्ताः सर्व्वाः क्रियास्तैरेव कारयेत् ।

इदमङ्कुरार्पणाख्यं कर्म्म रात्रौ कार्य्यम् । वास्तुकर्म्मणि चौलकर्म्मणि च दिवैव कार्य्यम् । पञ्चपालिकादिपक्षेऽपि प्रतिपालि(का)कमेवमेव क्रियावृत्तिः । वंशपात्ररूपा पालिकेति प्रयोगपारिजातोक्तिः । विधानप्रकाशादौ तु धातुमयरूपा मृन्मयरूपा वा ग्राह्या ।

इति श्रीविधानपारिजाते अङ्कुरार्पणविधानम् ।

## अथ कौतुकबन्धविधानम् ।

तथाच शौनकः ।

अथ कौतुकबन्धस्य प्रयोगोऽत्र निगद्यते ।

विवाहादौ शुभे कार्य्ये रात्रौ वाह्नि कृते तथा ॥

---

* १२ पृष्ठे उक्ताः ।

† १२ पृष्ठे प्रदर्शिताः ।

साङ्कुरे पालिकायुक्ते स्थले दुन्दुभि(पूरिते)नादिते ।
सहाक्षतेन कांस्येन सोदकुम्भं निधाय च ।
कार्पासोद्भवसूत्रन्तु त्रिगुणीकृत्य पञ्च वा ॥
निधाय तण्डुलान् पात्रे कूर्चं कुम्भं निधाय च ।
कुशैः कुम्भोदकैर्मन्त्रैः प्रोक्ष्य विप्रः सुखासने ॥
भूर्भुवः स्वः सावित्र्या ऋग्भिर्वेदादिभिस्तथा ।
आपो हिष्ठादिकाब्लिङ्गैः शुद्धवत्यघमर्षणैः ॥
शुद्धवत्या स्वस्तिमत्या पावमानैः*स्तथैव च ।
रक्षोघ्नाश्च रात्रिश्च कृणुष्वेति तथैव च ॥
तरत्समन्दी† पुरुषं‡ विष्णुसूक्तं तथैव च ।
अतो देवा अवन्त्विति परो मात्रा तथैव च ॥
श्रीसूक्तं शिवसङ्कल्पं वायुसूक्तं§ तथैव च ।
मुञ्चामि त्वेति सूक्तञ्च स्योना पृथ्वि भवेति च ॥
द्रविणोदाः सवितेति नवो विघ्नं नयेति च ।
उलूकया पिशङ्गेति ऋग्भिरेताभि(र्क्क)र्लिङ्गैः¶ ॥

---

* प्रथमखण्डस्य १७६ पृष्ठे १० पंक्तौ उक्तैः ।

† प्रथमखण्डस्य १९४।१९५।१९६ पृष्ठेषु उक्तैः ।

‡ पुरुषसूक्तं त्रिपादूर्ध्व इत्यादिकं मयोदग्रम्थे प्रथमखण्डस्य १५५।१५६ पृष्ठयोः प्रदर्शितम् ।

§ वायुसूक्ताभावात्—"वात आवातु भेषजं शंभु मयोभु नो हृदे ।
प्र न आयूंषि तारिषत् ॥"
मन्त्रोऽयं अध्यादिपाठपूर्वक पाठ्य इति तुलापुरुषदानपद्धतौ तर्कवाचस्पतयः ।

¶ एते मन्त्रा अनुपदमेव दर्शयिष्यन्ते ।

जातवेदस इत्यृचा* सूत्रमादाय लेपयेत् ।
गन्धेन दक्षिणे हस्ते बध्नाः पुंसस्तु तन्तुना ॥
विश्वेत्ता ते सवनेति स्त्रीणां सव्यकरे तथा ।
श्रिये जात ऋचैकया†प्यध्वर्य्युश्च समाहितः ॥
शतं जीवेति द्वाभ्याञ्च बृहत्सामेत्यृचैकया‡ ।
ये यज्ञेन तथाष्टाभिस्त्र्यम्बकमृचैकया§ ॥
भस्मना चाक्षतैर्वापि रक्षां कृत्वा समापयेत् ।
दद्यादाचार्य्ये हेमादि ऋत्विग्भ्यः पूज्य भक्तितः ।
विद्वान् सर्व्वप्रयत्नेन कुर्य्यात् कौतुकबन्धनम् ॥ इति ।

अथास्य प्रयोगः ।

विवाहादौ शुभकर्म्मणि साङ्कुरे पालिकायुक्ते स्थले मङ्गलतूर्य्यनादे कृते सति कौतुकबन्धं कुर्य्यात् । तत्रायं क्रमः । आचार्य्यो दर्भमये कूर्च्चे उदकुम्भं निधाय साक्षतकांस्यपात्रे पञ्चगुणितं त्रिगुणितं वा कार्पाससूत्रं निधाय च तत्समीपे यजमानमुपवेश्य कुशहस्तैर्ऋत्विग्भिः सह कुम्भोदकेन तत् सूत्रमभिषिञ्चेत् ।

---

* प्रथमखण्डस्य ४५७ पृष्ठे प्रदर्शितया ।

† प्रथमखण्डस्य १६० पृष्ठे प्रदर्शितया ।

‡ बृहत्साम्नो गानायर्क्—

त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।*
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥
इत्यत्र त्रिः पाठः कार्य्यः इति तर्कवाचस्पतयः ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ३अ. ६०म. यजुः ।

तत्र मन्त्राः ।

व्याहृतिपूर्व्वा गायत्री*। अग्निमीळे† । इषे त्वोर्ज्जे त्वा‡ । अग्न आयाहि§ । शन्नो देवीः¶ । आपो हि ष्ठेति नवर्चम्|| । एतो न्विन्द्रम्** । ऋतं चेति मन्त्रद्वयम्†† । प्रयद्धायेति मन्त्रः‡‡ । स्वस्ति नो मिमीतामिति मन्त्रत्रयम्§§ । स्वादिष्ठयेति दशर्चं सूक्तम्¶¶ ।

---

* प्रथमखण्डस्य ७२ पृष्ठे प्रदर्शिता ।

† अग्निमीळे इति मन्त्रोऽयं प्रथमखण्डस्य ११० पृष्ठे प्रदर्शितः ।

‡ इषे त्वोर्ज्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे । १अ. १म. यजुः ।

§ अग्न आयाहीति मन्त्रोऽय प्रथमखण्डस्य ११० पृष्ठे प्रदर्शितः ।

¶ शन्नो देवीरिति मन्त्रोऽय प्रथमखण्डस्य २० पृष्ठे प्रदर्शितः ।

|| आपो हि ष्ठेति नवर्चं प्रथमखण्डस्य ५८ पृष्ठे प्रदर्शितम् ।

** एतो न्विन्द्रमिति मन्त्रोऽयं प्रथमखण्डस्य १४५ पृष्ठे प्रदर्शितः ।

†† ऋतं चेति मन्त्रद्वय प्रथमखण्डस्य १४६ पृष्ठे प्रदर्शितम् ।

‡‡ प्रयद्धाय मारुताय स्वभानव इमां वाचमनजा पर्वतच्युते ।
धर्मस्तुभे दिव आ पृष्ठयज्वने द्युम्नश्रवसे महि नृम्णमर्चत ॥ ५म. ५४सू. १ऋक् ।

§§ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ ११ ॥
स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ १२ ॥
विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ ५म. ५१सू. १३ऋक् ।

¶¶ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥
रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ २ ॥
वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥

रक्षोहणमिति पञ्चविंशर्चं सूक्तम्*। रात्रिर्व्यख्यदित्यष्टर्चं सूक्तम्†। अग्न्यश्वेति पञ्चदशर्चं सूक्तम्‡। तरत् स मन्दीति ऋक्चतुष्टयम्§। सहस्रशीर्षेति षोडशर्चं सूक्तम्¶। विष्णोर्नु कमिति षडृचं सूक्तम्‖। अतो देवा इति षडृचं

---

अभ्यर्ष महानां देवानां वीतिमन्धसा। अभिवाजमुत श्रवः ॥ ४ ॥
त्वामच्छा चरामसि तदिदर्थं दिवे दिवे। इन्दो त्वे न आशसः ॥ ५ ॥
पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता। वारेण शश्वता तना ॥ ६ ॥
तमीमण्वीः समर्य आगृभ्णन्ति योषणो दश। स्वसारः पार्ये दिवि ॥ ७ ॥
तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम्। त्रिधातु वारणं मधु ॥ ८ ॥
अभीम मघ्न्या उत श्रीणन्ति धेनवः शिशुम्। सोममिन्द्राय पातवे ॥ ९ ॥
अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते। शूरो मघा च मंहते ॥

९म. १मू. १०ऋक्।

रक्षोहणमित्यादिकं सूक्तं प्रथमखण्डस्य २४०।२४१।२४२ पृष्ठेषु प्रदर्शितम्।

रात्रिर्व्यख्यदित्यादिकं रात्रिसूक्तं प्रथमखण्डस्य २६४।२६५ पृष्ठयोरुक्तम्।

अग्न्यश्वेत्यादिकं सूक्तं प्रथमखण्डस्य १५८।१५९।१६० पृष्ठेषु उक्तम्।

तरत् स मन्दी धावति धारा सुतस्यान्धसः। तरत् स मन्दी धावति ॥ १ ॥
आपवस्व सहस्रिणꣳ रयिꣳ सोम सुवीर्यम्। अस्मे श्रवाꣳसि धारय ॥ २ ॥
अनु प्रत्नास आयवः पदं नवीयो अक्रमुः। रुचे जनन्त सूर्यम् ॥ ३ ॥
अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्। सीदन् योनौ वनेष्वा ॥

सामवेदः, अथवा ९म. ५९सू. ४ऋक्।

सहस्रशीर्षेत्यादिकं सूक्तं प्रथमखण्डस्य १९४।१९५।१९६ पृष्ठेषु प्रदर्शितम्।

विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥
प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥

सूक्तम्* । परो मात्रयेति सप्तर्चं सूक्तम्† ।

---

प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।

य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥

यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।

य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।

उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ १म. १५४सू. ६ऋक् ।

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः ॥ १ ॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ २ ॥

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ ३ ॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ४ ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ५ ॥

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥

१म. २२सू. ६ऋक् ।

परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।

उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ १ ॥

न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।

उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥

इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ।

व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥ ३ ॥

उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् ।

दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥

इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।

शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥ ५ ॥

हिरण्यवर्णामिति पञ्चदशर्चं सूक्तम्*। यज्जाग्रत इति षडृचं सूक्तम्†। वीतिहोत्रेति पञ्चर्चं प्रायुसूक्तम्‡। सुपर्णामीति

---

इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्द्धयन्ती।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र॥ ८॥
वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।
वर्द्धन्तु त्वा सुष्टुतयो गिरोमे यूयं पात स्वस्तिभिः सदा नः॥

७म. ९९सू. ७ऋक्।

हिरण्यवर्णामिति मन्त्रं प्रथमस्तबकस्य १६४।१६५ पृष्ठयोरुक्तम्।
यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु॥ १॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु॥ २॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु॥ ३॥
येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्व्वम्।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु॥ ४॥
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः।
यस्मिंश्चित्तं सर्व्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु॥ ५॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु॥

३४अ. ६म. यजुः।

‡ वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि। अग्ने बृहन्तमध्वरे॥
अथा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्म्मणि। विश्वासु धीषु वन्द्य॥
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम्। विश्वासु पृत्सु दुष्टरम्॥
आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम्। मार्डीकं धेहि जीवसे॥
अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु। तेन जेष्म धनं धनम्॥ सामवेदः।

पञ्चर्चं सूक्तम्*। स्योना पृथिवि†। द्रविणोदाः‡। सविता पश्चातात् §। नवो नवो भवति ¶। विद्युन्न या पतन्ती ‖। उलूकयातुम् **। पिशङ्गभृष्टिम् ††। एताः सप्त ऋचः। एतैर्व्याहृत्यादि पिशङ्गभृष्टिमित्यन्तैर्मन्त्रैः कूर्चेन कलशोदकेन सूत्र-

---

* मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम्॥ १॥
यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव।
तमाहरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय॥ २॥
सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम्।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम्॥ ३॥
शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान्।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः॥ ४॥
आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम्॥ ५॥ १०म. १६१सू. ५ऋक्।

† स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथः॥
१म. २२सू. १५ऋक्।

‡ द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत। नेष्ट्रादृतुभिरिष्यत॥ २६अ. २२म. यजुः।

§ सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताधरात्तात्।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः॥ १०म. ३६सू. १४ऋक्।

¶ नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।
भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः॥ १०म. ८५सू. १९ ऋक्।

‖ विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः॥ १०म. ९५सू. १०ऋक्।

** उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम्।
सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र॥ ७म. १०४सू. २२ऋक्।

†† पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण। सर्वं रक्षो नि बर्हय॥ १म. १३३सू. ५ऋक्।

मभिषिच्य जातवेदस इति मन्त्रेण गन्धेन सूत्रं लेपयित्वा विश्वेत्ता त* इति मन्त्रेण आचार्य्यः पुंसो दक्षिणहस्ते सूत्रं बध्नीयात्। स्त्रियास्तु श्रिये जात इति मन्त्रेण† वामहस्ते बध्नीयात्। तत ऋत्विजोऽन्यैर्यजमानस्य समन्त्रं रक्षां कुर्य्युः। तत्र मन्त्राः। शतं जीवेति द्वयम्‡। ये यज्ञेनेत्यष्टर्चम्§। त्र्यम्बकं यजा-

---

* विश्वेत्ता ते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते।
पारावतं यत् पुरुसम्भृतं वस्वपावृणोः शरभाय ऋषिबन्धवे॥ ८म. १००सू. ६ऋक्।

† प्रथमखण्डस्य १६० पृष्ठे प्रदर्शितेन।

‡ २१ पृष्ठे ११—१४ पंक्तिषु प्रदर्शितम्।

§ ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश।
तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः॥
य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे बलम्।
दीर्घायुत्वमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः॥ २॥
य ऋतेन सूर्य्यमारोहयन् दिव्यप्रथयन् पृथिवीं मातरं वि।
सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः॥ ३॥
अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोत नः।
सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः॥ ४॥
विरूपास इदृषयस्त इद्गम्भीरवेपसः।
ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे॥ ५॥
ये अग्नेः परिजज्ञिरे विरूपासो दिवस्परि।
नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते॥ ६॥
इन्द्रेण युजा निःसृजन्त वाघतो व्रजं गोमन्तमश्विनम्।
सहस्रं मे ददतो अष्टकर्ण्यः श्रवो देवेष्वक्रत॥ ७॥
प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु।
यः सहस्रं शताश्वं सद्यो दानाय मंहते॥ १०म. ६२सू. ८ऋक्।

महे इति च*। ततो यजमानः कर्म्मसाद्गुण्यार्थमाचार्य्यादिभ्यो यथाशक्ति दक्षिणां दद्यात्।

कर्म्मादौ बन्धनं प्रोक्तं कर्म्मान्ते तद्विसर्जनम्।

तत्र मन्त्रो यथा।

कङ्कणं मोचयाम्यद्य रक्षां (न तु) तु न कदाचन।
मयि रक्षां विधायाशु देव त्वं गच्छ कङ्कण॥

इति मन्त्रेण कङ्कणं विसृजेत्।

इति शौनकोक्तं कौतुकबन्धनविधानम्।

अथ कात्यायनमतानुसारि कौतुकबन्धनविधानम्।

विनायकं नमस्कृत्य गिरिपुत्रीञ्च मूर्द्धनि।
कात्यायनमनुप्रोक्तो रक्षाबन्धो विधीयते॥
विनायकं तु संपूज्य गुरूर्गन्धाक्षतादिभिः।
प्राणायामत्रयं कृत्वा सङ्कल्प्य च यथाविधि॥
प्रक्षाल्य कांस्यपात्रन्तु कुशभस्मजलेन च।
ताम्बूलं तत्र विन्यस्य भस्मना सहितं तथा॥
सौवर्णं राजतं वापि क्षौमं कार्पासमेव वा।
तन्तुत्रयं तथा पुंसां स्त्रीणान्तु द्विगुणीकृतम्॥
पावमानेन मन्त्रेण† सूत्रञ्चैवाभिषेचयेत्।
आपो हि ष्ठेति मन्त्रेण‡ संस्कार्य्यस्याभिषेचनम्॥

---

* मन्त्रोऽयं १७ पृष्ठे प्रदर्शितः।

† सहस्राक्षं शतधारमृषिभिः पावनं कृतम्।
तेन त्वामभिषिञ्चामि पावमा(नीः)न्यः पुनन्तु ते॥ एवमादिरूपेण।

‡ प्रथमखण्डस्य ५८ पृष्ठे प्रदर्शितेन।

सूत्रं गन्धेन संलिम्पेदंशुना तेति* मन्त्रतः ।
दीर्घायुस्तेति मन्त्रेण† आमिषा योजयेद्दृढम् ॥
त्रियम्बकेन मन्त्रेण‡ भूतिं दत्त्वा ललाटके ।
तूष्णीं ततो द्विवारञ्च भस्म दद्यात्तथैव च ॥
यदाबध्नेति मन्त्रेण§ पुंसो वै दक्षिणे करे ।
बध्नीयात् सूत्रकञ्चैव स्त्रियाश्चेद्वामके करे ।
त्रीणि त आहुर्मन्त्रेण इति कात्यायनोदितम् ॥

इति कात्यायनोक्तं कौतुकबन्धविधानम् ।

अथ वृद्धिश्राद्धम् ।

तथाच आश्वलायनकारिका ।

स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्त्तेषु कर्म्मसु ।
वृद्धिपूर्त्तशब्दार्थं स्वयमेवाह ।

---

अंशुना ते अंशुः पृच्यतां परुषा परुः ।
गन्धस्ते सोममवतु मदाय रसो अच्युतः ॥ २०अ. २७म. यजुः ।

दीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम् ।
अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥ १२अ. १००म. यजुः ।

प्रथमखण्डस्य १९१ पृष्ठे उक्तेन ।

यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः ।
तन्म आबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासम् ॥ ३४अ. ५२म. यजुः ।

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम् ॥ १म. १६३सू. ४ऋक् ।

पुंसः सावनसीमन्तचौलोपनयनेष्विह ।
विवाहे चाग्न्याधानप्रभृतिश्रौतकर्म्मसु ॥
इदं श्राद्धं प्रकुर्व्वन्ति द्विजा वृद्धिनिमित्तकम् ।
अन्यैः षोड़शसंस्कारश्रावण्यादिष्वपीष्यते ।
वाप्याद्युद्यापनादौ तु कुर्य्युः पूर्त्तनिमित्तकम् ॥ इति

चन्द्रिकायां विष्णुपुराणे ।

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्म्मणि बालानां चूड़ाकर्म्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखान् पितॄनादौ तर्पयेत् प्रयतो गृही ।
तानिष्ट्वा पितृयज्ञेन वैदिकं कञ्चिदाचरेत् ॥

ब्राह्मेऽपि ।

जन्मन्यथोपनयने विवाहे पुत्रकस्य च ।
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्व्वकम् ॥
वेदव्रतेषु चाधानयज्ञपुंसवनेषु च ।
नवान्नभोजने स्नाने भार्य्यायाः प्रथमार्त्तवे ॥

स्नाने समावर्त्तने ।

देवारामतड़ागादिप्रतिष्ठासूत्सवेषु च ।
राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकान् ॥
नान्दीमुखान् पूज्यतमांश्च तथा मातृगणानपि ।

---

* नान्दीमुख पितृगणम् इति संस्कारतत्त्वे पाठः ।

वनस्थाद्याश्रमं* गच्छन् पूर्व्वेद्युः सद्य एव च ।

पितॄन् पूर्व्वोक्तविधिना तर्पयेत् कार्य्यसिद्धये ॥ इति ।

क्वचिन्नान्दीश्राद्धस्य तन्त्रत्वमाह ।

गणशः क्रियमाणानां मातॄणां पूजनं सकृत् ।

सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

अस्यार्थः । देशान्तरगतस्य चिरकालाश्रूयमाणसद्भावस्य मृत-बुद्ध्या पुत्रादिना कृतप्रेतकार्य्यस्य कालान्तरे समागतस्य तस्यैव यदा जातकर्म्मादयः संस्कारा युगपत् क्रियन्ते,—अथवा उप-नयनात् प्राक् स्वकाले कथञ्चिदकृतचौलपर्य्यन्तसंस्कारस्य जात-कर्म्मादीनि यदा उपनयनकाले संभूय क्रियन्ते,—तदा तेषु संभूय क्रियमाणेषु संस्कारेषु मातृपूजाया नान्दीश्राद्धस्य च सकृत्-तन्त्रेण प्रथमतः क्रियमाणकर्म्मणः आदावनुष्ठानं कर्त्तव्यम्, न पृथगादिषु नानात्वा संस्कारकर्म्मणामादिषु कार्य्यमित्यर्थः ।

अत्र मातृपूजनं पूर्व्वमुक्तं विष्णुपुराणे ।

तत्रापि मातरः पूर्व्वं पूजनीयाः प्रयत्नतः ।

अकृत्वा मातृयागन्तु वैदिकं यः समाचरेत् ।

तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥ इति ।

मनुरपि ।

कर्म्मादिषु च सर्व्वेषु मातरः सगणाधिपाः ।

पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

* वानप्रस्थाश्रमादिकं, यदा गृहस्थाश्रमं विहाय वनं गन्तुमिच्छुर्भवेदित्यर्थः ।

मातर उक्ताश्चतुर्विंशतिमते ।

श्राद्धे ह्यभ्युद(ये)यप्राप्ते देवतास्थापनं स्मृतम् ।
जातिधर्मकुलश्रेणीलोकानां वृद्धिकारकम् ॥
तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।
इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाष्टमी ॥
ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।
वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन् ॥
मातृपूर्व्वान् पितॄन् पूज्य ततो मातामहानपि ।
मातामहीमतः केचिद्युग्मा भोज्या द्विजातयः ॥

अस्यार्थः । वृद्धिश्राद्धे कर्त्तव्ये सति पूर्व्वं स्थण्डिलादौ मातृगणः संपूज्यस्तद्यथा पितृपक्षे तिस्रो मातृपितामहीप्रपितामह्यः पूज्याः । तथा मातामहवर्गे मातामह्यादयस्तिस्रः पितृष्वसा मातृष्वसेत्यष्टौ मानुष्यो मातरः । ब्रह्माण्याद्याः सप्त देवमातरः । तथा दुर्गागणाधिपक्षेत्राधिपांश्च षोड़शैरुपचारैः संपूज्य नान्दीमुखान् पितॄन् श्राद्धेन पूजयेदिति प्रयोगपारिजाते व्याख्यातम् ।

अथवा कात्यायनोक्ता मातरः पूज्याः यथा ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
आवाह्य गन्धपुष्पाणि धूपं दीपं निवेदयेत् ॥

तथा वसोर्धारामातरः कुड्ये समालिख्य पूज्या इत्युक्तं तत्रैव ।

कुड्यलग्ना वसोर्धाराः पञ्च वाथ घृतेन तु ।
कारयेत्सप्तधारा वा नातिनीचा न चोच्छ्रिताः ॥
आयुष्याणि च शान्त्यर्थं जपित्वाथ समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥ इति ।

इदं कात्यायनपरिशिष्टोक्तकातीयानां काण्वमाध्यन्दिनानामेवेति वेदितव्यम् । षड्भ्यः पितृभ्य इति । तेषां सूत्रे नान्दीश्राद्धस्य षड्दैवत्यभिधानादविरुद्धम्, बह्वृचं वा स्वगृह्योक्तमिति वचनानुग्रहाच्च । प्रयोगपारिजातकृता तु षड्भ्यः श्राद्धमुपक्रमेदित्येवं व्याख्यातम् । त्रिभ्यः पित्रादिभ्यस्त्रिभ्यो मातामहादिभ्यो मातृश्राद्धपूर्व्वकं श्राद्धमुपक्रमेत् ।

उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ।
ततो मातामहाः पूज्या विश्वेदेवास्तथैव च ॥

इति हेमाद्रौ मत्स्यपुराणवचनात् । तदेतदाश्वलायनशाखादिविषयत्वेन नेतुं शक्यते ।

माता पितामही चैव संपूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ।
एते नवार्च्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥

इत्याश्वलायनस्मरणात् । अत्र नान्दीश्राद्धे आश्वलायनकाण्वादीनां पित्रादिक्रम एव न तु प्रपितामहादिक्रमः । तत्तच्छा(च्छौ)-त्रिप्रवर्त्तकाश्वलायनकात्यायनाभ्यां स्वस्वसूत्रे तादृशक्रमस्य प्रदर्शितत्वात् ।

नान्दीमुखे विवाहे च प्रपितामहपूर्व्वकम् ।
नाम सङ्कीर्त्तयेद्विद्वानन्यत्र पितृपूर्व्वकम् ॥

ाद्ववशिष्ठवचनं तदेतच्छाखान्तरीयमिति मन्तव्यम् । हेमा-
ोऽप्येवमेव मेनिरे ।

लमाह वशिष्ठः ।

पूर्व्वेद्युर्मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।
उत्तरेद्युः प्रकुर्व्वीत मातामहगणस्य तु ॥

ानुकल्पमाह वृद्धशातातपः ।

पूर्व्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।
ततो मातामहानान्तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥

प्यशक्तौ वृद्धमनुः ।

अलाभे श्राद्धकालानां नान्दीश्राद्धत्रयं बुधः ।
पूर्व्वेद्युरेव कुर्व्वीत पूर्व्वाह्णे मातृपूर्व्वकम् ॥ इति ।

ातातपस्तु ।

पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे ।
श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवन्तु तान्त्रिकम् ॥ इति ।

क्रममाह प्रचेताः ।

मातृश्राद्धन्तु पूर्व्वं स्यात् पितृणां तदनन्तरम् ।
ततो मातामहानान्तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥

ाहादिमहाकर्म्मविषयम् । अल्पे तु तदहरेव कार्य्यम् ।
। ब्रह्मपरिशिष्टम् ।

मङ्गल्येषु पूर्व्वेद्युस्तदहरेवान्येषु इति ।

अत्रिरपि ।

पूर्व्वाह्णे तु भवेद्वृद्धिर्विना जन्मनिमित्तकम् ।

पुत्रजन्मनि कुर्व्वीत श्राद्धं तात्कालिकं बुधः ॥ इति ।

वैश्वदेवादयोऽत्र नान्दीमुखा इति विशेषणीया इत्युक्तं हेमाद्रौ ।

ऊर्द्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञकाः । इति ।

कात्यायनसूत्रेऽपि ।

नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छतीत्यादि ।

अत्रेदं तात्पर्य्यम् । द्विविधा नान्दीमुखाः पित्रादयस्त्रयः प्रपितामहपित्रादयश्च । तत्र पित्रादयो नान्दीमुखा वृद्धिश्राद्धदेवता ज्ञेयाः ।

पिता पितामहश्चैव तथैव प्रपितामहः ।

त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्त्तिताः ।

प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते ॥

इति ब्रह्मपुराणे तेषामेव मङ्गलकर्म्मसु देवतात्वश्रवणात् ।

प्रपितामहस्य पित्रादयस्तु प्रौष्ठपदपौर्णमासीनिमित्तश्राद्धे देवता इति मन्तव्यम् ।

पिता पितामहश्चैव तथैव प्रपितामहः ।

इत्युक्त्वा

तेभ्यः पूर्व्वतराः पञ्च प्रजावन्तः सुखैषिणः ।

ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥

इति तेषामपि नान्दीमुखसंज्ञां विधाय

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यान्तु कर्त्तव्यं वाराहवचनं यथा ॥

इति ब्रह्मपुराणवचनात्। अतः सिद्धं वृद्धिश्राद्धे पित्रादित्रिकस्यैव देवतात्वमिति। प्रयोगपारिजाते हेमाद्रौ च एवमेव व्याख्यातम्।

अन्येऽपि विशेषाः कारिकायाम्।

प्राङ्मुखोऽत्रोपवीती स्या(द)दुपचारः प्रदक्षिणम्।
तिलकार्य्यं यवैः कुर्य्यात् युग्मानत्र निमन्त्रय तु ॥
ऋजुदर्भानमूलांस्तु दत्त्वैषामासनेषु तु ।
प्राक्संस्थेष्वप आसिच्य पूर्व्ववच्चानुमन्त्रय ताः ॥
तिलो सोति पदस्थाने यवोऽसीति पद वदेत् ।
स्वधयेति पदस्थाने तुष्ट्याशब्दं वदेत्तथा ॥
पितॄनिति पदात्पूर्व्वं वदेन्नान्दीमुखानिति ।
स्वधानमःपदस्थाने वदेत् स्वाहानमःपदम् ॥
अप्राप्यन्तु यथापाठमुक्तार्घ्येष्वावपेद्यवान् ।
नान्दीमुखास्तु पितरः प्रीयन्तामिति मन्त्रतः ॥
सम्बन्धनामरूपाणि वर्ज्जयेदत्र कर्म्मणि ।
निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ॥
पित्र्यर्थमुपविष्टभ्य सकृदर्घ्यं निवेदयेत् ।
द्विर्द्विर्गन्धादि दातव्यमित्यादि ॥

अन्येऽपि विशेषाः स्वस्वसूत्रादवगन्तव्याः।

तथा।

अत्र तृप्तिपरिज्ञानपर्य्यन्तं पूर्व्ववद्भवेत्।
मधुवातेत्यृचः स्थाने उपास्मै गायता नरः ॥
पञ्चर्चः* श्रावयित्वाक्षन्निति† च श्रावयेदृचम्।
सम्यक्प्रवचनादि स्यादाचान्तेषु द्विजन्मसु ॥
द्विजभुक्ताश्रयं सम्यग्गोमयेनोपलेपयेत्।
अत्र प्रागग्रकान् दर्भानास्तृणाति ततः परम् ॥
पृषदाज्यं च कुर्व्वीत दध्ना (लयन्ति) नयति सर्पिषा।
पृषदाज्येन सम्मिश्रं भुक्तशेषं हुतं भवेत् ॥
एकैकस्योक्तमन्त्रेण द्वौ द्वौ पिण्डौ तु निर्वपेत्।
अथानुमन्त्रणादि स्यात्तत्तु नेच्छन्ति केचन।
अथ सम्यक्प्रवचनं विप्राणान्तु विसर्ज्जनम् ॥ इति।

---

उपास्मै गायता नरः पवमानायेन्दवे। अभिदेवाँ इयक्षते ॥ ६२ ॥
यं त्वाहिहत्ये मघवन्नवर्द्धं शाम्बरे हरिवो यं गविष्टौ।
यं त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिः ॥ ६३ ॥
जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः।
अवर्द्धन्निन्द्र मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ ६४ ॥
आतू न इन्द्र वृत्रहन्नस्माकमर्द्धमागहि। महान् महीभिरूतिभिः ॥ ६५ ॥
त्वमिन्द्र प्रतूर्त्तिष्वभि विश्वा असि स्पृधः।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य्य तरुष्यतः ॥ ६६म. ३३अ. यजुः।
अक्षन्नमीमदन्त ह्यवप्रिया अधूषत।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ ५१म. ३अ. यजुः।

तथा बहुमातृकस्यापि पिण्डमेकमेव ।

अनेका मातरो यस्य वृद्धिश्राद्धे महालये ।
अर्घ्यदानं पृथक् कुर्य्यात् पिण्डमेकन्तु निर्व्वपेत् ॥

इति लोगाक्षिवचनात् ।

तथा ।

पितृवर्गे मातृवर्गे तथा मातामहस्य च ।
जीवेत् स यदि वर्गाद्यस्तद्वर्गन्तु परित्यजेत् ॥

इति वचनाद्यदि वर्गाद्यः सम्पूर्णो वर्गो वा जीवति तदा वृद्धि-श्राद्धादौ तद्वर्गस्त्याज्यः । तथा पिण्डदानमपि विकल्पेनोक्तं वृद्धिश्राद्धे ।

पिण्डनिर्वपणं कुर्य्यान्न वा कुर्य्यान्नराधिप ।

इति भविष्यपुराणवचनात् ।

आमश्राद्धं पिण्डवर्जं वृद्धौ नान्दीमुखे सदा ।

इति वृद्धयाज्ञवल्क्यवचनाच्च । अपिण्डकं वृद्धिश्राद्धमनग्निकविषय-मिति केचित् ।

यावन्मन्त्राग्निसम्बन्ध उत्सन्नाग्निस्तथैव च ।
तावद्वृद्धिषु सर्व्वासु सङ्कल्पमात्रमाचरेत् ॥

इति वृद्धमनूक्तेः ।

सङ्कल्पश्राद्धे विशेषमाह लोगाक्षिः ।

सङ्कल्पन्तु यदा कुर्य्यान्न कुर्य्यात्पात्रपूरणम् ।
नावाहनं न चैवार्घ्यं नाग्नौकरणमेव च ।
विकिरं पिण्डदानञ्च श्राद्धे सङ्कल्पसंज्ञि(ते)तम् ॥ इति ।

अथ जीवत्पितृकस्य विशेषमाह मनुः।

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।

येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः॥ इति।

अस्यार्थः। पितृकर्तृके कर्मणि वृद्ध्यादौ यदि पितृप्रतिनिधित्वेन पुत्रस्य कर्तृत्वं तदा पितृपित्रादय एव यष्टव्याः न तु स्वमातृमातामहादय इति। स्वकर्तृके स्वपत्नीनिषेकादिकर्मणि तु पितरि जीवत्यपि स्वमातृमातामहादिभ्यो दद्यात्।

पितरो जनकस्येष्ट्या यावद्व्रतमनाहितम्।

समाहितव्रतः पश्चात् स्वान् यजेत पितॄन् सदा॥

इति वृद्धयाज्ञवल्क्योक्तेः। समाहितव्रतः समाप्तब्रह्मचर्य्य इत्यर्थः।

तत्रापि प्रथमविवाहे न स्वस्य कर्तृत्वमित्याह सायनाचार्य्यः।

नान्दीश्राद्धं पिता कुर्य्यादाद्ये पाणिग्रहे बुधः।

अत ऊर्द्ध्वं प्रकुर्व्वीत स्वयमेव तु नान्दिकम्॥ इति।

कात्यायनोऽपि।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु।

पिण्डानोद्वहनात्तेषां त(द)स्याभावे तु तत्क्रमात्॥

अत्र पिण्डशब्दः श्राद्धपरः। आोद्वहनादित्यत्र अभिविधावाङ्। ततश्च स्वापत्यस्य गर्भाधानादिप्रथमविवाहान्तसंस्कारेषु पिता स्वपितृभ्यः श्राद्धं दद्यात्। तस्य पितुरभावे तु तत्प्रतिनिधिपितृव्यादिस्तत्पुत्रादेर्जातकर्म्मादिविवाहान्तसंस्कारेषु तेषां संस्कार्य्यपित्रादीनामेव क्रमेण दद्यात्। पितुर्भ्रात्राद्यभावे तु संस्कार्य्यस्य भ्रात्रादिभिरपि स्वपित्रादीनामेव दातव्यम्।

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः ।

इति स्मरणात् । समावर्त्तनस्यापि विवाहात्प्राचीनसुतसंस्कारत्वाज्जीवत्पितृकस्य समावर्त्तने पिता स्वपितृभ्यो दद्यात् । अजीवत्पितृकस्तु पूर्व्वसंस्कृतभ्रातृसम्भवेऽपि स्वयमेव स्वपितृभ्यो दद्यात् । उपनीत्या कर्म्माधिकारस्य जातत्वादिति ।

कर्त्ता चेज्जीवत्पिता तदा विशेषमाह गृह्यपरिशिष्टे ।

जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्य्यात् तस्यां जीवन्त्यां मातामहस्यैवेति ।

येभ्य एव पिता दद्यादिति तु साग्निविषयम् ।

न जीवतः पितुः कुर्य्याच्छ्राद्धमग्निमृते द्विजः ।
(ए)येभ्य एव पिता दद्यात्तेभ्यः कुर्व्वीत साग्निकः ॥
पितामहेऽप्येवमेव कुर्य्याज्जीवति साग्निकः ।
साग्निकोऽपि न कुर्व्वीत जीवति प्रपितामहे ॥

इति सुमन्तुवचनात् ।

इति श्रीमद्विधानपारिजाते तृतीयस्तवके वृद्धिश्राद्धनिर्णयः ।

## अथ वरस्य कन्यागृहं प्रति गमनविधानम् ।

तत्र शौनकः ।

पुण्ये मुहूर्त्ते कुर्व्वीत विवाहं विधिवद्द्विजः ।
तत्राभ्युदयिकं श्राद्धं कुर्य्यात् स्वस्ति च वाचयेत् ॥

अपरेद्युः कृतस्नानो धृतधौताम्बरद्वयः ।
भूषितो गन्धमाल्याद्यैः शकुनैश्च समन्वितः ॥
ब्राह्मणान् भोजयित्वाऽन्ते कृतपुण्याहवाचनः ।
कृतकौतुकबन्धश्च मित्र(बन्ध्वादि)बान्धवसंयुतः ॥
यानं यथार्हमारुह्य यातव्यं च वधूगृ(हि)हम् ।
तस्य द्वाराद्बहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः ॥
गृहीतपूर्णकुम्भादिपाणिभिर्वनिताजनैः ।
कृताभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः ॥ इति ।

वधूवरभोजनविषये बौधायनः ।

स्रग्वी भुक्तवान् प्रतोदपाणिरपदातिर्गत्वा बन्धुज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां वधूं समीक्षेत इति ।

व्यासोऽपि ।

भुक्त्वा* समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजातये ॥ इति ।

ब्राह्मेऽपि ।

पूर्व्वेद्युः स्वस्तिवाचनं नान्दीश्राद्धं समाचरेत् ।
भुक्त्वा निश्यह्नि पूर्व्वाह्णे उद्वहेन्निशि सर्व्वदा ॥

इति कन्यागृहगमनविधानम् ।

---

* भुक्त्वेति मधुपर्कवैधभोजनपरमिति निर्णयसिन्धुः ।

अथेदानीं गृहमागताय वराय कन्यादात्रा मधुपर्क-
विधानेन पूजा कार्य्या ।

तथा चाश्वलायनगृह्यम् ।

ऋत्विजो वृत्वा मधुपर्कमाहरेत् स्नातकायोपस्थितायेति ।

कात्यायनगृह्यमपि ।

षडर्घ्या भवन्ति आचार्य्य ऋत्विग्वैवाह्यो राजा प्रियः
स्नातक इति ।

वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।

मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरि* ॥ इति ।

एवं स्वस्वसूत्रोक्तप्रकारेण मधुपर्कविधिना अर्चिताय वराय कन्या-
दानमभिधीयते ।

तथाच शौनकः ।

नानाविधा जानपदा ग्राम्याश्चोद्वाहकर्म्मणि ।

क्रियन्ते लौकिका धर्म्मास्तेषु स्वकुलपूरुषैः ॥

पूर्व्वैरनुष्ठितान् ज्ञात्वा कुर्य्याद्दारपरिग्रहम् ।

सर्व्वसाधारणं कर्म्म तत्तु तावदिहोच्यते ॥

तत्र प्रदेशे कस्मिंश्चित्तद्बन्धुपरिकल्पिते ।

विष्टरे† प्राङ्मुखः सम्यगासित्वा वरणी स्वयम् ॥

---

* अत्र वरदातृशब्द ऋत्विगाद्युपलक्षकः तदाहुः अर्घ्यशाखया मधुपर्क इति वर्ग्यस्य यच्छाखोक्तं कर्म्म तच्छाखया मधुपर्क इति याज्ञिकाः तत्तु नाद्रियन्ते वृद्धाः । इति निर्णयसिन्धुः ।

† पञ्चाशता भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः ।
ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः । एतेषामन्यतमलक्षणे ।

प्रक्षाल्याचम्य च कृतप्राणायामः समाहितः ।
उपलिप्य तथोल्लिख्य स्थण्डिलेऽग्निं निधाय च ॥
पश्चादग्नेः प्रतिष्ठाप्य पेषणीमश्मनिर्म्मिताम् ।
प्रागुत्तरेऽग्नेः संस्थाप्य पूर्णकुम्भमथो वरः ॥
उत्थाय प्राङ्मुखः स्थित्वा प्रत्यगुत्तरतोऽनलात् ।
तदानीमात्मना दत्तं नूतनं वसनद्वयम् ॥
वसित्वाचान्तसलिलां भूषितां कुसुमादिभिः ।
पश्चात्परकुम्भको ब्रह्मा तदर्थेन तु विष्टरः ॥
ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥
प्रत्यङ्मुखः प्राङ्मुखीं तां स्थितामात्मसमीपतः ।
कन्यकां प्रतिग्टह्णीयाद्दत्तां पित्रादिभिर्वरः ॥
कन्यादानप्रकारश्च पूर्व्वाचरित उच्यते ।
वरस्याभिमुखं स्थित्वा कन्यायाः प्रतिपादकः ॥
चतुर्थ्यन्तं वरस्योक्त्वा नाम तद्गोत्रपूर्व्वकम् ।
ततः सङ्कल्पकर्म्मभ्य इत्युच्चार्य्य ततः परम् ॥
पाद(गामिनि)गामिति चोच्चार्य्य प्रीतिपूर्व्वं ततः परम् ।
वरस्य हस्ते यो दद्याद्देवतीर्थेन शान्तधीः ॥
तद्यथा गार्ग्यगोत्राय परमेश्वरशर्म्मणे ।
चान्द्रेयगोत्रप्रभवां पार्व्वतीं प्रददाम्यहम् ॥
कन्यां सङ्कल्पकर्म्मभ्यः करोमि प्रतिपादिताम् ।
कन्यकादानकर्म्मैवमाचरन्ति मनीषिणः ॥

विभवानुगुणं देयं सुवर्णरजतादिकम् ।
सर्व्वं विहित(मन्त्रेण)मत्रैव काले दद्यात्सहोदकम् ॥

तिष्ठन् कन्यादानं कुर्य्यात् । तदुक्तं बृहस्पतिना ।

चतुष्पादं गृहं कन्यां दासीं छत्रं रथं तथा ।
तिष्ठन्नेतान् द्विजो दद्याद्भूम्यादीनुपविश्य च ॥
ततो मङ्गलसूत्रञ्च ध्यायन्निष्टाञ्च देवताम् ।
बद्ध्वा कण्ठे प्रदेयेऽस्या भूषणानि च शक्तितः ।
कन्यकां प्रतिगृह्यैवं वरः पूर्व्ववदासने ॥ इति ।

अत्र शौनकीये अग्निं प्रतिष्ठाप्य बध्वा वरः पाणिं गृह्णीयादिति यदुक्तं तत्तु वाजसनेयादिविषयम् । तच्छाखाप्रवर्त्तककात्यायनाचार्य्येण उद्धृतावोक्षिते अग्निमुपसमाधाय निर्म्मथ्य विवाह उदगयन आपूर्य्यमाणपक्षे कुमार्य्याः पाणिं गृह्णीयादिति सूत्रप्रणयनात् । आश्वलायनादीनान्तु पाणिग्रहणानन्तरमग्निस्थापनं वेदितव्यम् । पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपुरस्तादुदकुम्भं निधाय समन्वारब्धायां जुहोति सूत्रात् ।

आत्मनो दक्षिणे पार्श्वे वधूं तामुपवेश्य च ।
उपलेपादि कुर्व्वीत हविर्भुक्स्थापनान्तकम् ॥

इति कारिकाकारमताच्च ।

नारदः ।

षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ।
कुर्य्यात्पातालवत्ताम्रपात्रं तद्दशभिः पलैः ॥
ताम्रपात्रे जलैः पूर्णे मृत्पात्रे वाथवा शुभे ।

मण्डलार्द्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत्* ।
मुहूर्त्ते मङ्गले प्राप्ते यन्त्रच्छायादिनाथवा ॥ इति ।

अत्र सुमुहूर्त्तसमये विशेषोऽभिहित आश्वलायनकारिकायाम् ।

स्नातालङ्कृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः ।
ईक्षेत तण्डुलस्थाया वरस्तस्य मुखञ्च सा ॥
मुहूर्त्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः ।
सगुड़ां जीरकां कन्यां वरयेदथ तां वरः ॥ इति ।

तण्डुलप्रमाणमुक्तं यमस्मृतौ ।

आरुह्य तण्डुलप्रस्थमीक्षेत्प्रत्यङ्मुखो वधूम् । इति ।

अत्र कन्यादानप्रकार उक्तः गृह्यपरिशिष्टे । यथा ।

चतु(ष्पादे)ष्पदे सोत्तरच्छदे हरितदर्भास्तीर्णे भद्रपीठे वरः प्राङ्मुख उपविशेत्तस्य पुरस्तात् प्रत्यङ्मुखीं भद्रपीठासीनां सुस्नाता-मलङ्कृतामाहतवाससम्† स्रग्विणीं कन्यां पुरस्कृत्य दाता सामात्य-उपाविशेद्वरं विधिवद(र्हयेत्)भ्यर्च्चयेच्च । अथ दक्षिणतः पुरोधा उदङ्मुख उपविश्य मध्ये प्रागग्रोदगग्रान् दर्भानास्तीर्य्य तैजस-मपां पूर्णं कलसं निधाय व्रीहियवानोप्य तं गन्धादिभिरलङ्कृत्य दूर्व्वा(म्र)पल्लवैर्मुखमवस्तीर्य्य अब्लिङ्गाभिर्ऋग्भिरभिमन्त्र्य ताभि-रद्भिः प्रयोजयेत् ।

---

* निक्षेपमन्त्रो यथा— मुखं त्वमसि यन्त्राणां ब्रह्मणा निर्म्मितं पुरा ।
भव भावाय दम्पत्योः कालसाधनकारणम् ॥ इति निर्णयसिन्धुः ।

† आहतवासोलक्षणं यथा—ईषद्धौतं नवं शुभ्रं सदशं यन्न धारितम् ।
आहतं तद्विजानीयात् सर्व्वकर्म्मसु पावनम् ॥
ईषत् धौतं, न धारितं न परिहितमिति संस्कारतत्त्वम् ।

अथ दाता पुण्याहादीनि वाचयित्वा शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टञ्चास्तु दीर्घमायुरस्तु शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्त्तनक्षत्रसम्पदस्तु इत्युक्त्वा भार्य्यादिसमेतः सङ्कल्पवाक्यमुच्चार्य्य कन्यां प्रतिगृह्य वत्सगोत्रो(त्रवा)त्पन्नाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां वशिष्ठगोत्रो-(त्पन्नाय)त्रवाय अमुष्य प्रपौत्राय अमुष्य पौत्राय अमुष्य पुत्राय श्रुतशीलनाम्ने अस्मै वराय सम्प्रददे कन्यां प्रतिगृह्णातु भवानिति ब्रुवन् वरस्य पाणौ हिरण्यमुपधाय कलसोदकधारामासिञ्चेत्। मनसा च प्रजापतिः प्रीयतामिति ब्रूयात्।

अथ वरः शिरसि पुण्याहाशिषो वाचयित्वा दक्षिणेऽंसे कन्यामभिमृश्य "क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वाददातु पृथिवी परिगृह्णातु" इति जपित्वा प्रजापतिमनुस्मृत्य धर्म्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयात्। एवं त्रिः प्रयुज्य पुरोधा दातृवरौ प्रति "ऋतस्य हि शुरुधः सन्ति पूर्व्वी"रिति तिस्र ऋचो* जपित्वा एतद्वः सत्यसमृद्धमस्तु इति ब्रूयात्।

---

* ऋतस्य हि शुरुधः सन्ति पूर्व्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥ ८ ॥
ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि ।
ऋतेन दीर्घमिषणन्त पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥ ९ ॥
ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः ।
ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥ ४म. २०सू. १०ऋक्।

अथानयोर्निरीक्षणम् ।

अलङ्कृते वेश्मनि मङ्गलगीततूर्य्यनिर्घोषे पूर्व्वापराव(न्यु)त्युच्छ्रितौ हस्तान्तरालौ शुक्लतण्डुलराशी कृत्वा मध्ये स्वस्तिकां तिरस्करिणीं धारयेयुः । अथ पूर्व्वस्मिन् राशौ प्रत्यङ्मुखीं गुड़जीरकपाणिं कन्यां स्थापयेयुः । अपरस्मिन् प्राङ्मुखं तथाभूतं वरञ्च । तौ मनसा इष्टदेवतां ध्यायन्तौ समाहितौ (समायिकौ) तिष्ठेताम् । ब्राह्मणाः सूर्य्यसूक्तं* पठेयुः । पुरन्ध्रयो मङ्गलगीतीः कुर्य्युः ।

अथ ज्योतिर्व्विदादिष्टे काले (प्रविष्टे) सद्यस्तिरस्करिणीमुदगपसार्य्य कन्यावरौ परस्परस्मिन् गुड़जीरका(नवकिरतः)नवकिरन्तौ परस्परं निरीक्षेयाताम् । अभ्रातृघ्नीमिति† तामीक्षमाणो जपत्यघोरचक्षुरपतिघ्न्येधीति‡ । तथेक्ष(च्य)माणोऽथास्या भ्रुवोर्मध्यम् इदमहमिति§ दर्भाग्रेण परिमृज्य दर्भं निरस्य अप उपस्पृशेत् । ततो मित्रोऽसीति वधूं दक्षिणहस्ते गृहीत्वा एकमिषेति¶ वेदिमुपनयेत् । अथ ब्राह्मणा बान्धवाः पुरन्ध्रयश्च ताराशीभिरभिनन्दयेयुः ।

---

* उदुत्यमित्यादिकं प्रथमखण्डस्य ४०७ पृष्ठे प्रदर्शितम् ।

† अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पत इन्द्रापुत्रघ्नीं लक्ष्म्यान्तामस्यै सवितः सुव ।

‡ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्च्चाः ।

वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ १०म. ८५सू. ४४ऋक् ।

§ इदमहं या त्वयि पतिघ्न्यलक्ष्मीस्तां निर्दिशामि ।

¶ एकमिषे विष्णुस्त्वाऽन्वेतु द्वे ऊर्ज्जे त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु । संस्काररत्नमाला ।

अथानयोराद्रीक्षतारोपणम् ।

ब्राह्मणाः तैजसेन पात्रेण क्षीर(मानीय)मादाय घृतमासिच्य पुरन्ध्र्यादिभिः आर्द्राक्षततण्डुलानादाय तदारोपणरूपं तथा-स्थितयोर्वधूवरयोर्वर्धनकमेतत् कारयेयुः । अमृतं क्षीरमायुर्घृत-मरिष्टमक्षतान्याप एतेषामारोपणमिष्यते इति सूत्रात् । ततो वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुप-स्तीर्य द्विस्तण्डुलानञ्जलिना वपति यथापूर्व्यंत ततो द्विरुपरिष्टा-दभिघारयति एवं वराञ्जलावन्यस्तण्डुलापूरणं कुर्य्यात् । दाता तयोरञ्जल्योर्हिरण्यमवदधाति । अथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेत् दाता च कन्यां धारयतु दक्षिणाः पान्तु बहुदेयं चास्तु पुण्यं वर्धताम् शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्त्तनक्षत्रसम्पदस्तु इत्युक्त्वा कन्यामुत्क्षिप्य तदञ्जल्यक्षतान् वरमूर्द्धन्यारोपयेत् । वरोऽपि तन्मूर्द्ध्नि स्वाञ्जल्यक्षतानारोपयेत् । एवं त्रिर्वधूः पूर्व्वं वराञ्जलौ ततस्त्रिर्वरः वध्वञ्जलौ तण्डुलपूरणं कुर्य्यात् । तदञ्जलावन्योऽन्य तत्समारोपणं कारयेत् । इदानीं दाता वराय गोभूमिदासीयान-शयनासनादिकमनुदानं दद्यात् ।

अथ पुरोधाः कांस्ये (पयः) अप आसिच्य औदुम्बर्य्या आर्द्र-शाखया सपलाशया सहिरण्यपवित्रया सदूर्व्वाम्रपल्लवया अभि-षिञ्चेदब्लिङ्गाभिर्ऋग्भिः* ।

---

* आपो हि ष्ठा मयोभुव इत्यादिकाभिः, प्रथमखण्डस्य ५८ पृष्ठे प्रदर्शिताभिः ।

अथ वधूवरौ स्वशेखरपुष्पं क्षीरघृतेनाप्लाव्य परस्परतिलकं कुरुतः कण्ठे स्रजं चामुञ्चतः कौतुकसूत्रं च परस्परं करे बध्नीयाताम् । अथ पुरोधास्तयोरुत्तरीयान्तयोः पञ्च पञ्च पू(गी)गफलानि विवाहव्रतरक्षिणं गणाधिपमनुस्मृत्य गणानां त्वा गणपतिं हवामहे* इति आ तू न इन्द्र क्षुमन्तमिति ऋचा† वधूवरयोरुत्तरीयान्तौ च नीललोहितं भवतीति‡ मन्त्रेण बध्नीयात् ।

अथ दाता सभार्य्यो वृद्धाः पुरन्ध्रयो ज्ञातिबान्धवाश्च क्रमादाशीर्भिरार्द्राक्षतारोपणं कुर्य्युरिति ।

अत्र कन्यानिरीक्षणदानादिषु शौनककात्यायनपरिशिष्टयोः क्रमव्यत्ययो यत्र दृश्यते तत्र शिष्टाः प्रमाणम् ।

अत्र कन्यादानमन्त्रो वायुपुराणे यथा ।

कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् ।
दास्यामि (त्विष्णवे) विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥
विश्वम्भ(रः)रा सर्व्वभूताः साक्षिण्यः सर्व्वदेवताः ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥

---

* गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे । निधीनां त्वा निधिपतिं हवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ।
२३अ. १९म. यजुः ।

† आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय ।
महाहस्ती दक्षिणेन ॥ ८म. ८१सू. १ऋक् ।

‡ नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥ १०म. ८५सू. २८ऋक् ।

अथ प्रार्थनामन्त्रौ ।

ऋष्यशृङ्गः ।

गौरीं* कन्यामिमां विप्र यथाशक्तिविभूषिताम् ।
गोत्राय शर्म्मणे तुभ्यं दत्तां विप्र समाश्रय ॥

व्यासोऽपि ।

कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ।
कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ इति ।
दासीदासासनाद्यञ्च भूषणानि गृहं (ततः) तथा ।
क्षेत्राणि च धनञ्चापि तथान्यानि प्रदापयेत् ॥

इति विवाहोत्तरमनुदानान्युक्तानि ।

अथ कन्यादानाङ्गभूतानुदानमन्त्राः प्रोच्यन्ते ।

यज्ञसाधनभूता या विश्वस्याघप्रणाशनी† ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

इति गौः ।

सर्व्वशस्याश्र(या)यो भूमिर्वराहेण समुद्धृता ।
अनन्तशस्यफलदा अतः शान्तिं प्रयच्छ मे ॥

इति भूमिः ।

इयं दासी मया तुभ्यं श्रीविप्र प्रतिपादिता ।
सदा कर्म्मकरी भोग्या यथेष्टं भद्रमस्तु ते ॥

---

* न्यूनवार्षिक्यां तु गौरीमितिपदस्थाने मयेति निवेशनीयम्, अधिकवार्षिक्यां रोहिणीमित्यादिकः कार्य इति गोपीनाथः ।

† अघप्रणाशनी इत्यत्र अघौघनाशिनी इति संस्काररत्नमालायां पाठः ।

इति दास्याः ।

विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ।

चन्द्रार्कवाह(नो)नं नित्यमतः शान्तिं प्रयच्छ मे ॥

इत्यश्वस्य ।

अशून्यं शयनं यस्मादनूनां श्रियमुन्नतिम् ।

सौभाग्यं देहि मे नित्यं शय्यादानेन केशव ॥

इति शय्यायाः ।

हिरण्यगर्भसम्भूतं सौवर्णं चाङ्गुलीयकम् ।

सर्व्वप्रदं प्रदास्यामि प्रीणातु कमलापतिः ॥

इत्यङ्गुरीयकस्य ।

क्षीरोदमथने पूर्व्वमुत्थितं कुण्डलद्वयम् ।

श्रिया सह समुद्भूतं ददे श्रीः प्रीयतामिति ॥

इति कुण्डलस्य ।

इदं गृहं गृहाण त्वं सर्व्वोपस्करसंयुतम् ।

तव विप्र प्रसादेन ममास्त्वभिमतं फलम् ॥

इति गृहस्य ।

अत्र विभवे सति अन्यान्यपि दातव्यानि तन्मन्त्रास्तु चतुर्थस्तवके वक्ष्यन्ते।

कन्यादानफलमुक्तं ब्राह्मे ।

कन्यान्तु परया भक्त्या अलङ्कृत्य प्रयत्नतः ।

कुलीनाय सुरूपाय गुणज्ञाय विशेषतः ।

कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः ॥

लैङ्गेऽपि ।

कन्यादानं प्रवक्ष्यामि सर्व्वदानोत्तमोत्तमम् ।
यद्दत्त्वा सर्व्वदानानां फलं प्राप्नोति मानवः ॥
महीदातुश्च गोदातुः कन्यादातुश्च ये तथा ।
कन्यादानानुगाः पश्चात् समं यान्ति त्रयो रथाः ॥

वृहस्पतिरपि ।

सहस्रमिव धेनूनां शतं चा(नु)नडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं (च) न तत्समम् ।
तस्मात्सर्व्वप्रदानेभ्यः कन्यादानं विशिष्यते ॥

मनुरपि ।

अग्निहोत्रादिभिर्यत्स्याद्धोत्रातो ब्राह्मणस्य च ।
तत्कन्यां विधिवद्दत्त्वा फलमाप्नोति मानवः ॥

स्कान्देऽपि ।

वैवाहिकप्रदानं (वो) वा यो दद्याच्च नरोत्तमः ।
विमानेन विचित्रेण किङ्किणीजालमालिना ।
महेन्द्रभवनं याति वीज्यमानोऽप्सरोगणैः ॥

संवर्त्तोऽपि ।

अलङ्कृत्य तु यः कन्यां भूषणाच्छादनादिभिः ।
दद्यात्स्वर्गं (स मा) समाप्नोति पूज्यते वासवादिभिः ॥
कूकुद(कूपद)श्चाश्वमेधी च प्राणदाता भयेषु च ।
समं यान्ति रथा येषां त्रयो वै नात्र संशयः ॥

कुकुदः (कूपद) इति सालङ्कारकन्यादातेत्यर्थः। सत्कृत्यालङ्कृतां कन्यां यो ददाति स कुकुद (कूपद) इत्यभिधानात्।

आग्नेयेऽपि।

कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम्।
ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते॥
श्रुत्वा कन्याप्रदानञ्च पितरः प्रपितामहाः।
विमुक्ताः सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते॥
तिलराशिः कृतो यावद्दिवाकारसमुच्छ्रितः।
वर्षान्ते गृह्यते तस्य तिलो राशेस्तु यावता।
संचयं लभते* तावद्ब्रह्मलोकोऽस्य निश्चितम्॥
यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते†॥ इति।

भविः।

वालुकाभिः कृतो राशिर्यावत् सप्तर्षिमण्डलम्।
गते लयसहस्रे‡ तु एकमेकं विशीर्य्यते।
क्षयश्च दृष्टस्तस्यापि कन्यादाने न विद्यते§॥

---

* क्षयं लभते इति पाठं युक्ततमुत्पश्यामः।

† महो ईयते इति पदद्वयमिति कार्त्ताः, ऐकपद्ये तु महीय्यते इति रूपं स्यात्।

‡ लया: प्रलया: कल्पान्ता इत्यर्थः तेषां सहस्रं तस्मिन्।

§ कन्यादानजन्यपुण्यस्य इति शेषः।

संवर्त्तस्तु ।

ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृतम् ।

प्राप्नोति कन्यकां दत्त्वा होममन्त्रैश्च संस्कृताम् ॥ इति ।

अथ दम्पतिकर्त्तव्यमुच्यते ।

यदाह कात्यायनः ।

सवर्णायास्तथा पाणिं गृहीत्वा विधिवद्वरः ।

संपूज्य प्रार्थयित्वा तां शचीं देवीं गुणाश्रयाम् ॥

त्रैलोक्यवल्लभां दिव्यगन्धमाल्याम्बरा(न्वि)न्विताम् ।

सर्व्वलक्षणसंयुक्तां सर्व्वाभरणभूषिताम् ।

विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ॥

एवंविधां कुमारीन्तु पूजान्ते प्रार्थयेत्ततः ।

कात्यायनोक्त पश्चाच्च गौरीमेवं प्रपूजयेत् ॥ इति ।

एवं गौरीं संपूज्य वरो मङ्गलसूत्रं वधूकण्ठे स्वेष्टदेवतां ध्या(त्वा)य बध्नीयात् ।

तत्र मन्त्रः स्मृतिरत्ने ।

माङ्गल्यतन्तुनानेन भर्तृजीवनहेतुना ।

कण्ठे बध्नामि सुभगे सा जीव शरदः शतम् ॥ इति ।

अस्मिन् समये वरो वधूं स्वकीयवस्त्रालङ्कारभूषणैर्भूषयित्वा पूर्व्वोक्त विवाहवेदिकामागत्य स्वयमासनमध्यास्य पश्चिममार्गेण नियमित वाचं वधूमानीय दक्षिणतस्तामुपवेश्य स्वस्वशाखोक्तमार्गेण विवाह होमं कुर्य्यात् ।

तथाचाश्वलायनः ।

अर्द्धरात्रे व्यतीते तु परेद्युः प्रातरेव हि ।

गृहप्रवेशनीयः स्यादिति यज्ञविदो विदुः ॥ इति ।

अथ व्रतविशेषमाह शौनकः ।

अत ऊर्द्ध्वं त्रिरात्रं तौ द्वादशाहमथापि वा ।

शक्तिं वीक्ष्य तथाब्दञ्च चरेतां दम्पती व्रतम् ॥

व्रतमाह स एव ।

अक्षारलवणाहारौ भवेतां भूतले तथा ।

शयीयातां समावेशं न कुर्य्यातां वधूवरौ ॥

समावेशो मैथुनम् ।

व्रते समाप्ते वध्वा च विवाहसमये धृतम् ।

वस्त्रं प्रदद्यात्तस्मै ब्राह्मणाय विपश्चिते ॥

सूर्य्यानाम्नीमृचो*ऽध्येति शब्दार्थस्वरतश्च यः ।

[illegible] ॥

---

हा ज्योतिः ॥

* [illegible]संख्याकाः । यथा—

सूर्य्या[illegible]भिता भूमिः सूर्य्येणोत्तभिता द्यौः ।

[illegible] सोमो अधिश्रित

ऋतेनादित्यास्तिष्ठन्ति दिवि [illegible] ॥ १ ॥

सोमेनादित्या बलिनः सोमेन पृथिवी मही ।

अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ २ ॥

सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम् ।

सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥ ३ ॥

आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः ।

ग्राव्णामिच्छृण्वन्तिष्ठसि न ते अश्नाति पार्थिवः ॥ ४ ॥

यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः ।

वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ५ ॥

सत्येनोत्तभितेत्याद्यामृचमारभ्य या ऋच: ॥

---

रैभ्यासीदनुदेयी नाराशंसी न्योचनी ।
सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम् ॥ ६ ॥
चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम् ।
द्यौर्भूमि: कोश आसीद्यदयात् सूर्यापतिम् ॥ ७ ॥
स्तोमा आसन् प्रतिधय: कुरीरं छन्द ओपश: ।
सूर्याया अश्विना वराग्निरासीत् पुरोगव: ॥ ८ ॥
सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत्पत्ये शंसन्तीं मनसा सविताददात् ॥ ९ ॥
मनो अस्या अन आसीद्द्यौरासीदुत च्छदि: ।
शुक्रावनड्वाहावास्तां यदयात् सूर्या गृहम् ॥ १० ॥
ऋक्सामाभ्यामभिहितौ गावौ ते सामनावित: ।
श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचर: ॥ ११ ॥
शुची ते चक्रे यात्या व्यानो अक्ष आहत: ।
अनो मनस्मयं सूर्यारोहत् प्रयती पतिम् ॥ १२ ॥
सूर्याया वहतु: प्रागात् सविता यमवासृजत् ।
अघासु हन्यन्ते गावोऽर्जुन्या: पर्युह्यते ॥ १३ ॥
यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्याया: ।
विश्वे देवा अनु तद्वामजानन् पुत्र: पितराववृणीत पूषा ॥ १४ ॥
यदयातं शुभस्पती वरेयं सूर्यामुप ।
क्वैकं चक्रं वामासीत् क्व देष्ट्राय तस्थथु: ॥ १५ ॥
द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदु: ।
अथैकं चक्रं यद्गुहा तदद्धातय इद्विदु: ॥ १६ ॥
सूर्यायै देवेभ्यो मित्राय वरुणाय च ।
ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नम: ॥ १७ ॥
पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परियातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुन: ॥ १८ ॥

अथ चतुर्थु दिवसेषु कर्त्तव्यविशेषमाह स एव।

दम्पती रोहिणीसोमौ भूत्वा प्रथमके दिने।
दाक्षायणीं यजेयातां द्वितीये दिवसेऽपि तौ॥
पूजयेतां महादेवीं गन्धर्व्वाप्सरसौ च तौ।
अग्निस्वाहे तृतीयेऽह्नि पूजयेताञ्च कालिकाम्।
चतुर्थ्यां तौ यजेयातां शाङ्करीं मानवस्त्रियौ॥
एवं प्रतिदिनं (कर्तुं) कृत्वा पूजां तौ दम्पती तथा।
चतुर्थ्यन्तेषु दिवसेष्वर्चयेद्ब्राह्मणान् बहून्*॥
वस्त्रहेमादिभिष्टान्नं ताम्बूलादि प्रयत्नतः।
आशीर्व्वादैर्बहुविधैश्चतुर्व्वेदोदितैर्द्विजैः॥

अथ दम्पतिसहभोजने संग्रहकारः।

माता सञ्जोपनीते स्वाद्विवाहे भार्य्यया सह।
अन्यत्र सह (भुञ्जीत) भुञ्जानः पातित्यं प्राप्नुयान्नरः॥

तथा नान्दीश्राद्धमारभ्य मातृकाविसर्ज्जनावधि वर्ज्यसु

नित्यश्राद्धमध्ययनं स्नानं शीतेन [illegible]
जाते मातृलिङ्ग[illegible]पोद्वासनावधि॥

छन्दोगपरिशिष्टे।

अपसव्यं स्वधा(पार्व)कारं शीताद्भिः स्नानमेव च।
सपिण्डा नैव कुर्व्वीरन् यावन्मातृविसर्ज्जनम्॥

[illegible] वा भर्तृ दूषयन्ति स्वधाभिरिति मन्त्रलिङ्गाच्च नित्यश्राद्धादौ
[illegible]धाकारनिषेधः।

---

* अर्च्चयेतां द्विजान् बहून् इति पाठो युक्तः, कर्तृद्विवचनान्तत्वात्।

अन्यत्रापि ।

दर्शश्राद्धं गयश्राद्धं नदीसीमाविलङ्घनम् ।
सपिण्डा नैव कुर्व्वीरन् यावच्छ्राद्धविसर्ज्जनम् ॥
पित्रोः प्रत्याब्दिके प्राप्ते नान्दीश्राद्धं न कारयेत् ।
यदि मोहाद्द्विजः कुर्य्यात्तत्क्षणमशुभं भवेत् ॥
उपवासव्रतञ्चैव तथा व्रतविसर्ज्जनम् ।
मृदा स्नानं नैव कुर्य्यात् क्षुरेण श्मश्रुकृन्तनम् ।
सपिण्डा नैव कुर्व्वीरन् यावच्छ्राद्धविसर्ज्जनम् ॥

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते विवाहविधानम् ।

## अथ पुनर्विवाहविधानम् ।

प्रयोगपारिजाते ।

इत्थं विवाहे कृते पश्चात्तत्कन्यायामशुभज्ञानं चेत्तदा ज्योतिःशास्त्रोक्ते काले पुनर्विवाहं कुर्य्यात् ।

तदाह नृसिंहः ।

पुनर्विवाहं वक्ष्यामि दम्पत्योः शुभवृद्धिदम् ।
लग्नेन्दुलग्नयोर्दोषे ग्रहताराद्सम्भवे ॥
अन्येष्वशुभकालेषु दुष्टयोगादिसम्भवे ।
विवाहे त्वथ दम्पत्योराशौचादिसमुद्भवे ॥

अत्राशौचं [illegible]सम्बन्धीति ज्ञेयम् । अन्यत्र सद्यः शौचं विधीयते
इत्यभावस्योक्तत्वात् ।

विवाहसमये प्राप्ते यद्येते मृ(त)त्युजन्मनी ।
स्यातां तदा पुनश्चैव शुभे काले समाचरेत् ॥

इति वचनाच्च ।

केचित्तु वरेणाचरितस्य गुरुमृताशौचविषयमेतत् अ:
सामान्याशौचे नान्दीश्राद्धादूर्ध्वमाशौचाभावादित्याहुः ।

तस्य दोषस्य शान्त्यर्थं पुनर्ववाहमिष्यते ।
अयनं चोत्तरं श्रेष्ठं द्वये तु* विशेषतः ।
आषाढमार्गशीर्षौ द्वौ वर्ज्यौ शेषाः शुभावहाः ॥
विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गजाः ।
करणयोगसंज्ञानि ग्रहगोचरयोगगाः ॥
तस्मिन् (वी)विवाहसमये शुभगश्च तथैव च ।
पूर्व्वाह्णे पूर्व्वरात्रे च विवाहः शुभदो भवेत् ॥ इति ।

अत्रत्योऽन्यो विशेषः सगोत्रादिविवाहप्रायश्चित्तविधाने द्रष्टव्यः

## अथ द्वितीयविवाहविधानम् ।

तत्र श्रुतिर्यथा ।

तस्मादेको बह्वीर्जाया वि(न्दे)न्दत इति ।

श्रुत्यन्तरमपि ।

तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह
इति ।

---

* वर्षेषु विशेषत इति ग-पुस्तके पाठः ।

तद्विषयमाह आपस्तम्बः ।

धर्म्मप्रजासम्पन्ने दारे* नान्यां कुर्व्वीत अन्यतराभावे कार्य्या प्रागग्न्याधानादिति† ।

अस्यार्थः । यदि प्रागूढ़ा स्त्री धर्म्मेण प्रजया च सम्पन्ना तदा नान्यां विवहेत् । अन्यतराभावे अग्न्याधानात् प्रागेवोढ़व्या इति । जन्मना ह वै पुरुषस्त्रिभिर्ऋणवान् जायते इति नापुत्रस्य लोकोऽस्तीति च श्रुतेः ।

स्मृतिश्च ।

अपुत्रः सन् पुनर्दारान् परिणीय ततः पुनः ।
परिणीय समुत्पाद्य नो चेदापुत्रदर्शनात् ।
विरक्तश्चेद्वनं गच्छेत् संन्यासं वा समाश्रयेत् ॥

---

* अत्र दारे सतीति वचनान्मृते तस्मिन् प्रागूढ़ाधानात् सत्यामपि पुत्रसम्पत्तौ धर्म्मसम्पत्त्यर्थं पुनर्दारपरिग्रहणं कर्त्तव्यम् ।

तथाच मनुः ।

भार्य्यायै पूर्व्वमारिण्यै दत्त्वाग्नीनन्त्यकर्म्मणि ।
पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च ॥

याज्ञवल्क्योऽपि ।

आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् । इति गोपीनाथः ।

† प्रागग्न्याधानात् सत्यामपि धर्म्मप्रजासम्पत्तौ रागान्धस्य कदाचिद्दारग्रहणे नातीव दोषः । यथाहिताग्नेर्भार्य्या कर्म्मसु असहाना मत्ता वा न भवति पुत्राय मृता अनुत्पन्ना वा तदा कर्त्तव्य एव विवाह इति व्याख्यातमुज्ज्वलाकृता ।

याज्ञवल्क्यः।

सुरापी* व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियंवदा।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा।
अधिविन्नापि भर्त्तव्या महदेनोऽन्यथा भवेत्॥

अधिवेत्तव्या तदुपरि स्त्र्यन्तरं कर्त्तव्यमित्यर्थः।

अधिवेदने प्रतीक्ष्यकालमाह मनुः।

वन्ध्याष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥

संग्रहे तु।

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्†।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्॥ इति।

स्मृतिभास्करेऽपि।

व्याधिता स्त्रीप्रजा वन्ध्या उन्मत्ता विगतार्त्तवा।
अदुष्टा लभते त्यागं तीर्थतो न तु धर्म्मतः॥

तीर्थतो योनितः। धर्म्मकार्य्ये तु सहायभूता भवत्येव।

संहितायां विशेषमाह स एव।

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः।
सानुज्ञाप्याधिवेत्तव्या नावमान्या तु कर्हिचित्॥ इति।

---

* सुरापाने नाधिवेदनमात्रं किन्तु त्यागोऽपि "तथा पतति पातकैः" इति त्यागहेतुत्वेन तस्य कृतावभिधानात्, "पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेत्" इति वचनाच्च।

† त्यजेदधिविन्देत् न तु भोगं त्यजेदिति माधवः।

स्मृत्यन्तरेऽपि ।

एकामुत्क्रम्य कामार्थमन्यां (लब्धुं) वोढुं य इच्छति ।
समर्थस्तोषयित्वार्थैः पूर्व्वोढामपरां वहेत् ॥

याज्ञवल्क्यस्तु ।

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियै ॥ इति ।

सधनेन स्वद्रव्यतृतीयांशो देयः । निर्धनेन अन्नाच्छादनादि देयमित्यर्थः ।

या तु उक्तद्रव्यापरितोषादिना गृहान्निर्गच्छेत् तां प्रत्याह मनुः ।

अधिविन्ना तु या नारी निर्गच्छेद्रोषिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा* कुलसन्निधौ ॥ इति ।

पत्नीबहुत्वे विशेषमाह कात्यायनः ।

अग्निशिष्टादिशुश्रूषां बहुभार्य्यः सवर्णया ।
कारयेत्तद्बहुत्वं चेज्ज्येष्ठया गर्हिता न चेत् ॥ इति ।

अस्यार्थः । अग्निशुश्रूषा श्रौतस्मार्त्ताग्निसाध्यकर्म्म । शिष्टशुश्रूषा अतिथिपूजादिका । पत्नीसहायसम्पाद्यं यत्तदेतत् सर्व्वं सवर्णासवर्णभार्य्यासमुदायवान् सवर्णभार्य्यया कारयेत् । अनेकसवर्णभार्य्यायुक्तस्तु ज्येष्ठया सवर्णया कारयेत् यदि सा गर्हिता

---

* त्याज्या वा इत्यत्र न त्याज्या इति संस्काररत्नमालायां पाठः, स एव समीचीनतया प्रतिभाति ।

न स्यात्। गर्भाधानदोषश्च भार्यायोग्यत्वोपपादकदोषोपलक्ष

ते च दोषा अन्धत्वकुष्ठित्वादयः।

इदमप्याधा(न)ने सहाधिकृतानेकभार्याविषयम्। अ

कृतायास्तु प्रसक्त्यभाव एव। तथापि केवलक्रत्वर्थमाज्यावेक्ष

यजमानौदुम्बरीसम्मानवदेकयैव सवर्णया ज्येष्ठया कारयेत्। प

सन्नहनादिकं कर्त्तुः संस्कारस्तु सहाधिकृताभिः सर्व्वाभिरित

मीमांसासारवेदिनां सुज्ञानम्। स्मार्त्ताग्निसाध्ये तु क

सर्व्वासां सहाधिकारः। प्रथमविवाहाग्नावेवापरविवाहस्य

विधानात्। तदसम्भवेऽग्निद्वयसंसर्गविधानाच्च*।

तथाच कात्यायनाश्वलायनौ।

सदारोऽन्यान् पुनर्दारानुद्वोढुं कारणान्तरात्।
यदीच्छेदग्निमान् कुर्व्वन् क्व होमोऽस्य विधीयते।
स्वेऽ(स्वा)ग्नावेव भवेद्धोमो लौकिके न कदाचन॥ इति

---

तद्विधानं यथा—अथाग्न्योर्गृह्ययोर्यौगं सपत्नीभेदजातयोः।
सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः॥
अरोगामृतुवरीं कन्यां धर्मलोपभयात् स्वयम्।
कृते तत्र विवाहे च व्रतान्ते तु परेऽहनि।
पृथक् स्थण्डिलयोरग्नी समाधाय यथाविधि॥
तन्त्रं कृत्वाज्यभागान्तमन्वाधानादिकं ततः।
जुहुयात् पूर्व्वपत्न्यग्नौ तयान्वारब्ध आहुतीः॥
पत्न्योरेका यदि मृता दग्ध्वा तेनैव तां पुनः।
आदधीतान्यया सार्द्धमाधानविधिना गृही॥ इत्यादि।

इदन्तु सति सम्भवे । ग्रामान्तरादावसम्भवे तु लौकिकाग्नौ विवाहहोमं कृत्वा तदनन्तरं मण्डनाद्युक्तप्रकारेण* पुनराधानं कार्य्यम् ।

मृतपत्नीकस्य द्वितीयविवाहे कालविशेष उक्तः सङ्ग्रहे ।

प्रमदामृतिवासरादितः
पुनरुद्वाहविधिर्वरस्य च ।
विषमे परिवत्सरे शुभो
युगले चापि† मृतिप्रदो भवेत् ॥ इति ।

जीवन्त्यां पूर्व्वपत्न्यां द्वितीयादिविवाहे तु नायं कालनियमः ।

इति श्रीविधानपारिजाते द्वितीयविवाहविधानम् ।

अथ तृतीयमानुषीविवाहस्य निषिद्धत्वात्तस्मिन्
कर्त्तव्ये विवाहविधिरुच्यते ।

तत्र तृतीयां निषेधति मात्स्ये काश्यपः ।

अपाकृत्य ऋणं चार्षं लब्ध्वा स्त्रियमुद्वहेत् ।
पुत्रपौत्रादिसम्पन्नः कुटुम्बी साग्निको(ऽध्वरः) नरः ।

---

* तदुक्तप्रकारो यथा—

जायायां विद्यमानायां द्वितीयामुद्वहेद्यदि ।
तदा वैवाहिकं कर्म्म कुर्य्यादावसथेऽग्निमान् ॥ इति ।

† चकारे अपिरेवकारार्थक इति गोपीनाथः ।

उद्वहेद्दृतिसिद्ध्यर्थं तृतीयां न कदाचन ॥
मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम् ।
नश्यत्येव न सन्देहो गर्गस्य वचनं यथा ॥ इति ।

अन्यत्रापि ।

धर्म्मयागनिमि(त्तो)त्तेऽपि नोद्वहेन्मानुषीं स्त्रियम् ।
तृतीयां यदि चोद्वाहेत्* तर्हि सा विधवा भवेत् ॥
चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ।
आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे ।
शुभे दिने वा पूर्व्वाह्ने कुर्य्यादर्कविवाहकम् ॥

इत्यादि ब्रह्मपुराणे दर्शितम् ।

ग्रामात्प्राच्यामुदीच्यां वा सुपुष्पफलसंयुतम् ।
परीक्ष्य यत्नतोऽधस्तात् स्थण्डिलादि यथाविधि ॥

व्यासः ।

स्नात्वालं पूतवासास्तु रक्तगन्धादिभूषितः ।
सपुष्पफलशाखैकमर्कवृक्षं† समाश्रयेत् ॥
स्वसूत्रेण संयुक्तमर्कं संस्थाप्य यत्नतः ।
अर्ककन्याप्रदानार्थमाचार्य्यं कल्पयेत् पुरा ॥
अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।

---

* उद्वाहेदित्यार्षम्, उद्वहेदित्यर्थः । निर्णयसिन्धावपि अयमेव पाठो दृश्यते ।

† वृक्षमित्यत्र गुल्ममिति ख-पुस्तके पाठः ।

नान्दीश्राद्धे हिरण्येन अष्टौ वर्गान्* प्रपूजयेत् ॥
पूजयेन्मधुपर्केण वरं (विप्रस्य हस्तत:) दाता तु शक्तित: ।
यज्ञोपवीतं वस्त्रे च हस्तकर्णादिभूषणम् ॥
उष्णीषगन्धमाल्यादि वरायास्मै प्रदापयेत् ।
स्वशाखोक्तविधानेन† मधुपर्कं समाचरेत् ॥

ब्रह्मपुराणे यथाविधीत्यस्यानन्तरमुक्तम् ।

कृत्वार्कपुरतस्तिष्ठन् प्रार्थयेत्तु द्विजोत्तम: ।
त्रिलोकवासिन् सप्ताश्व च्छायया सहितो रवे ।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥
ततश्चारोप्य देवेशं छायया सहितं रविम् ।
वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेण प्रपूजयेत् ॥

तन्मन्त्रेण आकृष्णेनेत्यादिना‡ ।

अन्यत्रापि ।

श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभि: ।

---

* मण्डपे मातृकादेवास्तथा पितृगणास्तथा ।
गणेशदुर्गाक्षेत्रेशा: कुलदेव्यष्टवर्गका: ॥ इति स्मृतिदर्पण: ।

† स्वशाखा दातृशाखा इति केचित्, वरशाखेत्यन्ये ।
वरस्य या भवेच्छाखा तच्छाखागृह्यचोदित: ।
मधुपर्क: प्रदातव्योऽप्यन्यशाखेऽपि दातरि ॥
इति वचनात् एतदेव समीचीनं मन्यामहे ।

‡ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

गन्धपुष्पैस्तथाऽभ्यर्च्य अब्लिङ्गैः*रभिषिच्य च ।
गुड़ौदनन्तु नैवेद्यं ताम्बूलञ्च समर्पयेत् ॥

व्यासः ।

अर्कं प्रदक्षिणीकुर्व्वन् जपेन्मन्त्रमिमं बुधः ।
मम प्रीतिकरा येयं मया सृ(स्र)ष्टा पुरातनी ।
अर्कजा ब्रह्मणा सृष्टा सास्माकं प्रतिरक्षतु ॥
पुनः प्रदक्षिणीकुर्य्यान्मन्त्रेणानेन मन्त्रवित् ।
नमस्ते मङ्गले देवि नमः सवितुरात्मजे ।
त्राहि मां कृपया देवि पत्नी त्वं म इहागता† ॥
अर्क त्वं ब्रह्मणा सृष्टः सर्व्वप्राणिहिताय च ।
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः ।
तृतीयोद्वाहजं (दोषं) पापं मृत्युञ्चाशु विनाशय ॥
आयुर्देहि यशो देहि प्रजां देहि पशूनपि ।
देहि मेऽर्क श्रियं पुष्टिं स्वस्थानेऽर्क स्थिरो भव ॥
ततश्च कन्यावरयं त्रिपुरुषं कुलमुच्चरेत् ।
आदित्यः सविता चार्कः पुत्री पौत्री च नप्त्रिका ॥
गोत्रं काश्यपमित्युक्तं लोके लौकिकमाचरेत् ।
सुमुहूर्त्ते निरीक्ष्यार्कं स्वस्तिसूक्तं‡मुदीरयेत् ॥

---

* आपो हि ष्ठा इत्यादिभिरभिषेकमन्त्रैः, प्रथमखण्डस्य ५८ पृष्ठे प्रदर्शितैः ।

† त्वं मे पत्नी इहागता इति ख-पुस्तके पाठः ।

‡ स्वस्ति न इन्द्रो वृद्धश्रवाः, स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु इति ।

आशीर्भिः सहितैः* कुर्य्यादाचार्य्यप्रमुखैर्द्विजैः।
आचार्य्यञ्च समाहूय विधिना तन्मुखाच्च ताम्।
परिगृह्य ततो होमं स्वगृह्यविधिनाचरेत्॥

आचार्य्यस्य दानमन्त्रमाह व्यासः।

अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम्।
गोत्राय शर्म्मणे† तुभ्यं दत्तां विप्र समाश्रय॥ इति।
अर्कस्य चतकर्म्माणि कृत्वा कङ्कणबन्धनम्।
यावत्पञ्चावृतं सूत्रं तावदर्कं प्रवेष्टयेत्।
स्वशाखोक्तेन मन्त्रेण गायत्र्या वाथवा जपेत्॥
पश्चीकृत्य पुनः सूत्रं स्कन्धे बध्नाति मन्त्रतः।
वृहत्सामेति मन्त्रेण सूत्रग्रन्थिं प्रकल्पयेत्॥
अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा।
कुम्भांश्च निक्षिपेत् पश्चादाग्नेयादिचतुष्टये॥
सवस्त्रं प्रतिकुम्भञ्च त्रिः सूत्रेणैव वेष्टयेत्।
हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम्॥
प्रतिकुम्भं महाविष्णुं सम्पूज्य परमेश्वरम्।
पाद्या(र्घ्या)र्घादिनिवेद्यान्तं कुर्य्याच्चाग्नेव मन्त्रवित्।

अत्र होमप्रकारः शौनकेन प्रदर्शितः।

तृतीयस्त्रीविवाहे तु सम्प्राप्ते पुरुषस्य तु।
आर्कं विवाहं वक्ष्यामि शौनकोऽहं विधानतः॥

---

* आशीर्वाचकद्विजैरिति गोपीनाथः।

† अमुकगोत्रायामुकशर्म्मणे इति गोपीनाथः।

अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।
नान्दीमुखं प्रकुर्व्वीत स्थण्डिलञ्च प्रकल्पयेत् ।
अर्कमभ्यर्च्य सौर्य्या च गन्धपुष्पाक्षतादिभिः ॥

सौरी सूर्य्यदेवत्या ऋक् आकृष्णेनेत्यादिरूपा । तयेत्यर्थः ।

स्वयं चालङ्कृतस्स्रग्वस्त्रमाल्यादिभिः शुभैः ।
अर्कस्योत्तरदिग्भागे समन्वारब्ध एतया ॥

एतया अर्ककन्यया ।

उल्लेखनादिकं कुर्य्यादाघारान्तमतः परम् ।
आज्याहुतिञ्च जुहुयात् सं गोभिरनयैकया* ॥
यस्मै त्वा काम कामायेत्येतयर्चा† ततः परम् ।
व्यस्ताभिश्च समस्ताभि‡स्ततश्च स्विष्टकृद्भवेत्§ ।
परिषेचनपर्य्यन्तमयाश्चेत्यादिकं क्रमात् ॥

अत्र प्रार्थनामन्त्रादिविशेषमाह व्यासः ।

पुनः प्रदक्षिणं कृत्वा मन्त्रमेतमुदीरयेत् ।
मया कृतमिदं कर्म्म स्थावरेषु जरायुणा ।

---

* सं गोभिराङ्गिरसो नक्षमाणो भग इवेदर्य्यमणं निनाय ।
जने मित्रो न दम्पती अनक्ति बृहस्पते वाजयाशूंरिवाजौ स्वाहा ॥

† यस्मै त्वा काम कामाय वयं सम्राड्यजामहे ।
तमस्मभ्यं कामं दत्वाथेदं त्वं घृतं पिब स्वाहा ॥ इदमग्नये ।

‡ व्याहृतिभिरिति शेषः । ओं भूः स्वाहा इदमग्नये । ओं भुवः स्वाहा इदं वायवे । ओं स्वः स्वाहा इदं सूर्याय । ओं भूर्भुवः स्वः स्वाहा इदं प्रजापतये एवंरूपाभिः ।

§ ततः स्विष्टकृतं हुनेदिति पाठो बहुषु निबन्धेषु दृश्यते ।

अर्कापत्यानि नो देहि तत्सर्व्वं क्षन्तुमर्हसि ॥
इत्युक्त्वा शान्तिसूक्तानि* जप्त्वा तं (तत्) विसृजेत्ततः ।
गोयुग्मं दक्षिणां दद्यादाचार्य्याय च भक्तितः ॥
इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि भक्तितः ।
तत्सर्व्वं गुरवे दद्यादन्ते पुण्याहमाचरेत् ॥

अथ पञ्चमदिने कर्त्तव्यमुक्तं ब्रह्मपुराणे ।

चतुर्थे दिवसेऽतीते पूर्व्ववत्तां प्रपूजयेत् ।
विसृज्य होममग्निञ्च विधिना मानुषीं पराम् ॥
उद्वहेदन्यथा नैव पुत्रपौत्रादिवृद्धिमान् ।
न पशूंश्च मित्राणि मङ्गलं नैव गच्छति ॥
एवमेव द्विजश्रेष्ठ विधिना सम्यगुद्वहेत् ।
धनधान्यसमृद्धिश्च इच्छाप्राप्तिः परत्र च ॥ इति ।

अथैषां वचनानामेकवाक्यतया सङ्क्षेपेण प्रयोगः प्रस्तूयते ।

तृतीयमानुषीविवाहस्य निषिद्धत्वात् तृतीयोऽर्कविवाहः कार्य्यः । पूर्व्वोक्ते आदित्यवासरे हस्तनक्षत्रे शनैश्चरे वा अन्यस्मिन् शुभदिने वा पूर्व्वाह्णे ग्रामात्प्राच्यामुदीच्यां वा फलपुष्पसंयुतमर्कवृक्षं गत्वा कृतनित्यक्रियो यजमानः प्राणानायम्य देशादिकं स्मृत्वा मम तृतीयमानुषीविवाहजन्य(दोषाभावार्थं)दोषपरिहाराय अर्कविवाहं करिष्ये इति सङ्कल्प्य अर्ककन्याप्रदानार्थमाचार्य्यं यथाविधि वृत्वा स्वस्तिवाचनं कृत्वा हिरण्येन नान्दीश्राद्धं कुर्य्यात् ।

---

* शन्नो, वात इत्यादीनि, प्रथमस्तबकस्य ४२४ पृष्ठे प्रदर्शितानि ।

अथाचार्य्यः स्वगृह्योक्तविधिना मधुपर्केण वरं पूजयित्वा तस्मै यज्ञोपवीतं वस्त्रद्वयं हस्तकर्णादिभूषणं शिरोवेष्टनादिकञ्च दद्यात्। अथाचार्य्यो यजमानो वा सुवर्णनिर्म्मितां सूर्य्यप्रतिमामर्कवृक्षञ्च आकृष्णेनेति मन्त्रेण* षोड़शोपचारैः† पूजयेत्। अर्कस्य प्रतिमाञ्चैव गन्धपुष्पाक्षतादिभिः। इति वचनात्। तथा। श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभिः। संवेष्ट्य अर्कमिति शेषः। आपो हि ष्ठेत्यादिभिरब्लिङ्गकैर्मन्त्रैरभिषिच्य गुड़ौदनं नैवेद्यं दत्त्वा ताम्बूलं दक्षिणाञ्च सपुष्पाञ्जलिं दद्यात्।

अथार्कस्य पुरतस्तिष्ठन् प्रार्थनां कुर्य्यात्। तत्र मन्त्रौ।

त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु॥
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धन।
तृतीयोद्वाहजं पापं मृत्युञ्चाशु निवारय॥ इति।
अर्कस्य चोत्तरे देशे स्थण्डिलन्तु प्रकल्पयेत्।
उल्लेखनादिकं कृत्वा स्थापयेदनलं ततः।
हुत्वाज्यभागपर्य्यन्तं कन्यादानं ततः स्मृतम्॥

---

* १८ पृष्ठे प्रदर्शितेन।

† षोड़शोपचारा यथा प्रपञ्चसारे—

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
मधुपर्काचमनस्नानवसनाभरणानि च॥
सुगन्धिसुमनोधूपदीपनैवेद्यवन्दनम्।
प्रयोजयेदर्चनायामुपचारांश्च षोड़श॥ इति।

विप्रादर्घ्यं तु । ततो वरोऽर्कं प्रदक्षिणीकुर्य्यात् । तत्र मन्त्रः ।

मम प्रीतिकरा येयं (मया) पुरा सृष्टा पुरातनी ।
अर्कजा ब्रह्मणा सृष्टा साऽस्माकं परिरक्षतु ॥

पुनरपि प्रदक्षिणं कुर्य्यात् । तत्रापि मन्त्रः ।

नमस्ते मङ्गले देवि नमः सवितुरात्मजे ।
त्राहि मां कृपया देवि पत्नी त्वं मे इहागता ॥ इति ।

पुनः प्रदक्षिणं कुर्व्वन् पुष्पाञ्जलिमथ क्षिपेत् ।

अनन्तरमाचार्य्यः अर्ककन्यादानमहं करिष्ये इति सङ्कल्प्य काश्यपगोत्रस्य अर्कस्य प्रपौत्रीं काश्यपगोत्रस्य सवितुः पौत्रीं काश्यपगोत्रस्यादित्यस्य पुत्रीमिमामर्ककन्यां यथाशक्ति विभूषितां प्रजापतिदेवताकां यथासम्भवगोत्राय अमुकस्य प्रपौत्राय अमुकस्य पौत्राय अमुकस्य पुत्रायामुकशर्म्मणे वराय तुभ्यं शुभमुहूर्त्ते सम्प्रददे इत्युक्त्वा मन्त्रमिमं पठेत् ।

अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्म्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ इति ।

अथ वरः कोऽदादिति मन्त्रं* गायत्रीं वा जपित्वा पञ्चीकृतं† कुसुमाक्तं सूत्रं स्कन्धेऽर्कस्य बध्नीयाज्जातस्यतन्तुनानेनेति मन्त्रेण‡ ।

---

* कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ ७अ. ४८म. यजुः ।

† पञ्चाक्तमिति ख-पुस्तके पाठः ।

‡ ५० पृष्ठे १६ पंक्त्यनुसारेण ।

अथ अवतारोपचबन्धनादि पूर्ववत् कुर्य्यात् ।

अथार्कवृक्षस्य पूर्वाद्यष्टदिक्षु अष्टौ कुम्भान् स्थापयित्वा हरिद्रागन्धसंयुक्तशीतलजलेनापूर्य वस्त्रैः सूत्रेण प्रतिकुम्भं कण्ठेषु वेष्टयित्वा तत्र परमेश्वरं महाविष्णुं नाममन्त्रेणावाह्य षोडशोपचारैः पूजयित्वा प्रार्थयेत् ।

तत्र मन्त्रो यथा ।

विश्वव्यापिन् नमस्तेऽस्तु भक्तप्रिय जनार्दन ।

तुरीयस्य विवाहस्य अधिकारं प्रयच्छ मे ॥ इति ।

अथार्ककन्यया समन्वारब्धो देशादि सङ्कीर्त्य अर्कविवाहाङ्गभूतं होममहं तदङ्गतयाऽन्वाधानञ्च करिष्ये । अग्निमन्वाहिते-ऽन्वावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा अत्र प्रधानं बृहस्पति-मग्निं वायुं सूर्य्यं प्रजापतिमेकैकया आज्याहुत्या आज्येन शेषेण स्विष्टकृतं यक्ष्ये इति (सङ्कल्प्य) उक्त्वा अन्वाधानाद्याघारान्तं कुर्य्यात् । विश्वादर्शे तु आघारान्तं पूर्व्वमेव कार्य्यमित्युक्तम् ।

सं गोभिरिति मन्त्रस्य आङ्गिरा ऋषिर्बृहस्पतिर्देवता त्रिष्टुप् छन्दः अर्कविवाहाङ्गभूताज्यहोमे विनियोगः ।

ॐ सं गोभिराङ्गिरसो नक्षमाणो
भग इवेदर्य्यमणं निनाय ।
जने मित्रो न दम्पती अनक्ति
बृहस्पते वाजयाशूंरिवाजौ स्वाहा ॥

१०म, ६८सू, २ऋक् ।

बृहस्पतये इदं न मम ।

यस्मै त्वेत्यस्य वामदेव ऋषिरग्निर्देवता त्रिष्टुप् छन्दः अर्क-विवाहाङ्गभूताज्यहोमे* विनियोगः।

ॐ यस्मै त्वा काम कामाय वयं सम्राड्यजामहे।
तमस्मभ्यं कामं दत्त्वाथेदं त्वं घृतं पिब स्वाहा॥

अग्नये इदम् न मम।

ततो व्याहृतिभिश्चतुष्टयं हुत्वा स्विष्टकृदादिहोमशेषं समापयेत्। एवं होमं समाप्य वृक्षं प्रार्थयेत्। पुनः प्रदक्षिणं कृत्वा मन्त्रमेतमुदाहरेत्।

मया कृतमिदं कर्म्म स्थावरेषु जरायुणा।
अर्कापत्यानि नो देहि तत्सर्व्वं क्षन्तुमर्हसि॥
इत्युक्त्वा शान्तिसूक्तानि† जप्त्वा तं विसृजेत् पुनः।
गोयुग्मं दक्षिणां दद्यादाचार्य्याय च भक्तितः॥
तद्वस्त्रप्रतिमादीनि सर्व्वं दद्यात्प्रयत्नतः।
स्वयं नूतनवस्त्राणि धृत्वा पुण्याहमाचरेत्॥
इतरेभ्योऽपि विप्रेभ्यो देया तत्र च दक्षिणा।
ततस्तुष्टो गृहं गत्वा भुञ्जीयाद्बन्धुभिः सह॥
चतुर्थदिवसादूर्द्ध्वं पञ्चमेऽह्नि ततस्तदा।
अर्कप्रदेशमेत्याथ पूर्व्ववत् सम्प्रपूज्य च।

पूर्व्ववत् मात्रक्षोणेति मन्त्रेण गन्धादिभिरित्यर्थः।

विसृज्याग्निं वाहणेण मानुषीमुद्वहेत्परम्॥ इति।

---

* अर्कविवाहप्रधानाज्यहोमे इति संस्काररत्नमालायां पाठः।

† शं नो वात इत्यादीनि, प्रथमखण्डस्य ४२४ पृष्ठे प्रदर्शितानि।

अनेनाग्निसंरक्षणं पञ्चमदिनपर्य्यन्तं कर्त्तव्यमिति गम्यते ।

अनेन विधिना यस्तु कुर्य्यादर्कविवाहकम् ।
पुत्रपौत्रादिसम्पत्तिं चतुर्थ्यां लभते नरः* ॥

इति श्रीविधानपारिजाते श्रीमदनन्तभट्टविरचिते
अर्कविवाहप्रयोगः समाप्तः ।

अथ विवाहहोमोत्तरकर्त्तव्यमौपासनहोमविधानमभिधीयते ।

तत्राश्वलायनगृह्यम् ।

पाणिग्रहणा(दि)दौ गृह्यं परिचरेदिति ।

अत्र पाणिग्रहणादिवचनं गृहप्रवेशहोमात् पूर्व्वत्वार्थम् ।

तथाच गृह्यपरिशिष्टम् ।

अथ नित्योपासनं तस्य सायमारभ्य इति ।

शौनकोऽपि ।

यस्मिन्नह्नि विवाहः स्यात् सायमारभ्य तस्य तु ।
परिचर्य्यां विवाहाग्नेर्विदधीत स्वयं द्विजः ॥
यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति ।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम् ॥ इति ।

---

* अयं चार्कविवाहः काश्यपगोत्रिणो न भवति गोत्रैक्यात् इति केचित् । तन्नैकमत्य न दोषायेत्यन्ये । काश्यपगोत्रो वरः स्वगोत्रादिविरुद्धगोत्रिणमाचार्यं परिकल्प्य तस्मादर्कं प्रतिगृह्णीयात् । आचार्यस्तु सूर्येण दत्तां विभाव्य काश्यपगोत्रस्थाने स्वगोत्रं कन्याविशेषणत्वेन सङ्कीर्त्य आदित्यप्रपितामहस्थाने अपितामहपित्रोः स्वस्य च नामानि क्रमेण सङ्कीर्त्तयेत् । एवं रीत्यैव काश्यपगोत्रस्य अर्कविवाहो निर्बाधो भवतीति गोपीनाथः ।

इदमपि नवनाड्यनतिक्रमे द्रष्टव्यम् ।

तथाचापस्तम्बसूत्रभाष्यकृत् सुदर्शनाचार्य्यः ।

तस्य चारम्भणं रात्रावेव यदि, नवनाड्यो नातीताः ।

अतीताश्चेत् परेद्युः सायमग्निहोत्रवेलायामारभ्य इति ।

अन्यत्रापि ।

प्रातर्होमे सङ्गवान्तः*कालस्त्वनुदितेऽथवा ।

सायमस्तमिते होमः कालस्तु नवनाड़िकाः ॥ इति ।

अत्रानुदितहोमकालस्तु वाजसनेयिनां वेदितव्यः ।

तथाच कात्यायनसूत्रम् ।

औपासनस्य परिचरणमस्तमितानुदितयोरिति ।

तेषामौपासनस्यारम्भोऽपि चतुर्थीहोमानन्तरमाहितेऽग्नौ भवति न तु विवाहाग्नौ । आवसथ्याधानं दारकाले दायाद्यकाले वेति कात्यायनसूत्रात् । तद्भाष्यमपि । दारकालश्चतुर्थ्युत्तरकालः । दायाद्यकालो धनविभागकाल इति । औपासनात् पूर्व्वं यदि विवाहाग्निः शाम्येत तदा प्रायश्चित्तमुक्तं विश्वादर्शे ।

उद्वाहौपासनात् पूर्व्वमनले शान्तिमागते ।

स्थालीपाकं ततः कृत्वा औपासनमथाचरेत् ॥

नवनाड़िभ्य ऊर्द्ध्वं चेत् स्थालीपाको भवेत वै ।

औपासनं तदा कुर्य्यात् परेद्युः सायमेव च ॥ इति ।

* यस्तु षणाड़िकः कालः पञ्चाद्दिवोदयाद्रवेः ।

स होमकालो विभायां सङ्गवान्त इति स्मृतः ॥ इत्याश्वलायनः ।

तस्य प्रादुष्करणकाल उक्त आश्वलायनसूत्रे ।

तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्याताविति ।

तत्कारिकापि ।

ज्वलयेदपराह्णेऽग्निमस्तं याते दिवाकरे ।

पर्य्युक्ष्याग्निं परिस्तीर्य्य पर्य्युक्ष्य च ततः परम् ॥ इति ।

अथ स्पष्टमाह कात्यायनः ।

सूर्य्ये तु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः ।

प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने ॥ इति ।

तथा ।

दुहित्रा स्नुषया वाग्निविहारो* न विरुध्यते ।

नि(लेप)र्नेजनञ्च पात्राणामुपलेपनमेव च ॥ इति ।

उक्तकाले प्रादुष्करणाभावे प्रायश्चित्तमुक्तमाश्वलायनकारिकाया

प्रायश्चित्तं विशेषेण यत्र नोक्तं भवेद्विधिः ।

होतव्याज्याहुतिस्तत्र भूर्भुवःस्वरितीति च ॥

अनुदितास्तमयलक्षणमाह कात्यायनः ।

रात्रेस्तु षोडशे भागे ग्रहनक्षत्रभूषिते ।

कालं त्वनुदितं ज्ञात्वा तत्र होमं प्रकल्पयेत् ॥

तथा ।

यावत्सम्यङ् भाव्यन्ते नभस्यृक्षाणि सर्व्वतः ।

न च लौहित्यमायाति† तावत्सायन्तु हूयते ॥

---

* विहारो विहरणमुद्धरणमिति यावत् । इति गोपीनाथः ।

† लौहित्यञ्च नाप्नेति इति संस्काररत्नमालायां पाठः, स एव समीचीनतया प्रतिभाति

अथ आश्वलायनादीनां होमे मुख्यकालमाह चन्द्रिकायामपि।

हस्तादूर्द्ध्वं रविर्यावद्गुवं हित्वा न गच्छति।
तावद्धोमविधिः पुण्यो नान्योऽभ्युदितहोमिनाम्।
रात्री प्रदोषो मुख्यः स्यादिति वेदविदो विदुः॥ इति।

अथ गौणकालमाह शौनकः।

पश्चादस्तमयात्कालो यो भवेन्निमुहूर्त्तकः।
स सायं होमकालश्च प्रदोषान्त उदाहृतः॥
यस्तु षण्नाडिकः कालः पश्चादेवोदयाद्रवेः।
स होमकालो विप्राणां सङ्गवान्त इति स्मृतः*॥ इति।

यदि गौणकालोऽप्यतीतः स्यात्तदा प्रायश्चित्तमुक्तं गृह्यपरिशिष्टे।

नित्यहोममतीत्य मनस्वत्या चतुर्गृहीतं जुहुयात्। द्वादश-
रात्रादूर्द्ध्वं पुनराधानमिति।

केचित्तु प्रायश्चित्तं कृत्वा प्रातर्होमात् पूर्व्वं सायं होमः कार्य्यः सायं होमात् पूर्व्वं प्रातर्होमः कार्य्य इत्याहुः।

आसायं कर्म्मणः प्रातराप्रातः सायं कर्म्मणः।
आहुतिर्नातिपद्येत पार्व्वणं पार्व्वणान्तरात्॥

इति बौधायनस्मृतेरिति।

तस्य अग्निहोत्रेणेति सूत्रं प्रपञ्चितं शौनकेन।

अग्निहोत्रवदित्येतच्छौनकेन प्रपञ्चितम्।
पुनः पर्य्युक्ष्य चाङ्गारानुदगग्नेरपोह्य च॥

---

* यच्च निदानसूत्रं सर्व्वमहः प्रातराहुतेः स्थान सर्व्वा रात्रिः सायमाहुतेः पूर्णः पक्षो दर्शस्य कालः पक्षः पूर्णमासस्य इति, तद्ब्राह्मणादिमहाविपत्तिविषयमिति गोपीनाथः।

होम्यानां द्वादशानान्तु पक्कमेतेष्वधिश्रयेत् ।
पयो यवागूः सर्पिश्च श्रोदनं दधितण्डुलाः ॥
सोमस्तैलमपो व्रीहिर्द्वादशैते तिला यवाः ।
पय आदीनि चत्वारि विदुः पक्कानि याज्ञिकाः ॥
दध्यादीनामपक्कानामधिश्रयणमिष्यते ।
उल्मुकेन तज्ज्वलयेदपक्कं पक्कमेव च ॥
अधिश्रिते स्रुवेणापः परिषिञ्चेन्नवानि च ।
पुनस्त्रिर्ज्वलता तेन परिव्यूह्य प्रहृत्य तत् ॥
उ(द)दाकर्षन्नवोद्वास्याप्यङ्गारानतिसृज्य च ।
अग्नेः पश्चात्तृणेष्वेव निधाय समिधा सह ।
तेषामेकं संस्कृतञ्च स्तहुत्वा सायमग्नये ॥
[षा]णां द्वादशद्रव्याणां मध्ये एकं द्रव्यमित्यर्थः ।
स्वाहेति मन्त्रमुच्चार्य्य कुर्व्वीत प्रथमाहुतिम् ।
प्रातर्होमे तु सूर्य्याय स्वाहेति प्रथमाहुतिम् ।
तूष्णीं प्रजापतिं ध्यायेदुभयत्र द्वितीयकम् ॥ इति ।
[श]ाखान्यो विशेषः स्वस्वशाखातोऽवगन्तव्यः ।
होमस्थानं स्मृत्यर्थसारे ।
बहुशुष्केन्धनेनाग्नौ सुसमिद्धे हुताशने ।
अङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ॥
योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते ।
अग्निः प्रदक्षिणावर्त्तः कर्म्मदश शुभावहः ॥ इति ।

अग्न्युपस्थापनमन्त्रानाह शौनकः ।

परिसमुह्य पर्य्युक्ष्याप्युपतिष्ठेद्विभुंजम् ।

अग्नेः सूक्तैश्च* सौरैश्च† प्राजापत्यैश्च नित्यशः ॥

याज्ञवल्क्योऽपि ।

हुत्वाग्निं सूर्य्यदैवत्यान् जपेन्मन्त्रान् समाहितः ।

एतद्धोमप्रशंसामाहाङ्गिराः ।

प्रदद्यात्काञ्चनं मेरुं पृथिवीं (च) वा ससागराम् ।

तत् सायं प्रातर्होमस्य तुला भवति वा न वा ॥ इति ।

अन्यत्रापि ।

नाग्निहोत्रात्परो धर्म्मो नाग्निहोत्रात्परं तपः ।

नाग्निहोत्रात्परं (ज्ञा)दानं नाग्निहोत्रात्परा गतिः ॥

तथा ।

आद्या व्याहृतयस्तिस्रः स्वधा स्वाहा नमो वषट् ।

यस्यैते वेश्मनि सदा ब्रह्म(लोकः)भूतः स एव तु ॥

अकरणे प्रत्यवायमाह गर्गः ।

कृतदारो न तिष्ठेत क्षणमप्यग्निना विना ।

तिष्ठेत चेद्द्विजो व्रात्यस्तथाच पतितो भवेत् ॥

यथा स्नानं यथा सन्ध्या वेदस्याध्ययनं यथा ।

तथैवोपासनं कार्य्यं न स्थितिस्तद्वियोगतः ॥

यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते ।

---

* ऋक्सप्तकात्मकैः, प्रथमखण्डस्य ५६६ पृष्ठे प्रदर्शितैः ।

† उदुत्यमित्यादिकैः, प्रथमखण्डस्य ४०७ पृष्ठे प्रदर्शितैः ।

अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥
यत्र नाश्नन्ति वै देवाः पितरोऽतिथयस्तथा ।
वृथापाकः स विज्ञेयो न तस्याद्यात्कथञ्चन ॥
वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत् ।
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति* ॥ इति ॥

इति नित्यहोमविधानम् ।

## अथ सूतकादौ होमविधानम् ।

तत्र कात्यायनः ।

सूतके मृतके प्राप्ते नित्यकर्म न सन्त्यजेत् ।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥

चरुं स्थालीपाकं, होमं नित्यहोमम् ।

शौनकोऽपि ।

स्मार्ताग्निं सूतके शावे स्वयं न जुहुयाद्द्विजः ।
श्रौताग्निन्तु स्वयं हुत्वा समाप्ते वा स्वयं हुनेत् ॥
स्मार्ताग्निमात्मनोऽन्येषामभावे सूतकादिषु ।
समारोप्य तदन्ते तु विहृत्य जुहुयात्स्वयम् ॥

---

* अस्य प्रतिप्रसवमाह स एव ।

पितृपाकोपजीवी च भ्रातृपाकोपजीविकः ।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥

अतीताहुतयः सर्व्वा हुनेन्निष्कृतिपूर्व्विकाः ।
हुतैश्चतुर्गृहीतैस्तु कार्य्या तन्निष्कृतिः सदा ॥
अतीते द्वादशाहे तु पूर्णाहुत्यष्टकं हुनेत् ।
प्राङ्ना(मा)नाश्च ततो हुत्वा गार्ह्योऽप्यग्निर्विनश्यति ॥

आग्रत्यनलेऽपि स एवाह ।

आग्रत्येवानले होमानतिक्रामेद्बहूनपि ।
आज्यं चतुर्गृहीत्वैतत् स्रुवेण प्रज्ञतस्रुचि ॥
तदा कृत्वाज्यसंस्कारं यथोक्तविधिना ततः ।
आज्यं चतुर्गृहीत्वैतत् स्रुवेण प्रज्ञतस्रुचि ॥
उक्ता मन्त्रं मनो ज्योतिर्जुषतामिति* पूर्व्वकम् ।
हुत्वा सकृदतीतांश्च होमान् कृत्वा यथाक्रमम् ॥
पश्चात् स्वकालहोमञ्च विदधीत यथा पुरा ।
प्रायश्चित्तमिदं केचित् प्रतिहोमव्यतिक्रमे ॥ इति ।

आहुरिति शेषः ।

चन्द्रिकायामपि ।

कालातीतेषु होमेषु उत्तरेष्वागतेषु च ।
कालातीतानि हुत्वैव उत्तराणि ततश्चरेत् ॥
यस्त्वतीतान्यतिक्रम्य उत्तराणि समाचरेत् ।
न देवाश्चैव च पितृंस्तस्य विस्रूपतिष्ठते ॥ इति ।

अत्रेतिकर्त्तव्यतामाह स एव ।

---

* मनो ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु । अरिष्टं यज्ञं समिमं दधातु विश्वेदेवास इह मादयन्तामों प्रतिष्ठ ॥

पृथक् पृथगतीतासु होतव्या हुतयोऽखिलाः ।

नित्याग्निहोत्रवद्धुत्वा परिस्तीर्य्य प्रति प्रति ॥ इति ।

अन्यत्रापि ।

प्रतिहोममविस्मृत्य कुर्य्यात् परिसमूहनम् ।

पर्य्युक्षणं चेत्युक्तोऽयमौपासनविधिक्रमः ॥

इति सूतकादौ होमविधाननिर्णयः ।

अथापन्नस्य कालद्वयेऽपि होमायक्तौ प्रजापतिराह ।

सायंप्रातस्तनौ होमावुभौ सायं समस्य तु ।

आपन्नो जुहुयात्तत्र समिदेकाथवा द्वयम् ॥

सायंहोमस्य मुख्यत्वात्तदीयं तन्त्रमिष्यते ।

चतस्र आहुतीः कुर्य्यात्तत्र द्वे सायमाहुती ॥

द्वे प्रातराहुती सायं होमे चैका समिद्यदि ।

समित् क्षता द्वितीया चेत् सा भवेत्प्रातराहुतौ ॥

द्विः सायं होमवन्मृज्याद्विः प्रातर्होमवत् स्रु(च)वम् ।

उपस्थानं सकृत्कार्य्यं शेषं प्रकृतिवद्भवेत् ॥

एतत् स्रुवग्रहणमाज्यहोमादिविषयम् ।

तथा ।

केचिद्द्वे आहुती हुत्वा संवे(वि)श्यैव निमील्य (च) वा ।

विच्छिद्यैवं तु तौ होमौ कुर्य्युर्द्वे आहुती ततः ॥

गुर्व्वापदि समस्यन्ते प्रातः सर्व्वे कदाचन ।

यावन्तोऽत्र समस्यन्ते सर्व्वे सायमुपक्रमाः ।

प्रातःकालापवर्गाश्च न तु प्रातरुपक्रमाः ॥ इति ।

आश्वलायनगृह्यपरिशिष्टेऽपि ।

सायंप्रातर्होमौ सायं वा समस्तश्च तु प्रातरिति ।

अत्रापि विशेषः स्मृतिभास्करे ।

सर्व्वथौपवसथ्याहे सायं होमः पृथग्भवेत् ।

तथैव यजनीयेऽह्नि प्रातर्होमो भवेत् पृथक् ॥

इति होमसमासविधानम् ।

अथ पञ्चहोमविधानम् ।

तत्र वैयाघ्रपद्यः ।

एकेऽभ्युदितहोमाः स्युरन्येऽनुदितहोमिनः ।

अन्ये तु दिनहोमाश्च पञ्चहोमास्तथापरे ॥

प्रवासी चाग्निहोत्री (च) यस्तीन् पञ्चाहांश्च सप्त वा ।

दातव्यो होम एकाहे सायम्प्रातः पृथक् पृथक् ॥ इति ।

अनेन यावत्कालं व्यासङ्गस्तावद्धोमोऽभ्यनुज्ञायते । न तु पञ्चहोमनियमः ।

मरीचिरपि ।

शरीरापन्नवेद्रूयश्च भयार्त्तश्च प्रजायते ।

तथान्यास्वपि चापत्सु पञ्चहोमो विधीयते ॥

पञ्चहोमं तथा हुत्वा मध्ये तस्माग्निवर्त्तितः* ।

होमं पुनः प्रकुर्य्याच्चेत्तदा दोषो न विद्यते ॥

* हुतेषु पञ्चहोमेषु मध्ये तस्मान्निवर्त्तते ।

होमं पुनः प्रकुर्य्याच्चेन्न चासौ दोषभाग्भवेत् ॥ इति संस्काररत्नमालायां पाठः ।

तस्येतिकर्त्तव्यतामाह आचार्य्यः ।

हुत्वा सायम्प्रतिपदि चतुर्ह्रस्य चतुर्ह्रस्य ।
पृथग्गृहीत्वा मन्त्राभ्यां हिराहृत्य पृथग्जुहुयात् ॥
द्वितीयायां तथा प्रातर्होमान्तेऽभ्यर्च्य पावकम् ।
पञ्चहोमं चरेदेवमग्निमाग्नपि चापदि ॥ इति ।

अस्यार्थः । घोरापत्प्राप्तौ पञ्चहोमं कुर्य्यात् । तद्यथा शुक्ले कृष्णे वा प्रतिपदि स्थालीपाकं कृत्वा सायङ्काले पर्य्युक्षणादिसमित्प्रक्षेपान्तं सकृत्कृत्वा आहुतिप्रमाणं होम्यद्रव्यं चतुर्ह्रसकृत्वः पृथक् पात्रयोर्गृहीत्वा अग्नये स्वाहेति प्रथमग्टहीतं सर्व्वं हुत्वा प्रजापतये स्वाहेति द्वितीयग्टहीतं सर्व्वं हुत्वा पर्य्युक्षणाद्युपस्थानान्तमङ्गजातं सकृत् कुर्य्यात् । एवमेव द्वितीयायां प्रातरपि । अथामावास्यायां पौर्णमास्यां वा श्रोत्रियागारादग्निमाहृत्य भूमिसंस्कारपूर्व्वकं कुण्डे निधाय घोरापदनुवृत्तौ पूर्व्ववत् स्थालीपाकं कृत्वा पूर्व्ववत् पञ्चहोमं कुर्य्यात् । एवं सततं पञ्चत्रयं पञ्चहोमे कृते सति पुनराधानं कार्य्यम् । पञ्चत्रये पुनराधेयमादधीत इत्यापस्तम्बस्मरणात् ।

स्मृत्यर्थसारे तु यावदापत्तावत्पञ्चहोमः कार्य्य इत्युक्तम् ।

एवमापन्नः पक्षे पक्षे चैवं समाचरेत् ।
आपद्येदनुवर्त्तेत दीर्घकालं कथञ्चन ॥
यावज्जीवमविच्छि(च्छे)न्नान् पञ्चहो(मं)मान् समाचरेत् ।
आपदेवावधिस्तत्र न पक्षगणनावधिः ॥ इति ।

अथ सोमालक्ष्मे दोषमाह शौनकः ।

उदयेऽस्तमये वापि दम्पती चेद्विनिर्गतौ ।
आरूढ़ो वा धृतो वाग्निर्लौकिकः स्यात्तदैव हि ॥
प्रोषिते तु प्रिये पत्नी यदि ग्रामान्तरं व्रजेत् ।
होमकाले यदि प्राप्ता न सा दोषेण युज्यते ॥

कात्यायनस्तु ।

अन्वावनुगते यत्र होमकालद्वयं व्रजेत् ।
उभयोर्विप्रवासे वा लौकिकाग्निर्विधीयते ॥

अत्र सभार्य्यस्य चिरकालप्रवासकरणमस्ति चेत्तदा अरण्योरात्मनि समिधि वा अग्निं समारोप्य गच्छेत् ।

तथाच शौनकः ।

अथ प्रयाणाद्यापत्सु समारोपणमुच्यते ।
अरण्यात्मसमित्स्वेव गृह्यस्याग्नेर्यथाविधि ॥
अग्नौ प्रज्वलिते गृह्ये प्रतपेदरणीद्वयम् ।
अयन्तं समिधं वापि अयं ते योनिरित्यृचा* ॥
या ते अग्ने यज्ञियेति पाणावारोपयेत वा ।
आपद्येवं समारोप्य ततः प्रत्यवरोहयेत् ॥
अथारण्योः समारूढमरणीभ्यां मथेत् पुनः ।
प्रत्यवरोहेत्यनयावात्मारूढं ततः स्वकम् ॥
आत्मारूढाग्निमादध्याल्लौकिकाग्नावुपागनया ।
समिदारूढमग्निञ्च लौकिकाग्नावुपागनया ॥
समिधं तां समाधाय काले होमं समाचरेत् ।

---

* ८१ पृष्ठे द्रष्टव्यमिदम् ।

अरण्याश्मसमित्स्वग्निरारूढ़: सम्प्रणश्यति ॥
अर्द्धं द्वादशरात्रात् स पुनराधानमर्हति ।
अग्नावननुगते यत्र होमकालद्वयं व्रजेत् ॥

इति कात्यायनवचनन्तु स्वस्थानस्थिताग्न्यननुगमनविषयमित्य-विरोधः ।

अर्व्वाग्द्वादशरात्राच्च चण्डालपतितादिभिः ।
स्पृष्टो नष्टोऽग्निरारूढ़ो ह्यरण्याश्मसमित्सु यः ॥
अरण्याश्मसमित्स्वग्निसमारोपविधिः क्रमात् ।
एषां त्रयाणां पक्षाणां पूर्व्वः पूर्व्वः प्रशस्यते ॥

अत्र त्रिविधमपि आरूढ़ाग्निं पूर्व्वोक्तप्रादुष्करणकाले विधिवत् प्रतिष्ठाप्य प्रत्यवरोहेति मन्त्रेण प्रत्यवरोह्य होमकाले जुहुयात् । एवं द्वादशदिनपर्य्यन्तम् । तदूर्द्ध्वं पुनराधानम् । एवं स्वस्थान-स्थिताग्न्यनुगमेऽपि प्रत्यहं श्रोत्रियागारादाहृत्य होमकरणं वेदि-तव्यमिति प्रयोगपारिजातकारः ।

साग्नेः सति सम्भवे प्रवासकालनियममाह पैठिनसिः ।

प्रत्यग्जोऽक्षतधर्म्मस्य पीड्यमानस्य शत्रुभिः ।
मासद्वयं प्रवासोऽस्ति परतोऽनाहिताग्निवत् ॥

आत्ममात्रगमने होमार्थं द्विजं परिकल्प्य प्रवसेदित्युक्तं कूर्म्म-पुराणे ।

निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत्कार्य्यवान् विप्रस्तथैव न चिरं वसेत् ॥

अत्र कार्य्यवानित्यनेन धनार्थी गृह्यते न तु तीर्थयात्रार्थी ।

तथाच सत्यव्रतः ।

धनान्यर्ज्जयितुं युक्तः प्रवासोऽप्यग्निहोत्रिणः ।
धर्म्मर्यज्ञश्चवेदिज्या तीर्थाद्यर्थं न तु व्रजेत् ॥
ब्रह्मा विष्णुः शिवः सूर्य्यो गोविप्रपितृदेवताः ।
अग्निहोत्रगृहे सन्ति व्रततीर्थतपांसि च ॥ इति ।

इति विधानपारिजाते पञ्चहोमादिविधानम् ।

अथ साग्निकस्य द्वितीयां भार्य्यामूढवतोऽग्निद्वयसंसर्गविधानम् ।

आश्वलायनगृह्यपरिशिष्टे ।

अथानेकभार्य्यस्य यदि पूर्व्वगृह्याग्नावेव अनन्तरविवाहः स्यात्तदा तेनैव सा तस्य सह प्रथमया धर्म्माग्निभागिनी भवति । यदि लौकिके परिणये तं पृथक् परिगृह्य पूर्व्वेणैकीकुर्य्यात् तदा तौ पृथगुपसमाधाय पूर्व्वस्मिन् पूर्व्वया पत्न्या अन्वारब्धोऽग्निमीळे* इति सूक्तेन प्रत्यृचं हुत्वा अग्ने त्वं नः† इति सूक्तेनोपस्थाय अयं ते योनिर्ऋत्वियः‡ इति समिधमारोप्य प्रत्यवरोह जातवेद इति द्वितीयेऽवरोह्य

---

* अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ।

† अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छानक्षि द्युमत्तमं रयिं दाः ॥ ५म. २४सू. १ऋक् ।

‡ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया गिरः ॥ ३म. २९सू. १०ऋक् ।

आज्यभागान्तं कृत्वा उभाभ्यामन्वारब्धो जुहुयात्। अग्नि-
नाग्निः समिध्यते, त्वं ह्यग्ने अग्निना,* पाहि नो अग्न
एकयेति† तिसृभिरस्तीदमधिमन्थन‡मिति तिसृभिरथैन
परिचरेत्। मृतामनेन संस्कृत्य अन्यया पुनरादध्यात्
यथायोगं वाग्निं विभज्य तद्भागेन संस्कुर्यादितरहोमा
मध्येवमग्निसंयोजनं कुर्य्याद्गोमिथुनं दक्षिणेति।

शौनकोऽपि।

अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः।
सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः॥
अरोगामुद्वहेत्कन्यां धर्मलोपभयात् स्वयम्।
जाते तत्र विवाहे च व्रतान्ते तु (चा)परेऽहनि॥
पृथक् स्थण्डिलयोरग्नी(ग्निं) समाधाय यथाविधि।
तन्त्रं कृत्वाज्यभागान्तमन्वाधानादिकं ततः॥
जुहुयात् पूर्व्वपत्न्याग्नौ तयान्वारब्ध आहुतीः।
अग्निमीळे पुरोहितं सूक्तेन नवर्चेन तु॥
समिध्यैनं समारोप्य अयं ते योनिरित्यृचा§।

---

* त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता।
सखा सख्या समिध्यसे॥ ८म. ४३सू. १४ऋक्।

† पाहि नो अग्न एकया पाह्युत द्वितीयया।
पाहि गीर्भिस्तिसृभिरूर्जांपते पाहि चतसृभिर्वसो॥ ८म. ६०सू. ९ऋक्।

‡ अस्तीदमधिमन्थनमस्ति प्रजननं कृतम्।
एतां विश्पत्नीमा भराग्निं मन्थाम पूर्व्वथा॥ ३म. २९सू. १ऋक्।

§ ८६ पृष्ठे प्रदर्शितया।

प्रत्यवरोहेत्यनया कनिष्ठाग्नौ निधाय तम् ॥
आज्यभागान्ततन्त्रादि कृत्वारभ्य तदादितः ।
समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयादघृतम् ॥
चतुर्गृहीतमेताभिर्ऋग्भिः षड्भिर्यथाक्रमम् ।
अग्नावग्निश्चरतीति* अग्निनाग्निः समिध्यते ।
अस्तीदमिति† तिसृभिः पाहि नो अग्न एकया‡ ॥
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ।
गोयुग्मं दक्षिणा देया श्रोत्रियायाहिताग्नये ॥
पत्न्यां रिक्ता यदि कृता दग्ध्वा तेनैव तां पुनः ।
आदधीतान्यया सार्द्धमाधानविधिना व्रती ॥
इत्यग्निसंसर्गविधानम् ।

अथ औपासनोपयुक्तमुच्यते ।

संहर्त्ता सर्व्वदोषाणामग्निश्च सर्व्वदाहकः ।
नित्यानन्दोऽग्निवर्णश्च रामः परशुभृत्सदा ॥
तत्कालमाह आश्वलायनः ।
अर्द्धमासादिति भानौ प्रातरौपासनञ्चरेत् ।

---

* अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यं सदमप्रयुच्छन् स्वाहा । ५अ. ४म. यजुः ।

† अस्तीदमिति ऋगियं ८६ पृष्ठे प्रदर्शिता, अन्ये द्वे ऋग्वेदस्य तृतीयमण्डले २८ सूक्ते मुख्ये ।

‡ ८६ पृष्ठे प्रदर्शिता ।

तत्राग्नौकर्त्तव्यमित्याह शौनकः।

अग्निर्मुखं हि देवानां तस्मादग्नौ जुहोत्यथ।

अग्निमुखा वै देवाः पाणिमुखाः पितर इति च ब्राह्मणम्

अग्निर्हि देवानां दूतो हविर्भागनेता चेति॥

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।

अस्य यज्ञस्य सुक्रतुम्॥ इति च।

सुक्रतुं हविर्भागप्रापकमित्यर्थः।

तथाच ब्रह्मपुराणम्।

देवाः समेत्य चान्योन्यं विचारं चक्रिरे पुरा।

अस्माभिः प्रार्थितो ब्रह्मा यज्ञभागानकल्पयत्।

मनुष्यैर्दीयमानांस्तान् दत्तांश्च प्राप्नुमः कथम्॥

इति चिन्तातुरान् देवान् बृहस्पतिरभाषत।

अग्निं दूतं वृणीमहे स भागान् प्रार्थयिष्यति।

अग्निर्मुखं हि देवानां भोक्ष्यामस्तन्मुखेन हि॥

विचार्य्यैवं तदा देवा अग्निं कार्य्यार्थमाययुः।

कुर्य्यस्व आयुरजरं यदग्ने प्रार्थयाम ते॥

सु(लभं)करं कार्य्यमस्माकं कुरुष्व व्रज भूतलम्।

अग्ने पूर्व्वं भ्रातरो नस्तस्मात् कुरु समीहितम्॥

इत्यर्थितोऽग्निस्तान् वव्रे प्रयाजांश्चानुयाजकान्।

रमायै विष्णुना दत्ताः सरस्वत्यै रमा ददात्॥

कुधादिभ्य उमादिभ्यस्त्वतिस्नेहात्तु सा ददौ।

प्रार्थयित्वा च ता देवाः कार्य्यार्थमग्नये ददुः॥

ततः प्रभृति देवान् वै उद्दिश्याग्नौ प्रहूयते ।

अग्नौ दत्तं समायाति देवान् प्रति दिवि स्थितान् ॥ इति ।

अत्र होमे अर्कोदयो मुख्यः आसायं गौणः । आसायं प्रातरिति स्मृतेः ।

गृहप्रवेशहोमात्तु ऊर्द्ध्वं परिचरेत् स्वयम् ।

ो पुत्रो भागिनेयः शिष्योऽध्वर्य्युश्च विट्पतिः* ।

एतैरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥ इति ।

अन्यत्र ।

असमर्थे तु दम्पत्योर्होतव्यं ऋत्विगादिभिः ।

द्वयोरप्यसमक्षेऽप्येतद्धुतमनर्थकम् ।

सन्निधौ यजमानः स्यादुद्देश्यत्यागकारकः ॥

यजमानस्योन्मादे पत्न्यां चर्त्तुमत्यां प्रसूतायां वा नानुज्ञा स्यात् ।

पत्यभावे तु पत्नी स्यादुद्देश्यत्यागकारिणी ।

तदभावे तु पुत्रः स्यादुद्देश्यत्यागकारकः ॥

उन्मादे प्रसवे (वान्ते) चर्त्तौ कुर्व्वीतानुज्ञया विना ।

असन्निधौ तु (पत्नी) पत्न्याः स्यादध्वर्य्युस्तदनुज्ञया ॥

त्यागमिति शेषः । तथाच अध्वर्य्य्वादिना हुते पत्नी सूर्य्यायेदं न ममेति त्यजेत् ।

उन्मादाद्यभावे तु ।

सायं प्रातश्च जुहुयाद्यावज्जीवेद्द्विजोत्तमः ।

भूलोकाधिपतिस्त्वग्निर्द्युलोकाधिपती रविः ॥

---

* ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः । इति पाठं बहुषु निबन्धेषु पश्यामः ।

प्रजापतिस्तूभयश्च ता उपासनदेवताः ।
पूजिता येन तेनेष्टं त्रैलोक्यं सचराचरम् ॥

तथा ।

अग्निहीनस्तु यो विप्रः शूद्र एव न संशयः ।
न दातव्यं न भोक्तव्यमग्निहीनद्विजन्मनः ॥
केचिन्मनस्यहोमाः स्युः केचिद्भोजनहोमिनः ।
पञ्चहोमास्तथा केचिज्जलहोमास्तथा परे ।
यथाकथञ्चित्कर्त्तव्यं यथा होमो न हीयते ॥

यथा न हीयते इत्यनेन आपत्काले अकरणात् किञ्चित्करणं श्रेय इति गम्यते । न विधिपरमेतत् ।

अग्निः प्रजापतिः सायं प्रातः सूर्य्यः प्रजापतिः ।
चतुर्होमात्मकं कर्म्म लेकमित्यभिधीयते ॥
सायं चोपक्रमो ह्यस्य प्रातश्चैव समापनम् ।
प्रातर्होदशनाद्यस्तु सायं स्यान्नवनाड़िकाः ।
होमकालद्वयं प्राहुर्याज्ञिका होमकर्म्मणि ॥ इति ।

प्रयोगपारिजाते ।

सायं होमे तु यद्द्रव्यं तद्द्रव्यं प्रातरेव हि ।
प्रथमाहुतिरग्नेस्तु हूयते याज्ञिकैः खलु ।
द्वितीयामाहुतिं तूष्णीं प्रजापतिपदं स्मरन् ॥
उत्तमोऽग्निधृतः कुण्डे आत्मारोपस्तु मध्यमः ।
समिदारोपितश्चान्त्यस्तस्मात्कुण्डे विधारयेत् ॥
अग्नेरायतनं तच्च खातयोनिविवर्जितम् ।

मेखलात्रितयं कार्य्यं वाग्यतः शुभलक्षणम् ॥
पूर्व्वा षड़ङ्गुलोत्सेधा द्वितीया द्वादशाङ्गुला ।
चतुरङ्गुलविस्तारा द्वितीया तु द्व्यङ्गुला ।
अरत्निमायामतो मध्ये विस्तारः परिकीर्त्तितः ॥

तथा ।

अनुद्धृते तु धार्य्योऽस्तावस्तो वाभ्युदितो रविः ।
पुरस्कृत्य हिरण्यन्तु सायमुद्धरतेऽनलम् ॥
रजतन्तु पुरस्कृत्य प्रातरुद्धरतेऽनलम् ।
पुत्रा(द्य)भावे नाममन्त्रैः पत्नरमन्त्रं जुहोत्यलम् ॥

अमन्त्रमिति वेदमन्त्रनिषेधः ।

अन्यस्मिन् हूयमानेऽपि पत्नी त्यागं करोत्यथ ।
वैश्वदेवञ्च पत्न्येव जुहुयात् संस्कृतेऽनले ॥
समिदारोपणे पक्षे ज्वलिते लौकिकेऽनले ।
उपा(प्रत्य)वरोहमन्त्रेण तत्राग्निमवरोपयेत् ।
प्राणानायम्य सङ्कल्प्य धृतदर्भपवित्रकः ॥
अनन्तर्गर्भिणौ यौ तु कुशौ प्रादेशसम्मितौ ।
अनखच्छेदनौ साग्रौ तौ पवित्राभिधायकौ ॥
एह्यग्न* इति मन्त्रेण देवमग्निं समाह्वयेत् ।

---

* एह्यग्न इह होता निषीदादब्धः सुपुर एता भवा नः ।
अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ॥
१म. ७६सू. २ऋक् ।

ध्यात्वा चत्वारि शृङ्गेति* सम्मुखीकरणं ततः ॥
एषो ह देव† मन्त्रेण जिह्वाभिः सम्मुखीकृते ।
प्रसार्य हस्तान् पादान् कामगुत्तानः शयित्वसौ ॥
मन्त्राग्निः सम्मुखो भूत्वा उत्तानोऽग्निः प्रजायते ॥
विश्वानी‡त्यग्निमभ्यर्च्य समिधाभिः सुविज्वले ।
मध्ये हुत्वाग्नये तस्मात्पुरतो द्वितीयाहुतिम् ।
हस्तपार्श्वेन मनसा प्रजापतिपदं स्मरन् ॥
द्रवद्रव्यं स्रुवेणैव पाणिना कठिनं हविः ।
अङ्गुष्ठाग्रैर्न होतव्यमकृत्वाङ्गुलिभेदनम् ।
अङ्गुल्युत्तरपार्श्वेन होतव्यमिति च स्मृतिः ॥

अथ होमद्रव्याणि ।

पयो दधि यवागूश्च तिलव्रीहियवास्तिलाः ।
प्रियङ्गवश्च श्यामाकास्तण्डुलाः समिदाज्यकम् ॥
व्रीह्यादीनां चतुःषष्टिस्तिलादीनां शतं भवेत् ।
अङ्गुलित्रयपर्व्वस्तु अथवा(चा)ह्याहुतिर्भवेत् ॥
पर्य्युक्ष्य च परिस्तीर्य्य पर्य्युक्ष्य जुहुयाद्धविः ।
परिषेचनमाचान्तु होमान्ते च समाचरेत् ॥

---

* चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ ४म. ५८सू. ३ऋच् ।

† एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥ ३२अ. ४म. यजुः ।

‡ विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रं तन्न आसुव ॥ ३०अ. ३म. यजुः ।

एकाङ्गुलं परिस्तरणमुखाग्नेरन्वेनमाचरेत् ।
अष्टाङ्गुलं तूत्तमं स्याद्द्व्यङ्गुला हि परिस्तृतिः ॥
आसायं कर्म्मणः प्रातराप्रातः सायकर्म्मणः ।
आहुतिर्नातिपद्येत पार्व्वणं पार्व्वणान्तरात् ॥
उपावरोहमन्त्रेण समारोपेद्धुताशनम् ।
भस्मनोद्धरणं कुर्य्यात् समारोपणपूर्व्वतः ।
पश्चान्निर्व्वापयेद्वह्निमन्यथा निष्फलं भवेत् ॥
पलाशाश्वत्थखदिरशम्युदुम्बरसम्भवे ।
समिध्यारोपयेद्वह्निं तं यत्नेन तु रक्षयेत् ।
रजकान्त्यजशूद्राद्यैः स्पृष्टे विच्छिद्यतेऽनलः ॥
नदीतीरे तु जुहुयादष्टोत्तरशताहुतीः ।
अभयं (चो)चाभयं मेऽस्तु मन्त्रेणोपासनं गृही ॥
प्रवसन्नुपतिष्ठेत ततो ग्रामान्तरं व्रजेत् ।
आगत्य ज्वलयेदग्निमनयैवोपतिष्ठते ।
गृहा मेत्यादिमन्त्रेण* गृहाणीक्षेत वै ततः ॥
गृहानहं सुमनस इत्यनेन प्रपद्यते ।
जपेन्निर्वीक्षमाणस्तु शिवं शग्ममिति त्वथ ॥
आत्मन्यारोपणे पक्षे होमो विच्छिद्यते यदि ।
आपक्षमदिनादर्व्वागूर्द्ध्वं विच्छिद्यतेऽनलः ॥
धार्य्याग्नौ नित्यहोमे तु होमो विच्छिद्यते यदि ।

---

* गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि ।
ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ३अ. ४म. यजुः ।

आहादर्ध्यदिनादर्व्वागूर्ध्वं विच्छिद्यतेऽनलः ॥
नित्यहोमे त्वतिक्रान्ते संख्यात्याज्यन्तु पूर्व्ववत् ।
चतुष्कृ(त्वा)त्याज्यमादाय मनस्वत्या जुहोत्यथ ॥
सभार्य्यस्य विवाहा(ग्निः)ग्नौ सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ॥

तथा ।

बहुभार्य्यस्य ज्येष्ठा चेत् प्रवसेत् पुनराहितिः ।
वदन्(वदेद्)बौधायनस्त्वेवं ज्येष्ठा चेदग्निसन्निधौ ।
उत्तरासां यथाकामं प्रवासमनुमन्यते ॥
एकस्योपासने जाते द्वितीयोऽग्न करोति चेत् ।
लौकिकेऽग्नौ तृतीयोऽपि चतुर्थो न करोति वै ॥

अन्यच्च ।

त्रिभिर्हुते वह्निरुपैति शान्तिं
न तत्र भूयो जुहुयाच्चतुर्थः ।
बोद्धा स बोधीति* समिद्वयेन
तं बोधयित्वा विदधीत होमम् ॥

शौनकोऽपि ।

उपोष्य दम्पती दत्त्वा होमद्रव्यं द्विजातये ।
आदध्यादपराह्णेऽग्निमाधानद्रव्यसं(न्निधौ)चितौ ॥

आधानद्रव्यं सिकतादि ।

---

* स बोधि सूरिर्मघवा वसुपते वसुदावन् ।
युयोध्यस्मद्द्वेषांसि । विश्वकर्मणे स्वाहा ॥ १२अ. ४३म. यजुः ।

उपासमोऽनुगच्छेच्चेदुपलेपादि पूर्व्ववत् ।
आहृतं श्रोत्रियागारात् प्रतिष्ठाप्य हविर्भुजम् ।
अन्यस्माद्धोमकालात् स्त्री नाश्नीयादथवा गृही ॥
पर्य्युक्षणादि कृत्वाथ संस्कृत्याज्यन्तु पूर्व्ववत् ।
अयाश्चेत्यनया हुत्वा यथापूर्व्वं जुहोत्यथ ॥
अन्वाधाने कृते यागात् प्राक् चेदनुगतो भवेत् ।
अया श्चेत्यनया हुत्वा पुनरन्वादधात्यथ ।
व्याहृत्या विरूपस्याय इति बौधायनोऽब्रवीत् ॥
अन्वाधाने कृते यागात् प्राक् चेदारोपयेदसुम् ।
तुभ्यं ता* इत्यृचा हुत्वा वह्निमारोपयेत्ततः ॥
अन्वाधाने कृते पश्चाद्दर्शे अग्निसूर्य्ययोः ।
नवो नवोऽयमित्याभ्यां† चन्द्रस्याज्याहुतिद्वयम् ॥
उद्वयम्‡ उदु त्यं§ चित्रं¶ रवेराज्याहुतित्रयम् ।
हुत्वा प्रतिपदि दिने ततो होमं समाचरेत् ॥

---

* तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् ।
अग्ने कामाय येमिरे ॥ १२अ. ११६म. यजुः ।

† नवो नव इत्याद्याभ्यामिति पाठो युक्तः, द्वितीयमन्त्रादौ अयमित्यस्यानुपलम्भात् ।

‡ उद्वयं तमसः परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् ॥ २०अ. २१म. यजुः ।

§ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यं स्वाहा ॥
७अ. ४१म. यजुः ।

¶ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ७अ. ४२म. यजुः ।

अस्यार्थः। अन्वाधानेष्टिमध्ये ग्रहणं चेत्तदा हविरासादनान्ते चन्द्रग्रहे नवो नवः* इत्याभ्यामाहुतिद्वयं सूर्यग्रहे च उद्वयमिति तिसृभिराहुतित्रयं हुत्वा पश्चादिष्टिं कुर्यादिति प्रयोगपारिजाते व्याख्यातम्। अन्वाधानेष्टिमध्ये सोमसूर्यग्रहदोषप्रायश्चित्तार्थ-माहुतीर्होष्ये इति सङ्कल्पः।

प्रायश्चित्तं तु यत्प्रोक्तमग्नित्यागोपपातके।
मनुना तत्प्रकुर्वीत न तत्कालानुसारतः॥
त्रैमासिकं गोवधोक्तं (त्यक्त्वा) कृत्वाग्नेर्निष्कृतिर्भवेत्।
चान्द्रायणञ्च मासस्य दानं वापि समाचरेत्॥
संवत्सरन्तु त्यक्ताग्निं कुर्याच्चान्द्रायणत्रयम्।
अथवाप्युपवासन्तु प्रतिमासं दिनं भवेत्॥
योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यं समाचरेत्।
अन्यत्र पुनराधानं दानमेव तथैव च॥

प्रमादादन्यत्र तु कात्यायनः।

यावन्त्यब्दान्यतीतानि निरग्नेर्विप्रजन्मनः।
तावन्ति कृच्छ्राणि चरेद्धौम्यं दद्यात्(जातये)अध्वने॥ इति।
तदन्त पुनराधानमिच्छन् कुर्वीत याज्ञिकः।

---

* नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः॥
सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम्।
आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व। १०म. ८५सू. २०मन्त्र।

उपलेपादिकं कृत्वा प्रचाराग्नं विवाहवत् ।
विवाहाज्याहुतीर्हुत्वा लाजहोमो भवेदिह ॥
गृहप्रवेशनीयाञ्च हुत्वा स्यादृद्याजनम् ।
परिणीतादि नात्र स्याज्ञाजानावपति स्वयम् ॥
समानतन्त्रकश्चेह होमद्वयमिदं भवेत् ।
तृतीयप्रभृतीनान्तु पार्व्वणानामतिक्रमे ॥
पुनराधेयमिच्छन्ति केचिद्गृह्यविदो जनाः ।
समारूढसमिन्नाग्नौ पुनराधेयमिष्यते ।
उभयातिक्रमे कार्य्य एकया(धि)विज्ञतश्चरः ॥
अथ पाणिसमारोपं वक्ष्यामि नियतात्मनाम् ।
सायं प्रातश्च हुत्वाग्निं पाणिमारोपयत्यथ ।
कृते पाणिसमारोपे नियमानपि मे शृणु ॥
जले निमज्ज्य न स्नायान्नोपेयाच्च स्त्रियं तथा ।
कृत्वा मूत्रपुरीषौ तु चिरं नासीत नित्यशः ।
अस्पृश्यस्पर्शनं नैव नैव दुष्टप्रतिग्रहम् ॥
कुर्य्यादिति शेषः ।
पाणावारोपणे पक्षे होमो विच्छिद्यते यदि ।
आत्मसमदिनादर्वागूर्द्ध्वं विच्छिद्यतेऽनलः ॥
इतरत्तु सर्व्वं समानमत्र ।
वक्ष्यामि पुनराधेयं जयन्तस्वामिनो मते ।
आव्याधेयिकसम्भारान् यथासम्भवमाहरेत् ॥

सिकता पद्मपत्रञ्च वराहविहता च मृत् ।
शमी मुञ्जा: कुशारत्ना आधानद्रव्यसंज्ञका: ॥
उपलेपादिकङ्कृत्वा सम्भारा(न्विदधाति तत्) न्विदधीत वै ।
सम्भारेष्वादधीताग्निं श्रोत्रियादिगृहागतम् ॥
उत्तमोऽरणिसम्भूतो मध्यमः सूर्य्यकान्तजः ।
मध्यमः स्वगृहानीतः श्रोत्रियागारजोऽथवा ॥

श्रोत्रियस्वाहिताग्निः ।

शौनकः ।

पौर्णमासी तु सम्प्राप्ता या विवाहादनन्तरम् ।
ततः प्रक्रम्य कुर्व्वीत स्थालीपाकन्तु पर्व्वसु ॥
तत्र यद्यप्यमावास्या विवाहस्यान्तरा पतेत् ।
तथापि पौर्णमास्यादिः स्थालीपाकक्रिया स्मृता ॥ इति ।

बौधायनोऽपि ।

चतुर्थीहोममध्ये तु प्राप्यते यदि पूर्णिमा ।
तत्रैव यागः कर्त्तव्यो ह्यन्वाधानपुरःसरः ॥

अधिमासादिप्राप्तौ तु सङ्ग्रहकार आह ।

पार्व्वणेष्टि(रा)माग्रयणं सन्ध्योपासनमेव च ।
कुर्य्यान्नित्यानि कर्म्माणि न प्रारम्भमिति स्थितिः ।
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्य्यग्रहे तथा ॥

इति वचनात् प्रथमारम्भो न कार्य्यः। प्रारब्धं तु कुर्य्यादेवेत्याशयः।

आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुचम् ।
तया चाज्याहुतिर्या स्यात् सा पूर्णाहुतिरिष्यते ॥

स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः।
प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै।
कार्य्यमित्येक आचार्य्या नेत्यन्ये तु विपश्चितः॥
इध्माधाने कृते दुष्टं प्रधानं हविरत्र चेत्।
तत्स्थाने जुहुयादाज्यमदुष्टन्तु जुहोत्यथ॥
एवं समाप्य यद्दुष्टं तदप्सु प्रक्षिपेत् पुनः।
स्विष्टकृतं (हविःशेषं) शेषहविराज्येनैव समापयेत्॥
प्रच्युतैस्तु नखैः केशैः कीटैर्वाऽमेध्यवेविभिः।
वसासृङ्मेदोमज्जास्थिमूत्रविट्स्वेदश्लेष्मकैः।
भिन्नानि चैव सिक्तानि दुष्टान्यप्सु विनिक्षिपेत्॥
संसृष्टो यस्य गृह्याग्निरन्यगृह्याग्निना यदि।
चरुर्विविचये कार्य्यो यद्वा पूर्णाहुतिर्भवेत्॥
अग्निर्गुणी भवेदेषु विविचीत्यादिको गुणः*।
चरुः क्षामाय कर्त्तव्यो गृहदाहेऽप्ययं विधिः॥
प्रायश्चित्तचरुस्थाने पूर्णाहुतिरिहोच्यते।
शवाग्निना तु संसृष्टे कुर्व्वीत शुचये चरुम्॥
ग्राम्यदावाग्निसंसर्गेऽप्ययमेव चरुर्भवेत्।
वैद्युतेन तु सं(सर्गे)सृष्टे कुर्य्यादप्सुमतश्चरुम्॥
पर्व्वण्यश्रुपाते तु कार्य्यो व्रतपतेश्चरुः।
पर्व्वणि व्रतलोपे च (तु) कार्य्यो व्रतपतेश्चरुः॥

---

* त्रिविच्याचागुणाः कृता इति संस्कारस्तबमालायां पाठः। कि च यथा विविचिच गुणः पश्चात् व्रतभ्राष्टमोचतः। ततः संकुसुक इति।

समाग्नतन्त्रं कुर्व्वीत पार्व्वणेन तु कर्म्मणा ।
स्याच्चेत्पविनयोर्नाशः स्वान्यग्निपतितश्चरुः ॥
अन्वाधानेष्टिमध्ये तु अग्निनाशो भवेद्यदा ।
श्रोत्रियाग्निं समानीय प्रायश्चित्ताहुती(र्यजेत्)र्जुहेत् ॥
प्रायश्चित्तविशेषस्य यत्र नोक्तो विधिः क्वचित् ।
होतव्याज्याहुतिस्तत्र भूर्भुवः स्वरितीति (च) तु ॥
अज्ञाताग्रयणोऽश्नीयान्नवान्नं यस्तु साग्निकः ।
वैश्वानराय कर्त्तव्यश्चरुः पूर्णाहुतिश्च वा ॥
द्विषदन्नं यदा भुङ्क्ते तथाप्येष चरुर्भवेत् ।
कपालनाशेऽप्येष स्याच्छ्रवणाकर्म्मणामपि ॥
कपालन्तु भवेद्भिन्नं प्रागेव श्रपणाद्यदि ।
मन्त्रेणानपहत्येति कपालं सन्दधात्यथ ॥
अभिन्नो धर्म्म इत्याभ्यां मन्त्राभ्यां प्रक्षिपेज्जले ।
भिन्द्याद्यदि पुरोडाशमुत्सृज्येद्यदि वा तथा ॥
किमुत्पतसि मन्त्रेण वर्हिष्यवं निधाय च ।
अभिमन्त्रयते तच्च मा हिंसीदिति* मन्त्रतः ॥
आहुतिर्हूयमाना तु वह्निः स्कन्देत वाग्नितः ।
देवाञ्जनमगन्यज्ञ इत्यनेना†भिमृश्य ताम् ॥

---

* मा मा हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्म्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ १२अ. १०२म. यजुः ।

† अनेन मन्त्रेण अत्र एकसमयविवक्षितं तेन पञ्चमन्त्रा गृह्यन्ते । ते च यथा देवाञ्जन-

द्रप्स*श्चेत्याहुतिं हुत्वा प्रक्षिपेदप्सु स्रुवः ।
निमित्तानन्तरं सर्व्वप्रायश्चित्तं भवेदिह ॥
प्रागेवोत्पवने दोष आज्यसंस्कारतो यदि ।
प्रायश्चित्तं भवेदाज्यसंस्कारानन्तरं ततः ॥
व्युत्क्रमो देवतानान्तु सङ्कल्पादौ भवेद्यदि ।
मन्त्राणां व्युत्क्रमस्तद्वद्धोमकाले भवेद्यदि ॥
मध्यात्पूर्व्वार्द्धतश्चेति व्युत्क्रमश्च भवेद्यदि ।
द्रव्याणां व्युत्क्रमः स्यात्तथा निर्व्वापणादिषु ।
यद्वो देवा† ऋचा ब्रह्मा जुहुयाच्च स्रुवाहुतीः ॥
कस्मैचिद्ब्राह्मणायास्मिन् व्रते द्रव्यं ददाति चेत् ।
होतव्यैवाहुतिस्तत्र व्याहृत्याख्यः समुच्चयः ॥
यजमानस्तु जुहुयाद्ब्रह्माभावे स्रुवाहुतीः ।
प्रागुद्यागाद्व्युत्क्रमे ज्ञाते ह्यहुत्वा यजेत्ततः ॥
अविज्ञातविपर्य्यासे विहितां देवतां स्मरन् ।
यष्टव्यं तत ऊर्द्धन्तु व्युत्क्रमावगमे सति ।
प्रायश्चित्तमिदङ्कृत्वा यागं विदध्यात्ततः ॥

---

मनन् यमस्ततो मा वनस्पतीरागच्छतु वर्त्तताम्। गन्धर्व्वाप्सरसमगच्छत-वर्त्तताम्। पितृजनम-वर्त्तताम्। आप ओषधीर्वनस्पतीञ्जनम-वर्त्तताम्। पञ्चजनाञ्जनम-वर्त्तताम्। इति।

* द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्व्वः।
समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ १३अ. ५म. यजुः।

† यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेडनम्।
अरावा यो नो अभि दुच्छुनायते तस्मिन् तदेनो वसवो निधेतन ॥
१०म. ३७सू. १२ऋक्।

यदा त्वविहितां काञ्चिद्देवतामिष्टवांस्तदा ।
प्रायश्चित्तमिदं कृत्वा यागं त्वावर्त्तयेत् क्रतम् ॥
यदा हविरपर्याप्तं स्यात्तेनैव हविषा यजेत् ।
चतुःशरावपात्रैस्तु पचेद्व्रीहिभिरोदनम् ।
भोजयेत्तेन.चान्नेन चतुरो ब्राह्मणानथ ॥
बहुदग्धमदग्धं वा किञ्चिदेव यदा हविः ।
दग्धेनेष्ट्वा पुनर्यागः स्यादारभ्यादितस्तथा ॥
कृत्स्नदग्धं यदा तत्स्यात् पुनरुत्पादयेद्धविः ।
स एव यागः कर्त्तव्यः पुनर्यागस्तु नेष्यते ॥
मध्यात्पूर्व्वार्द्धतोऽवत्तं दुष्टं यदि भवेद्धविः ।
तत्त्यक्त्वा हविषोऽवद्यान्मध्यात्पूर्व्वार्द्धतः पुनः ॥
गमनार्थेन (र्थी च) सूक्तेन वय*मुक्त्वा पथस्पथम्† ।
पूर्व्ववत्प्रत्यृचं होमं कुर्य्यात् सूक्तस्य वा जपम् ॥
रक्तपादः कपोताख्यः किञ्चिदारुणकच्छविः ।
स चेच्छालां प्रविशति समीपं वा व्रजेद्यदि ॥
परिषेचनपर्य्यन्तमन्वाधानादि पूर्व्ववत् ।

---

* वयं सोम व्रते तव मनस्तनूषु बिभ्रतः ।
प्रजावन्तः सचेमहि ॥ ३अ. ५६म. यजुः ।

† पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियं धियं सीषधाति प्र पूषा ॥
६म ४९सू. ८ऋक् ।

देवाः कपोतसूक्तेन* प्रत्यृचं जुहुयाद्घृतम् ॥
पठेत् स्वाहेति जुहुयात्प्रत्यृचं पञ्चपीष्विह ।
इदं सूक्तं जपेद्यद्वा विकल्पो जपहोमयोः ॥
गत्वा रजस्वलां भार्य्यां निषिद्धदिवसेऽथवा ।
अयाज्यं याजयित्वा तु विषादि प्रतिगृह्य च ॥
अप्रतिग्राह्यपुरुषाद्द्रव्यं वा प्रतिगृह्य च ।
स्पृष्ट्वाग्निं चयनस्थं वा यूपं वाऽभोज्यभोजने ॥
एतेषु च निमित्तेषु भवेदन्यतमं यदि ।
पर्य्यूह्याग्निं परिस्तीर्य्य पर्य्युक्ष्य च ततः परम् ॥
पुनर्वामिति मन्त्राभ्यां† जुहुयात्संस्कृतं घृतम् ।
एताभ्यामेव मन्त्राभ्यां जुहुयात्समिधोऽथवा ॥
पर्य्यूहणोक्षणे स्यातामन्यतन्त्रं तु नेष्यते ।
स्वाहाकारविनिर्मुक्तौ (यद्वा मन्त्रं) यद्वो मन्त्रं‡ जपेदिह ॥

---

* देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥
१०म.१६५सू.१ऋक् ।
इत्यादिकेन ।

† वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यं सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम । ८अ. ६म. यजुः ।

उपयाम गृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे । ८अ. ७म. यजुः ।

‡ १०१ पृष्ठे प्रदर्शितम् ।

## अथ विधुरोपासनम् ।

तत्राश्वलायनः ।

उद्धृत्य चाग्निं प्रणवेन चादा-
वन्वग्निः*रित्याहरयेत्† पुरस्तात् ।
निधाय पृष्टो दिवि‡ मन्त्रकेण
ततश्च होमः शकलैश्चतुर्भिः ॥
लेखादयो नैव च तत् सतां स
विश्वानि§ नोद्यान इमे च मन्त्राः ।
नारोपणं वाप्यवरोपणं वा
चोत्पत्तिरेवं विधुरानलस्य ।
नित्यानि नैमित्तिककाम्यकर्म्म
तत्रैव कुर्य्याद्विधुरे सदैव ॥ इति ।

आश्वलायनमाचार्य्यमभिगम्य महर्षयः ।
प्रतिपूज्य यथाचारमिदं वचनमब्रुवन् ॥

---

* अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनुसूर्य्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥ ११अ. १७म. यजुः ।

† आहरयेदित्यत्राद्व्याभावश्छन्दोभङ्गभयात् सोढव्यः । अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेद्गिरमिति कुमारसम्भवटीकायां मल्लिनाथधृतवचनात् ।

‡ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश । वैश्वानरः सहसा पृष्टो अग्निः सनो दिवा स रिषस्पातु नक्तम् । १८अ. ७०म. यजुः ।

§ विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रं तन्न आसुव ॥ ३०अ. ३म. यजुः ।

भगवन् विधुराणां हि धर्म्मान्वो वक्तुमर्हसि ।
विवाहे त्वसमर्थस्य विधुरस्य क्रिया कथम् ॥
आदानि पञ्चयज्ञाश्च कार्य्या नैमित्तिकाः क्रिया: ।
यस्मिन् येन विधानेन गृहस्थ(:)सहगो भवेत् ॥

आश्वलायन उवाच ।

कात्यायनभरद्वाजधौम्यबौधायनादिभिः ।
यदुक्तं विधुराणाञ्च तदेव कथयामि वः ॥
चन्द्रानुकूलदिवसे स्नात्वागत्य द्विजैः सह ।
पुण्याहं वाचयित्वा तानभ्यर्च्च्य च महानसात् ॥
अग्निमाहृत्य विधिवत् स्थण्डिले तं निधाय च ।
सङ्कल्प्य विधुरश्चाथ पुनः सन्धास्य इत्यृचा (त्वय) ।
पुनः सन्धानवत् कुर्य्याल्लाजहोमं विवाहवत् ॥
चतुर्गृहीतं जुहुयादयाश्चाग्नेस्तु मन्त्रतः ।
तथा यथाविधानोक्तिः सप्त ते अग्न इत्यृचा* ॥
तन्त्रमन्यत्समानं स्याद्धोमशेषं समापयेत् ।
तदानीमेव जुहुयात्तस्मिन्नग्नौ घृताहुतीः ॥
शुचीश्च पावमानीश्च तन्तुमानीश्च माथि(पावि)कीः ।
गृहप्रवेशहोमार्थं जुहुयादाहुतीरिमाः ।
वैश्वानरीर्जातवतीर्हुत्वा शेषं समापयेत् ॥

* सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥
१७अ. ७९म. यजुः ।

चतसृभिर्व्याहृतिभिश्चतस्रः समिधस्तथा ।
सायं प्रातश्च जुहुयादौपासनमथाचरेत्(मतः परम्) ॥
दर्शञ्च पौर्णमासञ्च नित्येष्ट्याग्रयणी तथा ।
श्राद्धानि पञ्चयज्ञांश्च तस्मिन्नग्नौ समाचरेत् ।
एवङ्कृते तु विधुरो गृहस्थसदृशो भवेत् ॥
अनाश्रमस्थदोषोऽस्य नास्ति इत्याह आश्वलायनः ।
दानव्रतेषु होमेषु तीर्थेषु श्राद्धकर्मसु ।
विधुरोऽपि सदा पूज्यो ह्यग्निवेदसमन्वितः ।
तस्मात्सर्व्वप्रयत्नेन वह्निं परिचरेत् स्वयम् ॥
यस्य नित्यानि लुप्यन्ते पतितः सोऽभिधीयते ।
तस्मान्नित्यानि कुर्व्वीत न च नित्यानि लोपयेत् ॥ इति ।

अथ विधुराग्न्युत्पत्तिविधिः ।

प्रयोगपारिजाते ।

आत्तार्द्धेनाग्निना दग्ध्वां मृतां पत्नीञ्च तां त्रिभिः ।
शिष्टार्द्धेनोद्वहेत्कन्यां पुनश्चित्वाग्निमान् यजेत् ॥
प्रागुद्वाहाच्च शिष्टार्द्धे आर्त्तस्याग्नेर्यथाविधि ।
शुश्रूषेदप्यपत्नीक इष्टिं कुर्व्वीत वा न वा ।
सायम्प्रातर्होमधर्म्मंमर्द्धाग्नावपि सञ्चरेत् ॥
इति आश्वलायनः ।

अस्यार्थः । आर्त्तकर्म्म अनुतिष्ठन् औपासनस्यार्द्धेन मृतां पत्नीं

संस्कृत्य शिष्टार्द्धे पूर्व्ववत् कर्म्माणि कुर्य्यात्। श्रौतकर्म्म अनुतिष्ठन् स्वपत्नीसंस्कारे त्रिभिरप्यग्निभिर्मृतां पत्नीं संस्कृत्य पुनरुद्वाहानन्तरमग्निमाधाय यजेदिति।

तथाच ब्राह्मणभाष्ये भृगुः।

भार्य्यायै पूर्व्वमारिण्यै दत्त्वाग्नीनन्त्यकर्म्मणि।

पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च॥ इति।

एतत् पुनर्व्विवाहेच्छुविषयम्। तदनिच्छुस्तु अन्यमग्निं प्रमीतभार्य्यायै वियोज्य अग्नीनवस्थाप्य कुशमयीं पत्नीं कृत्वा पूर्व्ववत् परिचरेत्। अन्यथा दोषश्रवणात्।

तथाच मैत्रायणीयश्रुतिः।

यस्तु स्वैरग्निभिर्भार्य्यां संस्करोति कथञ्चन।

असौ मृतः स्त्री भवति स्त्री चैवास्य पुमान् भवेत्॥

अत्र विशेषमाह विष्णुः।

मृतायामपि भार्य्यायां वैदिकं न त्यजेद्द्विजः।

उपाधिनापि तत्कर्म्म यावज्जीवं समाचरेत्॥ इति।

उपाधिः कुशमयादिपत्नीकल्पना।

तथाच स्मृत्यन्तरम्।

अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः।

अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः॥ इति।

तद्विधिस्तु।

मुहूर्त्तसमये नान्दीमुखं कृत्वा विचक्षणः।

पश्चाशत्पिञ्जलैः कार्य्या स्त्रियाकारा स्ववेश्मगा॥

आर्द्रशमात्रा दीर्घा स्याद्दर्भैरेव वेष्टिता ।
हरिद्राक्षतदूर्वाभिर्गन्धैश्च सुवासयेत् ॥
सौवर्णी षोडशपलैर्माषकैः षोडशैरपि ।
ततोऽग्निञ्च प्रतिष्ठाप्य लाजहोमञ्च निर्वपेत् ॥
राष्ट्रपूर्वं भवेदत्र आयतायतिता तथा* ।
स्थालीपाकञ्च यत्नेन तत्कुर्य्यात्सम्यगर्जितम् ॥
प्राशनान्ते ब्राह्मणायाथो वासो वा सशरं धनुः ॥
प्रतोदमथवा रज्जुं ततस्तां यज्ञकर्म्मणि ॥
यज्ञोपवीते बध्नीयात् स्त्रीमन्त्रान् स्वयमाहरेत् ।
अन्यदा यज्ञशालायां स्थापनीया प्रयत्नतः ॥

इति विधिरत्र ।

एतद्विधुरोपासनं नित्यं तदकरणे प्रत्यवायश्रुतेः सङ्ग्रहाग्निविधाने ।

अ(प्र)हतं प्रजपेत्सूक्तं पञ्चवारं दिने दिने ।
औपासनं विना दोषो न स्पृशेद्विधुरं ततः ॥

तथा ।

अपेत प्रजपेद्वर्गं पञ्चवारं दिने दिने ।
विधुरो वा साग्निकस्य यत् फलं तत् फलं लभेत् ॥

अथ यदि भार्य्यायै सर्व्वोऽपि स्मार्त्ताग्निर्दत्तस्तदा तदुत्पत्तिप्रकारमाह बौधायनः ।

प्रणवेन लौकिकमग्निं परिगृह्य अन्वग्निरिति† होमदेश-

---

* आयता च तथायतिः इति वा पाठः ।

† मन्त्रोऽयं १०४ पृष्ठे प्रदर्शितः ।

मानीय षष्ठे द्वितीये वा* होमस्थाने प्रतिष्ठाप्य तत् सवितु† स्तां सवितुः‡ अद्या नो देव सवित§ विश्वानि देव सवितरिति चतुर्भिः मन्त्रैः प्रत्यक्षं नित्योपासनादि कृत्वा तमग्निं विसृज्यारोपणसमारोपणं नित्यनैमित्तिककर्माणि चाग्नेव कुर्य्यादिति ।

आश्वलायनोऽत्र विशेषमाह ।

मृतायां पतितायां वा प्रोषितायाञ्च पूरुषः ।
न कुर्य्यात्पार्व्वणश्राद्धं पत्न्यामन्यत्र वा गृही ॥

इति पार्व्वणनिषेधात् सङ्कल्पश्राद्धं भवत्येव । अथार्थे आश्वलायनकारिकापि पूर्व्वमेवोक्ता ।

इति विधुरोपासनम् ।

अथ औपासनाग्निनाशे प्रायश्चित्तविधानम् ।

प्रयोगपारिजाते शौनकः ।

---

* मन्त्रोऽयं १०७ पृष्ठे प्रदर्शितः ।

† तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ ३म. ६२सू. १०ऋक् ।

‡ तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।
यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां पयसा महीं गाम् ॥ १७अ. ७४म. यजुः ।

§ अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।
परा दुःष्वप्न्यं सुव ॥ ५म. ८२सू. ४ऋक् ।

यदि काष्ठाद्यभावेन नष्टो वाग्निर्भवेत्तदा ।
भस्मापनीयायतनं गोमयेनोपलिप्य तत् ॥
उल्लिख्य चाग्निमादध्यादाहृतं श्रोत्रियालयात् ।
विनाशकालादारभ्य परस्ताद्धोमकालतः ॥
पूर्वं गृहिण्युपवसेत्तत्र सङ्कल्पपूर्व्वकम् ।
होमकाले तु जुहुयाद्यथापूर्व्वं पतिः स्थितः ॥
गृहिणी यदि रोगाद्यैरुपवस्तुं न शक्नुयात् ।
तदा प्रयोगमाश्रित्य तैत्तिरीयप्रकल्पितम् ॥
अग्निं विहृत्य काष्ठाद्यैरद्भिः परिसमुह्य च ।
परिस्तीर्य्य च पर्य्युक्ष्य ततोऽग्नेरुत्तरे कुशान् ।
आस्तीर्य्य तेषु प्रोक्षण्या सममासादयेत्स्रुवम् ॥
आज्यपात्रेण सं(मार्ग्य)मृज्य तृणानि सह सादयेत् ।
कृत्वा पवित्रे तु तयोर्मध्ये ग्रन्थिं प्रकल्पयेत् ॥
ततः प्रोक्षणपात्रे तं निषिच्य सलिलं शुचि ।
ताभ्यां तूष्णीं त्रिरुत्पूय पवित्राभ्यां यथा पुरा ॥
स्रुवाज्यपात्र उत्ताने कृत्वा प्रोक्ष्य त्रिरम्भसा ।
आज्यस्थाल्यां निषिच्याज्यं तस्याधिश्रयणादिकम् ।
कृत्वोद्वास्योत्तरे वह्नेस्त्रिस्तूष्णीमेव तत् पुनः ॥
पुनराहारमुत्पूय पवित्राभ्यां ततस्तु ते ।
पवित्रे ग्रन्थिमुन्मुच्य प्रोक्ष्याग्नौ सम्प्रहृत्य च ॥
परिषिच्य ततो वह्निं सकृदेव समन्ततः ।
अलङ्कृत्य च पुष्पाद्यैः संमृष्टेन स्रुवेण तु ॥

आज्यं गृहीत्वाऽयाश्चाग्ने स नो विश्वेवमादिकम्* ।
मन्त्रमुक्त्वा विधायैकामाहुतिं तदनन्तरम् ।
कुर्य्यादौपासनं होमं यथापूर्व्वमतन्द्रितः ॥
यद्वा सच्छास्त्रविहितप्रयोगेनाज्यसंस्कृतिम् ।
कृत्वा मन्त्रमयाश्चाग्ने स नो विश्वेवमादिकम् ।
उक्त्वा हुत्वा सकृत्पश्चाज्जुहुयाच्च यथा पुरा ॥ इति ।

अत्र विधानान्तरं कारिकोक्तं "तदत्र पुनराधानमित्यादिकं" तदप्यत्र द्रष्टव्यम् ।

गृह्यपरिशिष्टेऽपि ।

अत ऊर्द्धं विवाहगृहप्रवेशहोमाभ्यामेकतन्त्राभ्यामादध्यात्तत्र विवाहाज्याहुतयो गृहप्रवेशाहुतयो हृदयाञ्जनञ्च भवति कर्त्तैव लाजानावपति तत् पुनराधानमिति ।

अत्र अयाश्चेति मन्त्रेण होमो विवाहहोमश्चेति विधानद्वयमुक्तम् । तत्र अयाश्चेति होम आपदि त्यक्ताग्निविषयः विवाहहोमस्तु अनापदि त्यक्ताग्निविषय इत्याह स एव स्मृतिरूपेण ।

प्रायश्चित्तविधानञ्च कालश्च तदतिक्रमे ।
श्रौतं श्रौतस्य गृह्योऽथ स्मार्त्तस्योक्तः पुरा मया ॥
तत्रानुक्तो विशेषोऽत्र विकल्पश्च समासतः ।
वक्ष्यन्ते होमयोः सम्यक् ये च तत्राधिकारिणः ॥
त्यक्तापद्भिरनापन्नो यावत्तावत्प्रभृत्यथ ।

---

* स नो विश्वाभ्या भर सुवितानि शतक्रतो ।
यदिन्द्र मृड़यासि नः ॥ ८म. ९३सू. २९ऋक् ।

आहरेद्विधिनैवाग्निं द्रव्यैश्चापि तदीरितैः ॥
त्यक्ताग्निमापदि स्वास्थ्ये हुत्वाज्येनाहुतिञ्च ताम् ।
भूराद्यैर्वह्निमाहृत्य पालयेत्पुत्रवत्तदा ॥
यदि त्यक्ता त्वनापन्नो दत्त्वा शक्त्या द्विजे वसु ।
विवाहविधिनैवाग्निमाहरेच्च यथा पुरा ॥
पाणिग्रहः परिणयश्चात्र वर्ज्यस्तदुत्सवः ।
गृहप्रवेशोपलारोहौ वर्ज्यौ सप्तपदी तथा ॥
स्वयञ्च जुहुयाल्लाजान् पत्न्यारब्धस्तदीरितम् ।
मन्त्रैः कल्यादि तावच्च हुनेदग्निं विवाहवत् ।
अनश्नन्नग्निमाहृत्य सायं हुत्वा ततश्चरेत् ॥

चरेदश्नीयात् । एतद्विधानं द्वादशाहपर्य्यन्तं वेदितव्यम् । तदूर्द्ध्वं विशेषमाह कारिकाकारः ।

आद्वादशदिनादेवमूर्द्ध्वं विच्छिद्यतेऽनलः ।
प्रायश्चित्तन्तु यत्प्रोक्तमग्नित्यागोपपातके ।
मनुना तत्प्रकुर्व्वीत तत्तत्कालानुसारतः ॥ इति ।

नास्तिक्यादुत्सृष्टाग्नेर्विधानान्तरमाह स एव ।

अथ गृह्यस्य नष्टस्य ह्यग्नेराधानमुच्यते ।
उपोष्य दम्पती दत्त्वा होमद्रव्यं द्विजातये (अोत्तमे) ॥
द्रव्यं किञ्चिद्यथाशक्ति ब्राह्मणायाहिताग्नये ।
आदध्यादपराह्णेऽग्निमाधानद्रव्यसन्निधौ ॥
सिकताः पञ्चपत्रञ्च वराहविहता च मृत् ।
आखूत्करं चोषरञ्च वल्मीकञ्चाथ शर्करा ॥

इन्दीवरशमीसप्तपर्णाश्वत्थविकङ्कताः* ।
अश्वत्थतरास्तु विज्ञेया आधानद्रव्यसंज्ञकाः (ज्ञिताः) ।
अग्न्यापतन एतानि पुनराधानकर्म्मणि ॥
निधायैषामलाभे तु यथालाभं निधापयेत् ।
उपलिप्योल्लिखेदेतान् सिकतादीन्निधाय च ॥
इदं त एकमित्यग्नौ सव्याहृति तथाहितम् ।
तन्त्रहुत्वाज्यभागान्तमन्वाधानादिपूर्व्वकम् ।
चतुर्गृहीतमाज्यन्तु जुहुयाद्वि यथाक्रमम् ॥
जुह्वामेव स्रुवेणैव स्थाल्यामादाय गृह्यते ।
चतुर्गृहीतमाज्यन्तु चतुष्कृत्व(त्य) उदाहृतम् ॥
त्वमग्ने सप्रथा असि† यो अग्निर्देववीतये‡ ।
त्वं तु तन्वं त्वं नो अग्ने§ स त्वं नो अग्ने सप्त तेऽ¶ ॥

---

* विकङ्कतः सकण्टकद्रुमः ।

† त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
त्वया यज्ञं वितन्वते ॥ ५म. १३सू. ४ऋक् ।

‡ यो अग्निर्देववीतये हविष्माँ आविवासति ।
तस्मै पावक मृडय ॥ १म. १२सू. ९ऋक् ।

§ त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि ॥
४म. १सू. ५ऋक् ।

¶ सप्त ते अग्ने—मन्त्रोऽयं १०५ पृष्ठे प्रदर्शितः ।

मनो ज्योतिः* पुनस्त्वेति† हुत्वा ह्यष्टाभिरेव च ।
स्रुवेण जुहुयादाज्यं मन्त्रैश्चापि यथाक्रमम् ॥
अग्नये पवमानाय अग्नये पावकाय च ।
अग्नये शुचये चापि अग्नये पथिकृते ततः ॥
अग्नये तन्तुमते इत्येतेभ्यः पञ्च चाहुतीः ।
सौविष्टकृतमारभ्य होमशेषं समापयेत् ॥
अनड्वान् दक्षिणा देया ब्राह्मणायाहिताग्नये ।
नास्तिक्येन विसृष्टाग्निश्चीर्णचान्द्रायणव्रतः ॥
अनेनैवाग्निमादध्याच्चिरोत्सृष्टस्तथैव च ॥ इति ।

अयं पुनराधानप्रकार आश्वलायनादीनाम् । अन्येषां तु स्वस्वशाखोक्तोऽनुसन्धेयः । ग्रन्थगौरवभीत्या नात्र प्रदर्श्यते ।

अत्र बहुकालात्यये कार्यं प्रायश्चित्तमुक्तं विश्वादर्शे ।
कृच्छ्रो मासद्वयं चेत्त्यजति हुतवहं तच्चतुष्केऽतिकृच्छ्र-
स्तत्षट्के स्यात् पराकस्तत उपरि पयोमासमब्दाग्निमासम् ।
नास्तिक्ये तत्प्रमादे त्वसुनियमशतं‡ प्राक्त्रिरात्रात्परं चेत्
कुर्यादेकोपवासं त्रिदिनमुपवसेद्विंशतेरूर्ध्वमिष्टम् ॥

---

* मनो ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु ।
अरिष्टं यज्ञं समिमं दधातु विश्वे देवास इह मादयन्तामो३म् प्रतिष्ठ ॥
१०म. २ष, यजुः ।

† पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥ १२ष. ४४म. यजुः ।

‡ प्राणायामशतमित्यर्थः ।

र्द्धन्तु कृच्छ्रः शरद उपरि चेदूर्द्धमालस्यतोऽग्नि-
नसेद्द्वादशाहे त्रिदिनमुपवसेद्द्वादशाहन्तु मासे ।
षाब्देऽथ चान्द्रं तदपि भवति सोमायनं चाब्दयुग्मे
स्यादूर्द्धं तप्तकृच्छ्रः खलु भवति धनी गाश्च दद्याद्द्विजाय ॥

श्लोकद्वयस्यायमर्थः । नास्तिक्यादग्नित्यागी मासद्वयपर्य्यन्तं कृच्छ्रः । मासद्वये पूर्णे मासचतुष्टयपर्य्यन्तमतिकृच्छ्रः । मासचतुष्टये पूर्णे षण्मासपर्य्यन्तं पराकः । तदूर्द्धमब्दपर्य्यन्तं मासं पयोव्रतम् । अब्दे पूर्णे त्रैमासिकं कार्य्यमित्येतन्नास्तिक्ये । प्रमादादग्नित्यागी तु त्रिरात्रात् प्राक् प्राणायामशतम् । तदूर्द्धं विंशतिदिनपर्य्यन्त-मेकमुपवासं चरेत् तदूर्द्धं मासद्वयपर्य्यन्तं त्रिरात्रमुपवसेत् । तदूर्द्ध-मब्दपर्य्यन्तं प्राजापत्यम् । तदूर्द्धं यथान्यायमूह्यमिति । आल-स्यादग्नित्यागी (तु) च द्वादशाहपर्य्यन्तं त्रिदिनमुपवसेत् । द्वा-दशाहे पूर्णे मासपर्य्यन्तं द्वादशाहम् । मासे पूर्णे अब्दपर्य्यन्तं मासमुपवसेत्, पयोभक्षणं वा कुर्य्यात् । अब्दादूर्द्धं द्विवर्षपर्य्यन्तं चान्द्रायणम् । तदूर्द्धं षडब्दपर्य्यन्तं चान्द्रायणं सोमायनञ्च । तदूर्द्धं तप्तकृच्छ्रः धनिनो गोदानं चेति ।

मनुरपि ।

अग्निहोत्र्यपविध्याग्निं* ब्राह्मणः कामकारतः ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं† हि तत् ॥

---

* अग्निमित्यत्र अग्नीनित्याकरे पाठः । अत्र बहुवचननिर्देशात् गृह्याग्नित्यागे कल्पना कार्य्या इति मेधातिथिः ।

† वीरः पुत्रस्तस्य हत्या हननं तत्तुल्यमेतत् । तथाच श्रुतिः वीरहा वा एष देवानां योऽग्निमुद्वासयते । इति कुल्लूकः ।

मासमपविध्येत्यन्वयः ।

अग्निहोत्रमपविध्या*ग्निं मासादूर्द्धन्तु कामतः ।
कृच्छ्रं चान्द्रायणञ्चैव कुर्य्यादेवाविचारयन् ॥ इति ।

यत्तु भारद्वाजगृह्ये अभिहितम् ।

प्राणायामशतमाहादशरात्राणां†दुपवासः स्यादाविंशति-रात्रात् अत ऊर्द्ध्वमाषष्टिरात्रात्तिस्रो रात्रीरुपवसेत् । अत ऊर्द्ध्वं वत्सरात् प्राजापत्यं चरेत् अत ऊर्द्ध्वं कालबहुत्वे दोष-गुरुत्वमिति ।

एतत् प्रमादादग्नित्यागविषयम् ।

नास्तिक्यादग्नित्यागे तु व्याघ्रपाद आह ।

योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यं चरेद्द्विजः ।
अन्यच्च पुनराधानं दानमन्यत्तथैव च ॥

इति विशेषस्मृतेरत्र प्राजापत्यस्योपलक्षणत्वात्त्यागकालस्य लाघव-गौरवाद्यनुसारेण व्रतान्तराण्यूहनीयानीति ।

इति प्रायश्चित्तप्रकरणम् ।

## अथ स्थालीपाकविधानम् ।

तच्च(च) विवाहानन्तरं मलमासादिप्राप्तावपि प्रारब्धणीय-मिति हेमाद्रिमाधवौ । यत्तु पार्व्वणेष्टिं चाग्रयणमित्यादिनिषेध-वचनं तत् काम्यविषयम् ।

* अपविध्य त्यक्त्वा, त्यागश्च नित्यानामग्निहोत्रादीनामकरणमुद्‌यापनञ्च ।

† आद्वादशरात्रादित्यर्थः आत्रिरात्रादिति गोपीनाथः ।

...तमार्त्तक्रियाः सर्व्वा द्वादशे मासि कीर्त्तिताः।
...योदशे तु सर्व्वास्ता निष्फला इति कीर्त्तिताः।
...क्कादि सर्व्वकाम्यन्तु मलमासे विवर्ज्जयेत्॥

...ठीनसिस्मृतेरित्याहतुः। अन्ये तु शुक्रकाले प्रारम्भणीय-
...ाहुः।

...त्र पूर्व्वप्रतिपद्यसन्देहात् तत्फले निर्णयमाह शौनकः।

प्रतिपत्पञ्चदश्योर्यः सन्धिः पर्व्वेति तन्मतम्।
या तेन युक्ता प्रतिपत्तस्यां कर्म्मेदमाचरेत्॥

...श्रुतिः। सन्धौ यजेतेति। सन्धेः सूक्ष्मत्वात्तत्र साङ्गकर्म्मणो-
...ष्ठानासम्भवात् सन्धिपदेन तत्पार्श्वद्वयं लक्ष्यते। अतएव सन्धि-
...भितो यजेतेति श्रुतिः सङ्गच्छते।

सामीप्यं विषयं प्राहुः पूर्व्वेणाप्यपरेण च*।

इति बौधायनस्मृतेः।

...त्प्रमाणमाह यज्ञपार्श्वः।

पञ्चदश्याः परः पादः पश्चाद्दैः प्रथमास्त्रयः।
कालः पार्व्वणयागे स्यादथान्ते तु न विद्यते॥

...शातातपोऽपि।

पर्व्वणो यश्चतुर्थोंऽश आद्याः प्रतिपदस्त्रयः।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः॥

...त्र प्रातरिति विशेषणात् सूर्य्योदयादुपरि यागकाल इत्युक्तं

---

* पूर्व्वेणाथ परेण च इति संस्काररत्नमालायां पाठः। अत्र पूर्व्वपरशब्दाभ्यां क्रमेण सन्धेः पर्व्वदिनं प्रतिपद्दिनं चाभिधीयते इति गोपीनाथः।

भवति। अत्र तिथिद्वैधे चतुर्द्दश्यामपि प्रातरेव अन्वाधानं कार्य्य-मित्याह आश्वलायनः।

पूर्णमासस्य दर्शस्य काम्यादीनां तथैव च।
अनुमत्याश्च कुह्वाश्च पूर्व्वाह्ने च प्रयत्नतः।
प्रारभेत सिनीवाल्यां राकायां प्रातरेव च॥

सिनीवाल्यादिलक्षणमपि स एवाह।

दृष्टचन्द्रा सिनीवाली ह्वसौ ज्ञात्वा भवेद्यदा।
नष्टचन्द्रा कुहूर्ज्ञेया क्षये पञ्चदशी च सा॥ इति।

अथ सन्धिकालो विविच्यते।

तत्र गोभिलः।

आवर्त्तने यदा सन्धिः पर्व्वप्रतिपदोर्भवेत्*।
तदहर्याग इष्येत परतश्चेत्परेऽहनि॥
पर्व्वप्रतिपदोः सन्धिरर्वागावर्त्तनाद्यदि।
तस्मिन्नहनि यष्टव्यं पूर्व्वेद्युस्तदुपक्रमः॥

उपक्रमोऽन्वाधानम् आवर्त्तनं मध्याह्नः।

लौगाक्षिरपि।

पूर्व्वाह्ने वाथ मध्याह्ने यदि पर्व्व समाप्यते।
उपोष्य तत्र पूर्व्वेद्युस्तदहर्याग इष्यते॥

मध्याह्नोत्तरं पर्व्वसन्धौ तु द्वावप्याहतुः।

आवर्त्तनात्परः(यदा) सन्धिर्यदि तस्मिन्नुपक्रमः।
परेद्युरिष्टिरित्येष पर्व्वद्वयविनिर्णयः॥ इति।

---

* ततः पूर्व्वमथापि वा इति गोभीलाया:।

अपराह्णेऽथवा रात्रौ यदि पर्व्व समाप्यते ।
उपोष्य* तस्मिन्नहनि श्वो भूते याग इष्यते ॥

वाजसनेयिनां विशेषोऽभिहितो गोभिलेन ।

आवर्त्तनादधः सन्धिर्यद्यन्वाधाय तद्दिने ।
परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः ॥ इति ।

अथ ह्रासवृद्धिसमीकरणेन सन्धिः कल्पनीय इत्याह कात्यायनः ।

परेऽह्नि घटिकान्यूनास्तथैवाप्यधिकाश्च याः ।
कृत्वा तदर्द्धं पूर्व्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् ॥ इति ।

अयमर्थः । यदा पूर्व्वेद्युरमावस्या यावद्घटिका परेद्युः प्रतिपदपि तावती तदा यथावस्थितमेवोपजीव्य सन्धिर्ज्ञेयः । यदा तु प्रतिपदः षड्घटिकाक्षयस्तदा घटिकात्रयक्षयोऽमावास्यायां योजनीयः तस्मिन् योजिते द्वादशघटिका अमावास्या भवति तदावर्त्तनात् पूर्व्वं सन्धिः सम्पद्यते । अनेनैव न्यायेन घटिकाद्वयवृद्धौ योजितायाममावास्या अष्टादशघटिका भवति । तथा सति आवर्त्तनादूर्द्ध्वं सन्धिः सम्पद्यते ।

यत्तु हेमाद्रौ हारीतवचनम् ।

पर्व्वणोंऽशे द्वितीये तु कर्त्तव्येष्टिर्द्विजातिभिः ।
द्वितीयासहितां यस्मादृषयन्त्याश्वलायनाः ॥ इति ।

तदेतद्बहुग्रन्थविरोधादुपेक्ष्यम् । अथवा पूर्व्वां पौर्णमासीमुपवसे-

---

* उपोष्येति नाहोरात्राभोजनपरं किन्तु कृतेऽग्न्याधाने देवा यजमानस्य समीपमुपवसन्तीति उपवासशब्देनाग्न्याधानमुच्यते । तैत्तिरीयब्राह्मणे तथा श्रुतिः यथा उपास्मिन् श्वो यक्ष्यमाणे देवता वसन्तीति ।

दिति बह्वृचब्राह्मणोक्तप्रकारेण पैङ्ग्यमतानुसारिणामिदमिति योज-नीयम्। विद्यारण्यश्रीपादैरेवमेवैतद्ब्राह्मणं व्याख्यातम्।

तथाच ब्राह्मणम्।

पूर्व्वां पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामिति कौषीतकं

या पूर्व्वा पौर्णमासी सा अनुमतिर्या उत्तरा सा राकेति।

अस्यार्थः। खण्डतिथिवशाद्यदा दिनद्वये पौर्णमासी सम्पद्यते तदा अनुमतिसंज्ञां पूर्व्वां पौर्णमासीमुपोष्य परेद्युर्यजेतेति साम-शाखाप्रवर्त्तकस्य पैङ्ग(ग्य)र्षेर्मतम्। उत्तरां राकासंज्ञां पौर्ण-मासीमुपोष्य ततोऽपरेद्युर्यजेतेति ऋक्शाखाप्रवर्त्तकस्य कौषीतकि-ऋषेर्मतम्। पौर्णमासीन्यायममावास्यायामपि दर्शयति या पूर्व्वा अमावास्या सा सिनीवाली योत्तरा सा कुहूरिति।

पर्व्वणि समाप्तिं निषेधति मनुः।

प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते।

पुनः प्रणीय क्रतुश्चेष्टिः कर्त्तव्या यागवित्तमैः॥ इति।

प्रतिपच्चतुर्थांशेऽपि यागं निषेधति कात्यायनः।

नाऽयष्टव्यं चतुर्थेऽंशे यागैः प्रतिपदः क्वचित्।

रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी॥ इति।

शौनकोऽपि।

यस्तु न प्रारभेतेष्टिमन्त्यांशे पर्व्वणो द्विजः।

प्रतिपदश्चतुर्थांशात्प्रागृयश्च न समापयेत्॥

क्रता साप्यक्रतैवेष्टिस्तयोः स्यान्नात्र संशयः।

पुनरेवाचरेदिष्टिं शुभेऽहनि यथाविधि॥

...माहमपि स एवाह ।

मासस्य पर्व्वषट्कानि सम्प्रोक्तानि मनीषिभिः ।
पञ्चम्यौ पञ्चदश्यौ वा दशम्यौ वाप्युदीरिते ।
व्रतवज्जुहुयादासु प्रतिपर्व्वसु यो द्विजः ॥ इति ।

अस्य क्वचित्प्रतिप्रसवमाह शातातपः ।

सन्धिर्य(श्च)चापराह्णे स्याद्यागं प्रातः परेऽहनि ।
कुर्व्वाणः प्रतिपद्यागे चतुर्थेऽपि न दुष्यति ॥ इति ।

## अथ सद्यस्कालतिथिः ।

तत्र कात्यायनः ।

सन्धिश्चेत्सङ्गवादूर्द्ध्वं प्राक्पर्य्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः* ॥ इति ।

भाष्यार्थसङ्ग्रहकारोऽपि ।

अन्वाहितिश्च स्तरणोपवासौ
पूर्व्वेद्युरेते खलु पौर्णमास्याम् ।
आवर्त्तनात्प्रागयदि पर्व्वसन्धि-
स्तदैव यागः क्रियते सम(स्त:)स्तैः ॥

---

* सद्यो वा सर्व्वं करोति सद्यस्कालायाम् इत्येतत् सूत्रमप्यत्रानुकूलं ज्ञेय वैजयन्तीकारैस्तथैव व्याख्यानात् । तत्र सद्यस्कालविधिरन्वयरूपः । प्रतिपच्चतुर्थीयागनिषेधो व्यतिरेकरूपः । एवं च इति निषेधवाक्यं सावकाशं भवति इति गोपीनाथः ।

कालादर्शेऽपि।

पूर्णिमाप्रतिपत्सन्धिर्यदि सङ्गवमन्तरा।
आवर्त्तनञ्च स्यात्तर्हि सद्यस्कालतिथिर्भवेत्॥
पर्व्वद्वये परेद्युः स्यात्सङ्गवात्परतो यदि।
सद्यस्कालः परेद्युः स्यादयमेव तिथिच्चयः* ॥ इति।

अथ विकृतीष्टिकालमाह त्रिकाण्डमण्डनः।

आवर्त्तनात्प्राग्यदि पर्व्वसन्धिः
कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः।
तदैव यागः परतो यदि स्या-
त्तस्मिन् विकृत्याः प्रकृतेः परेद्युः॥

अस्यार्थः। आवर्त्तने ततः पुरा वा पर्व्वसन्धौ तस्मिन् सन्धिदिने प्रथमं प्रकृतियागं कृत्वा पश्चादाग्रयणादिवि(प्र)कृतियागः कर्त्तव्यः यदा त्वावर्त्तनात् परतः सन्धिस्तदा सन्धिदिने विकृतियाग एव कार्य्यः प्रकृतियागस्तु परेद्युरनुष्ठेय इति प्रयोगपारिजाते व्याख्यातम्।

हेमाद्रावपि।

आद्ययोः कल्पयोः कुर्य्याद्विकृतिं प्रकृतेः पराम्।
अन्यत्र विकृतिं तत्र कुर्य्याच्चः प्रकृतिर्भवेत्॥

इति खण्डतिथिनिर्णयः।

---

*ध्येय एवं तिथिचय इति खपुस्तके पाठः।

... पर्व्वकालं निरूप्य तत्र कार्य्यमभिधीयते।

...ायनसूत्रम्।

...र्व्वं कार्व्वणस्थालीपाकस्य दर्श(पौ)पूर्णमासाभ्यामुपवास-

...पूर्वावर्हिर्योश्च सन्नहनमिति।

...ासश्चात्रो(ऽ)त्र दम्पत्योरेकभोजनादिनियमलक्षणः।

...ाश्वलायनस्त्र्यः।

अमाषममांसमाज्येनाश्नीयातां तदभावे दध्ना पयसा वेति।

...ात्यायनोऽपि।

मांसमैथुने वर्जयेत् भौमश्मश्रु वपते वाऽग्निरूपमपराह्णे व्रतो

पायनीयमश्नीतः सर्पिषा युक्तावितिं।

...उपवासकारणमाह श्रुतिः।

तदाहुर्यद्दर्शपूर्णमासयोरुपवसेदिति। न ह वा अव्रतस्य

देवा हविरश्नन्ति तस्मादुपवसत्युतमे देवा हविरश्नीयुरिति।

...ाजसनेयकेऽपि।

तं हैनमेतद्विदुर्व्रतमुपयन्तमंसेन नः प्रातर्यष्टेति तस्य विश्वे-

देवा गृहानभ्यागच्छन्तीति।

...तैत्तिरीयकेऽपि।

पूर्व्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्य गृहीत्वोपवस-

तीति।

...तत्र अन्वाधानकालमाह कारिकाकारः।

प्रातरौपासनं हुत्वा समिधौ द्वे निधाय च।

अथवा तिस्र आदध्यात् क्रतुसङ्कल्पपूर्व्वकम् ॥ इति ।

शौनकोऽपि ।

अग्निं विहृत्य पूर्व्वेद्युस्तत्रान्वाधानपूर्व्वकम् ।

परिस्तरणपर्य्यन्तं पुरस्तात्तन्त्रमाचरेत् ॥ इति ।

तत्परिस्तरणं सायं होमानन्तरं कर्त्तव्यमित्याह आपस्तम्बः ।

ततः सम्प्रेष्यति परिस्तृणीत परिधत्ताग्निमिति ।

ततः सायं होमानन्तरमित्यर्थः । इदमन्वाधानादिकं कातीयानां नास्ति । आश्वलायनसूत्रे तदविधानात् ।

अथ दिने वर्ज्यान्याह सांख्यायनः ।

कलहं क्रीतविक्रीतं प्रहासं बहुभाषणम् ।

तीर्थयात्रिकं द्वयामध्यां यक्ष्यमाणो विवर्ज्जयेत् ॥

जाबालिरपि ।

करभांश्च कुलित्थांश्च वर्ज्जयेत् कोद्रवांस्तथा ।

अनृतं बहुभाषाश्च क्रयं विक्रयमेव च ।

दन्तशौचञ्च पूर्व्वेद्युर्यागस्यैतानि वर्ज्जयेत् ॥

मसूराञ्चणकान् क्षारान् चणकान् कोरदूषकान् ।

माषान्मधु पराद्वञ्च वर्ज्जयेत्पर्व्वणि द्विजः ॥

कात्यायनोऽपि ।

लवणं मधु* मांसञ्च क्षारान् यो येन हूयते ।

---

* मधुशब्देनात्र क्षौद्रं गृह्यते । मद्यस्य तु "न मद्यं ब्राह्मणः पिबे"दित्यनेनैव निषेधसिद्धेः ।

चोपवस्ते न भुञ्जीत तथा रात्रौ न किञ्चन* ॥

अथ लवणस्य सैन्धवव्यतिरिक्तस्य निषेधः ।

सर्ज्जिक्षारं यवक्षारं टङ्कणक्षारमेव च ।

व्रतस्थो वर्ज्जयेन्नित्यं सामुद्रं लवणं तथा† ॥

इति देवजानीये विशेषोक्तः ।

क्षारलवणमुक्तं माधवीये ।

तिलमुद्गादृते शैम्ब्यं शस्ये गोधूमकोद्रवौ ।

च(चौ)णकं देवधान्यञ्च एष क्षारगणः स्मृतः ॥

अन्यत्रापि ।

मृत्युक्तानं सकृद्भुक्त्वा पर्व्वण्यावर्त्तनादपि ।

न रात्रावसमर्थश्चेद्द्यात्तिक्तिफलादिकम् ॥

अक्ने: पश्चात् स्वपेद्रात्र्यग्निराभूमौ समाहितः ।

अस्माहितस्य विषयमेवमाह प्रजापतिः ॥

एतदकरणे प्रायश्चित्तमाह कारिकाकारः ।

पर्व्वण्यश्र्वश्रुपाते च कुर्य्याद्व्रतभृतश्चरम् ।

पर्व्वणि व्रतलोपे तु कुर्य्याद्व्रतपतेश्चरम् ॥

---

* अत्र क्षारशब्देन यस्य भक्षणे लालोत्पद्यते तद्द्रव्यमुच्यते । येन ह्रयते इत्यनेन क्षारसाधनत्वेन स्वीकृतं द्रव्यमपि न भक्षणीयमित्युक्तं भवतीति गोपीनाथः । क्षारो येन च ह्रयते । खान्नं रात्रौ न किञ्चन इति द्वितीयचतुर्थपादयोः पाठो गोपीनाथसम्मतः ।

† अत्र सामुद्रस्योपादानात् सैन्धवादेरनिषेधः प्रतीयते तस्य हविष्यत्वात् । तथाचोक्तम्—

हैमन्तिकानि पयः सोमो मांसं यच्चानुपस्कृतम् ।

अक्षारं लवणञ्चैव प्रकृत्या हविरुच्यते ॥

अक्षारलवणं सैन्धवमिति सर्व्वनिबन्धकाराः ।

समानतन्त्रं कुर्व्वीत पार्व्वणेन तु कर्म्मणा ।

प्रायश्चित्तचरुस्थाने पूर्णाहुतिरपीष्यते ॥ इति ।

ऋग्विधानेऽपि ।

यस्य लु(प्ये)प्येद्व्रतं मोहाद्व्रात्यैर्वा संविशेत्सह ।

उपोष्य जुहुयादाज्यं त्वमग्ने व्रतपाः असि* ॥ इति ।

एवं नियमयुक्तेन रात्रिमतिवाह्य प्रातःस्नानादि निर्वर्त्य स्वस्वशाखोक्तमार्गेण स्थालीपाकः कार्य्यः । तत्रापि पौर्णमासस्थालीपाकः सूर्य्योदयानन्तरमारम्भणीयः दर्शस्थालीपाकस्तु सूर्य्योदयात् पूर्व्वमारम्भणीयः ।

तथाचापस्तम्बश्रौतसूत्रम् ।

उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयन्ति प्रागुदयादमावास्याया इति ।

एतच्छ्रौतकर्म्मविषयमिति केचित् ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते

स्थालीपाककालादिविधानम् ।

अथात्र सूतकादिप्राप्तौ निर्णय उच्यते ।

तत्र आश्वलायनाचार्य्यः ।

तौ चापि सूतके प्राप्ते (पर्व्वणो) पार्व्वणेष्टिं महापदि ।

स्त्रीधर्म्मिण्याश्च भार्य्यायां न कुर्य्यातां कदाचन ॥

---

* त्वमग्ने व्रतपा: असि देव: आ मर्त्येषु आ त्वं यज्ञेष्वीड्यः । । ऋग. ११मू. १ऋक् ।

...ति प्रकरणात् श्रौतस्मार्त्तकर्मानुष्ठातारौ। स्त्रीधर्म्मी रजः ...मिणी "स्त्रीधर्म्मिण्यविराजेयौ मलिनौ पुष्पवत्यपी"त्य-...नात्। एतद्व्रतग्रहणात् पूर्व्वकालविषयम्। व्रतग्रहणे कृते तु यागः कार्य्य एव।

तथाहि श्रूयते।

यस्य व्रत्येऽहन्यन्यालम्भुका भवति तामुपरुध्य यजेतेति।

एवं सूतकादावपि द्रष्टव्यम्। उपक्रान्तत्वेन दोषाभावस्योक्तत्वात्। अथ यागात्पत्तौ सूतकादिनिवृत्त्यनन्तरं पथिकृच्चरुपूर्व्वं यागः कार्य्यः।

तथाच कारिकाकारः।

स्थालीपाके त्वतिक्रान्ते यद्यन्याग्नौ स्वयं यजेत्।

स्वाग्नावन्यो यजेद्यद्वा कार्य्यः पथिकृतश्चरुः॥ इति।

अत्र विशेषमाह शौनकः।

स्थालीपाकमतिक्रामेद्यदि तद्यत्र कुत्रचित्।

दिवसे तत्र कर्त्तव्यमेतत्तु स्मार्त्तकर्म्मणः॥

तत्रापि यद्यतिक्रामेत्कार्य्यं पर्व्वण्यनन्तरे।

पथिकृद्धोमपूर्व्वन्तु कर्त्तव्यमवधानतः॥

...ार्थः। प्रतिपदि स्थालीपाकस्यातिक्रमे द्वितीयादिचतुर्दशी-...न्ततिथिषु यत्र क्वापि कार्य्यः। तत्राप्यतिक्रमे अनन्तरे ...र्व्वणि पथिकृत्पूर्व्वकं स्थालीपाकः कार्य्यः इति प्रयोगपारिजाते ...ख्यातम्।

...तु चन्द्रिकायामुक्तम्।

गौणकाले यदा कर्म स्यादनादिष्ट(ष्टि)पूर्वकम् ।
यदि गौणोऽप्यतिक्रान्तस्तदा लोपः प्रजायते ।
प्रायश्चित्तं यथोक्तं स्यात्(न च)तत्र तत्कर्म कारयेत् ॥ इति ।

तत्तु ग्रन्थकर्मविषयं शाखान्तरविषयं वेति न कोऽपि दोषः ।

अथ पार्व्वणद्वयातिक्रमेऽपि कारिकाकारः ।

उभयातिक्रमे कार्य्य एकः पथिकृतो भवेत् ।
तृतीयप्रभृतीनान्तु पर्व्वणामतिपातने ।
पुनराधानमिच्छन्ति केचिद्दृष्टश्रुविदो जनाः ॥

सायनीये तु ।

दर्शश्च पूर्णमासश्च लुप्येत द्वयमेव वा ।
एकस्मिन् कृच्छ्रपादेन द्वयोरर्द्धेन शोधनम् ॥

इत्यतिपन्नयागविधानम् ।

## अथ प्रोषितस्य धर्म्मविधानम् ।

स्मृतिसारे ।

धनाद्यर्थं व्रजन्मार्गे यदि तीर्थमवाप्नुयात् ।
शालीनो लभते स्नानं न तदर्थं पृथग्व्रजेत् ॥
पत्युरेव प्रवासः स्यान्न तु पत्न्याः कथञ्चन ।
प्रवसन्ननलं पश्चादुपविश्योपतिष्ठते ।
प्रवत्स्यामीति सङ्कल्प्य ततो ब्रूयान्नमोऽग्नये ॥

प्रवत्स्यतः कर्त्तव्यविशेषमाह शौनकः ।

शौनकोऽहं प्रवक्ष्यामि धनलिप्सोर्द्विजस्य तु।
कृत्वा होमादिकं गेहे पश्चाद्गच्छेद्यथाविधि॥ इति।
विस्तारोऽस्य चतुर्थस्तवके द्रष्टव्यः।

तथा।

प्रोषितस्य विधिर्यत्तदिदानीं स निरूप्यते।
होमादीनां यथाकालं यजमानं भवेदिति॥
अग्न्यन्तिके मनः कृत्वा तां दिशं सन्निरीक्ष्य च।
आचम्य प्राङ्मुखो भूत्वा कुर्य्यात्त्यागान् यथाक्रमम्॥
सौराग्नेयान् जपेन्मन्त्रानिति हुतस्य सम्मतिः।
कुर्य्यादवसरप्राप्तमृत्विक् पत्नीसमीपतः॥
पत्न्यां रजस्वलायां वा प्रसूतायामथापि वा।
पूर्व्वमेव नियुक्तः सन् कुर्य्यादृत्विग्यथोदितम्॥
अनुज्ञातः सुतः शिष्य ऋत्विग्वा हवने कृते।
सोऽपि त्यागान् यथाकालं कुर्य्यादित्याह भास्करः॥
होमादिकं हुतं स्वामी प्रोषितो मन्यते यथा।
ततोऽश्नीयादिति कठाः प्राहुः पर्व्वण्यथोच्यते॥
माषं मांसानि सौहित्यं तिलक्षौद्रादिवर्ज्जितम्।
प्रोषितेन न भोक्तव्यं सायं भुक्तिर्न चैव हि॥
पराग्निपक्वं नाश्नीयाद्गुडगोरसमन्तरा।
शाकपिण्याकस(श)क्त्वादीन् विना यद्यत्फलादिकम्॥
आहृतं किञ्चिद्भोज्यमन्नं पूर्व्व(प्र)मकल्पितम्।
यावद्भोजनपर्य्याप्तमश्नीयाद्दोषदर्शनात्॥

असामर्थ्ये शरीरस्य भक्ष्यद्रव्याद्यभावतः ।
असक्तया पचेदन्नमग्नौ यावत्प्रोषितोऽग्निमान् ॥
प्रोषितो नैत्यकं कर्म कृत्वाचम्य यथाविधि ।
सङ्कल्प्य पूर्व्ववत्त्यागांस्तान् कुर्य्यात्पञ्चयज्ञियान् ॥
एकपाकेन वसतां पितृदेवद्विजार्च्चनम् ।
एकं भवेद्विभक्तानां तदेव स्यात् पृथक् पृथक् ॥

इत्याश्वलायनस्मरणाद्द्रव्यविभागानन्तरं वैश्वदेवादिकं पृथगेव कार्य्यम् ।

भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते ।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक् ॥

इति मिताक्षरायां नारदोक्तेः । अविभक्तदशायां यानि द्रव्यसाध्यानि मन्त्रजपोपवाससन्ध्योपासनव्रतयज्ञवेदपारायणादीनि नित्यनैमित्तिककाम्यानि तेषु कर्म्मसु पृथक् पृथगेवाधिकारः । अत्रत्यो विशेषः पञ्चमस्तवके द्रष्टव्यः ।

इति विधानपारिजाते औपासनविधानम् ।

एवं प्रासङ्गिकं परिसमाप्य प्रकृतमनुस्रियते । तत्र वरस्य वध्वा सह गृहप्रवेशविधानमुच्यते ।

तत्र ज्योतिर्बृहस्पतिः ।

कालः शुभतरो नृणां गृहस्थानां शुभाय वै ।
गृहप्रवेशनादेव गृहस्थस्य गृहस्थता ॥ इति ।

एतद्गृहप्रवेशनं विवाहकर्म्मणि समाप्ते चतुर्थदिवसे नागबलिं कृत्वा कार्य्यम् ।

तथाच वराहमिहिरः ।

विवाहस्य निवृत्तिस्तु चतुर्थेऽहनि रात्रिषु ।
वास्तुनागबलिः कार्य्यो विप्राशीर्वचनं तथा ॥

तद्विधानमाह वैजवापायनः ।

चतुर्थदिवसे रात्रौ लिखेन्नागसवापिकाम् ।
हिरण्यगर्भं तन्मध्ये गन्धपुष्पाक्षतादिभिः ॥
संपूज्याप्सरसश्चैव सोममन्धर्व्वराक्षसान् ।
संपूज्य शुकहस्त्यादीनारोप्य स्वगृहं प्रति ।
संवेशनादिकं कर्म्म अन्यथा तु व्रजेद्भयम् ॥

संवेशनं गृहप्रवेशनम् । कुर्य्यादिति शेषः ।

कालदीपेऽपि ।

संवेशनं तुर्य्यदिने चतुर्द्दशी
पर्व्वाष्टमीसंक्रमपातवर्ज्जिते । इति ।

तुर्य्यदिने विवाहदिनाच्चतुर्थदिवसे इत्यर्थः ।

तथा ।

शुभे काले गृहे प्राप्ते वर्द्धन्ते सम्पदः सदा ।
असत्काले गृहे प्राप्ते सर्व्वनाशो गृहे भवेत् ॥ इति ।

अन्यत्रापि ।

वधूप्रवेशः प्रथमे तृतीये
शुभप्रदः पञ्चमकेऽथवाऽह्नि ।

द्वितीयके वाऽथ चतुर्थके वा
षष्ठे वियोगामयदुःखदः स्यात् ॥

प्रथमादौ दिवसे इत्यर्थः ।

लल्लः ।

स्वभवनपुरप्रवेशे(दे)शे देशानां विप्लवे तथोद्वाहे ।
नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति ॥

माण्डव्यः ।

नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु ।
वधूप्रवेशे माङ्गल्ये न मौढ्यं गुरुशुक्रयोः ॥

ज्योतिःप्रकाशे ।

वामे शुक्रे नवोढ़ायाः सुखं हानिश्च दक्षिणे ।
धनं धान्यञ्च पृष्ठस्थे सर्व्वनाशः पुरःस्थिते ॥
नवोढ़ायास्तु वैधव्यं यदुक्तं सम्मुखे भृगौ ।
तदेव विबुधैर्ज्ञेयं केवलन्तु द्विरागमे ॥
पूर्व्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणापरे ।
पश्चादभ्युदिते चैव यायात् पूर्व्वोत्तरे दिशौ ॥

तथा भाद्रपदमारभ्य पूर्व्वादिचतुर्द्दिक्षु प्रतिदिशं मासत्रयं काणा ज्ञेयम् । तथा चैत्रमारभ्य पूर्व्वाद्यष्टदिक्षु मुख्यदिशि मासद्वयं विदिक्षु एकं मासं क्रमेण कण्टकं जानीयात् । इदं द्वयं ग्रामान्तरे नववधूगमने वर्ज्ज्यम् ।

एकग्रामे तु प्रयोगपारिजातधृतसुदर्शनसङ्कहे ।
रेवतीमित्रहस्ताश्विरोहिणीचान्द्रवासवाः ।

पौष्णुत्तराणि मूलञ्च वैष्णवं शततारका: ॥
पैतृकञ्च तथा श्रेष्ठं प्र(सं)वेशनविधौ तथा ।
रिक्ता: पर्व्वाष्टमी विष्टिर्वर्ज्या: शेषा: शुभावहा: ॥
शुभांशे शुभवारेषु शुभदृष्टे शुभांशके ।
निशि प्रवेशासम्पत्तौ दिवा वा शोभनो भवेत् ॥ इति ।

मित्रोऽनुराधा चान्द्रो मृगशिर: वासवो धनिष्ठा वैष्णवं श्रवणा पैतृकं मघा शेषा: प्रसिद्धा: ।

व्यवहारतत्त्वेऽपि ।

ध्रौव्यात् कभाच्च श्रवणाच्च युग्मे
हस्तत्रये मूलमघोत्तरासु ।
पुष्ये च मैत्रे च वधूप्रवेशो
रिक्तेतरे व्यर्क्ककुजे च शस्त: ॥ इति ।

कभं रोहिणी व्यर्क्ककुजे रविभौमेतरवारेष्वित्यर्थ: ।

स्मृत्यन्तरे ।

छिन्नच्छायादिदोषेषु वध्वावेशो गृहे न सन् । इति ।

पत्या सह गमने प्रतिशुक्रदोषो नास्ति तदुक्तं भीमपराक्रमे ।

स्वामिना नीयमानाया: प्रतिशुक्रो न (विद्यते) दोषभाक् ।

मत्स्यपुराणेऽपि ।

चतु:शालं चतुर्द्वारमलिन्दै: सर्व्वतो युतम् ।
नाम्ना तत् सर्व्वतोभद्रं न तत्र प्रतिशुक्रता ॥
काश्यपेषु वशिष्ठेषु भृग्वत्र्याङ्गिरसेषु च ।
भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न विद्यते ॥

ज्योतिःसागरेऽपि ।

पौष्णादिवह्निपादेषु यावत्तिष्ठति चन्द्रमाः ।
तावच्छुक्रो भवेदन्धः सम्मुखं गमनं शुभम् ॥

नारदः ।

आरभ्योद्वाहदिवसात् षष्ठे वाप्यथवाऽष्टमे* ।
वधूप्रवेशः सम्पत्त्यै दशमेऽथ समे दिने ॥

षष्ठे वियोगामयदुःखदः स्यादिति निषेधस्तु सति सम्भवे द्रष्टव्यः ।
समदिनमपि षोडशदिनादर्वाग्द्रष्टव्यम् ।

वधूप्रवेशो युग्मायां तिथौ षोडशवासरात् ।

इति संग्रहोक्तेः । एवं मासवर्षेष्वपि द्रष्टव्यम् ।

तथा मासे च वर्षे च तत ऊर्ध्वं न शोभनः ।

इति तत्रैव नारदोक्तेः ।

अथ वर्ज्यमासानाह बृहस्पतिः ।

कुलीरकन्याकुम्भे दिनेशे न विशेद्गृहम् ।
ग्रामं वा नगरं वापि पत्तनं वा नराधिपः ॥ इति ।

गमनसमये कर्त्तव्यविशेषस्तु स्वस्वसूत्रतोऽवगन्तव्यः ।

सामान्यस्तु ।

मार्गस्थेषु निवासेषु वधूं पश्यन्ति ये जनाः ।
तद्दृष्टिदोषशान्त्यर्थं प्रतिबोधेत तां वरः ॥

---

* षष्ठे वाप्यष्टमे दिने इति ख-पुस्तके पाठः ।

सुमङ्गलीरियं वधूरिमामित्यादृचं* जपेत्।
तूर्य्यध्वना स्वकं वेश्म वधूमानाय्य तां वरः॥
तया सह गृहद्वारप्रदेशे प्राङ्मुखः स्थितः।
प्रदीपपूर्णकुम्भादिपाणिभिर्वनिताजनैः॥
सत्कृताभ्युद्गमस्तत्र स्वयानादवरुह्य च।
प्रदक्षिणप्रक्रमणमनुभूय यथान्तरम्॥
ततस्तां पूर्व्ववत्पाणौ परिगृह्य वधूं वरः।
प्रवेशयेद्गृहंगृहमित्यादृचं† ब्रुवन्निति॥

गृहे कर्त्तव्यमाह कारिकाकारः।

विधाय पूर्व्वं गृहदेवतार्च्चां
सन्मङ्गलालङ्कृतदेहगेहः।
तूर्य्यस्वनैर्मङ्गलगीतपूर्ण-
कुम्भैर्विशेद्विप्रवधूसमेतः॥
स्वस्तिवाचनपुरःसरं ततो
विप्रसङ्घमभिपूज्य शक्तितः।
बन्धुभिः सह विधाय भोजनं
संविशेदभिमताङ्गनासखः॥

श्रीपतिरपि।

---

* सुमङ्गलीरियं वधूरिमां समेत पश्यत।
सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन॥ १०म. ८५सू. ३३ऋक्।

† गृहंगृहमहना यात्यच्छा दिवेदिवे अधि नामा दधाना।
सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम्॥ १म. १२३सू. ४ऋक्।

विवाहमारभ्य वधूप्रवेशो
युग्मे तिथौ षोड़शवासरान्तात् ।
तदूर्द्ध्वमासेषु च पञ्चमान्ता-
स्ततः परस्तान्नियमो न चास्ति ॥

अत्रापि विशेषमाह नारदः ।

समे वर्षे समे मासि यदि नारी गृहं विशेत् ।
आयुष्यं हरते पत्युः सा नारी मृतिमाप्नुयात् ॥

अथ नागबल्युत्सवप्रयोगः ।

प्रयोगपारिजाते ।

विवाहाच्चतुर्थदिवसे रात्रौ वा संक्रमव्यतीपातादिवर्ज्जिते काले पत्न्या सह कृतमङ्गलस्नानो वरः प्राणानायम्य नागबल्युत्सवं करिष्ये इति सङ्कल्प्य श्वशुरगृहमध्ये समभूमौ मानससरोवर-निर्म्माणार्थमष्टौ रेखाः (प्रमृज्य) मध्ये तिर्य्यगूर्द्ध्वं तण्डुलपिष्टा-दिभिः समालिख्य एकोनपञ्चाशत्कोष्ठानि कुर्य्यात् । तस्य चतुः-कोणेषु प्रत्येकमष्टरेखाः प्रमृज्य मध्ये त्रयोदशकोष्ठान् प्रमृज्य एव-मवशिष्टद्वादशकोष्ठोपेतमष्टकोणान्वितं चतुर्द्वारोपशोभितं चतु-र्भद्राख्यं मानससरः कृत्वा तन्मध्ये षट्कोणमण्डलं रचयित्वा तन्मध्ये त्रिकोणमण्डलं रचयित्वा तन्मध्ये अष्टदलपद्मं सकर्णिकं रचयित्वा तत्परितः सिताक्षतैर्भित्तिं रचयित्वा तत्र ब्राह्म्यादिसप्तमातृकाः सम्प्रकल्पयित्वा तत्सरोमध्ये सिताक्षतैर्हंसशुकपक्ष्यादीन् सम्यग्रच-

यित्वा सरसीवहिः पूर्व्वभागे रक्ताक्षतैर्ब्रह्माणं पश्चिमभागे पीताक्षतैः शङ्करं वहिःकोणाग्रभागेषु पीतवट(ट्ट)युक्तवल्लीनैर्ऋत्यां श्वेततण्डुलेन वायव्यभागे लवणेन चान्योन्याभिमुखौ प्राक्पादौ हस्तिनौ रचयित्वा चित्रितं कर्पूरमिश्रजलपूरितं घटं कर्णिकामध्ये संस्थाप्य सरसी वहिरुत्तरभागे गुड़जीरकफलगन्धपुष्पसंयुक्तां सोपलां दृषदं संस्थाप्य स्वयं पश्चिमभागे सभार्य्यः सोत्तरच्छदभद्रपीठासनस्थः सङ्कल्पपूर्व्वकं मण्डलमध्ये ब्रह्म जज्ञानमिति* मन्त्रेण ब्रह्माणमावाह्य रुद्रमन्त्रेण शङ्करं चावाह्य कुम्भे दाक्षायणीमावाहयेत्।

तत्र मन्त्राः।

आवाहयेन्महादेवीं सर्व्वसम्पत्प्रदायिनीम्।
वरपाशाङ्कुशयुतां तथा चाभय(शालिनीम्)दायिनीम्॥
रत्नकेयूरकटकमुकुटाद्यैरलङ्कृताम्।
विचित्रवसनोपेतां सर्व्वलक्षणलक्षिताम्॥
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम्।
देवासुरैरपि सदा वन्द्यमानपदाम्बुजाम्।
अणिमादिगुणोपेतामष्टैश्वर्य्यप्रदायिनीम्॥

एवंरूपां देवीं ध्यात्वा कुम्भे आवाह्य पद्मस्य प्रागादिसप्तदलेषु यथाक्रमं ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीमिन्द्राणीं चामुण्डामिति सप्त मातॄः त्रिकोणमण्डलाग्रेषु पूर्व्वादिषु तिसृषु दिक्षु यथाक्रमं महादेवीं कालीं शान्तिकरीं षट्कोणमण्डलाग्रे

* ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ १३क. १म. यजुः।

ब्रह्माणं सावित्रीं दक्षिणभागे शङ्करम् उमां पश्चिमभागे लक्ष्मीं नारायणम् उत्तरभागे इन्द्रं शचीं चावाह्य तन्मण्डलाद्बहिः पूर्व्वाद्यष्टदिक्षु कपालिनं भीषणं चण्डं रुद्रं क्रोधम् उन्मत्तम् असिताङ्गं संहारमित्यष्ट भैरवानावाह्य तथैव ऐरावतं कुमुदाख्यं पुण्डरीकं वामनं पुष्पदन्तं सार्व्वभौमं सुप्रतीकम् अञ्जनम् इत्यष्ट दिग्गजानावाह्य तथैव इन्द्रादिलोकपालांश्चावाह्य सरसो मध्ये अप्सरसः सोमं पावकञ्च देव्यभिमुखानावाह्य हिरण्यगर्भादिपावकान्तदेवताभ्यस्तत्तन्नाममन्त्रैरासनादिपुष्पसमर्पणान्तोपचारान् (ज्ञात्वा) दत्त्वा पुष्पमालाद्यलङ्कृतां छुरिकां कुम्भसमीपे निधाय।

छुरिके त्वं महादेवि सर्व्वदेवाभिपूजि(ते)ता।
अतस्त्वां पूजयिष्यामि सर्व्वसम्पत्प्रदा भव॥

इति सम्प्रार्थ्य तस्या आसनादिपुष्पान्तोपचारान् दत्त्वा पूर्व्वरचितहस्तिद्वयमपि संपूज्य आवाहिताभ्यः सर्व्वदेवताभ्यो धूपदीपनैवेद्यादि समर्प्य हस्तिनोरपि उपहारं दत्त्वा सरोवरस्य समन्तात् दीपमालां दद्यात्।

ततः कन्यापिता वधूवरयोर्वस्त्रादि दद्यात्। ततो वरो वध्वा सह सत्येनोत्तभितेति* सूक्तं श्रुत्वा तत्सूक्तपाठकाय वधूपरिहितवस्त्रद्वयं दापयेत्। ततः कन्यामाता भूषणाद्यलङ्कृता सती अन्नापूपपूरितं पात्रान्तरेणापिहितं कांस्यभाजनम् अन्यसुवासिन्या मूर्ध्नि आरोपितं दीपसहितं धृत्वा तदुपरि छु(क्षु)रिकां

* सत्येनोत्तभिता भूमिः सूर्य्येणोत्तभिता द्यौः।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः॥ १०म. ८५सू. १ऋक्।

पुरुषान्तरेण धारयित्वा पश्चिमद्वारेण सरोवरं प्रविश्य भर्त्रा सह कुम्भं प्रदक्षिणीकृत्य कांस्यपात्रं कुम्भस्य पुरतो निधाय पात्रस्थमन्नं किञ्चित् कुम्भे निक्षिप्य पुनः किञ्चिदन्नं सर्व्वासु दिक्षु निक्षिपेत् ।

ततो वरमाता वधूमातरं पट्टवस्त्राद्यैः संपूजयेत् । ततो वधूवरौ स्वं स्वं कारिणमारुह्य अन्योन्याभिमुखौ भूत्वा आ तू न इन्द्रेति सूक्त*मुच्चारयन्तौ मौख्येन चा(स्व)र्चयित्वा हस्तिविनिमयं कुर्य्याताम् । ततो वरः स्वासने उपविश्य ब्रह्मणे वरं दत्त्वा कर्म्मान्ते कर्त्तव्यं स्वस्तिवाचनं कृत्वा श्वशुरेण दीयमानदासीदासपर्य्यङ्कादियुक्तो माङ्गल्यदीपमन्त्राक्षतान् बहुविधानि आशीर्व्वचनानि च स्वीकृत्य बन्धुभिः सह स्वलङ्कृतः सभार्य्यः कृतदेवपूजः स्वगृहं पूर्व्वोक्ते काले विवाहाग्निपुरःसरं प्रविशेत् ।

तत्रायं क्रमः । पूषण्वते इत्यस्य सूर्य्यः (र्य्या) सावित्री त्रिष्टुप् । अनेन† वधूं गजादियानमारोप्य पथि सा चेद्रोदिति तदा जीवं रुदन्तीति मन्त्रं‡ जपन् सुमङ्गलीसूक्तपाठकैर्ब्राह्मणैः सुवासिनीभिरष्टमङ्गलसंज्ञकैर्दर्पणपूर्णकलश-कन्या-पुष्पाक्षत-दीपमालाध्वजलाजै-

---

* आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि ।
महान् महीभिरूतिभिः ॥ १२अ. ६५म. वर्गः ।

† पूषण्वते मरुत्वते विश्वदेवाय वायवे ।
स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्त्तन ॥ १म. १४२सू. १२ऋक् । एवंरूपेण ।

‡ जीवं रुदन्ति वि मयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः ।
वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥
१०म. ४०सू. १०ऋक् ।

मङ्गलतूर्य्यनादैश्च सह धृतश्वेतच्छत्रः स्वगृहसमीपं गत्वा सुवासिनीभिः कृतनीराजनविधिः वधूपाणिं परिगृह्य इह प्रियं प्रजया ते समृध्यतामिति* मन्त्रेण, शुभे मुहूर्त्ते स्वगृहं प्रविश्य तत्र पुण्याहं वाचयित्वा शुभे मुहूर्त्ते तामुपगच्छेत् ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजातनिबन्धे संस्कारकाण्डे नागबलिगृहप्रवेशविधानम् ।

अथ स्तम्भ(म्ब)बलिविधानमुच्यते ।

तत्र शौनकः ।

शौनकोऽहं प्रवक्ष्यामि स्तम्भबल्याख्यमुत्सवम् ।
पञ्चमेऽहनि कुर्व्वीत अभ्यङ्गस्नानपूर्व्वकम् ।
ब्राह्मणैर्बन्धुभिः सार्द्धं पुण्याहं वाचयेत्ततः ॥
पूर्व्वेद्युरर्चिते कुम्भे वसन्तोदकपूरिते ।
वसन्तं पूजयेत्तत्र ध्यानावाहनकादिभिः ॥
कनकारुणभासुरं प्रसन्नं
हयवक्त्रं मदनस्य साहचर्य्यम् ।
द्विभुजं धृतपल्लवप्रसूनं
भजतामिष्टदमर्च्चयेद्वसन्तम् ॥

---

* इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं संसृजस्वाधा जिव्री विदथ मा वदाथः ॥
१०म. ८५सू. २७ऋक्।

नैवेद्यं विनिवेद्यैवं बलिञ्चैव समर्पयेत् ।
स्तम्भेष्वन्नबलिं दद्यान्नानाभक्ष्यान्नविस्तरैः ॥
इत्थं संपूज्य विधिना अभिषेकञ्च कारयेत् ।
पूर्व्वकुम्भेऽथ संस्थाप्य अङ्गुरीयकमुत्तमम् ॥
कौतुकं रचयेत्तत्र दम्पतिभ्यां प्रयत्नतः ।
वेदोक्तैर्विविधैर्मन्त्रैरभिषेकं समाचरेत् ॥
वसन्तादींश्च सम्प्रार्थ्य दिङ्नागान् दिक्पतीनपि ।
ब्राह्मणैर्बन्धुभिः सार्द्धमभिषिञ्चेच्च तज्जलम् ॥
ततः स्तम्भबलिं सर्व्वं ब्राह्मणेभ्यो निवेदयेत् ।
दक्षिणाञ्च यथाश(श्रद्धा)क्ति दत्त्वा भुञ्जीत तैः सह ।
इत्थं स्तम्भ(म्भ)बलिङ्कृत्वा सर्व्वान् कामानवाप्नुयात् ॥ इति ।

अथास्य प्रयोगः प्रस्तूयते । वरो वध्वा सह पञ्चमे दिवसे मङ्गलस्नानं कृत्वा देशकालौ सङ्कीर्त्त्य आयुरारोग्यादिसर्व्वकामावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्तम्भबल्युत्सवाख्यं कर्म्माहं करिष्ये इति सङ्कल्प्य बन्धुभिर्ब्राह्मणैश्च सह स्वस्तिवाचनं कृत्वा पूर्व्वदिवसे समर्च्चितं कुम्भं पालाशपुष्पसुवर्णादिमिश्रितवसन्तोदकेन पूरयित्वा तत्कुम्भे कनकाचलभासुरं प्रसन्नमिति श्लोकेन* वसन्तं ध्यात्वा उपचारैरभ्यर्च्च्य नानाविधभक्ष्यान्नैः स्तम्भेषु बलिं दद्यात् ।

ततो ब्राह्मणाः कुम्भे सुवर्णाङ्गुलीयं निक्षिप्य तत्र दम्पती कृतकौतुकौ सुशोभिततज्जलेन अब्लिङ्गैर्मन्त्रैरभिषिञ्चेयुः । ततो वरो वसन्तादीन् षडृतून् दिग्गजान् इन्द्रादिलोकपालांश्च प्रणवादि-

* पूर्व्वपृष्ठे उक्तेन ।

चतुर्थ्यन्तनमोऽन्तनामभिः पूजापूर्व्वकं सम्प्रार्थ्य ब्राह्मणैर्बन्धुभिश्च सह तज्जलमभिषिच्य सर्व्वस्वस्त्ययनबलिं ब्राह्मणेभ्यो दत्त्वा यथाशक्ति दक्षिणाञ्च दत्त्वा बन्धुभिः सह भुञ्जीत ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाताख्ये निबन्धे संस्कारकाण्डे स्वस्त्ययनबलिविधानं समाप्तम् ।

## अथ देवकोत्थापनम् ।

तत्र नारदः ।

समे च दिवसे कुर्य्याद्देवकोत्थापनं बुधः ।
षष्ठञ्च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥

समेषु षष्ठं विषमेषु पञ्चमसप्तमातिरिक्तं नाभेष्टमित्यर्थः ।

दिनसंख्या च ज्योतिर्निबन्धे ।

प्रतिष्ठादिनमारभ्य यावत् षोडश वासराः ।
देवकोत्थापनं कार्य्यमुद्वाहे च व्रते दश ॥

उद्वाहे षोडश दिनानि व्रते दश दिनानि काल इत्यर्थः ।

अथ कङ्कणमोचनमन्त्रः ।

कङ्कणं मोचयाम्यद्य रक्षार्थं न कदाचन ।
मयि रक्षां विधायाशु देव त्वं गच्छ कङ्कण ॥ इति ।

तथा बृहस्पतिः ।

तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥

ज्योतिषे ।

स्नानं सचेलं तिलमिश्रकर्म्म
प्रेतानुयानं कलशप्रदानम् ।
अपूर्व्वतीर्थामरदर्शनञ्च
विवर्ज्जयेन्मङ्गलतोऽब्दमेकम् ॥

तिलमिश्रकर्म्म तिलतर्पणं श्राद्धञ्च* ।

तथाच सङ्ग्रहे ।

विवाहव्रतचूड़ासु वर्षमर्द्धं तदर्द्धकम्
पिण्डदानं सदा स्नानं न कुर्य्यात्तिलतर्पणम् ।
संस्कारेषु तदन्येषु मासं मासार्द्धमेव च ॥ इति ।

एतदपि दर्शसंक्रान्त्यादिश्राद्धपरम् ।

महालये गयाश्राद्धे† मातापित्रोर्मृतेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ।
कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्वपणं सदा ॥

इति हेमाद्रौ विशेषोक्तेः । अन्यान्यो विशेषः पञ्चमस्तवके द्रष्टव्यः ।

एवं ब्राह्मविधानेन कृतकन्यादानस्य पितुः कन्यागृहे भुक्ति॰ निषेधोऽभिहितः

---

* मासषट्कं विवाहादौ व्रतप्रारम्भणं न च ।
व्रतस्योद्यापनं नैव नैव कुर्य्यादुपोषणम् ॥
जीर्णभाण्डादि न त्याज्यं गृहसंमार्ज्जनं तथा ।
ऊर्द्धं विवाहात् पुत्रस्य तथाच व्रतबन्धनात् ।
आत्मनो मुण्डनं नैव वर्षं वर्षार्द्धमेव च ॥ इति ज्योतिःप्रदीपः ।

† गयाश्राद्धपदं सर्व्वतीर्थश्राद्धोपलक्षकम् ।

अपरार्के आदि(त्य)पुराणे ।

विष्णुं जामातरं मन्ये तस्य कोपं न कारयेत् ।
अप्रजायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥
ब्राह्मदेयां न वै कन्यां दत्त्वाश्नीयात् कदाचन ।
अथ भुञ्जीत मोहाच्चेत् स पापी नरके वसेत् ॥ इति ।

मदनरत्नेऽपि ।

अप्रजायान्तु कन्यायां न भुञ्जीत कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ॥ इति ।

अप्रजायामिति विशेषणात् प्रजोत्पत्त्यनन्तरं भुक्तौ न दोष इति गम्यते ।

वधूविषये ज्योतिर्निबन्धे गर्गः ।

उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्त्तुर्गृहे कन्यका
हन्यात्तज्जननीं क्षये निजतनुं ज्यैष्ठे पतिज्येष्ठकम् ।
पौषे च श्वशुरं पतिञ्च मलिने चैत्रे स्वपित्रालये
तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेत् ॥ इति ।

क्षये क्षयमासे मलिने मलमासे ।

अथ द्वितीयागमने विशेषस्तत्रैव ।

माघफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।
गुर्व्वादित्यविशुद्धौ स्यान्नित्यं प(त्नी)त्न्या द्विरागमः ॥

बादरायणः ।

नौहारांशुदिनोत्तरादितिगुरुब्रह्मानुराधाश्विनी-
शक्रे भास्करवायुविष्णुवरुणलाढ्ये प्रशस्ते तिथौ ।

कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे
देवेज्येनविदां दिने नववधूवेश्मप्रवेशः शुभः ॥
देवेज्यो गुरुः। इनः सूर्यः। विद्बुधः।

अथ आधानं विधीयते।

तत्र श्रौतमाश्वलायनादीनां आर्त्तस्य पाणिग्रहणेनैव सिद्ध-त्वात्। कात्यायनम(त्र)तिनान्तु उभयमपि। आवसथ्याधानं दार-काले दायाद्यकाल* एकेषामिति कात्यायनसूत्रात्। दारकाल-श्चतुर्थ्युत्तरकाल इति तद्भाष्याच्च। तत्रापि दारकालोऽभ्रातृकस्य भ्रातृमतो दायाद्यकालव्यवस्था।

तत्र व्यासः।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना।
पितर्य्युपरते तेन ग्रहीतव्यः प्रयत्नतः॥
योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥

अत्र विशेषमाह गर्गः।

पितृपाकोपजीवी वा भ्रातृपाकोपजीविकः।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना॥ ५
पितरि ज्येष्ठभ्रातरि वा साग्नौ तदुपजीवी ज्ञानादिनिष्ठो अ। न

* दायाद्यकालो धनविभागकालः।

प्रायश्चित्ती भवतीत्यर्थः। इदमाधानं ज्येष्ठेऽकृताधाने कनिष्ठेन न कार्य्यं वचनं तूक्तं प्राक्।

अपरार्के उशनाः।

पिता पितामहो यस्य अग्रजो वापि कस्यचित्।
तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने॥

पितुराज्ञायामप्यदोषमाह सुमन्तुः।

पिता यस्य तु नाधानं कथं पुत्रस्तु कारयेत्।
अग्निहोत्रेऽधिकारोऽस्ति शङ्खस्य वचनं यथा॥ इति।

नाधानं नाधानं कृतमित्यर्थः।

तत्कालमाह आश्वलायनः।

अग्न्या(धेयं)धानं कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोरेतेषां कस्मिंश्चिद्वसन्ते पर्व्वणि ब्राह्मण आदधीत ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपकृष्टाः* यस्मिन् कस्मिंश्चिदृतावादधीत सोमेन यक्ष्यमाणो नर्त्तुं पृच्छेन्न नक्षत्रमिति।

कालादर्शेऽपि।

अग्निहोत्रं दर्शपौर्णमासावप्युत्तरायणे।
उपक्रम्य यथाकालमुपासीरन् द्विजातयः॥
सोमश्च पशुबन्धश्च सर्व्वाश्च विकृतीरपि।
सौम्यायने यथाकालं विदध्युर्गृहमेधिनः॥ इति।

---

* उपकृष्टस्वकर्म्मोपजीवी रथकारादिः। सोमाधाने तु ऋत्वाद्यालोचनमात्रंपरम्। अथो खलु यदैवैनं श्रद्धोपनमेदथादधीत सैवास्यर्द्धिरिति बौधायनोक्तेः।

...पासनसम्बन्धि प्रागेवाभिहितमित्यलं प्रपञ्चेन ।

सन्ति ग्रन्थसहस्राणि प्रणीतानि बुधैरिह ।
कोऽप्यस्य महिमा येनोऽभिन्नो जयति सर्वतः ॥
विधानपारिजातस्य स्तवकेऽस्मिंस्तृतीयके ।
विवाहाभिधसंस्कारसत्पुष्पं समजायत ॥
अनेन प्रीयतां देवो रमालालितपादुकः ।
उपमानं न यस्यास्त्यनन्तो यो देशकालतः ॥

इति श्रीमत्परमवैदिकश्रीनागदेवभट्टात्मजेन श्रीमदनन्तभट्टेन विरचिते विधानपारिजाताख्ये निबन्धे तृतीयस्तवके विवाहविधानं समाप्तम् ।

वेदशास्त्रनिधिं वन्दे पितृनागेशसंज्ञितान् ।
यत्कृपामृतसिक्तोऽहमभवं फलभाजनम् ॥
अनन्तभट्टनामाहं काण्वशाखी सतां मुदे ।
आह्निकं स्वनिबन्धेऽस्मिन् संवक्ष्यामि यथामति ॥
यस्य स्मरणमात्रेण कर्म सम्पूर्णतामियात् ।
तं प्रणम्य महाविष्णुमाह्निकं कथयेऽधुना ॥

तत्र ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितमिति वचना...(हित)चिन्तनं विधातव्यम् । अथ ब्राह्मो मुहूर्तः सूर्योदयात् ...पान्त्यो मुहूर्तः ।

नाडिकाः षट् च पञ्चाशत्प्रातस्त्वेकाधिकोऽरुणः ।
उषःकालोऽष्टपञ्चाशच्छेषः सूर्योदयः स्मृतः ॥

इति गर्गोक्तः रात्रेस्तु पश्चिमे यामे* मुहूर्त्तो ब्राह्म उच्यते इति मनूक्तो वा ब्राह्मः। तत्रोत्थाय आत्मचिन्तनं कार्य्यम्।

तथाच कूर्मपुराणम्।

ब्राह्मे मुहूर्त्ते उत्थाय धर्म्ममर्थञ्च चिन्तयेत्।
कायक्लेशे तदुद्भूते ध्यायीत मनसेश्वरम्॥ इति।

विष्णुरपि।

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम्।
मरणव्याधिशोकानां किमद्य निपतिष्यति॥

इत्याद्यनिष्टं स्मरन्निष्टदेवतां स्मरेत्।

तत्र व्यासः।

प्रातः स्मरामि भवभीतिमहार्त्तिशान्त्यै
नारायणं गरुड़वाहनमब्जनाभम्।
ग्राहाभिभूतवरवारणमुक्तिहेतुं
चक्रायुधं तरुणवारिजपत्रनेत्रम्॥
प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविन्दयुगलं परमस्य पुंसः।
नारायणस्य नरकार्णवतारणस्य
पारायणप्रवणविप्रपरायणस्य॥

---

* पश्चिमे यामे शेषार्द्धप्रहरे। तथाच निर्णयामृते सुमन्तुः।
रात्रेश्च पश्चिमे यामे मुहूर्त्तो यस्तृतीयकः।
स ब्राह्म इति विख्यातो विहितः सम्प्रबोधने॥

प्रातर्भजामि भजतामभयङ्करं तम्
प्राक् सर्व्वजन्मकृतपापभयापहत्यै।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोर-
शोकप्रणाशमकरोद्धृतशङ्खचक्रः॥
श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेन्नरः।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः॥

पाराशरः।

ब्रह्मा मुरारिस्त्रिपुरान्तकारी
भानुः शशी भूमिसुतो बुधश्च।
गुरुश्च शुक्रः शनिराहुके(तू)तवः
कुर्व्वन्तु सर्व्वे मम सुप्रभातम्॥
गुरुर्वशिष्ठः क्रतुरङ्गिराश्च
मनुः पुलस्त्यः पुलहः सगौतमः।
रैभ्यो मरीचिश्च्यवनश्च दक्षः
कुर्व्वन्तु सर्व्वे मम सुप्रभातम्॥
सनत्कुमारश्च सनन्दनश्च
सनातनोऽप्यासुरिपि(ङ्ग)प्पलौ च।
सप्तस्वराः सप्तरसातलानि
कुर्व्वन्तु सर्व्वे मम सुप्रभातम्॥
सप्तार्णवाः सप्तकुलाचलाश्च
सप्तर्षयो द्वीपवराश्च सप्त।
भूरादिकृत्वा भुवनानि सप्त

कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
पृथ्वी सगन्धा सरसास्तथापः
स्पर्शी च वायुर्ज्वलितञ्च तेजः ।
नभः सशब्दं महता सहैव
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
इत्थं प्रभाते परमं पवित्रं
पठेत् स्मरे(द्वा)द्यः शृणुयाच्च (तद्वत्) तस्य ।
दुःस्वप्ननाश(स्त्विह)स्थिरसुप्रभातं
भवेच्च नित्यं भगवत्प्रसादात् ॥
महाभारतमाख्यानं क्षितिं गाञ्च सरस्वतीम् ।
ब्राह्मणान् केशवञ्चैव कीर्त्तयन्नावसीदति ॥
व्यासं विभीषणं भीष्मं यमं रामं दमं (नलम्) बलिम् ।
सप्ते(यश्चै)तान् संस्मरे(न्नित्यं)द्यस्तु दुःख(प्रं)प्रस्तस्य नश्यति ॥
पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः ॥
कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥
अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ।
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ॥
अहल्या द्रौपदी (सीता) कुन्ती तारा मन्दोदरी तथा ।
पञ्चैताः संस्म(रे)रन्नित्यं महापापात्या न बाध्यते ॥

इत्यादि पठित्वा भूमिं प्रार्थयेत् ।

तत्र मन्त्रः ।

समुद्रवसने देवि पर्व्वतस्तनमण्डिते ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ इति ।

## अथ मूत्रपुरीषोत्सर्गः ।

तत्र पाराशरः ।

ततः प्रातः समुत्थाय कुर्य्याद्विण्मूत्रमेव च ।
नैर्ऋत्यां दिशीषुक्षेप*मतीत्याभ्यधिकं भुवः ॥
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ।
वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्ज्जितः ॥

विण्मूत्रयोर्वाङ्नियमनं हारीतेनाप्युक्तम् ।

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥ इति ।

तथा सङ्ग्रहे ।

कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम्† ।

---

* इषुक्षेपं त्रिःक्षेपपर्य्याप्तदेशं, तद्देशपरिमाणमाह पितामहः ।
मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ।
तत्सन्नाशं गते सार्द्धे लब्धं कृत्वा विचक्षणः ॥ इति ।

† पृष्ठतः पृष्ठे, पृष्ठलम्बितत्वात् निवीतरूपं प्राप्तम् आपृष्ठदेशावलम्बं प्राप्य धर्म्मोऽस्मिन्निति नियमपरिशिष्टवचनात्, पृष्ठे निधाय संवीतमिति मनुवचनाच्च ।

विण्मूत्रन्तु गृही कुर्य्यात् कर्णस्थः प्रथमाश्रमी ।

विण्मूत्रे तु गृही कुर्य्याद्यद्वा कर्णे समाहितः ॥

इति गृहिणोऽपि कर्णनिधानवचनमेकवस्त्रविषयम् ।

तदुक्तं शाङ्खायनगृह्ये ।

यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठितो* मूत्र-पुरीषोत्सर्गं कुर्य्यादिति ।

कर्णोऽत्र दक्षिणः । पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेदिति हारीतोक्तेः ।

मनुः ।

मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः ।

दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥ इति ।

यदपि मनुनैव ।

छायायामन्धकारे वा रात्रावहनि वा द्विजः ।

यथासुखमुखः कुर्य्यात्प्राणबाधभयेषु च ॥

इत्युक्तं तदपि रात्रावहनि वा नीहाराद्यन्धकारजनितदिङ्मोह-विषयं ज्ञेयम् ।

शङ्खः ।

मूत्रं पुरीषं नो कुर्य्यात् सोपानत्कः कथञ्चन ।

उत्सृज्य मञ्जले कुर्य्यात्प्रस्रावे मेहनं द्विजः ॥

तथा ।

---

* अवगुण्ठितः कृतशिरोवेष्टनः ।

तर्ज्जनीं रौप्यसंयुक्तां ब्रह्मग्रन्थियुतां शिखाम् ।
भोजने मैथुने मूत्रे कुर्व्वन् कृच्छ्रेण शुध्यति ॥ इति सङ्ग्रहे ।

अत्र वर्ज्यदेशानाह मनुः ।

न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्व्वते ॥
न जीर्णदेवायतने न वल्मीके न शाड्वले ।
न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः ॥
न नदीतीरमासाद्य न च पर्व्वतमस्तके ।
वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाम् ।
न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्ज्जनम् ॥ इति ।

द्यादौ विशेषः स्मृत्यन्तरे ।

दशहस्तं परित्यज्य मूत्रं कुर्य्याज्जलाशये ।
शतहस्तं पुरीषञ्च तीर्थे नद्यां चतुर्गुणम् ॥ इति ।

ततोऽपकृष्य विण्मूत्रं काष्ठलोष्ट्रतृणादिना ।
रिमृष्टगुदलिङ्गो गृहीतशिश्नश्चोत्तिष्ठेत्* ।

इति विण्मूत्रोत्सर्गविधानम् ।

---

* उदक्तवासा उत्तिष्ठेद्दृढं विधृतमेहनः । इत्याह्निकतत्त्वे पाठः ।

## अथ शौचम्।

तत्र दक्षः।

शौचे यत्नः सदा कार्य्यः शौचमूलो द्विजोत्तमः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः॥

देवलः।

धर्म्मविद्दक्षिणं हस्तमधः शौचे न योजयेत्।
तथैव वामहस्तेन नाभेरूर्द्ध्वं न शोधयेत्॥

तत्र देवतागृहवल्मीकमूषकोत्करादि(वर्ज्जितां) मृद्भिन्नां मृदमुद्धृतोदकं चादाय वाग्यत उदङ्मुखो दिवा शौचं कुर्य्यात् रात्रौ चेद्दक्षिणामुखः तदप्युदपात्रं मलमूत्रोत्सर्ज्जनसमये हस्ते न धार्य्यम्।

यदाह गौतमः।

करस्थोदकपात्रस्तु विण्मूत्रं कुरुते यदि।
तज्जलं मूत्रसदृशं सुरापानेन तत्समम्॥ इति।

मृत्संख्यादिकमाह शौनकः।

एका तु मृत्तिका लिङ्गे तिस्रः सव्यकरे मृदः।
करद्वये मृद्द्वयं स्यान्मृत्प्रमाणमथोच्यते॥
आर्द्रामलकमात्रा च मूत्रशौचे तु मृत्तिका।
मूत्रात्तु द्विगु(णं)णा शुक्रे मैथुने त्रिगुणा भवेत्॥
लिङ्गशौचमिदं प्रोक्तं गुदशौचमथोच्यते।
पञ्चापाने मृदः चेय्याः करे वामे दश स्मृताः॥
हस्तयोः सप्त दातव्याः पदोस्तिस्रस्तथा ...

पर्वप्रसृतिमात्रा स्यात्तदर्द्धन्तु ततः परम् ॥
गुदशौचमिति प्रोक्तं पादशौचमथोच्यते ।
एकैकं पादयोर्दद्याद्धस्तयोर्लिङ्गशौचवत् ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद्वनस्थानां यतीनां स्याच्चतुर्गुणम् ॥
यद्दिवाविहितं शौचं तदर्द्धं निशि कीर्त्तितम् ।
तदर्द्धमातुरे प्रोक्तमातुरस्यार्द्धमध्वनि ॥
स्त्रीशूद्रयोरर्द्धमानं शौचं प्रोक्तं मनीषिभिः ।
स्त्रीशूद्रादेरशक्तानां बालानां चोपनीतिनाम् ।
गन्धलेपक्षयकरं शौचं कुर्य्यान्न संख्यया ॥ इति ।

याज्ञवल्क्योऽपि ।

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः ॥

एष गन्धलेपक्षयकरं शौचं सर्व्ववर्णाश्रमिणां साधारणम् । मृत्-संख्यानियमस्तु अदृष्टार्थ इति विज्ञानेश्वरः ।

लिङ्गशौचं पुरा कार्य्यं गुदशौचं ततः स्मृतम् ।

इति वचनाल्लिङ्गशौचानन्तरं गुदशौचं कर्त्तव्यम् ।

गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः ।
आमृत्योराचरन् शौचं भावदुष्टो न शुध्यति ॥

इति स्मृतेर्भावशुद्धिरप्यपेक्षिता ।

तथाच व्याघ्रपादः ।

शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।

मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥

अथोक्तसंख्यानियमातिक्रमे प्रायश्चित्तमुक्तं स्मृतिरत्नावल्याम् ।

गायत्र्यष्टशतञ्चैव प्राणायामत्रयं तथा ।
प्रायश्चित्तमिदं प्रोक्तं नियमातिक्रमे सति ॥ इति ।

क्वचिद्विष्णुस्मरणमेवोक्तम् । अनुदकमूत्रकरणे तु सचेलं स्नानं व्याहृतिहोमश्चेति प्रायश्चित्तद्वयमिति प्रयोगपारिजाते उक्तम् ।

तत आचमनात् प्राक् वामभागे गण्डूषान् क्षिपेत् । तदुक्तमाचारदीपे ।

मूत्रे पुरीषे भुक्त्यन्ते रेतःप्रस्रवणे तथा ।
चतुरष्टद्विषड्द्वष्टगण्डूषैः शुध्यते क्रमात् ॥
पुरतः सर्व्वदेवाश्च दक्षिणे पितरस्तथा ।
ऋषयः पृष्ठतः (सर्व्वे) तस्माद्वामे गण्डूषमुत्सृजेत् ॥ इति ।

इति शौचविधानम् ।

## अथाचमनविधिः ।

तत्र योगीश्वरः ।

अन्तर्जानु* शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

---

* अन्तर्जानु जानुनोर्मध्ये हस्तौ कृत्वेति शेषः । तथाच हारीतः—अन्तरूर्व्वोररत्नी कृत्वा त्रिरपो हार्द्दीश्च पिबेदिति । अरत्नी हस्तौ हार्द्दीर्हृद्गताः । वायव्यादीशानाभिमुखश्च ईशानाभिमुखो भूत्वाऽपः स्पृशेत् यथाविधि । इति मरीच्युक्तेः ।

अनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्॥

स्तमध्ये त्वग्नितीर्थं तेन च प्रतिग्रहं कुर्य्यात्। दक्षिणहस्तमध्ये ब्राह्मणस्याग्नेयं तीर्थम्। आग्नेयेन प्रतिगृह्णीयादिति वशिष्ठोक्तेः।

संहताङ्गुलिना तोयं गृहीत्वा दक्षिणेन तु।
मुक्ताङ्गुष्ठकनिष्ठे (तु) द्वे शेषेणाचमनं चरेत्॥

इत्येवमितिकर्त्तव्यता।

आसने प्राङ्मुख उदङ्मुखो वोपविश्य प्रकृतिस्थं फेनबुद्बुदादिरहितमनुष्णमुदकं संहताङ्गुलिना दक्षिणकरेणादाय अङ्गुष्ठकनिष्ठिके मुक्त्वा शेषं वीक्षितं ब्राह्मेण प्राजापत्येन दैवेन वा तीर्थेन त्रिश्चतुर्वा* पिबेत्। न पैत्रेण।

कायत्रैदशिकाभ्याञ्च न पैत्रेण कदाचन।

इति मनूक्तेः। ततः।

त्रिः प्राश्नीयापो द्विरुन्मृज्य मुखमेतान्युपस्पृशेत्।

इत्यादि वचनादपः पीत्वा हस्तौ प्रक्षाल्य ओष्ठावन्तः सङ्कोच्य संहताङ्गुष्ठमूलेन अलोमकेन मुखं द्विः प्रमृज्य ततो हस्तौ प्रक्षाल्य संहताङ्गुलिभिर्मुखं सकृदवमृज्य हस्तौ प्रक्षाल्य पादौ शिरश्चाभ्युक्षेत् वा।

ततः संहताभिस्तिसृभिरङ्गुलीभिरास्यमलोमकदेशे स्पृष्ट्वा हस्तौ प्रक्षाल्य अङ्गुष्ठप्रदेशिनीभ्यां घ्राणं स्पृष्ट्वा अङ्गुष्ठानामिकाभ्यां चक्षुषी

---

* चतुर्वेति आचमनापेक्षया विकल्पः। न च भूयस्त्वार्थं कल्पनागौरवापत्तेः। इति कुल्लूकभट्टः।

श्रोत्रे च स्पृशेत् । अङ्गुष्ठकनिष्ठिकाभ्यां नाभिम् । तलेन हृदयम् । सर्व्वाङ्गुलिभिः शिरो बाहुमूले च स्पृशेत् । सर्व्वत्र मध्येहस्ताभ्यामपः स्पृशेत् ।

इदं मुख्याचमनम् । अत्राशक्तौ तु त्रिरपः पीत्वा हस्तौ प्रक्षाल्य मुखं प्रमृज्य खान्युपस्पृशेत् । अत्यशक्तौ च त्रिः पीत्वा हस्तौ प्रक्षाल्य श्रो(त्रं)त्रे स्पृशेत् ।

अथ पौराणाचमनम् । सङ्ग्रहे ।

केशवादित्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
द्वाभ्यामोष्ठौ च संमृज्य द्वाभ्यामुन्मार्ज्जयेत्ततः ॥
तथा त्वेकेन मूर्द्धानं ततः सङ्कर्षणादिभिः ।
जङ्घ्रौष्ठनासाक्षिकर्णनाभ्युरःस्कन्धकान् स्पृशेत् ।
एवमाचमनङ्कृत्वा साक्षान्नारायणो भवेत् ॥

अथाचमनधर्म्माः ।

अत्रिः ।

ताम्रपात्रस्थितैर्वापि तथा तोयाशयस्थितैः ।
कुर्व्वीताचमनं विप्रस्ततः खानि समालभेत् ।
तदलाभे तु कुर्व्वीत पात्राधारोदकेन च* ॥

तथा ।

तावन्नोपस्पृशेद्विप्रो यावद्वामेन न स्पृशेत् ।
वामे हि द्वादशादित्या वरुणश्चिदशेश्वरः ॥

---

* पात्रधारोदकेन च इति पात्रपार्श्वोदकेन च इति च ख-ग-पुस्तकयोः पाठौ ।

वर्त्तन्ते सर्व्वदा यस्मात्तस्माद्वामेन संस्पृशेत्।

शूद्राहृतैस्तु नाचामेन्नैकपाण्याहृतैरपि।

तथैवाव्रतहस्तेन नापरिज्ञातहस्ततः॥

अव्रतोऽनुपनीतः।

स्नानमाचमनं होमं भोजनं देवतार्च्चनम्।

प्रौढ़पादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम्॥

तल्लक्षणमाह हारीतः।

आसनारूढ़पादस्तु जा(न्वोर्वा)नुनोर्जङ्घयोस्तथा।

कृतावसक्थिको* यश्च प्रौढ़पादः स उच्यते॥ इति।

मनुः।

कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः।

आचान्तः शतकृत्वोऽपि न कदाचन शुध्यति॥

आर्द्रवासा जलान्तःस्थः शुष्कवस्त्रो बहिःस्थितः।

आचामेद्विपरीतश्चेदशुचित्वमवाप्नुयात्॥

पादशेषं पीतशेषं शौचशेषञ्च यज्जलम्।

तज्जलं रुधिरैस्तुल्यं पर्य्यग्निकरणं विना॥

पर्य्यग्निकरणमपि सति सम्भवे द्रष्टम्।

उदकपरिमाणमाह योगीश्वरः।

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः।

शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः॥

---

* वस्त्रादिना कृतपृष्ठजानुबन्धनः।

अन्तत: अन्तेन तालुना स्पृष्टाभिरित्यर्थः* ।

अथ शौचाचमनम् ।

पाराशरः ।

देव्याः पादैस्त्रिभिः पीत्वा अब्लिङ्गैर्नवधा स्पृशेत् ।
पुनर्व्याहृतिगायत्र्या शिरोमन्त्रैस्त्रिधा स्पृशेत् ॥ इति ।

अब्लिङ्गैरापोहिष्ठा इत्यादिभिस्त्रिभिः श्रुतिपादैः ।

यः करोति प्रयत्नेन शौतमाचमनं द्विजः ।
अशुचात्मापि पापिष्ठः स पूतो नात्र संशयः ॥ इति ।

प्रकारान्तरेणापि । आश्वलायनः ।

दक्षिण उपवीयोपविश्य हस्तावविनिज्य त्रिराचामेत् । द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य सव्यं पाणिपादं प्रोक्षति । यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते तेन अथर्व्वाङ्गिरसो ब्राह्मणा(नी)नितिहासान् पुराणानि गाथा नाराशंसीः प्रीणातीति ।

सन्ध्यादौ ब्रह्मयज्ञे च होमे देवार्च्चने तथा ।
शौतमेतद्द्विजैः कार्य्यमिति बौधायनोऽब्रवीत् ॥
पौराणमथवा स्मार्त्तं शौतमाचमनं तथा ।
तत्तत्कर्म्मणि कुर्व्वीत यथेष्टं वा विधीयते ॥

अथाचमननिमित्तानि ।

तत्र हारीतः ।

---

* अन्तत ओष्ठप्रान्ते इति कार्त्ताः । तदेव समीचीनं मन्यामहे ।

स्त्रीशूद्रोच्छिष्टाभिभाषणे मूत्रपुरीषोत्सर्गदर्शने देवतामभि-
गन्तुकाम आचामेत् ।

यमः ।

उत्तीर्य्योदकमाचामेदवतीर्य्य तथैव च । इति ।

बृहस्पतिः ।

अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे ।
मार्ज्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नुपस्पृशेत् ॥ इति ।

:प '्वोऽपि ।

विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन ।
आचम्यैव तु शुद्धः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥

मनुरपि ।

उच्छिष्टेन च संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥
आचामेच्चर्व्वणे नित्यं मुक्त्वा ताम्बूलचर्व्वणम् ।
ओष्ठौ विलोम(शो)कौ स्पृष्ट्वा वासो विपरिधाय च ॥ इति ।

अथ द्विराचमननिमित्तानि ।

तत्र याज्ञवल्क्यः ।

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥

आचारदीपेऽपि यमः ।

भोजने हवने दाने उच्चारेऽथ प्रतिग्रहे ।
सन्ध्यात्रयाम्बुपानेषु पूर्व्वं पश्चाद्विराचमेत् ॥

उदकाभावे असामर्थ्ये च दक्षिणं कर्णं स्पृशेत् ।

तदाह बृहस्पतिः ।

निमित्तेष्वे(व)षु सर्व्वेषु दक्षिणं श्रवणं स्पृशेत् ।
आदित्या वसवो रुद्रा वायुरग्निश्च धर्म्मराट् ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति वै यतः ॥

अत्र हेतुमाह पराशरः ।

प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे वसन्तीति मनोर्मतम् ॥ इति ।

आचमनप्रसङ्गात् सपवित्राचमने विशेषः कथ्यते ।

मार्कण्डेयः ।

सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्ज्जयेत् ॥

सपवित्रत्वं दक्षिणहस्तस्य ज्ञेयम् । सव्ये तु त्रिप्रभृतिकुशा धार्य्याः ।

तदाह कात्यायनः ।

सव्ये पाणौ कुशान् कृत्वा दक्षिणे सपवित्रकः । इति ।

गोभिलः ।

उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं (तस्य) सोऽपि भुक्त्वा यज्ञफलं लभेत् ॥ इति ।

हारीतोऽत्र विशेषमाह ।

सव्यापसव्यौ कुर्व्वीत सपवित्रौ करौ बुधः ।

ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत् ॥ इति ।

तथा ।

प्रथमं लङ्घयेत्पर्व्व द्वितीयन्तु न लङ्घयेत् ।
द्वयोस्तु पर्व्वणोर्मध्ये पवित्रं धारयेद्बुधः ॥

तल्लक्षणमाह कात्यायनः ।

अनन्तर्गर्भि(णं)तं* साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

विशेषतः पवित्रलक्षणं स्मृत्यन्तरे ।

द्व्यङ्गुलं मूलतः कुर्य्याद्ग्रन्थिरेकाङ्गुलस्तथा ।
चतुरङ्गुलमग्रं स्यात्पवित्रस्य च लक्षणम् ॥

प्रणवेन पवित्रग्रन्थिकरणमुक्तं तत्रैव ।

तारेण कुर्य्याद्ग्रन्थिन्तु पवित्रस्य विचक्षणः ।

तारः प्रणवः ।

हारीतः ।

स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे ।
अशून्यन्तु करं कुर्य्यात् सुवर्णरजतैः कुशैः ॥

चन्द्रिकायां यमः ।

करे कण्ठे शिखायाञ्च कर्णयोरुभयोरपि ।
पवित्रधारको यस्तु न स पापेन लिप्यते ॥ इति ।

---

* अनन्तर्गर्भिणमन्तर्गर्भशून्यं—यथाह शौनकः ।

अनन्तर्गर्भौ यौ तु कुशौ प्रादेशसम्मितौ ।
अनखच्छेदितौ धार्य्यौ तौ पवित्राभिधायकौ ॥

अनन्तर्गर्भितमित्युक्तपविचासम्भवे मनुः ।

द्वौ दर्भौ दक्षिणे हस्ते सव्ये त्रीनासने सकृत् ।
उपवीते शिखायाञ्च पादयोस्तु सकृत्सकृत् ॥ इति ।

अथ प्रसङ्गात् कुशग्रहणविधिः कथ्यते । अष्टधा विभक्तस्याह्नो द्वितीये भागे शुचिर्भूत्वा पूर्व्वोत्तरामुखः सव्रोङ्कारेण कुशान् स्पृष्ट्वा ।

विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद सर्व्वाणि पापानि (मम) कुश स्वस्तिकरो भव ॥

इति मन्त्रमुक्त्वा दर्भान् सकृच्छित्त्वा समुद्धरेत् । दर्भान् स्वयमाहरेत् ।

सङ्ग्रहे ।

समित्पुष्पकुशादीनि* ब्राह्मणः स्वयमाहरेत् ।
शूद्राहृतैः क्रयक्रीतैः कर्म्म कुर्व्वन् व्रजत्यधः ॥

अत्र विशेषमाह कात्यायनः ।

मासे नभस्येऽमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोज्याः(च) स्युः पुनः पुनः ॥

शङ्खः ।

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणो गौर्हुताशनः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

---

* आदिपदेन दूर्व्वादिसंग्रहः । उत्तरार्द्धादिदं ज्ञायते । स्वस्य आहरणाशक्तौ ब्राह्मणक्षत्रियवैश्याहृतैः कर्म्मकरणे दोषो नेति । स्वपुष्पार्जनादौ तु क्रयक्रीतदोषोऽपि न । स्वपुष्पार्जनादा तु क्रयक्रीतमपीष्यते ॥ इति वचनात् ।

वर्ज्यमाह हारीतः ।

पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्ज्जयेत् ॥
ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥

देवलः ।

अपूता गर्भिता [illegible] चापच्छेदिता नखैः ।
क्वाथिता अग्निदग्धाश्च कुशा वर्ज्याः प्रयत्नतः ॥

स[illegible] ।

कुशाः काशा उशीराश्च यवा दूर्व्वाश्च बल्वजाः ।
गोबालमुञ्जौ कुन्दाश्च पूर्व्वाभावे परः परः ॥

सग्रन्थिपवित्रलक्षणमाह प्रचेताः ।

द्विमूलमेकतः कुर्य्याद्द्वयोरग्रं तथैकतः ।
मलयं द्व्यङ्गुलं प्रोक्तं ग्रन्थिरेकाङ्गुलो भवेत् ॥
चतुरङ्गुलमग्रं स्यात् पवित्रस्येति लक्षणम् ।
चक्रायुधं यथा विष्णोर्हरस्यापि त्रिशूलकम् ।
वज्रायुधं यथेन्द्रस्य एवं विप्रकरे कुशः ॥ इति ।

इत्याचमनविधानम् ।

अथ दन्तधावनविधिः ।

तत्र दक्षः ।

मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ।
तदार्द्रकाष्ठं शुष्कं वा भक्षयेद्दन्तधावनम्* ॥

विष्णुः ।

कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसम्मितम् ।
कनिष्ठिकाग्रवत् स्थूलं पूर्व्वार्द्धकृतकूर्चकम्† ॥
जम्बूदुम्बरचूताश्च कदम्बो लोध्रचम्पकौ ।
बदरीति द्रुमाश्चैते प्रोक्ता दन्तप्रधावने‡ ॥

अथ विशेषमाह शातातपः ।

उदुम्बरेण वाक्सिद्धिर्बदर्य्या मधुरस्वरः ।
कदम्बेन महालक्ष्मीराम्रेणारोग्यमेव च ॥
अपामार्गाद्धिरोगत्वं स्त्रीवश्यञ्च प्रियङ्गुभिः ।
अपामार्गे सर्व्वसिद्धिर्जम्बूके च दृढा मतिः ।
आरोग्यं कर्णिकारेण करञ्जेन रणे जयः ॥

---

* लोधकस्य काष्ठाद्दन्तमार्ज्जनमाचरेदिति गौणप्रयोग इति कश्चित् ।

† पूर्व्वार्द्धदलिताग्रम् ।

‡ मार्कण्डेयपुराणे तु ।

खदिरश्च कदम्बश्च करञ्जश्च तथा वटः ।
तिन्तिडी वेणुपृष्ठञ्च आम्रनिम्बौ तथैव च ॥
अपामार्गश्च बिल्वश्च अर्कश्चोदुम्बरस्तथा ।
एते प्रशस्ताः कथिता दन्तधावनकर्म्मसु ॥ इति ।

गर्गः।

दशाङ्गुलन्तु विप्राणां क्षत्रियाणां नवाङ्गुलम्।
अष्टाङ्गुलन्तु वैश्यानां शूद्राणां सप्तसम्मितम्।
चतुरङ्गुलमानेन नारीणां विधिरुच्यते॥

आश्वलायनस्तु।

वितस्तिमात्रमुद्दिष्टं दन्तकाष्ठं द्विजन्मनाम्।
स्त्रीशूद्रयोस्तदर्द्धं स्यान्नातिशुष्कं न जन्तुमत्॥ इति।

तथाच परिमाणे विकल्पः।

काष्ठग्रहणमन्त्रस्तु।

आयुर्बलं यशो वर्च्चः प्रजाः पशवसूनि च।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नो (दे)धेहि वनस्पते॥

इति विष्णूक्तः।

काष्ठ(भक्षण)चर्व्वणमन्त्रस्तु।

अन्नाद्याय व्यूहध्वम् सोमो राजायमागमत्।
स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च॥

इति कात्यायनोक्तः। ततस्तेन काष्ठेन जिह्वामुल्लिख्य काष्ठं प्रक्षाल्य नैर्ऋत्यां दिशि उत्सृजेत्।

अथ वर्ज्यकाष्ठानि।

मार्कण्डेयः।

कोविदारशमीतालश्लेष्मातकविभीतकान्।
वर्ज्जयेद्दन्तकाष्ठे च गुग्गुलं कामुकं तथा॥

स्मृत्यर्थसारे।

आसने शयने याने पादुके दन्तधावने ।
पालाशाश्वत्थकौ वर्ज्यौ सर्व्वकर्म्मसु ॥
अलाभे दन्तकाष्ठानां निषिद्धायां तिथौ तथा* ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्† ॥

यद्वा तृणपर्णोदकेन मध्यमानामिकाङ्गुष्ठानामन्यतमेन धावयेत् ।

अथ निषिद्धतिथयः ।

चतुर्द्दश्यष्टमीदर्शपूर्णिमासंक्रमेषु च ।
नन्दासु च नवम्याञ्च दन्तकाष्ठं विवर्ज्जयेत् ॥
उत्पत्तौ च विपत्तौ च मैथुने दन्तधावने ।
अभ्यङ्गे क्षुदधिस्नाने तिथिस्तात्कालिकी स्मृता ॥

तथा ।

श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका ।
रजस्वला सूतिका च वर्ज्जयेद्दन्तधावनम् ॥

अत्रापवादः सङ्ग्रहे ।

रजस्वला चतुर्थेऽह्नि सूतिका दशमेऽहनि ।

मरीचिः ।

नाद्यादजीर्णवमथुश्वासकासज्वरादिभिः ।
पुरोदयाद्रवेस्तद्वन्नोदितेऽस्तमिते रवौ ॥

नाद्यान्न भक्षयेद्दन्तकाष्ठमिति शेषः ।

---

* प्रतिषिद्धदिने तथा इति बहुषु निबन्धेषु पाठः ।

† मुखशुद्धिर्विधीयते इति आर्याः पठन्ति ।

तीर्थप्राप्तौ वचनादन्यदापि भवति।

यमः।

श्राद्धे जन्मदिने, चैव विवाहेऽजीर्णदूषिते।
व्रते चैवोपवासे च वर्ज्जयेद्दन्तधावनम्॥

इति दन्तधावनविधानम्।

अथ केशप्रसाधनादिमाङ्गल्यविधिः।

स्कान्दे।

स्नातकश्च* ततः कुर्य्यात् पुमान् केशप्रसाधनम्।
आदर्शाञ्जनमाङ्गल्य†दूर्व्वाद्याल(म्भ)नानि च॥

ब्राह्मेऽपि।

स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीविताम्।
प्रातःस्नानं ततः कुर्य्यात्तद्रूपेण यथोदितम्।
सन्ध्यां वापि तथा कुर्य्यादङ्गमुन्मृज्य यत्नतः॥ इति।

---

* आचान्तश्च इति आह्निकतत्त्वे पाठः।

† माङ्गल्यान्याह नारदः—

लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः॥
यतीनां दर्शनञ्चैव स्पर्शनं भाषणं तथा।
कुर्व्वाणः पूयते नित्यं तस्मात् पश्येत नित्यशः॥ इति।

## अथ यज्ञोपवीतविधिः ।

तत्र ।

उपवीतं सदा धार्यमिति कात्यायनोऽब्रवीत् ।

मनुरपि ।

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

भृगुः ।

त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतं (चो)तूपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥

ऊर्ध्ववृतं दक्षिणं करमूर्ध्वं कृत्वा वलितमित्यर्थः* ।

वसिष्ठः ।

नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः ।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥ इति ।

कात्यायनस्तु ।

पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यान्ना(तो)तिलम्बं न चोच्छ्रितम् ॥ इ

अथ विशेषमाह स एव ।

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रिकम् ॥ इति ।

---

* ऊर्ध्ववृतप्रकारमाह संग्रहकारः—

करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम् ।
वलितं मानवैः सूत्रं प्राज्ञैरूर्ध्ववृतं स्मृतम् ॥ इति ।

उक्ताभावे देवलः ।

कार्पासक्षौमगोवालशणवल्कतृणादिकम् ।

यथा(सदा)सम्भवतो धार्य्यमुपवीतं द्विजातिभिः ॥ इति ।

क्षुमा अतसी अतसी स्यादुमा क्षुमा इत्यमरसिंहोक्तेः । वल्कं वल्कलं तृणत्वक् तज्जन्यमित्यर्थः । यथासम्भवत इति यदन्यासत्सिताद्देशः मुख्यासम्भवे इत्यर्थः । तत्करणप्रकारस्तु ।

शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके ।

आवेष्ट्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः ॥

इत्यादिनोक्तः ।

आचारप्रदीपे ।

यज्ञोपवीतं कुर्वीत सूत्रेण नवतान्तवम् । इति ।

तन्तुदेवतास्तु ।

ॐ(अ)कारश्चाग्निनागौ च सोमः पितृप्रजापती ।

वायुः सूर्य्यः सर्व्वदेवा इत्याहुः सर्व्वदेवताः ॥

भृगुः ।

यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्म्मणि ।

वस्त्राभावे तृतीयं स्यादेकञ्च प्रथमाश्रमे ॥

तथा ।

उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते । इति ।

स्मृत्यन्तरेऽपि ।

ब्रह्मचारिण एकन्तु स्नानप्रभृति तद्द्वयम् ।

तृतीयं चोत्तरीयं स्याद्वस्त्राभावे तृतीयकम् ॥

वस्त्राभावे तृतीयकमिति पुनर्वचनन्तु ।

उपात्ते तु प्रतिनिधौ मुख्योऽर्थो लभ्यते यदि ।
तत्र मुख्यमनादृत्य गौणेनैव समाप्यते ॥

इति न्यायस्य बाधार्थम् । तथा च उत्तरीयाभावदशायामेव तस्यानुकल्पत्वं तल्लाभे तु पूर्व्वधृतयज्ञोपवीतमेव । तेनोत्तरीयमपि तदा धार्य्यमेवेत्याशयः ।

तथा ।

धारयेन्नित्यमेतानि नवसंख्यानि वै द्विजः ।

तत्परिधानञ्च यज्ञोपवीतमिति* मन्त्रेण कार्य्यम् । अत्र पूर्व्वं पश्चाच्चाचमनं कार्य्यम् ।

मलापकर्षणस्नाने गात्राभ्यङ्गे तथैव च ।
ब्रह्मसूत्रं पृथक् कुर्य्यादन्यथा नरकं व्रजेत् ॥

इति स्मृतेः । उक्तादन्यत्र कदापि नोत्तारयेत् । यद्युत्तारयेत्तदा मन्त्रपूर्व्वकमन्यत् परिदध्यात् ।

मन्त्रन्यस्तोपवीतं यश्चोद्धरेत्तत्कदाचन ।
मोहाद्द्विजस्तदुद्धृत्य पुनर्मन्त्रेण धारयेत् ॥

इति गालवोक्तेः । एवमन्यधृतमपि न दध्यात् । तदुक्तं सङ्ग्रहे ।

उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलङ्कारं स्रजं करकमेव च ॥

---

* यज्ञोपवीतं परमं पवित्रं बृहस्पतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ इति ।

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।

अप्सु प्रास्येद्विनष्टानि धृत्वा चान्यानि मन्त्रतः ॥ इति ॥

तथा देवलः ।

सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत् ।

विच्छिन्नं वाप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् ॥

इति तत्प्रतिपत्तिः ।

इति यज्ञोपवीतविधानम् ।

अथ शिखाबन्धः ।

तत्र व्यासः ।

स्मृत्वोङ्कारञ्च गायत्रीं निबध्नीयाच्छिखां ततः ।

पुनराचम्य हृदयं बाहू स्कन्धौ च संस्पृशेत् ॥

तच्च बन्धनं शिरसो दक्षिणभागे कार्य्यम् ।

गायत्र्या तु शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः ।

पश्चात्तु जूटिकां बद्ध्वा ततः कर्म्म समाचरेत् ॥

इति वचनात्* ।

---

* शूद्रस्य शिखाबन्धमन्त्रस्तु—

ब्रह्मवाणीसहस्राणि शिववाणीशतानि च ।

विष्णोर्नामसहस्रेण शिखाबन्धं करोम्यहम् ॥

गच्छन्तु सकला देवा ब्रह्मविष्णुमहेश्वराः ।

तिष्ठत्वचला लक्ष्मीः शिखाहुतं करोम्यहम् ॥ इति ।

अथ प्राणायामः।

तत्र बृहस्पतिः।

बद्धासनं नियम्यास्यं कृत्वा (चार्घ)चर्यादिकं ततः।
स सम्मीलितदृग्मौनी प्राणायामं समभ्यसेत्॥
प्रणवव्याहृतियुतां सावित्रीं शिरसा सह।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते॥

योगियाज्ञवल्क्यः।

कुम्भकः पूरको रे(च:)च्यः प्राणायामस्त्रिलक्षणः।
पूरकः पूरणं वायोः कुम्भकः स्थापनं क्वचित्॥
बहिर्निःसारणं तस्य रेचकः परिकीर्त्तितः।
दक्षिणे रेचयेद्वायुं वामेनापूरितोदरः॥
कुम्भेन धारयेन्नित्यं प्राणायामं विदुर्बुधाः।
अङ्गुष्ठेन पुटं ग्राह्यं नासाया दक्षिणं पुनः॥
कनिष्ठानामिकाभ्याञ्च वामं प्राणस्य सङ्ग्रहे।
अङ्गुष्ठतर्ज्जनीभ्यान्तु ऋग्वेदि-सामगायनैः।
अङ्गुष्ठानामिकाभ्यान्तु ग्राह्यं सर्व्वैरथर्व्वभिः॥

अत्रोऽत्र विशेषमाह।

दक्षिणे रेचकं कुर्य्याद्वामेनापूर्य्य चोदरम्।
कुम्भकेन जपं कुर्य्यात्प्राणायामस्य लक्षणम्॥ इति।
सप्त व्याहृतयः प्रोक्ताः प्राणायामे तु नित्यशः।
भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च॥
प्रत्योङ्कारसमायुक्तं तथा तत्सवितुः परम्।

ओमापो ज्योतिरित्येतच्छिरः पश्चात्प्रयोजयेत् ।
त्रिरावर्त्तनयोगात्तु प्राणायामस्तु शब्दितः ॥

अत्र विशेषः स्मृत्यन्तरे ।

ॐकारस्य ऋषिर्ब्रह्मा देवोऽग्निस्तस्य कथ्यते ।
गायत्री च भवेच्छन्दो नियोगः सर्व्वकर्म्मसु ॥
त्रिरावृत्तस्तु प्रयोक्तव्य आरम्भे सर्व्वकर्म्मणाम् ।
व्याहृतीनान्तु सर्व्वासामार्षञ्चैव प्रजापतेः ॥
गायत्र्युष्णिगनुष्टुप् च वृहती त्रिष्टुवेव च ।
पंक्तिश्च जगती चैव छन्दांस्येतानि सप्त वै ॥
अग्निर्वायुस्तथा सूर्य्यो वृहस्पतिरपांपतिः ।
इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥
प्राणस्य यमने चैव विनियोग उदाहृतः ।
सविता देवता यस्या मुखमग्निस्त्रयात्मकम् ॥
विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते ।
जपहोमोपनयने विनियोगो विधीयते ॥
ओमापो ज्योतिरित्येष मन्त्रो वै तैत्तिरीयके ।
तस्य प्रजापतेरार्षं छन्दोहीनं यजुर्यतः ॥
ब्रह्माग्निवायुसूर्य्याश्च देवताः समुदाहृताः ।
प्राणस्य यमने चैव विनियोगः प्रकीर्त्तितः ॥ इति ।

व्यासः ।

नित्ये देवार्च्चने होमे सन्ध्यायां श्राद्धकर्म्मणि ।
स्नाने दाने तथा ध्याने प्राणायामास्त्रयस्त्रयः ॥

आचारप्रदीपेऽपि ।

द्वौ द्वौ प्रातश्च मध्याह्ने त्रिस्त्रिः सन्ध्यात्रयेऽर्चने ।
वैश्वदेवे भोजनान्ते प्राणायामास्तु षोडश ॥

एतत्फलमाह याज्ञवल्क्यः ।

यद्विप्रः कुरुते पापं मनसा कर्म्मणा गिरा ।
त्रिकालसन्ध्याकरणात्प्राणायामैर्व्यपोहति ॥

मनुः ।

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य संयमात् ॥

इति प्राणायामविधानम् ।

## अथ प्रातःस्नानविधिः ।

तत्र योगियाज्ञवल्क्यः ।

प्रातर्म्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृच्च ब्रह्मचारिणः ॥

ब्रह्मचारिणः सकृत्स्नानमशक्तविषयम् ।

स्नायात्प्रातश्च मध्याह्ने ब्रह्मचारी तथा स्मृतौ ।

इति विष्णूक्तेः ।

मार्कण्डेयः ।

अस्नातस्य क्रियाः सर्व्वा भवन्तीह्यफला यतः ।
प्रातः समाचरेत्स्नानं तच्च नित्यमिति स्मृतम् ॥

प्रातःस्नानगुणा उक्ताः स्कान्दे।

गुणा दश स्नानपरस्य नित्यं
रूपञ्च तेजश्च बलञ्च शौर्य्यम्।
आयुष्यमारोग्यमलोलुपत्वं
दुःस्वप्ननाशश्च तपश्च मेधा॥ इति।

दक्षः।

अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येव दिवा रात्रौ (सदा तस्य) प्रातःस्नानं विशोधनम्।
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हि तत्॥

दृष्टं मलापकर्षादि अदृष्टं प्रत्यवायपरीहारादि।

अशक्तस्य तु।

सप्ताहं प्रातरस्नायी द्विजः शूद्रत्वमाप्नुयात्।
तस्माच्छूद्रत्वशुद्ध्यर्थं रविवारे समाचरेत्॥

कात्यायनः।

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्॥

ाय सर्व्वथा मन्त्रनिषेधः किन्तु मन्त्रबाहुल्यनिषेधः।

गृहेऽपि च द्विजातीनां मन्त्रवत्स्नानमिष्यते।
विधिलोपं न ते कुर्य्युः सामर्थ्ये सति कर्हिचित्॥

ति जैमिनिस्मृतेः।

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्म्मणः।
प्रातर्न तनुयात्स्नानं होमलोपो विगर्हितः॥

इति कात्यायनोक्तलिङ्गाच्च ।

वशिष्ठः ।

प्रातः सङ्क्षेपतः स्नानं शौचार्थन्तु तदिष्यते ।

मन्त्रैस्तु विधिनिष्पाद्यं मध्याह्ने (तु) स्यात् सविस्तरम् ।

अत्र प्रातःशब्देन उदयात्प्राक्तनाश्चतस्रो नाड्य उच्यन्ते ।

अरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात् ।

इति बौधायनोक्तेः ।

व्यासः ।

स्नानन्तु द्विविधं प्रोक्तं मुख्यगौणप्रभेदतः ।

तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं स्मृतम् ॥

जलनिष्पाद्यं वारुणम् ।

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।

क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम् ॥

तत्र प्रातःस्नानं नित्यम् ।

प्रातः समाचरेत् स्नानं तच्च नित्यमिति स्मृतम् ।

इति मार्कण्डेयोक्तेः ।

चन्द्रसूर्य्योपरागादौ सूतकादौ च यत् स्नानं तन्नैमित्तिकम् ।

गृध्र(भास)वायसमार्ज्जारखरोष्ट्रश्वानशूकरान् ।

अमेध्यानि च संस्पृश्य सवासा जलमाविशेत् ॥

इत्याद्यपि नैमित्तिकमेव ।

पुष्येऽर्के जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।

अमायाञ्च नदीस्नानं पुनात्यासप्तमं कुलम् ॥

इत्याद्युक्तं स्नानं काम्यम् ।

धर्म्मक्रियां कर्त्तुं यत् पूर्व्वं स्नानं तत् क्रियाङ्गम् ।

मलापकर्षणं नाम स्नानमभ्यङ्गपूर्व्वकम् ।
मलापकर्षणायैव प्रवृत्तिस्तस्य नान्यथा ॥

इत्याद्युक्तं स्नानं मलापकर्षणम् ।

प्रसङ्गादभ्यङ्गे निषिद्धास्तिथयः कथ्यन्ते ।

गर्गः ।

पञ्चदश्यां चतुर्द्दश्यामष्टम्यां रविसंक्रमे ।
द्वादश्यां सप्तमीषष्ठ्योस्तैलस्पर्शं विवर्ज्जयेत्* ॥

तथा ।

षष्ठ्यष्टमी पञ्चदशी पक्षद्वयचतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे क्षुरे भगे ॥

अत्र यथाक्रमं द्रष्टव्यम् ।

प्रचेतास्तु ।

सार्षपं गन्धतैलञ्च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

---

* वारविशेषेष्वपि अभ्यङ्गनिषेधो दृश्यते—तथाच ज्योतिषम् ।

सन्तापः कान्तिरल्पायुर्धनं निधनमेव च ।
आरोग्यं सर्व्वकामाप्तिरभ्यङ्गे भास्करादिषु ॥

अस्य प्रतिप्रसवोऽपि तत्रैव ।

रवौ पुष्पं गुरौ दूर्व्वां भूमिं भूमिजवासरे ।
शुक्रे च गोमयं दद्यात्तैलदोषोपशान्तये ॥ इति ।

तैलाभ्यङ्गनिषेधे तु तिलतैलं निषिध्यते ।
अभ्यङ्गस्य निषेधे तु सार्षपादेरपीष्यते ॥

व्यासः ।

तथा दर्शे च सप्तम्यां संक्रान्तौ च रवेर्दिने ।
चन्द्रसूर्य्योपरागे च स्नानमामलकैस्त्यजेत् ।
यत्तु तीर्थादिषु स्नानं क्रियास्नानं तदीरितम् ॥

स्नानमात्रादयत्र फलं तत् क्रियास्नानमित्यर्थः ।

अथ गौणस्नानं विविच्यते ।

तत्र योगियाज्ञवल्क्यः ।

मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसञ्चैव सप्त स्नानान्यनुक्रमात् ॥

अत्र गौणमध्ये मुख्यस्य वारुणस्योपादानं दृष्टान्तार्थम् । सामर्थ्ये सति वारुणं मुख्यम् । एवमापदि इमानीत्यर्थः ।

जावालिरपि ।

असामर्थ्याच्छरीरस्य देशकालाद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
आपोहिष्ठादिभिर्मान्त्रं मृदालम्भश्च* पार्थिवम् ।
आग्नेयं भस्मना† स्नानं वायव्यं रजसा गवाम्‡ ॥
अद्भिः सातपवर्षाभिः स्नानं तद्दिव्यमुच्यते ।

---

* मृदालम्भो गङ्गामृत्तिकातिलककरणः ।

† भस्मना संस्कृतभस्मना इति छन्दोगाह्निकः ।

‡ गारजः(स्मृत)स्नानमिति आह्निकतत्त्वे पाठः ।

वारुणस्यावगाहश्च (ह्यश्च) मानसं विष्णुचिन्तनम्॥ इति।

अग्निरस्नावगाहाशक्तौ जाबालिः।

आग्नेयस्नं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम्।
आर्द्रेण वाससा वापि मार्ज्जनं कापिलं विदुः*॥
ऋचाभिमन्त्रितैस्तोयैः प्रोक्षयेन्मूर्द्धि सर्व्वतः।
अनुकल्पमिदं स्नानं सर्व्वपापहरं नृणाम्॥
शन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम्।
एतैस्तु पञ्चभिर्मन्त्रै†र्मन्त्रस्नानं तदुच्यते॥ इति।

अत्र मन्त्राणां समुच्चयो विकल्पो वा शक्त्याद्यपेक्षया योज्यः। स्नानञ्च एकेन अनेकेन वा वाससा कार्य्यम्।

एकेन वाससा स्नायाद्द्वाभ्यामनियमः स्मृतः।
बहुभिश्च प्रतीषेधः स्नाने फलमभीप्सताम्॥

इति विष्णूक्तेः।

नैकवासाः क्रियां कुर्य्यात् स्नानकर्म्म विना क्वचित्।

इति च।

अन्यत्रापि।

अस्पृश्यस्पर्शने चैव वार्त्तायां पुत्रजन्मनि।
एतद्विवाससा कार्य्यमन्यत्रैकेन वाससा॥ इति।

तथा।

---

* दैविकं मार्ज्जनं स्मृतम् इति आर्त्तानां पाठः।

† एभिश्चतुर्भिर्मन्त्रैर्मन्त्रस्नानमुदाहृतम्। इति आर्त्तानां पाठः स एव समीचीनः मन्त्राणां पञ्चसङ्ख्यात्वासम्भवात्।

न नग्नो नान्यदीयेन नार्द्रेण न सूच्या ग्रथितेन न विकृतेन च वाससा स्नायादित्याचारतिलके।

जाबालिः।

स्रोतसोऽभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै।
स्थावरेषु च सर्व्वेषु आदित्याभिमुखस्तथा॥

सङ्ग्रहेऽपि।

स्रोतसोऽभिमुखः स्नायान्मार्ज्जने चाघमर्षणे।
अन्यत्रार्कमुखो रात्रौ प्राङ्मुखोऽर्कमुखोऽपि वा।
सन्ध्यामुखस्तु सन्ध्यायां स्नानं कुर्व्वीत यत्नतः॥ इति।

आपस्तम्बः।

प्रवाहाभिमुखं स्नानमृक्सामाथर्व्ववेदिनाम्।
आदित्याभिमुखं स्नानं याजुषस्य सदैव हि॥

अतएव सूर्य्याभिमुखो निमज्जेदिति वाजसनेयिस्नानसूत्रम्। तदपि स्थावरविषयमिति केचित्। निमज्जनमात्रं सूर्य्याभिमुखं तदमन्त्रं स्नानन्तु प्रवाहाभिमुखं तच्च समन्त्रकमित्यन्ये। आपस्तम्बानामपि सूर्य्याभिमुखं स्नानम्।

तथाच धर्म्मप्रश्ने द्वितीयाध्याये।

अग्नेरपोऽभ्यवेयादनभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशे-दिति सर्व्वत्रोदकस्पर्शनविधिरिति।

यत्तु तत्रैव प्रथमाध्याये सशिरोऽवमज्जनमप्सु वर्ज्जयेदस्तमिते च स्नानमिति सशिरःस्नानं निषिद्धं तत् स्नातकविषयमित्युज्ज्वलकार-उक्तवान्।

*यत्तु ।

सिंहकर्कटयोर्मध्ये सर्व्वा नद्यो रजस्वलाः ।

तासु स्नानं न कुर्व्वीत कृतं चेन्निष्फलं भवेत्* ॥

इत्यत्रिवचनं तत्समुद्रगाव्यतिरिक्तक्षुद्रनदीविषयम् ।

गङ्गादिसरितः सर्व्वाः शु(भा:)द्धाः सर्व्वत्र सर्व्वदा ।

इति विशेषोक्तेः ।

अत्र विशेषो वामनपुराणे ।

निषिच्य तो(रं)रे कुशपिञ्जुलानि

पूर्व्वोत्तराग्राणि मृदं न्यसेच्च ।

प्रक्षाल्य पादौ च मुखञ्च कण्ठे

यज्ञोपवीतञ्च जलं पिबेच्चिः ॥

कण्ठे यज्ञोपवीतमित्येतद्वचनं कण्ठावलम्बित्वार्थमित्येतदर्थम् । तथाच निवीतं कृत्वा प्रक्षालयेदित्यर्थः ।

कराभ्यां धारयेद्दर्भान् शिखाबन्धं विधाय च ।

प्राणायामांस्तथा कुर्य्यात् कालज्ञाने यथाविधि ॥ इति ।

कालज्ञानम् अद्य ब्रह्मणो द्वितीये परार्द्धे इत्यादि ।

उत्तमन्तु नदीस्नानं तड़ागे मध्यमं स्मृतम् ।

कूपे स्नानन्तु सामान्यं भाण्डस्नानकृतं तथा ॥

---

*आह्निकतत्त्वे तु ।

यव्यद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः ।

तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाम् ॥ इति ।

वचनमिदमेवंरूप दृश्यते । यव्यशब्दो मासपर्य्यायः ।

पत्रि: ।

स्नानं रजकतीर्थे च भोजनं गणिकागृहे ।
ये कुर्व्वन्ति द्विजा मोहात्ते यान्ति निरयं परम् ॥
नमो नारायणायेति सप्तवारं जपन् व्रजेत् ।
नाभिमात्रे जले स्थित्वा स्नात्वा केशान् द्विधा द्विजः ॥
निरुध्य कर्णौ नासाञ्च त्रिःस्नात्वो मज्जनं ततः ।
स्नाने दक्षिणतः कार्य्या मलकास्तु प्रयत्नतः ॥
सजीवपितृकैश्चैवमन्यैरुभयतः सदा ।
हिराचम्याभिषेकन्तु कुर्य्यादष्टाक्षरेण तु* ।
अन्तर्जले जपेन्मन्त्रस्त्रिःस्नात्वाघमर्षणम् ॥

अघमर्षणम् ऋतं च सत्यं चेति सूक्तम् ।

द्रुपदां† वा त्रिरावृत्य आयं गौरिति‡ वा ऋचम् ।
प्राणायामं सशिरस्कं जलेऽन्तस्त्रिर्जपेत्तथा ।
आवर्त्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥ इति ।

ाघमर्षणे षट्पचा वाजसनेयिविषयाः । तत्सूत्रे तथाविधानात् ।
ाश्वलायनस्नानविधिस्तद्‌गृह्यपरिशिष्टे ।

---

* हिराचम्याभिषेकन्तु कार्य्यौ ह्यष्टाक्षरेण तु । अयमेव पाठः समोचीनः, कर्तृपदस्य ान्तत्वात् । ओं नमो नारायणाय इत्यात्मकेन ।

† द्रुपदादिव मुमुचानः स्विन्नः स्नात्वी(तो) मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ २०अ. २०म. यजुः ।

‡ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन् स्वः ॥ ३अ. ६म. यजुः ।

प्रात: सह गोमयेन कुर्य्यान्मृदा मध्यन्दिने सायं मृदाभिरद्भि:। न प्रात: स्नानात् प्राक् सन्ध्यामुपासीत। प्रात: प्रातरुत्सृष्टं गोमयमन्तरिक्षस्थं संगृह्य भूमिष्ठं वोपर्य्यधश्च संत्यक्तं तीर्थमेत्य धौतपाणिपादमुख आचम्य सन्ध्योक्तवदाभ्युक्षणादि सर्व्वं कृत्वा त्रिराचम्य संयतप्राण: सङ्कल्प्य गोमयं वीक्षितमादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रिधा विभज्य दक्षिणं भागं प्रणवेन दिक्षु विन्यस्य उत्तरं तीर्थे क्षिप्त्वा मध्यमं मा न: स्तोके* इत्यृचाऽभिमन्त्र्य गन्धद्वारामित्यनेन† मूर्द्धादिसर्व्वाङ्गमालिप्य प्राञ्जलिर्वरुणं हिरण्यशृङ्गमिति द्वाभ्यां‡ प्रसम्राजे बृहदर्चा इति सूक्तेन च§ प्रार्थ्य या प्रवत इत्येतया तीर्थमभिमृश्य अवगाह्य स्नातो वै

---

* मा न: स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिष:।
मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्त: सदसि त्वा हवामहे॥ १६अ. १६म. यजु:।

† गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्व्वभूतानां त्वामिहोपह्वये श्रियम्॥

‡ हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत्।
देवा इदस्य हविरद्यमायन् यो अर्व्वन्तं प्रथमो अध्यतिष्ठत्॥ २९अ. २०म. यजु:।
ईर्मान्तास: सिलिकमध्यमास: संशूरणासो दिव्यासो अत्या:।
हंसा इव श्रेणिशो यतन्ते यदाक्षिषु दिव्यमज्ममश्वा:॥ ८अ. २१म. यजु:।

§ प्रसम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय।
वि यो जघान शमितेव चर्म्मोपस्तिरे पृथिवीं सूर्य्याय॥ ५म. ८५सू. १ऋक्।

द्विराचम्य मार्जयेदम्बयो यन्त्यध्वभिरित्यष्टाभिः* आपो-
हिष्ठेति नवभिः। अथ तीर्थमङ्गुष्ठेन इमं मे गङ्गे इत्यृचा
त्रिः प्रदक्षिणमालोड्य प्रकाशपृष्ठमन्नोऽघमर्षणसूक्तं† त्रि-
रावर्त्य निमज्ज्योन्मज्ज्य आदित्यमालोक्य द्वादशाञ्जल आप्लुत्य
पाणिभ्यां शङ्खमुद्रयोदकमादाय मूर्ध्नि मुखे बाह्वोरसि
चात्मानं गायत्र्या अभिषिच्य त्वं नो अग्ने वरुणस्य विद्वा-
निति‡ द्वाभ्यां तरत्स मन्दी धावतीति§ सूक्तेन च पुनः
पुनः स्नायात् मूर्ध्नि चाभिषिञ्चेत्। तद्विष्णोः|| अम्बेरघाणो

---

* अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम्। पृञ्चतीर्मधुना पयः ॥ १ ॥
अमूर्या उपसूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरम् ॥ २ ॥
अपो देवीरुपह्वये यत्र गावः पिबन्ति नः। सिन्धुभ्यः कर्त्वं हविः ॥ ३ ॥
अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये। देवा भवत वाजिनः ॥ ४ ॥
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः ॥ ५ ॥
आपः पृणीत भेषजं वरूथं तन्वे मम। ज्योक् च सूर्यं दृशे ॥ ६ ॥
इदमापः प्रवहत यत् किं च दुरितं मयि। यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ ७ ॥
आपो अद्यान्वचारिषं रसेन समगस्महि। पयस्वानग्न आगहि तं मा संसृज वर्चसा ॥ ८ ॥
१म. २३सू. १६—२३ऋक्।

† अघमर्षणसूक्तम् ऋतं च सत्यं चेत्यादिकम्।

‡ त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळो अवयासिसीष्ठाः।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥ ३म. २१अ. यजुः।
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।
अवयक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥ ४म. २१अ. यजुः।

§ तरत् स मन्दी धावति धारा सुतस्यान्धसः। तरत् स मन्दी धावति ॥

|| तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥ ८म ५८सू. १ऋक्।

अंहसो* यत्किञ्चेदं वरुणदैव्ये जने† इत्येता अ(पेत्)पन्
स्रोतोऽभिमुखः सरित्सु स्नायादन्यत्रादित्याभिमुख इति।
पित्राद्युद्देश्यस्नानविषये वृद्धहारीते पैठीनसिः।

सिद्धतीर्थे प्रतिकृतिं कृत्वा कुशमयीं नरः।
मज्जयेत् यमुद्दिश्य सोऽष्टमांशं फलं लभेत्॥
पितरं मातरं वापि भ्रातरं श्वशुरं गुरुम्।
यमुद्दिश्य निमज्जेत सोऽष्टमांशं लभेत वै॥

तत्र मन्त्रः।

कुशोऽसि त्वं पवित्रोऽसि ब्रह्मणा निर्म्मितः पुरा।
त्वयि स्नाते स च स्नातो यस्येदं ग्रन्थिबन्धनम्॥ इति।

मृतपित्रादिविषये भृगुः।

मातरं पितरं वापि भ्रातरं वा प्रमीतकम्।
यमुद्दिश्य निमज्जेत अष्टमांशं लभेत सः॥ इति।

एवं स्नात्वा शालग्रामतीर्थेन स्नायात्।
तदुक्तं स्कान्दे काशीखण्डे।

पादोदकेन देवस्य हत्याकोटिसमन्विताः।
शुध्यन्ति नात्र सन्देहस्तथा शङ्खोदकेन च॥
यदत्यर्थं रहस्यन्तु पापमाचरितं (भवेत्) नृभिः।
प्रायश्चित्तन्तु तस्यैकं शालग्रामशिलाजलम्॥

---

* यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि॥ (?) ऋग्वे०? — printed: अधो रचा णो अंहसः प्रतिष्म देव रीषतः। तपिष्ठै रजरो दह॥ ७म० १५सू० १३ऋक्।

† यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि।
अचित्ती यत्तव धर्म्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः॥

स स्नातः सर्व्वतीर्थेषु सर्व्वक्रतुषु दीक्षितः ।
शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् ॥

पाद्मे माघमाहात्म्ये ।

गङ्गा गोदावरी रेवा नद्यो मुक्तिप्रदाश्च याः ।
निवसन्ति सतीर्थास्ताः शालग्रामशिलाजले ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥ इत्यादि ।

गौतमीयतन्त्रे स्नानप्रकरणे ।

शालग्रामशिलातोयं तुलसीदलमिश्रितम् ।
कृत्वा शङ्खं भ्रामयंस्त्रिर्निक्षिपेन्निजमूर्द्धनि ॥
शालग्रामशिलातोयमपीत्वा यस्तु मस्तके ।
प्रक्षेपणं प्रकुरुते ब्रह्महा स निगद्यते ॥
विष्णुपादोदकात् पूर्व्वं विप्रपादोदकं पिबेत् ।
विरुद्धमाचरन्मोहाद्ब्रह्महा स निगद्यते ॥
पृथिव्यां यानि तीर्थानि तानि(तीर्थानि) सर्व्वाणि सागरे ।
ससागराणि तीर्थानि पादे विप्रस्य दक्षिणे ।
ततः सङ्कल्पतो देवान्मनुष्यांस्तर्पयेत्पितॄन् ॥

अत्र विशेषो वायवीये ।

अमृतेन समा ज्ञेयाः पुरतः केशबिन्दवः ।
सुराबिन्दुसमा ज्ञेयाः पृष्ठतः केशबिन्दवः ॥
पिबन्ति शिरसो देवाः पिबन्ति पितरो मुखात् ।
मध्यतः सर्व्वगन्धर्व्वा अधस्तात्सर्व्वजन्तवः ॥

तस्मात्स्नायं न मृज्येत अम्बरेण करेण वा।

येशास्तृप्तिषणतः स्नात्वा जलमध्येन तर्पयेत्॥ इति।

पराशरः।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते।

तर्पणन्तु भवेत्तस्य ह्यङ्गत्वेन प्रकीर्त्तितम्॥

सव्येन चोपवीतेन देवतानाञ्च तर्पणम्।

पितृणामपसव्येन मनुष्याणां निवीतिना॥

विष्णुः।

स्नातश्चार्द्रवासा देवर्षिपितृतर्पणमम्भःस्थ एव कुर्व्वीत तर्पणे

चाशून्यं करं कुर्य्यात्।

तथाच योगियाज्ञवल्क्यः।

अनामिकाधृतं हेम तर्ज्जन्या रौप्यधारणम्।

कनिष्ठिकाधृतं खड्गं ततस्तर्पणमाचरेत्॥ इति।

स्नानाङ्गतर्पणप्रकारस्तु आश्वलायनगृह्यपरिशिष्टे।

अथ साक्षताभिरद्भिः प्राङ्मुख उपवीती देवतीर्थेन आहुतिभिर्व्यस्तसमस्ताभिर्ब्रह्मादीन् देवान् सन्तर्प्य तर्पयित्वा अथोदङ्मुखो निवीती सयवाभिरद्भिः प्राजापत्येन तीर्थेन ऋषींस्ताभिर्व्याहृतिभिर्द्विर्द्विस्तर्पयित्वा अथ दक्षिणामुखः प्राचीनावीती पितृतीर्थेन सतिलाभिरद्भिर्व्याहृतिभिरेव सोमः पितृमान् यमोऽङ्गिरा अङ्गिरस्वानग्निः कव्यवाहन इत्यादींस्त्रिस्त्रिस्तर्पयेत्। एतत् स्नानाङ्गतर्पणम्। अथ तीरमेत्य दक्षिणामुखः प्राचीनावीती "ये के चास्मत्कुले

जाता"* इति वस्त्रं निष्पीड्य उपवीत्यप उपस्पृश्येति । इदं तर्पणं येषां शाखिनां सूत्रे नास्ति तैरपि कार्य्यम् । पारक्यमविरोधि यदिति वचनात् सर्व्वोपसंहारन्यायाच्च ।

अत्र कर्म्मणि जलेनैव ऊर्द्ध्वपुण्ड्रं कार्य्यम् ।

तदाह विष्णुः ।

जलस्थेन हि कर्त्तव्यं जलेनैवोर्द्ध्वपुण्ड्रकम् ।
यतः शून्यललाटेन स्नातं तन्निष्फलं भवेत् ॥ इति ।

अथ यक्ष्मतर्पणमाह आश्वलायनः ।

स्नानाङ्गतर्पणं कृत्वा यक्ष्मणे जलमाहरेत् ।

तन्मन्त्रस्तु ।

यन्मया दूषितं तोयं शारीरमलसञ्चयात् ।
तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम् ॥ इति ।

अत्रोदकं वहिः क्षिपेत् सदाचारात् प्रकरणाच्च ।

शङ्खोऽन्यथाह ।

आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यत्विति क्रमात् ।
जलाञ्जलित्रयं दद्यादेतत्सङ्क्षेपतर्पणम् ॥

इदमशक्तस्य ज्ञेयं सङ्क्षेपशब्दश्रवणात् ।

अत्र विशेषमाह शौनकः ।

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्य्यं देवपित्र्यविवर्ज्जितम् ॥

---

* अपुत्रा गोत्रिणो मृताः । ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम् ॥

उद्धृतैरुदकैः स्नातो न कुर्य्यादन्यदा पुनः ।
स्नानाङ्गं तर्पणं विद्वांस्ततोऽन्यत्र न स्नापयेत् ॥ इति ।

अत्र विशेषमाह देवलः ।

अलाभे देवखातानां सरितां सरसां तथा ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥

पारक्ये सर्व्वसत्त्वोद्देशेनानुत्सृष्टे ।

भृगुः ।

मार्गान्तरा नदीप्राप्तौ स्नानादि परपारतः ।
अर्व्वाक्तीरे सरस्वत्या एष मार्गगतो विधिः ॥

इदमपि अर्व्वाक्तीरे तीर्थविशेषाभावे द्रष्टव्यमिति त्रिस्थलीसेतौ ।

गृहे स्नानप्रकारमाह व्यासः ।

शीतास्वपो निषिच्यैव* मन्त्रसम्भारसंभृताः ।
गृहेऽपि शस्यते स्नानं तद्धीनमफलं भवेत् ॥

गृहे चेत्तदमन्त्रवदिति मन्त्रबाहुल्यनिषेधार्थमित्युक्तमेव ।

मन्त्रमाह कात्यायनः ।

इमं देवा असपत्न†मापोहिष्ठा इति त्र्यृचः‡ ।

---

* निषिच्य।प्या इति आह्निकतत्त्वे पाठः ।

† इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इममसुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳪ राजा । १०अ. १८म. यजुः ।

‡ आपोहिष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन ।
महेरणाय चक्षसे ॥ ११अ. ५०म. यजुः ।

इदमापः* शन्नो देवी† द्रुपदादिव‡ एव च ॥

इति सप्त, सप्तारा महोमयादयः । इदन्तु नद्यादिस्नानाभावविषयम् ।

यत्तु षट्त्रिंशन्मते ।

आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः ।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा ॥

इत्येतस्य प्राधान्यकथनं तदातुरविषयम् । उष्णोदकं त्वातुरस्येति विशेषस्मृतेः ।

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्भवति न तु स्नानफलं§ भवेत् ॥

इति शङ्खेन निषिद्धतया तस्योक्तत्वात् ।

---

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ ११अ. ५१म. यजुः ।
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ ११अ. ५२म. यजुः ।
इदमापः प्रवहतावद्यं च मलं च यत् ।
यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ।
आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥ ६अ. १७म. यजुः ।
शन्नो देवीर(भी)भिष्टये आपो भवन्तु पीतये ।
शंयोरभिस्रवन्तु नः ॥ १६अ. १२म. अथर्वन् ।
द्रुपदादिव मन्त्रोऽयं १८४ पृष्ठे प्रदर्शितः ।
स्नानफलं वैधम् आयुर्वेदीयं तु भवत्येव ।

उष्णाम्बुनाधः कायस्य परिषेको बलावहः ।
तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषाम् ॥ इति चरकोक्तेः ।

अत्र विशेषमाह ब्रह्ममनुः ।

मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥ इति ।

तदेतत् सर्व्वमनातुरस्य नद्यादिसद्भावविषयम् ।

नद्याद्यभावे त्वाह यमः ।

नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः ॥

परोदकैः शीतोदकैरित्यर्थः ।

तथा ।

गृहस्नाने न कुर्व्वीत मार्ज्जनं चाघमर्षणम् ।
नान्तरा तर्पणं कुर्य्यात् पश्चादाचम्य शुध्यति ॥
गृहे स्नानं यदा कुर्य्याद्दस्तमूर्द्धं परित्यजेत् ।
अधश्चाग्रेण सम्प्रोक्ष्य पाराशर्य्यवचो यथा ॥

पतिमत्स्त्रीविषये व्यासः ।

कुलस्त्री सशिरस्कं स्नायादुत्सवे सति तैलतः ।
वारे वा पैतृके कर्म्मण्यन्यदाकण्ठसंप्लवा ॥ इति ।

इति गृहस्नानविधानम् ।

अथ वस्त्रपरिधानविधिः ।

तत्र नाङ्गेभ्यस्तोयमुद्धरेदिति निषेधात् किञ्चित्कालं विलम्ब्य गात्रसम्मार्ज्जनं कार्य्यम् ।

शुष्कं शीर्षञ्च कर्त्तव्यं तथा शुष्केण वाससा ।
स्नातो नाङ्गानि संमृज्यात् पाणिना किन्तु वाससा ॥

इति विष्णुपुराणात् ।

करेण नोन्मृजेद्गात्रं स्नानवस्त्रेण वा पुनः ।
शुनोच्छिष्टं भवेद्गात्रं पुनः स्नानेन शुध्यति ॥

इति च पारिजातोक्तेः ।

वस्त्रविषये मनुः ।

ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्वणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥

रक्तं धातुरक्तमुल्वणं निविडम्* । नीलं नीलीरक्तम् । मलवत् जीर्णम् ।

मिताक्षरायाम् ।

नीलीरक्तं यदा वस्त्रं विप्रः स्वाङ्गेषु धारयेत् ।
तन्तुसप्ततिसंख्याके स वसेन्नरके ध्रुवम् ॥

स्कान्देऽपि ।

नीलीरक्तन्तु यद्वस्त्रं दूरतस्तद्विवर्ज्जयेत् ।
स्त्रीणां क्रीड़ार्थसंयोगे शयनीये न दुष्यति ॥
मृते भर्त्तरि या नारी नीलीवस्त्रन्तु धारयेत् ।
भर्त्ता तु नरकं याति सा नारी तदनन्तरम् ।
कम्बले पट्टसूत्रे च नीलीदोषो न विद्यते ॥

इति कम्बलादौ प्रतिप्रसवः ।

---

* उत्कटरक्तविशेषमिति आर्य्याः ।

मनुः ।

अधौतं कारुधौतञ्च पूर्व्वेद्युर्धौतमेव च ।
अस्तु यत्पीड़ितं वस्त्रं तत्त्याज्यं सर्व्वथा द्विजैः ॥
अष्टहस्तं नवं श्वेतं सदशं नान्यधारितम् ।
अहतं तद्विजानीयात् सर्व्वकर्म्मसु पावनम् ॥

योगीश्वरः ।

स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च ।
प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षालयेत्ततः ॥
ईषद्धौतं नवं श्वेतं सदशं य(न्न)न धारितम् ।
अहतं* तद्विजानीयात् सर्व्वकर्म्मसु पावनम् ॥   इति ।

तथा ।

अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा ।
शस्तं तन्माङ्गलीकेषु तावत्कालं न सर्व्वदा ॥   इति ।

यमः ।

एकवस्त्रो न भुञ्जीत न कुर्य्याद्देवतार्च्चनम् ।
न कुर्य्यात्पितृकर्म्माणि होमं दानं तथा जपम् ॥   इति ।

तथा ।

आजानुमूलं वस्त्रं स्यात्पञ्चकच्छन्तु धारयेत् ।
तन्न्यूनमधिकञ्चैव सर्व्वकर्म्मसु गर्हितम् ॥
कुक्षिद्वये तथा पृष्ठे नाभौ द्वौ परिकीर्त्तितौ ।
वस्त्रस्य धारणं यच्च पञ्चकच्छन्तु तद्विदुः ॥

---

* आहतमिति आर्त्ताः पठन्ति ।

यद्वा ।

कट्यां नाभौ तथा पृष्ठे कच्छत्रयमुदाहृतम् ।
कच्छत्रयसमायुक्तो यो विप्रः स शुचिः स्मृतः ॥
एककच्छो द्विकच्छस्तु मुक्तकच्छस्तथैव च ।
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः ॥

वस्तुतस्तु शुष्कवस्त्रत्वमेव कार्य्यम् ।

प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनाच्छुचि ॥

पश्चिमदक्षिणाग्रप्रसारणे पुनः प्रक्षालनविधानात्तथा न कार्य्यमिति भावः । अधाग्रं दशा हृद्यवत् ।

शुष्काभावे गौतमः ।

सप्तवाताहतं वस्त्रं शुष्कवत्प्रतिपादितम् ।
आर्द्रञ्चापि द्विजातीनामाहृतं गौतमादिभिः ॥
धौताधौतं तथा दग्धं सन्धितं रजकाहृतम् ।
शुक्लमूत्राद्यसंसृष्टमाविकं चातसीभवम् ।
पवित्रमिति विज्ञेयं सर्व्वकर्मसु संशयः ॥

इति पाद्मे । अतसीभवं क्षौमम् ।

नववस्त्रपरिधाने श्रीपतिः ।

मार्त्तण्डे च धनं (व्रणः) यमः प्रमथधरे क्लेशः सदा भूमिजे
वस्त्रं (वस्त्रे) लाभकरं बुधे सुरगुरौ विद्यागमः सम्पदः ।
नानायोगरतिः प्रमोदवनिताद्यस्त्रादिलाभो भृगौ
दीनः (दैन्यं) शाश्वतरोगवांश्च मनुजो धृत्वाम्बरं सूर्य्यजे ॥

तथा।

रोहिणीषु करपञ्चकेऽश्विभे
त्र्युत्तरेऽपि च पुनर्व्वसुद्वये।
रैवतीषु वसुदैवते च भे*
नव्यवस्त्रपरिधानमिष्यते॥

नववस्त्रपरिधानं स्वसूत्रोक्तमन्त्रेण कार्य्यम्। वासश्छत्रोपानहश्चा-पूर्व्वाणि चेन्मन्त्र इति कात्यायनोक्तेः।

शातातपोऽपि।

परिधाय नवं वास उत्तरीयञ्च मन्त्रतः।
द्विरा(च)चामेद्द्विजो वस्त्रे धौते विपरिधाय च॥

द्वितीयवस्त्राभावे कात्यायनः।

एकं चेत्पूर्व्वस्योत्तरवर्गेण प्रच्छादयीतेति।

जातूकर्ण्यः।

अभावेद्वितीयस्य वस्त्रचीरं तदा भवेत्।
द्व्यङ्गुलं त्र्यङ्गुलं वापि चतुरङ्गुलमेव वा।
सूत्रं वस्त्राकृतिं कुर्य्यात्तेन स्यादुत्तरीयकम्॥

इदमुत्तरीयं यज्ञोपवीतेन सह योज्यम्। अजिनं वासो वा दक्षिणत उपनीय दक्षिणं बाहुमुद्धरते अवधत्ते सव्यमित्यापस्तम्बोक्तेः।

अत्र विशेषः सङ्गृहे।

---

* हस्ताचित्रास्वातिविशाखानुराधासु। वसुदैवते धनिष्ठायाम्। त्र्युत्तरे उत्तरात्रये उत्तर-फल्गुनी उत्तराषाढ़ा उत्तरभाद्रपदेत्यर्थः।

उत्तरीयं योगपट्टं तर्ज्जन्यां रजतं तथा।

न जीवत्पितृकैर्धार्य्यं ज्येष्ठो वा विद्यते यदि॥ इति।

जीवत्पित्रग्रजो नोत्तरीयं कुर्य्यादित्यत्रोत्तरीयं नोपरिवासोमात्रं किन्तु सग्रन्थिपरिमण्डलं वस्त्रमुत्तरीयं कुर्य्यादिति जातूकर्ण्योक्तम्। अतएव तृतीयमुत्तरीयार्थे इति तृतीयमुपवीतं तत्स्थानापन्नमपि निषिद्धम्। नववस्त्रमात्रं द्वितीयम्। तथा पादुकारोहणं चैव इत्यादि वचनात्तदारोहणमपि न कार्य्यम्॥

स्त्रिया विशेषः सङ्ग्रहे।

यत्र पुंसः सचेलं स्यात् स्नानं तत्र सुवासिनी।

कुर्व्वीतैवाशिरःस्नानं शिरोरोगी जटी तथा॥

रजोदोषनिमित्तादिस्नानं सशिरसं भवेत्।

विधवायाः शिरःस्नानं सर्व्वदैव विधीयते॥ इति।

तथा।

स्नानङ्कृत्वा चार्द्रवस्त्रं त्यजेन्नग्नामधो द्विजः।

गृहस्नानमथो कृत्वा विसृजेदेतदूर्द्धतः।

अज्ञानादन्यथा कुर्व्वन् पुनः स्नानेन शुध्यति॥

ततस्तदार्द्रवस्त्रं चतुर्गुणीकृत्य दशायां धृत्वा निष्पीड़येत् मध्याह्ने चेत्तर्पणादूर्द्धम्।

इति वस्त्रपरिधानविधानम्।

अथ तिलकधारणविधिः।

पाराशरमाधवीये।

ऊर्द्धपुण्ड्रविहीनस्य श्मशानसदृशं मुखम्।
अवलोक्य मुखं तस्य ह्यादित्यमवलोकयेत्॥ इति।
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्।
भस्मीभवति तत्सर्व्वमूर्द्धपुण्ड्रं विना कृतम्॥

इति बृहन्नारदीयवचनेन तिलकाकरणे प्रत्यवायश्रवणात् तिलक-विधिरावश्यकः।

यत्तु।

तिलकं सर्व्वदा कुर्य्याच्छ्रौते स्मार्त्ते च कर्म्मणि।
कर्त्ता वाप्यथवा भोक्ता न कुर्य्याच्छ्राद्धकर्म्मणि॥ इति।

तत्तिर्य्यक्पुण्ड्रनिषेधपरम्।

ऊर्द्धञ्च तिलकं कुर्य्याद्दैवे पित्रे च कर्म्मणि।
निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्॥

इति बृहत्पाराशरोक्तेः।

तथा वासुदेवोपनिषदि।

ॐ नमस्कृत्य भगवान्नारदः सर्व्वेश्वरं वासुदेवं पप्रच्छ भगवन्नूर्द्धपुण्ड्रविधिं द्रव्यमन्त्रस्थानादिसहितं मे ब्रूहीति नारदेन पृष्टो भगवान् द्वितीयकण्डिकायां तद्विधिमाह।

अथ गोपीचन्दनं नमस्कृत्य उद्धृत्य।

गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव॥

इति प्रार्थ्य इमं मे गङ्गे* इति जलमादाय विष्णोर्नु कमिति† मर्द्दयेत् । ततः अतो देवा अवन्तु नः‡ इत्येताभिर्विष्णुगायत्र्या च त्रिवारमभिमन्त्र्य ।

शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

इति मां ध्यात्वा गृहस्थो ललाटादिषु द्वादशस्थानेषु अनामि(का)-काङ्गुल्या विष्णुगायत्र्या केशवादिभिर्द्वादशनामभिर्वा धारयेत् । ब्रह्मचारी वानप्रस्थो वा ललाटकण्ठहृदयबाहुमूलेषु यतिस्तु तर्ज्जन्या शिरोललाटहृदयेषु धारयेदित्यादि ।

तथा तत्रैव चतुर्थकण्डिकायां भस्मधारणमुक्तम् ।

अथ रात्रावग्निहोत्रभस्मना अग्नेर्भस्मासीद्विष्णुस्त्रीणि पदानीति§ त्रिभिर्मन्त्रैरुद्धूलनं कुर्य्यादय एवं विधिना गोपीचन्दनं धारयेद्य एतदधीते स सर्व्वेभ्यः पापेभ्यः पूतो भवतीति ।

भारते दानधर्म्मे ।

---

* इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥

† विष्णोर्नुकं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः विष्णवे त्वा ॥ ५अ. १८म. यजुः ।

‡ अतो देवा अवन्तु नः यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्तधामभिः ॥ १म. २२सू. १६ऋक् ।

§ त्रीणि पदानि अश्विनोः आविः सन्ति गुहा परः ।
कवी ऋतस्य पत्मभिः अर्वाक् जीवेभ्यः परि ॥ ८म. ८सू. २३ऋक् ।

आह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्त्ति यः ।
बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥

खण्डेऽप्येवमेव पठितम् ।

नारदीयेऽपि ।

ऊर्द्ध्वपुण्ड्रं यः करोति तुलसीमूलमृत्स्नया ।
तत्रैव नेत्रं तस्य स्यान्मूर्द्ध्नीन्दोर्बिभ्रयात्कलाम् ॥

संहितायामपि ।

ऊर्द्ध्वपुण्ड्रं मृदा कार्य्यं विप्रेण ब्रह्मवादिना ।
उद्धृतासीति मन्त्रेण* वैष्णवेन विशेषतः ॥ इति ।

तत्प्रकारविशेष उक्तः पाराशरमाधवीये ब्रह्माण्डे ।

ऊर्द्ध्वपुण्ड्रप्रमाणानि द्रव्याण्यङ्गुलिभेदतः ।
वर्णानि मन्त्रान्देशांश्च प्रवक्ष्यामि फलानि च ॥
पर्व्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते ।
मृद एतास्तु सङ्ग्राह्या वर्ज्जयेदन्यमृत्तिकाः ॥
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा ।
श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ॥
अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् ।
अनामिकाऽन्नदा नित्यं मुक्तिदा च प्रदेशिनी ॥

---

* उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
आहर मम गात्राणि सर्व्व पाप प्रमोचय ॥

एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् ।
दर्भपाणिः प्रकुर्व्वीत भ्रू(भ्रू)मध्यात्तु प्रदीपवत् ॥
श्रीकामः पुष्टिकामस्तु यथेच्छं तिलकं चरेत् ।
नासामूलं समारभ्य वंशपत्रनिभं शुभम् ।
वंशकामो द्विजः कुर्य्यात्तिलकं चन्दनादिना ॥

आदिशब्दाद्भस्मतोयमृदो यथाकालं ज्ञेयाः ।

तदुक्तं पारिजाते ।

स्नात्वा पुण्ड्रं मृदा कुर्य्याद्धुत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धेन जलमध्ये जलेन च ॥ इति ।

तथा ।

वर्त्तिदीपाकृतिं वापि वेणुपत्राकृतिं तथा ।
पद्मस्य मुकुलाकारं तथैव कुमुदस्य च ॥
मत्स्यकूर्म्माकृतिं वापि शङ्खाकारमतः परम् ।
दशाङ्गुलप्रमाणं तदुत्तमोत्तममुच्यते ।
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ॥
षट् सप्त पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ।
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं स्मृतम् ॥
न पादुकस्थो नादर्शे न जले वावलोकयेत् ।
न प्रावृतशिराः कुर्य्यात्तिलकं धर्म्मसाधनम् ॥

धर्म्मसाधनं कर्म्माङ्गम् ।

ललाटे केशवं विद्यान्नारायणमथोदरे ।
माधवं हृदि विन्यस्य गोविन्दं कण्ठकूपके ॥

विष्णुञ्च दक्षिणे कुक्षौ तद्भुजे* मधुसूदनम्।
त्रिविक्रमं कर्णमूले वामकुक्षौ तु वामनम्॥
श्रीधरञ्च हृषीकेशं वामयोर्बाहुकर्णयोः।
पद्मनाभं पृष्ठदेशे ककुत्† दामोदरं स्मरेत्।
तत्प्रक्षालिततोयञ्च वासुदेवं शिरो न्यसेत्॥ इति।

ॐ केशवाय नम इत्या(द्य)दिरत्र प्रयोगः।

आचारदीपेऽत्र विशेषः।

ऊर्द्धपुण्ड्रं द्विजस्योक्तं क्षत्रियस्य त्रिपुण्ड्रकम्।
अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रजातिषु।
यद्वा समस्तजातीनामूर्द्धपुण्ड्रं परं स्मृतम्॥ इति।

तत्रैव।

ऊर्द्धपुण्ड्रं मृदा कुर्य्यात्त्रिपुण्ड्रं भस्मना (सदा) तथा।
तिलकं वै द्विजः कुर्य्याच्चन्दनेन यदृच्छया॥ इति।
अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि।
माङ्गल्येषु च सर्व्वेषु न धार्य्यं गोपिचन्दनम्॥

...वाहे देवविसर्ज्जन(देवकोत्थापन)पर्य्यन्तम्।

...खानससूत्रे तु भस्मनोर्द्धपुण्ड्रमुक्तम्।

भूतिः स्थेति भस्म गृहीत्वा ललाटहृदयबाहुकण्ठेषु आदित्यः सोमो नम इत्यूर्द्धाग्रमालिप्येति।
वृत्तं वा चतुरस्रं वा बिन्दुमर्द्धेन्दुमेव वा।

---

* तद्भुजे दक्षिणभुजे इत्यर्थः दक्षिणस्यैव प्रक्रान्तत्वात्।

† ककुत् ककुदि विभक्तिलोप आर्षः यथाश्रुतकल्पने अर्थस्यासङ्गतेः। एवं शिर इत्यत्रापि।

ललाटे यादृशं पुण्ड्रं लिखितं सितभस्मना ।
तादृशं भुजयोर्मूर्ध्नि स्तनयोश्चान्तरे लिखेत् ॥

इति पुरुषार्थप्रबोधग्रन्थकृतोक्तम् । अतएव अग्निहोत्रानन्तयाज्ञिकैरूर्द्ध्वपुण्ड्रं (क्रि)ध्रियमाणं दृश्यते । ब्रह्मचारिभिर्विन्ध्यकारश्च तेन यथाचारं व्यवस्थातव्यम् । येनास्य पितरो याता इति मनुवचनात् ।

शाखां शिखाञ्च पुण्ड्रञ्च समयाचारमेव च ।
पूर्व्वैराचरितं कुर्य्यादन्यथा पतितो भवेत् ॥

इति विष्णूक्तेश्च ।

तथा ।

शङ्खचक्राद्यङ्कनन्तु तुलसीदलभक्षणम् ।
यः कुर्य्यान्नियमं नित्यं स याति परमां गतिम् ॥ इति

शङ्खः ।

नान्यं देवं नमस्कुर्य्यान्नान्यं देवं समर्च्चयेत् ।
चक्राङ्कितः सदा तिष्ठन्मद्भक्तः पाण्डुनन्दन ॥ इति ।

स्कान्देऽपि काशीखण्डे ।

शङ्खचक्राङ्कितनुः शिरसा मञ्जरीधरः ।
गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः ॥
शिखा यज्ञोपवीतञ्च त्रिपुण्ड्रञ्चैव नित्यकम् ।
ब्राह्मणस्य तथैवेदं शङ्खचक्रादिधारणम् ॥ इति ।

---

* येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति ॥

आश्वलायनस्तु ।

शिवकेशवयोश्चिह्नं शूलचक्रादिकं द्विजः ।

न धारयेत मतिमान् वैदिके वर्त्मनि स्थितः ॥ इति ।

ख्वं सा(व)धारणमिति न्यायाद्वैदिकमात्रमार्गस्थितस्य निषेधा-
ादिकतान्त्रिकोभयमार्गस्थितस्य भवत्येवेति सर्व्वमनवद्यम् । अत्र
वेचारविशेष आषाढ़मासविधाने द्रष्टव्यः ।

धारणप्रकारः सात्वतसंहितायाम् ।

चक्रं पद्मं दक्षिणे तु गदां शङ्खञ्च वामतः ।

अष्टाक्षराङ्कितां मुद्रां सर्व्वस्थानेषु धारयेत् ।

हृदि पद्मं ललाटे च गदां शिरसि धारयेत् ॥

प्रकाशसंहितायां विशेषः ।

कुक्षौ चत्वारि चक्राणि पार्श्वे द्वे दक्षिणे तथा ।

हृदि द्वयं तथा धार्य्यं स्तने द्वे दक्षिणे तथा ॥

चक्रे द्वे दक्षिणे बाहौ चक्रमेकं गले पुरः ।

तथा पश्चाद्वरेदेकं द्वे पार्श्वे दक्षिणे तथा ॥

पृष्ठादधस्तथा चैकं धार्य्यमेवं सुदर्शनम् ।

शङ्खद्वयं वामपार्श्वे स्तने वामे द्वयं तथा ।

वामबाहौ द्वयं धार्य्यमेकमेव गले तथा ॥

एकं पार्श्वे तथा धार्य्यं तथा पश्चाद्गलस्य च ।

पृष्ठमूले तथा चैकं हृदये चैकमेव च ॥

धार्य्यमेकं पाञ्चजन्यं शङ्खस्थानविदो विदुः ।

हृदि चैकं स्तने चैकं बाहुमूले द्वयं तथा ॥

धार्य्यं पद्मं दक्षभागे गदां वै वामतस्तथा ।
नारायणस्य मुद्रान्तु सर्व्वस्थानेषु धारयेत् ॥

इदं मुद्राधारणं वैष्णवविषयम् ।

उपवीतादिवद्धार्य्याः शङ्खचक्रगदादयः ।
ब्राह्मणक्षत्रियविशां वैष्णवत्वे न चान्यथा ॥

इति पञ्चरात्रोक्तेरिति दिक् ।

शैवैस्तु तिर्य्यक् पुण्ड्रमपि धार्य्यम् । तदुक्तं स्कान्दे ।

अग्निहोत्राग्निजं भस्म अग्निकार्य्योद्भवं तथा ।
औपासनात्समुत्पन्नं लक्षहोमोद्भवं तथा ॥
महारुद्राग्निजं भस्म रुद्रस्थानोद्भवं तथा ।
भस्मानि षड्विधान्याहुः सर्व्वपापहराणि च ॥
त्रैवर्णिकानां सर्व्वेषामग्निहोत्रसमुद्भवम् ।
अग्निकार्य्यात्समुत्पन्नं तद्धार्य्यं ब्रह्मचारिणा ॥
आवसथ्याग्निसंभूतं गृहस्थैरेव धार्य्यते ।
शेषं भस्मत्रयञ्चैव सर्व्वैः सर्व्वत्र धार्य्यते ।
देवर्षिकृतहोमस्थं धार्य्यं यत्नेन सर्व्वदा ॥

अगस्त्यः ।

प्रातस्तु सजलं भस्म मध्याह्ने चन्दनान्वितम् ।
सायन्तु केवलं भस्म शैवैर्धार्य्यं सदैव तु ॥ इति ।

कालाग्निरुद्रोपनिषदपि ।

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ । अधीहि भगवंस्त्रिपुण्ड्रकविधिं सतत्त्वं किंद्रव्यं किंस्थानं कति-

प्रमाणं का रेखा किं दैवतं के मन्त्राः काः शक्तयः कः कर्त्ता किं फलमिति। तदु होवाच भगवान् यद्द्रव्यं तदाग्नेयं भस्म सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्य अग्निरिति भस्मे(त्यनेना)ति चाभ्यामभिमन्त्र्य मा नः स्तोकेति* समुद्धृत्य त्र्यम्बकं यजामहे† इति शिरोललाट-वक्षःस्कन्धेष्वभिमृश्य त्रिभिस्त्र्यायुषै‡स्त्र्यम्बकैश्च तिर्य्यक् तिस्रो रेखाः कुर्व्वीत। व्रतमेतच्छाम्भवं सर्व्ववेदेषु वेद-वादिभिरुक्तं तत्समाचरेन्मुमुक्षुरपुनर्भवायेत्यादि।

स्मृतिसङ्ग्रहे।

भाले त्रिपुण्ड्रकं भाति गले रुद्राक्षमालिका।
वक्त्रे षडक्षरो मन्त्रः§ स रुद्रो नात्र संशयः॥
ये भस्मधारिणं दृष्ट्वा वाचा निन्दन्ति मानवाः।
तेषां शूद्रेषु संभूतिरनुमेया विपश्चिता॥

इति तिर्य्यक्पुण्ड्रधारणविधिः।

---

* मा नः स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः।
मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदसि त्वा हवामहे॥ १६अ. १६म. यजुः।

† त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥

‡ कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषं यद्देवानां त्र्यायुषं तन्मेऽस्तु त्र्यायुषमेवं रूपैः।

§ ओं नमः शिवाय। एवंरूपः। तथाच—

ओङ्कारादिसमायुक्तं नमस्कारान्तकीर्त्तितम्।
स्वनाम सर्व्वसत्त्वानां मन्त्र इत्यभिधीयते॥

## अथ सन्ध्यावन्दनविधिः ।

तत्र व्यासः ।

प्रातःसन्ध्यां सनक्षत्रां मध्याह्ने स्नानकर्म्मणि ।
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि* ॥

सूर्य्योदयात् पूर्व्वं घटिकाद्वयं प्रातःसन्ध्याया मुख्यकालः । तथा सायं सूर्य्यास्तमयात् पूर्व्वं घटिकाद्वयम् ।

अथाचम्य कुशैर्युक्ते आसने समुपस्थितः ।
करं सम्पुटकं कृत्वा सन्ध्यां नित्यं समाचरेत् ॥
नत्वाथ पुण्डरीकाक्षमुपात्ताघप्रशान्तये ।
ब्रह्मावास्यै वयं प्रातःसन्ध्यां वन्ध्यामुपास्महे ॥ इति ।

सन्ध्यावन्दनप्रकारस्तु आश्वलायनगृह्यपरिशिष्टे ।

अथ सन्ध्यामुपासीत यावदहोरात्रयोः सन्धौ यत्र पूर्व्वापराह्णयोस्तत्कालभवा देवता सन्ध्या तामुपासीत । वहिर्ग्रामात् प्राच्यामुदीच्यां वा दिशि अनिन्दितायामनल्पमुदकाशयमेत्य प्रातःशुचिर्भूतः पाणिपादमुखानि प्रक्षाल्य शुचौ देशे भूमिष्ठपादो (नयश्रित) उपविष्ट आचामेत् प्रकृतिस्थमफेनबुद्बुदमुदकमोक्षितं दक्षिणपाणिनादाय कनिष्ठाङ्गुष्ठौ विश्लिष्टौ वितत्य तिस्रोऽन्तराङ्गुलीः संहतोर्द्ध्वाः कृत्वा ब्राह्मेण तीर्थेन हृदयप्रापि त्रिः पीत्वा पाणिं प्रक्षाल्य स्पृष्टाश्मसा अङ्गुष्ठमूलेन आकुञ्चितोष्ठमास्यं द्विः प्रमृज्य सकृच्च संहतमध्यमाङ्गुलिभिः पाणिं प्रक्षाल्य सव्यं पाणिं पादौ

* संवर्त्तस्तु—प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम् ॥

शिरश्चाभ्युक्ष्य स्पृष्टाम्भसा संहतमध्यमाङ्गुलित्रयेण आस्यमुपस्पृश्य अङ्गुष्ठया प्रदेशिन्या घ्राणविवरद्वयमनामिकया चक्षुःश्रोत्रे कनिष्ठिकया नाभिं तलेन हृदयं सर्व्वाभिरङ्गुलिभिः शिरस्तदग्रैरंसौ च स्पृशेदित्येतदाचमनम् ।

एवं द्विराचम्य आत्मानमभ्युक्ष्य दर्भपवित्रपाणिः प्रथममसमन्त्रकं पञ्चदशमात्रिकं प्राणायामत्रयं कृत्वा समन्त्रं सकृत् कुर्य्यादायतप्राणः सप्रणवां सव्याहृतिकां सावित्रीं सशिरसं त्रिरावर्त्तयेदित्येष समन्त्रः प्राणायामः ।

अथ कर्म्म सङ्कल्प्य शुचौ पात्रे सव्ये पाणौ वा अप आधाय स्थिरे तूदकाशये यावति कर्म्म कुर्व्वीत तावत उदकस्य विभागं कल्पयित्वा तीर्थानि तत्रावाह्य* ता अपः सदर्भेण पाणिना आदायादायोत्तानं शिरसि मार्ज्जयेदोंपूर्व्वं अथ आपो हिष्ठेति तिसृभिः । अथाचमनमुदकमादाय सूर्य्यश्चेति† पिबेदेतत् समन्त्रमाचमनम् ।

अथ पुनराचम्य मार्ज्जयेत् प्रणवव्याहृतिसावित्रीभि(ऋंक्‌स्य)-

* तीर्थावाहनमन्त्रो यथा—

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इति ।

† सूर्य्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्च दुरितं मयि इदमहमापो अमृतयोनौ सूर्य्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा ।

आपो हिष्ठेति सूक्तेन गायत्रीशिरसा चात्मसात्मानं परिषिञ्चेदेत-न्मार्ज्जनम् ।

अथ गोकर्णवत् कृतेन पाणिना उदकमादाय नासिकाग्रे धारयन् कृष्णघोरपुरुषाकृतिं पाप्मानमात्मानमन्तर्व्याप्य स्थितं विचिन्त्य संयतप्राणोऽघमर्षणसूक्तं* द्रुपदामृचं† चावर्त्त्य दक्षिणेन नासाबिलेन शनैः प्राणं रेचयन् सर्व्वतस्तेनः संहृत्य कृष्णं स्वेन वर्त्मना पाणिस्थ उदके पातितं ध्यात्वा तदुदकमवेक्षमाणो वामतो भुवि तीव्रपातेन क्षिप्त्वा तं पाप्मानं वज्रहतं सहस्रधा दलितं भावयेदेष पाप्मव्यपोहः । एनमेके न कुर्व्वन्ति । मार्ज्जनेनैव तस्य व्यपोहितत्वात् । इति द्रुपदर्क् पापशोधनी ।

अथाचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमुद्धृत्य वलित्था पर्व्वताना‡मित्यादित्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्व्वया सावित्र्या विनिवेदयन् क्षिपेत् । ये तु पुनः पाप्मव्यपोहं नेच्छन्ति तेऽनाचम्यैव अर्घ्यमुत्क्षिपेयुरेतदेव अर्घ्यनिवेदनम् ।

असावादित्यो ब्रह्मेति प्रदक्षिणं परियन् परिषिच्य अप उपस्पृश्य शुचौ देशे दर्भाम्भसोक्षिते दर्भानास्तीर्य्य व्याहृतिभिरुपविश्य प्राणायामत्रयं कृत्वा आत्मानं व्याहृतिभिरभ्युक्ष्य सावित्र्या ऋषिदैवतच्छन्दांस्यनुस्मृत्य तामेतां चतुरक्षरशो विभक्ता(मुचित-

---

* ऋतं च सत्यं च इत्यादिकम् ।

† द्रुपदादिवेति मन्त्रोऽस्य १८४ पृष्ठे प्रदर्शितः ।

‡ वलित्था पर्व्वतानां क्षिद्र विभर्षि पृथिवि ।
प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ ५म. ८४सू. १ऋक् ।

(यो)जितैःमधितपोजितैः षड्भिस्तदङ्गमन्त्रैर्यथाङ्गमात्मनि न्यस्य चात्मानं तद्रूपं भावयेत् । यथा तत्सवितुर्हृदयाय नम इति हृदये । वरेण्यं शिरसे स्वाहा इति शिरसि । भर्गो देवस्य शिखायै वषडिति शिखायाम् । धीमहि कवचाय हुमित्युरसि । धियो यो नो नेत्रत्रयाय वौषडिति नेत्रललाटेषु विन्यस्य अथ प्रचोदयादस्त्राय फडिति करतलैरस्त्रं प्राच्यादिदशदिक्षु न्यसेत् । एषोऽङ्गन्यासः । एनमप्येके नेच्छन्ति । स हि विधिरवैदिक इति ।

अथ मन्त्रदेवतां ध्यात्वा आगच्छ वरदे देवीत्यावाह्य तिष्ठन्नर्द्धनष्टेषु नक्षत्रेषु आमण्डलदर्शनान्मन्त्रार्थमनुसन्दधानः प्रणवव्याहृतिपूर्व्विकां सावित्रीं जपेत् । जपंश्चाक्षसूत्रेण अनामिकायाः मध्यमादारभ्य प्रदक्षिणं दशभिरङ्गुलिपर्व्वभिर्वा गणयेत् ।

आगच्छ वरदे देवि जपे मे सन्निधौ भव ।
गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता ॥

इत्यावाहनमन्त्रः । सवितुर्वरणीयं तेजो वयं ध्यायेमहि योऽस्माकं धियः प्रेरयतीति मन्त्रार्थः ।

अथ देवताध्यानम् । या सन्ध्या सैव मन्त्रोक्ता देवता खलूपास्यैव एतां सर्व्वदैकरूपां ध्यायेदनुसन्ध्यमन्यान्यरूपां वा यदैकरूपामृग्यजुःसामत्रिपदां तिर्य्यगूर्द्ध्वाधरदिक्षु षट्कुक्षिं पञ्चशिरसमग्निमुखीं विष्णुहृदयां ब्रह्मशिरस्कां रुद्रशिखां दण्डकमण्डल्वक्षसूत्राभयाङ्कचतुर्भुजां शुभ्रवर्णां शुभ्राम्बरानुलेपनस्रगाभरणां शरच्चन्द्रसहस्रप्रभां सर्व्वदेवमयीमिमां देवीं गायत्रीमेकामेव तिसृषु सन्ध्यासु ध्यायेत् ।

अथ यदि भिन्नरूपां तां प्रातर्बालां बालादित्यमण्डलस्थां रक्तवर्णां रक्ताम्बरानुलेपनस्रगाभरणां चतुर्वक्त्रां दण्डकमण्डल्वक्षसूत्राभयाङ्कचतुर्भुजां हंसासनारूढाम् ऋग्वेदमुदाहरन्तीं भूर्लोकाधिष्ठात्रीं गायत्रीं नाम देवतां ध्यायेत्।

अथ मध्यन्दिने तां युवतिं युवादित्यमण्डलमध्यस्थां श्वेतवर्णां श्वेताम्बरानुलेपनस्रगाभरणां पञ्चवक्त्रां त्रिनेत्रां चन्द्रशेखरां त्रिशूलखड्गखट्वाङ्गडमरुकाङ्कचतुर्भुजां वृषभासनारूढां रुद्रदैवत्यां यजुर्वेदमुदाहरन्तीं भुवर्लोकाधिष्ठात्रीं सावित्रीं नाम देवतां ध्यायेत्।

अथ सायं तां वृद्धां वृद्धादित्यमण्डलमध्यस्थां श्यामवर्णां श्यामाम्बराभरणस्रगनुलेपनामेकवक्त्रां शङ्खचक्रगदापद्माङ्कचतुर्भुजां गरुडासनारूढां विष्णुदैवत्यां सामवेदमुदाहरन्तीं स्वर्लोकाधिष्ठात्रीं सरस्वतीं नाम देवतां ध्यात्वा आवाह्य जपित्वा अथ जातवेदसे सुनवाम सोम*मित्युपस्थाय तच्छंयोरावृणीमहे नमो ब्रह्मणे नमोऽस्त्वग्नये इत्येताभिरुपस्थाय प्रदक्षिणं दिशः सन्ध्यां नत्वा अथ सन्ध्यायै गायत्र्यै सावित्र्यै सरस्वत्यै सर्वाभ्यो देवताभ्यश्च नमस्कृत्य ततः।

उत्त(रे)मे शिखरे देवी भूम्यां पर्वतमूर्द्धनि।
ब्राह्मणेभ्योऽभ्यनुज्ञाता† गच्छ देवि यथासुखम्॥

इति सन्ध्यां विसृज्य भद्रं वो अपि वातयमन इत्युक्त्वा शान्तिं

* जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ १म. ९९सू. १ऋक्।

† ब्राह्मणैः समनुज्ञाता इति बहुषु निबन्धेषु पाठः।

त्युत्तरनमो ब्रह्मणे इति प्रदक्षिणं परिक्रामन् नासत्यलोकादा-अतललोकादालोकालोकपर्व्वतादूये सन्ति ब्राह्मणा देवास्तेभ्यो नित्यं नमो नम इति नमस्कृत्य गुरून् वृद्धांश्चोप(सं)गृह्णीयात्।

एवं सायमपि। विशेषस्तु सूर्य्यश्चेति मन्त्रे अग्निश्चेति ब्रूयात्। अपश्चार्द्धास्तमितार्कमण्डलादानक्षत्रदर्शनादासीत।

अथ मध्यन्दिने तु आपः पुनन्त्विति* मन्त्राचमनं कृत्वा आकृष्णया हंसवत्या वा† त्रिः सकृद्वार्घ्यमुत्क्षिप्य ऊर्द्ध्वबाहुरुदमुत्य उदु त्यं जातवेदसं‡ चित्रं देवाना§मिति सूक्ताभ्यां तच्चक्षु¶रित्येकया चादित्यमुपस्थाय जपमासीनो यथेष्टकालं कुर्य्यादित्येष सन्ध्याविधिर्व्याख्यात इति।

अथ वाजसने(यो)यिसन्ध्योच्यते।

तत्र कात्यायनः। मृदा जङ्घे करौ च प्रक्षाल्य आचम्य त्रि-

---

* आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्॥
यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम।
सर्व्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहं स्वाहा॥

† आकृष्णया आकृष्णेन रजसा इत्यादिकया, हंसवत्या हंसः शुचिषदित्यादिकया।

‡ उदु त्यं जातवेदसं देवं वहन्ति केतवः।
दृशे विश्वाय सूर्य्यं स्वाहा॥ ७अ. ४१म. यजुः।

§ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च स्वाहा॥ ७अ. ४१म. यजुः।

¶ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।
३६अ. २४म. यजुः।

रायम्यासून् पुष्पाद्यम्बुमिश्राण्यूर्द्ध्वं प्रक्षिप्य ऊर्द्ध्वबाहुरुदय*मुदुत्यं चित्रं तच्चक्षुर्गायत्र्या च यथाशक्ति विभ्राड़ित्यनुवाकं†पुरुषसूक्त-शिवसङ्कल्पमण्डलब्राह्मणैरुपस्थाय प्रदक्षिणीकृत्य नमस्कृत्य उप-विशेदिति।

अत्र यद्यपि सूत्रकारेण सङ्क्षेपतो मध्याह्नसन्ध्या (उक्ता) प्रद-र्शिता तथापि सर्व्वशाखाधिकरणन्यायेन।

सन्ध्यात्रयञ्च कर्त्तव्यं ब्राह्मणेन विपश्चिता।
अन्यथा नरकं याति सर्व्वक(र्म्मा)र्म्मकरोऽपि सन्॥

इत्यादि स्मृत्या च त्रिकालीना मार्ज्जनादिसर्व्वाङ्गोपवृंहिता सा वाजसनेयिभिरपि कार्य्या। विरुद्धांशस्तु त्याज्य एव। पारक्यं‡-मविरोधि यदिति वचनात्।

अर्घ्यानन्तरं सन्ध्यातर्पणं कार्य्यम्। शौनकः।

अर्घ्यान्ते वा जपान्ते वा प्रागासीनः कुशासने।
सन्ध्यासु तर्पणं कार्य्यं स्मृत्वा ऋष्यादिकं ततः॥
ऋषिर्व्यासः समुद्दिष्टो ब्रह्मा दैवतमुच्यते।
छन्दो गायत्रकञ्चैव विनियोगस्तु तर्पणे॥

प्रयोगस्तु। ॐ भूः पुरुषं तर्पयामि। ओमृग्वेदं त-। मण्डलम्।

---

* उदयं तमसस्परि स्वः पश्यन्त उत्तरम्।
देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम्॥ २०अ. २१म. यजुः।

† विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम्।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति॥३३अ. ३०म. यजुः।

‡ परोक्तमिति बहुषु निबन्धेषु पाठः।

हिरण्यगर्भरूपिणम् । आत्मानम् । गायत्रीम् । वेदमातरम् । संस्कृतिम् । सन्ध्याम् । कुमारीम् । ब्राह्मीम् । उषसम् । निर्मृजम् । सर्व्वसिद्धिकरीम् । सर्व्वमन्त्राधिपतींस्तर्पयामि ।

आदौ प्रणवमुच्चार्य्य तर्पयीत तदन्तिके ।
अनेन विधिना कुर्य्यात् सन्ध्यातर्पणमुत्तमम् ॥ इति ।

## अथ सन्ध्यावन्दनविधिः ।

तत्र योगियाज्ञवल्क्यः ।

आपो हिष्ठेति तिसृभिर्ऋग्भिस्तु प्रयतः शुचिः ।
नवप्रणवयुक्ताभिर्जलं शिरसि निक्षिपेत् ॥

शौनकः ।

पूर्व्वोक्तेनैव विधिना प्रोक्षयेत्कुशवारिणा ।
विप्रुषोऽष्टौ क्षिपेदूर्द्ध्वमधो यस्य क्षयाय (च) सः ॥ इति ।

व्यासस्तु ।

भूमौ मूर्द्ध्नि तथाकाशे मूर्द्धन्याकाशे तथा भुवि ।
आकाशे भुवि मूर्द्ध्नि स्यान्मन्त्रस्नानं विधीयते ॥

आकाशे हृदये । भूमौ पादयोः ।

अर्घ्यविषये ।

गोशृङ्ग*मात्रमुद्धृत्य रविं वीक्ष्य जलाञ्जलीन् ।
द्वौ पादौ च समौ कृत्वा पार्ष्णी उद्धृत्य निक्षिपेत् ॥

* गोशृङ्गपदं मार्द्दशमात्रपरमिति रघुनन्दनः ।

मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् ।
तर्ज्जन्यङ्गुष्ठयोर्योगे राक्षसी मुद्रिका भवेत् ।
राक्षस्या मुद्रया दत्तं तत्तोयं रुधिरं भवेत् ॥

गोशृङ्गलक्षणन्तु ।

प्रादेशस्तु प्रदेशिन्या तालो मध्यमया भवेत् ।
गोश्च शृङ्गमनामिक्या वितस्तिस्तु कनिष्ठया ॥

शातातपः ।

जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले ।
प्रातर्मध्याह्नयोः काले उत्थायार्घ्यं जले क्षिपेत् ।
उपविश्य तथा सायं स्थले चार्घ्यं विनिक्षिपेत् ॥

व्यासः ।

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठंस्त्रिरूर्द्ध्वं सन्ध्ययोः क्षिपेत् ।
मध्याह्ने सकृदेवेदं क्षेपणीयं द्विजातिभिः ॥

तत्र हेतुः स्कान्दे ।

त्रिंशत्कोट्यो* महावीर्य्या मन्देहा नाम राक्षसाः ।
कृष्णातिदारुणा घोराः सूर्य्यमिच्छन्ति खादितुम् ॥

---

तिस्रः कोट्योऽर्द्धकोटी च मन्देहा नाम राक्षसाः ।
उदयन्तं सहस्रांशुमभियुध्यन्ति ते सदा ॥
गायत्र्या चाभिमन्त्र्योर्द्ध्वं जलं त्रिःसन्ध्ययोः क्षिपेत् ।
तेन शाम्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥
*इति पुराणान्तरे एषां न्यूनसङ्ख्यात्वमपि दृश्यते ।

ततो देवगणाः सर्व्वे ऋषयश्च तपोधनाः ।
उपासते सदा सन्ध्यां प्रक्षिपन्त्युदकाञ्जलिम् ।
दह्यन्ते तेन ते दैत्या वज्रीभूतेन वारिणा ॥
ततः प्र(या)पाति भगवान् ब्राह्मणैरभिरक्षितः ।
बालखिल्यादिभिश्चैव जगतः पालनोद्यतः॰॥
पश्चाज्जपेच्च सावित्रीं प्रादक्षिण्यविवर्त्तनम् ।
कुर्य्याज्जलेन नासाक्ष चक्षुःश्रोत्रमुपस्पृशेत् ॥
र्य्योपस्थाने विशेषमाह कश्यपः ।
हस्ताभ्यां स्वस्तिकङ्कृत्वा प्रातस्तिष्ठेद्दिवाकरम् ।
मध्याह्ने तु ऋजू बाहू सायं मुकुलितौ करौ ॥
। मन्त्रविशेषमाह देवलः ।
मित्रस्य चर्षणोस्तिस्रो* वसवस्त्वेति† चोदयेत् ।

मित्रस्य चर्षणीः धृतोऽवो देवस्य सानसि ।
द्युम्न चित्रश्रवस्तमम् ॥ ११म. ६२ऋ. यजुः ।
देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या ।
अव्यथमाना पृथिव्यामाशा दिश आपृण ॥ ११म. ६३ऋ. यजुः ।
उत्थाय वृहती भवोदु तिष्ठ ध्रुवा त्वम् ।
मित्रैतां त उखां परिददाम्यभित्त्या एषा माभेदि ॥ ११ऋ. ६४म. यजुः ।
वसवस्त्वा कृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वत् ।
रुद्रास्त्वा कृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत् ॥
आदित्यास्त्वा कृन्दन्तु जागतेन छन्दसाङ्गिरस्वत् ।
विश्वे त्वा देवा वैश्वानरा आकृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ११ऋ. ६५म. यजुः ।

इमं मेति चतुष्केण* सायं कुर्य्यादुपस्थितिम् ॥

व्यासस्तु ।

सन्ध्याद्वयेऽप्येवमेव ह्युपस्थानं प्रचक्षते ।
उदयमुदुत्यं चित्रं तच्चक्षुस्तिष्ठेद्दिवाकरम् ॥

कात्यायनस्तु । •

उच्चित्रमृग्द्वयेनैवं मुपतिष्ठे(दनन्तरं)द्दिवाकरम् ।
सन्ध्याद्वयेऽप्युपस्थानमेतदाहुर्मनीषिणः ।
मध्ये त्वह्न उपर्य्यस्य विभ्रा(जा)ड़ादीच्छया जपेत् ॥

अह्नो दिनस्य मध्ये । अस्य उदुत्यं चित्रं देवानामित्यृग्द्वयस्य उपरि विभ्रा(जा)ड़ादि इच्छया यथेच्छं जपेदित्यर्थः ।

अथ जपधर्म्माः ।

तत्र व्यासः ।

तेजोऽसीति‡ जपेन्मन्त्रं गायत्र्यावाहने द्विजः ।
आवाह्य तु जपेत्प्राज्ञो गायत्रीं तां महाफलाम् ॥
गायत्र्येकपदीत्यादि§ गायत्र्याः प्रार्थनं चरेत् ।
नमस्ते तुरीयायेति¶ नमस्कृत्य च तां जपेत् ॥

---

इमं मे वरुण श्रुधी हव मद्या च मृड़य ।
त्वामवस्युराचके ॥ २१अ. १म. यजुः । इत्यादिना मन्त्रचतुष्टयेन ।
उदयं तमसः इत्यादिना चित्रं देवानामित्यादिना च मन्त्रद्वयेन ।
तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ २२अ. १म. यजुः ।
गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि ।
नमस्ते तुरीयाय दर्शताय पदाय परोरजसे । सा पदो मा प्रापत् ॥

आगच्छ वरदे देवीत्यादिना अस्य विकल्पः । तेजोऽसीत्यादेर्वाज-सनेयिशाखापठितत्वात्तद्विषयत्वं वा ।

गायत्रीध्यानं प्रकारान्तरेणाप्युक्तम् ।

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैः पञ्चभि-
र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशाश्शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

जपप्रकारमाह व्यासः ।

प्रणवव्याहृतियुतां गायत्रीञ्च जपेत्ततः ।
समाहितमनास्तूष्णीं मनसा चापि चिन्तयेत् ॥
ध्यायेच्च मनसा मन्त्रं जिह्वोष्ठौ न च चालयेत् ।
न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥
कृत्वोत्तानौ करौ प्रातः सायं मुकुलितौ (करौ) तु तौ ।
मध्ये तिर्य्यक्करौ प्रोक्तौ जप एवमुदाहृतः ॥
विधियज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ।
विना शब्दं जपो यस्तु चलज्जिह्वाद्विजच्छदः ।
उपांशुं तं जपं प्राहुर्मनसा मानसं बुधाः ॥
पूर्व्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात्* ॥

---

* आर्कदर्शनात्, आर्क्षविभावनात्—द्वयमेतदसमस्तम् । उभयत्र चाङ्योगे पञ्चमी, आ-ऋक्ष-ऋक्षं इति गुरवः ।

मध्याह्ने तु ।

तिष्ठंश्चेदीक्षमाणोऽर्कं जपं कुर्य्यात्समाहितः ।
अन्यथा प्राङ्मुखः कुर्य्यात्समासीनः कुशासने ॥

आसनान्याह व्यासः ।

कौशेयं कम्बलञ्चैव अजिनं पट्टमेव वा ।
दारुजं तलपत्रञ्च आसनं परिकल्पयेत् ॥
कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्म्मणि ।
गजा(वस्त्रा)जिने व्याधिनाशः सर्व्वं वै चित्रकम्बले* ।
नादीक्षितश्चोपविशेत् कृष्णसाराजिने गृही ॥

इति निषेधाद्दीक्षितविषयं कृष्णाजिनम् ।

आत्मशय्यासनं वस्त्रं जायापत्यं कमण्डलुः ।
शुचीन्यात्मन एतानि न परेषां कदाचन ॥
पादेन पादमाक्रम्य जपं नैव तु कारयेत् ।
शिरः प्रावृत्य वस्त्रेण ध्यानं नैव प्रशस्यते ॥
न पाणिपादचपलो न नेत्रचपलो द्विजः ।
न च वाक्चपलश्चैव जपन् सिद्धिमवाप्नुयात् ॥

---

* वैशम्पायनस्तु—

सर्व्वसिद्धौ व्याघ्रचर्म्म ज्ञानसिद्धौ मृगाजिनम् ।
वस्त्रासनं रोगहरं वेत्रजं श्रीविवर्द्धनम् ।
कौशेयं पुष्टिदं प्रोक्तं कम्बलं दुःखमोचनम् ॥

वस्त्रमाविकं न तु कार्पासमयम् ।

आसने कार्पासमये जपो भवति निष्फलः ।

इति ब्रह्मयामले कार्पासमयवस्त्रासने दोषश्रवणात् ।

मनःसन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्व्वेदो जप(सम्पत्ति)संसिद्धिहेतवः ॥
स्वस्तिकासन(मा)भासीनो जपसिद्धिमवाप्नुयात् ।
जानूर्व्वोरन्तरे सम्यक् कृत्वा पादतले उभे ॥
ऋजुकायः समासीनः स्वस्तिकासनमुच्यते ।
पद्मासनसमासीनः सर्व्वसिद्धिमवाप्नुयात् ॥
उत्तानौ चरणौ कृत्वा जरुसंस्थौ प्रयत्नतः ।
ऊर्व्वोर्मध्ये तयोत्तानौ पाणी कृत्वा ततो दृशौ ।
नासाग्रे विन्यसेद्दृष्टिं पद्मासनमिदं स्मृतम् ॥
आसनान्तराणि तु ग्रन्थगौरवभीत्या न नोक्तानि ।
वस्त्रेणाच्छाद्य स्वकरं दक्षिणं यः सदा जपेत् ।
तस्य तत्सफलं जप्यं तद्धीनमफलं भवेत् ॥
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् ।
उल्लङ्घिते तथा मेरौ पतिते वाक्षसूत्रके ॥
प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ।
पङ्कले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं तत्सर्व्वं निष्फलं भवेत् ॥
अथ जपमालाप्रकारः ।
पाद्मे ।
अरिष्टं पत्रजीवञ्च शङ्खं पद्मं तथा मणिम् ।
कुशग्रन्थिञ्च रुद्राक्षमुत्तमं चोत्तरोत्तरम् ॥
अङ्गुलीजपसंख्यानमेकमेकं वरानने ।

पर्व्वभिर्दशसंख्यातं पत्रजीवफलैर्दश ॥
शतं वै शङ्खमणिभिः प्रवालैश्च सहस्रकम् ।
मौक्तिकैर्दशसाहस्रं सौवर्णैर्लक्षमुच्यते ॥
कुशग्रन्थ्या कोटिगुणं तुलस्यानन्तकं फलम् ।
अस्पृष्टा समरन्ध्रा च परिपूर्णा दृढ़ा नवा ॥
निश्चला ग्रथिताऽव्यक्ता अन्योऽन्यं स्पृष्टिवर्ज्जिता ।
सशब्दा चञ्चला या तु त्रुटिता ग्रथिता तु या ॥
भिन्नसूत्रेण ग्रथिता पाषण्डस्य पुरातनी ।
माला दुःखप्रदायिन्यो ग्रथिता निन्द्यतन्तुभिः ॥

पाषण्डस्य तत्सम्बन्धिनी ।

अत्रास्थिमात्रा मणयः श्रेष्ठाः स्युर्जपकर्म्मणि ।
अष्टोत्तरशतं संख्या मणीनां श्रेयसी भवेत् ॥
तदर्द्धसंख्या कथिता मध्यमा चाधमा पुनः ।
सप्तविंशतिसंख्याता ततो नैवाधमा भवेत् ॥
तर्ज्जन्या न स्पृशेत्सूत्रं न क(थे)म्पयेन्न विधूनयेत् ।
अङ्गुष्ठस्य तु मध्यस्थं परिवर्त्तं समाचरेत् ॥
मध्यमाकर्षणं तस्याः सर्व्वसिद्धिप्रदायकम् ।
नान्याङ्गुलिभिराकर्षेन्न नखैश्च तथा स्पृशेत् ॥
अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना ।
जप एवं हि कर्त्तव्य एकाग्रमनसा सदा ॥

पाणिमाला चेत्थम् ।

अनामिकाया मध्ये च मध्याधःप्रक्रमेण च ।

तर्ज्जन्यादिगतान्ते च अक्षमाला करे स्थिता ॥

अस्यार्थः। अनामिकामध्यरेखामादिं कृत्वा तदधःक्रमेण प्रदक्षिणावर्त्ततर्ज्जन्या आदिरेखा अन्ते कार्य्या सेयं करे स्थिता माला इत्यर्थः।

यमः।

सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीन्तु जपेन्नित्यं सर्व्वकल्मषनाशिनीम् ॥
पर्व्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः।
गायत्र्या वेदवीजत्वाद्वेदः पर्व्वसु गीयते ॥
मध्यमादिपर्व्वद्वयं जपकाले तु वर्ज्जयेत्।
ए(तं)नं मेरुं विजानीयादर्पितं ब्रह्मणा स्वयम्* ॥
अङ्गुष्ठाग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घनात्।
असंख्यातन्तु यज्जप्तं तत्सर्व्वं निष्फलं भवेत् ॥

आश्रमविशेषे जपविशेषमाह मनुः।

ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत्।
वानप्रस्थो यतिश्चैव द्विसहस्राधिकं जपेत् ॥

गृहस्थस्य संख्यान्तरमुक्तं यमेन।

अष्टोत्तरशतं कुर्य्याच्चतुःपञ्चाशिकापि वा।
सप्तविंशतिका कार्य्या ततो नैवाधमा (भवेत्) मता ॥

दशावरामिति कार्य्यान्तरासक्तविषयम्।

याज्ञवल्क्योऽत्र विशेषमाह।

---

* सर्वाङ्गत विदग्धैरपि इति तन्त्रसारे पाठः।

सर्व्वेषाञ्चैव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं परम् ॥

मन्त्रसिद्धिकामस्य चतुर्व्विंशतिलक्षजप उक्तः शारदातिलके ।

तत्त्वलक्ष*विधानेन भिक्षाशी विजितेन्द्रियः ।
व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितो जपेत् ॥ इति ।

तथा ।

गृहे त्वेकगुणं ज्ञेयं नद्यान्तु द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यगारे दशाधिकम् ॥
सिद्धक्षेत्रेषु सर्व्वेषु देवतायाश्च सन्निधौ ।
सहस्रशतकोटीना†मनन्तं विष्णुसन्निधौ ॥

काम्यविशेषेणाङ्गुलिविशेषः ।

तत्र वशिष्ठः ।

अङ्गुष्ठं मोक्षदं विद्यात्तर्ज्जनी शत्रुनाशनी ।
मध्यमा धनसिद्ध्यैव स्याच्छान्तिकर्म्मण्यनामिका ।
कनिष्ठाकर्षणे ज्ञेया ज(प)यकर्म्मणि सिद्धिदा ॥

कूर्म्मचक्रे दीपं दत्त्वा जपे सर्व्वसिद्धिरिति‡ कूर्म्मचक्रमुच्यते ।

---

* तत्त्वं चतुर्व्विंशतिसंख्या, चतुर्व्विंशतितत्त्वानि इति कपिलोक्तेः ।

† सहस्रकोटिगुणितमिति निबन्धान्तरेषु पाठः, स एव समीचीनः कोटीनामिति षष्ठ्या अनन्वयापत्तेः ।

‡ तन्त्रसारेऽपि—

दीपस्थानं समाश्रित्य कृतं कर्म्म फलप्रदम् ।
दीप्यते पुरुषो यत्र दीपस्थानं तदुच्यते ॥

वर्त्तुलं नवकोष्ठं तत्कृत्वा कूर्म्माकृतिं लिखेत् ।
स्वरयुग्मक्रमेणैव ऐन्द्र्याद्यष्टसु दिक्षु च ॥
कादीन् वर्गान् लमौ शान्त्यां* तथा मध्ये स्थलाधिपम् ।
तन्नामाद्यक्षरं यत्र कूर्म्मास्यं तत्र दीपकम् ॥
तत्पार्श्वकोष्ठौ हस्तौ द्वौ अधोऽधः कुक्षिपादकौ ।
शेषं कोष्ठं भवेत्पुच्छं मुखे सिद्धिरनुत्तमा ॥
करस्थाने महाक्लेशः कुक्षौ दुःखमवाप्नुयात् ।
पदोर्हानिस्तथा पुच्छे पीड़ा स्याद्बन्धनादिभिः ॥
मोक्षार्थी वदने कुर्य्याद्दक्षिणे त्वाभिचारिकः ।
श्रीकामः पश्चिमे कुर्य्यादुत्तरे शान्तिदं भवेत् ॥
ईशान्ये शत्रुनाशः स्यादाग्नेये शत्रु(दायकः,)वर्द्धनम् ।
नैर्ऋत्ये शत्रुभीतिः स्याद्वायव्ये तु पलायनम् ॥
ग्रामे देवे वने वापि यत्र कुर्य्यावलोकयेत् ।
दीपस्थाने जपः कार्य्यः सर्व्वसिद्धिमभीप्सुभिः ॥
कूर्म्मचक्रमविज्ञाय† यः कुर्य्याज्जपयज्ञकम् ।
तस्य (जाप्य)यज्ञफलं नास्ति सर्व्वानर्थाय कल्पते ॥ इति ।

होमस्तु ।

---

* यवमौशौ इति तन्त्रसारः ।

† कूर्म्मचक्रस्य अनावश्यकत्वमुक्तं कतिपयस्थलेषु । यथा—

कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे ।
महाकाले च काश्याञ्च दीपस्थानं न चिन्तयेत् ॥ इति ।

क्षीरौदनतिला दूर्व्वा क्षीरद्रुमसमिद्वरैः ।
पृथक्सहस्रत्रितयं जुहुयान्मन्त्रसिद्धये ॥
तत्त्वसंख्यासहस्राणि मन्त्रविज्जुहुयात्तिलैः ।
सर्व्वपापविनिर्म्मुक्तो दीर्घमायुः स विन्दति ॥
अरुणाज्येस्त्रिमध्वक्तैर्जुहुयादयुतं ततः ।
महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ॥
बहुना किमिहोक्तेन यथावत्साधुसाधिता ।
द्विजन्मनामियं विद्या सिद्धा कामदुघा मता ॥ इति ।

अल्पजपे तु शौनकः ।

प्रातर्विप्रः शुचिः स्नातो हविष्याशी जितेन्द्रियः ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा ॥
होमांश्च जपयज्ञांश्च नित्यं कुर्व्वीत वै तथा ।
सर्व्वकर्म्मसमृद्ध्यर्थं परं ब्रह्मेदमुच्यते ॥
एषैव प्रतिलोमोक्ता पाठाच्छत्रुविनाशनी ।
कपिलाज्येन यः कुर्य्याद्धोममष्टोत्तरं शतम् ।
तस्य कामाः प्रसिध्यन्ति षण्मासादेव जुह्वतः ॥

इत्युक्तप्रकारेण यथाशक्ति जपं कृत्वा गायत्रीध्यानं षडङ्गन्यासञ्च विधाय उत्तमे शिखरे जातेति गायत्रीं विसर्ज्य ब्रह्मार्पणं कार्य्यम् ।

योगी ।

करे नीरं समादाय देवा गात्विति* मन्त्रतः ।

---

* देवा गातुविदो गातु वित्त्वा गातुमित ।
मनसस्पत इम देव यज्ञ स्वाहा वाते धाः ॥ ८अ. २१म. यजुः ।

निवेदयेज्जपं प्रातः प्रयोगस्तत्र कथ्यते ॥
प्रातः सन्ध्याङ्गभूतेन गायत्र्यास्तु जपेन च।
साष्टेन शतसंख्येन ब्रह्मा मे प्रीयतां रविः॥ इति।

मुख्यकाले सन्ध्यावन्दनाकरणे प्रायश्चित्तमुच्यते।

तत्र व्यासः।

आदित्योऽभ्युदियादृयस्य सन्ध्योपास्तिमकुर्व्वतः।
स्नात्वा प्राणांस्त्रिरायम्य गायत्र्यष्टशतं जपेत् ॥

पारिजाते तु।

कालातिक्रमणे चैव चतुर्थ्यार्घ्यं प्रदापयेत्।

इत्युक्तम्। सङ्गवपर्य्यन्तं* प्रातःसन्ध्याया गौणकालः। आप्रदोषावसानं सायंसन्ध्यायाः। इति मण्डनः।

उदयास्तमयादूर्द्ध्वं यावत्स्याद्घटिकात्रयम्।
तावत्सन्ध्यामुपासीत प्रायश्चित्तमतः परम् ॥

इति स्कान्दे विशेष उक्तः।

मध्याह्ने तु दक्षः।

अध्यर्द्धयामादासायं सन्ध्या माध्याह्निकीष्यते।
अर्घ्यप्रदानतः पूर्व्वमुदयास्तमयेऽपि वा।
गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजातिभिः॥ इति।

गौणकालेऽप्यसम्भवे यमः।

---

* सङ्गवचतुर्थपञ्चमषष्ठमुहूर्त्तात्मकः कालः।

प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु।

इति वचनात्।

दिवोदितानि कर्म्माणि प्रमादादकृतानि चेत्* ।
शर्व्वर्याः प्रथमे यामे तानि कुर्य्यादयथाक्रमम् ॥

अत्र मुख्यकालानुरोधात् सायंसन्ध्योपासनं पूर्व्वं कृत्वा आगन्तूनामन्ते निवेश इति न्यायेन अतीतकालं कर्म्म पश्चात्कार्य्यमिति न्यायतः प्राप्तं तस्य निषेधार्थं यथाक्रममिति वचनमिति ।

मदनपारिजाते ।

दिवोदितानि कर्म्माणि प्राप्नुवन्त्युत्तराणि च ।
दिवोदितानि कृत्वैव विदध्यादुत्तराणि तु ॥

इति अष्टोक्तेश्च ।

अवगाहं ब्रह्मयज्ञं सौरजप्यञ्च वर्ज्जयेत् । इति ।
स्नानं सन्ध्यां त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।
तस्मात्स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेत् ॥
सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायामहृते द्विजः ॥

प्राणायाममन्त्रा मनसापि नोच्चार्य्या इत्यर्थः ।

पैठीनसिस्तु ।

सूतके सावित्र्यञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन् नमस्कुर्य्यादित्यर्घ्यप्रदानान्तां सन्ध्यामाह ।

अन्ये तु ।

उच्चार्य्य वाचा गायत्रीं दद्यादर्घ्याञ्जलीनपि ।
अष्टाविंशतिकृत्वोऽत्र गायत्रीं मनसा जपेत् ॥ इति ।

* स्वकाले नाकृतानि चेत् । इत्याह्निकतत्त्वे पाठः ।

इति गायत्रीजपमप्याहुः। अथ यथाचारं व्यवस्थेयम्।

श्राद्धभोजिनोऽत्र विशेषः सङ्ग्रहे।

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः।

ततः सन्ध्यामुपासीत शुध्यते तदनन्तरम्॥

गोभिलः।

सन्ध्या येन न विज्ञाता सन्ध्या नैवाप्युपासिता।

जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते॥

अथ जपात् पूर्व्वं पश्चाद्वा उभयत्र वा मुद्रा दर्शनीयाः। ताश्चोक्ता गायत्रीहृदये चतुर्व्विंशतिः। सम्मुख सम्पुट वितत विस्तीर्ण द्विमुख त्रिमुख चतुर्मुख पञ्चमुख षण्मुख अधोमुख व्यापकाञ्जलिक शकट यमपाश ग्रथित सम्मुखोन्मुख विलम्ब मुष्टिक मीन कूर्म्म वराहक सिंहाक्रान्त महाक्रान्त मुद्गर पल्लवाख्याः।

तत्र।

सम्मुखं संहतौ हस्तावुत्तानौ कुञ्चिताङ्गुली।

सम्पुटं पद्मकोशाभौ तावेवान्योऽन्यसंहतौ॥

विततं सम्मुखौ हस्तावुत्तानावायताङ्गुली।

विस्तीर्णं संहतौ पाणी मिथोमुक्ताङ्गुलिद्वयौ॥

सम्मुखासक्तयोः पाण्योः कनिष्ठाद्वययोगतः।

शेषाङ्गुलीनां वैरल्याद्द्विमुखत्रिमुखादयः॥

सम्मुखेति। सम्मुखासक्तपाण्योः कनिष्ठाद्वययोगेन शेषाङ्गुलीनां विरलत्वेन च अङ्गुष्ठद्वयमारभ्य अनामिकान्तं यावत् द्विमुखत्रिमुखचतुर्मुखपञ्चमुखा मुद्राः स्युः।

शेषाङ्गुलीनां संयोगात् पूर्व्वयोगविनाशतः ।
तिर्य्यक्संयुज्यमानाग्रौ संयुक्ताङ्गुलिमण्डलौ ।
हस्तौ षण्मुखमित्युक्तौ मुद्रा मुद्राविशारदैः ॥

अत्र पूर्व्वयोगविनाशत इत्यत्र पूर्व्वयोगः कनिष्ठाद्वययोगस्तद्विनाशे-नेत्यर्थः । शेषं सुगमम् ।

आकुञ्चिताग्रौ संयुक्तौ न्युब्जौ हस्तावधोमुखौ ।
उत्तानौ तादृशावेव व्यापकाञ्जलिकं करौ ॥
अधोमुखौ बद्धमुष्टी बद्धाग्राङ्गुष्ठकौ करौ ।
शकटं नाम कथितमिति ॥
बद्धमुष्टिकयोः पाण्योरुत्ताना वामतर्ज्जनी ।
कुञ्चिताग्राऽन्यया युक्ता तर्ज्जन्या न्युब्जवक्त्रया ।
यमपाशमिति प्रोक्तम् ॥

अस्यार्थः । बद्धमुष्टिकयोः पाण्योर्या उत्ताना कुञ्चिताग्रा वाम-तर्ज्जनी सा अन्यया दक्षिणतर्ज्जन्या न्युब्जवक्त्रया युक्ता यमपाश-मुद्रेति ।

उत्तानसन्धिसंलीनबद्धाङ्गुलिदलौ करौ ।
समुपोद्घाटितौ दीर्घावङ्गुष्ठौ ग्रन्थमुच्यते ॥

ग्रन्थं ग्रन्थितमुद्रेत्यर्थः । उत्तानानि सन्धिसंलीनानि बद्धानि अङ्गुलिदलानि ययोस्तौ तथोक्तौ । शेषं स्पष्टम् ।

कु(स)ञ्चितोर्द्ध्वाङ्गुलिर्वामस्तादृशा दक्षिणेन तु ।
अधोमुखेन संयुक्तः सन्मुखोन्मुख उच्यते ॥

उत्तानौ नतकोटी च* विलम्ब: कथित: करौ ।
मुष्टी चान्योऽन्यसंयुक्तावुत्तानौ मुष्टिको भवेत् ॥
मीनस्तु सम्मुखीभूतौ युक्तानामा†कनिष्ठिकौ ।
ऊर्द्धसंयुक्तवक्राग्रशेषाङ्गुलिदलौ करौ ॥

युक्ते संयुक्ते अनामिकाकनिष्ठिके ययोस्तौ तथोक्तौ तावन्योऽन्यं सम्मुखीभूतौ । तथा ऊर्द्धसंयुक्तानि वक्राग्राणि शेषाङ्गुलिदलानि ययो: करयोस्तौ मीनो नाम मुद्रा ।

अधोमुख: करो वामस्ताद्दृशा दक्षिणेन तु ।
पृष्ठदेशे समाक्रान्त: कूर्म्मो नामाभिधीयते ॥
ऊर्द्धमध्यो वामभुजो दक्षकक्षाश्रये करे ।
वाराहो नाम कथित: ॥

दक्षकक्षाश्रये करे सति उक्तलक्षणो वामभुजो वाराहो नाम मुद्रा ।

तथातथाङ्गुलौ‡ सिंहाक्रान्त: कर्णाश्रितौ करौ ।
किञ्चिदाकुञ्चिताग्रौ चेन्महाक्रान्तं तत: परम् ॥

तावेव कुञ्चिताग्रौ महाक्रान्तं नाम मुद्रा ।

किञ्चिदूर्द्धगतौ पाणौ मुद्गरो वामतर्ज्जनी ।

अस्यार्थ: । किञ्चिदूर्द्धगतयो: पाण्योर्या वामतर्ज्जनी दक्षिणहस्तेन गृहीता चेत् सा मुद्गरमुद्रा ।

---

* उत्तानौन्नतकोटी च इति ग-पुस्तके पाठ: ।

† अनाम अनामिका ।

‡ तथा तथा ताद्दृश: पूर्व्वोक्तरूपा अङ्गुलयो ययोस्तौ ।

अधोमुखः स्थितौ मूर्ध्नि पल्लवो दक्षिणः करः।

अस्यार्थः। उत्तानलक्षणवामतर्ज्जन्या मूर्ध्नि अधोमुखः स्थितो दक्षिणः करः पल्लवो नाम मुद्रेति।

न जातु दर्शयेन्मुद्रां महाजनसमागमे।

देवास्तस्य न पश्यन्ति विफलश्च क्रतं भवेत्॥ इति।

तस्माद्गुह्यस्येव मुद्रा दर्शनीयाः।

अत्रावसरे गायत्रीतर्पणमुक्तं शौनकेन।

अर्घ्यान्ते वा जपान्ते वा प्रागासीनः कुशासने।

सन्ध्यासु तर्पणं (कार्य्यं) कुर्य्यात् स्मृत्वा ऋष्यादिकं ततः॥

ऋषिर्व्यासः समुद्दिष्टो ब्रह्मा दैवतमुच्यते।

छन्दो गायत्रकञ्चैव विनियोगस्तु तर्पणे॥

मंविष्णुप्रीतियोगाय गायत्रीतर्पणमहं करिष्ये इति सङ्कल्प्य ॐ भूः पुरुषऋग्वेदं तर्पयामि। ॐ भुवः पुरुषयजुर्व्वेदं तर्पयामि। ॐ स्वः पुरुषसामवेदं तर्पयामि। ॐ महः पुरुष अथर्व्ववेदं तर्पयामि। ॐ जनः पुरुष इतिहासपुराणं तर्पयामि। ॐ तपः पुरुषसर्व्वागमं तर्पयामि। ॐ सत्यं पुरुषसत्यलोकं तर्पयामि। ॐ भूर्भुवः स्वः पुरुषमण्डलान्तर्गतं तर्पयामि। ॐ भूरेकपदां गायत्रीं तर्पयामि। ॐ भुवः द्विपदां गायत्रीं तर्पयामि। ॐ स्वस्त्रिपदां गायत्रीं तर्पयामि। ॐ भूर्भुवः स्वश्चतुष्पदां गायत्रीं तर्पयामि। ॐ उषसं तर्पयामि। ॐ गायत्रीं तर्पयामि। ॐ सावित्रीं तर्पयामि। ॐ सरस्वतीं तर्पयामि। ॐ वेदमातरं तर्पयामि। ॐ पृथिवीं तर्पयामि। ॐ जयां तर्पयामि। ॐ कौशिकीं तर्प-

...। ॐ साकृतिं तर्पयामि । ॐ सर्व्वापराजितां तर्पयामि ।
...मूर्त्तिं तर्पयामि । ॐ मनन्तमूर्त्तिं तर्पयामि ।
मन्त्रैरेभिस्तु यो नित्यं चतुर्व्विंशतिसम्मितैः ।
गायत्रीं तर्पयेत्तेन तर्पितं स्यात् (स)चराचरम् ॥
अनेन विधिना कुर्य्यात्प्रातःकाले च तर्पणम् ।
मध्याह्ने चैव सायाह्ने मन्त्रैरेतैश्च तर्पणम् ॥
इति गायत्रीकल्पे प्रातःसन्ध्याविधिः ।

## अथ अभिवादनम् ।

तत्र याज्ञवल्क्यः ।

सन्ध्याञ्च विधिवत्कृत्वा सन्ध्ययोरुभयोरपि ।
ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ॥

यमः ।

अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
भो भवत्पूर्व्वकं त्वेनमभिभाषेत धर्म्मवित् ॥

मनुः ।

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्य्यतः ।
धनधान्येन वैश्यानां शूद्राणान्त्वेव जन्मतः ॥

आपस्तम्बः ।

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरः प्लुतः ॥

...णिनिरपि ।

प्रत्यभिवादेऽशूद्रे इति ।

प्रत्यभिवादे टेः प्लुतो भवति न तु शूद्रे इति सूत्रार्थः* ।

तथाचायं प्रयोगः । आयुष्मान् भव सौम्य देवदत्तेत्यादि ।

योन वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥

बृहस्पतिः ।

जपयज्ञजलस्थञ्च समित्पुष्पकुशानलान् ।
उदपात्रार्घ्यम(भा)क्ष्याञ्च वहन्तं नाभिवादयेत् ॥
पाषण्डं पतितं व्रात्यं महापातकिनं शठम् ।
सोपानत्कं कृतघ्नञ्च नाभिवादेत्कदाचन ॥

मनुः ।

यस्य देशं न जानाति स्थानं त्रिपूरुषं कुलम् ।
कन्यादानं नमस्कारं श्राद्धं तस्मै विवर्ज्जयेत् ॥

बृहन्नारदीये ।

सभायां यज्ञशालायां देवतायतनेष्वपि ।
प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुराकृतम् ॥

तस्मात् सभास्थेभ्यः सकृदेव नमस्कुर्य्यादिति भावः ।

---

* स्त्रियामपि निषेध इति कात्यायनवचनात् स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः । गोविन्दराजस्तु ब्राह्मणस्य नाम्नि शर्म्मोपपदं नित्यं प्रागभिधाय प्रत्यभिवादनवाक्ये आयुष्मान् भव सौम्य भद्र इति वदन् निरुपपदसोपपदोदाहरणानभिज्ञत्वमेव निजं ज्ञापयति । धरणीधरोऽपि आयुष्मान् भव सौम्येति सम्बुद्धिविभक्त्यन्तं मनुवचनं पश्यन्नपि असम्बुद्धिप्रथमैकवचनान्तम् अमुकशर्म्मा इत्युदाहरन् विचक्षणैरुपेक्षणीय एव ।

[illegible]यान्तु यमोक्तो विशेष:।

> ज्यायानपि कनीयांसं सन्ध्यायामभिवादयेत्।
> विना पुत्रस्य शिष्यस्य दौहित्रं दुहितु: पतिम्॥

स्मृत्यन्तरे तु।

> सर्व्वेऽपि वा नमस्कार्य्या: सर्व्वावस्थासु सर्व्वदा। इति॥

[illegible]तो विशेषो ब्रह्मचारिविधाने द्रष्टव्य:।

## अथ प्रातर्होम:।

तत्र दक्ष:।

> सन्ध्याकर्म्मावसाने तु स्वयं होमो विधीयते।
> स्वयं होमे फलं यत्तु तदन्येनार्द्धमुच्यते॥

स्मृत्यर्थसारे।

> यजमान: प्रधानं स्यात्पत्नी पुत्रश्च कन्यका।
> ऋत्विक् शिष्यो गुरुर्भ्राता भागिनेय: सुतापति:॥
> एतैरेव हुतं यत्तु तद्धुतं स्वयमेव हि।
> पत्नी कन्या च जुहुयाद्विना पर्य्युक्षणक्रियाम्॥ इत्यादि।

यजमानस्य तत्पत्न्या वा असन्निधाने अन्येन होतव्यम्। त्यागकर्त्ता यजमानपत्नी वा उन्मादप्रसवादावन्योऽपि।

तथा।

> नोपवासी प्रवासे स्यात्पत्नी धारयते व्रतम्।
> सर्व्वदा यजमानो वा त्यजेत्तद्दिङ्मुख: शुचि:॥

[illegible]यदि पञ्चहोम: कार्य्य:।

मरीचिः ।

पञ्चहोमं प्रकुर्व्वीत प्रवसन्नग्निमान् यदि ।

पञ्चयज्ञविधानन्तु लौकिकेऽग्नौ विधीयते ॥

बृहस्पतिः ।

प्रसृं धान्यचतुःषष्टिराहुतेः परिकीर्त्तितम् ।

तिलानान्तु तदर्द्धं स्यात्तदर्द्धं स्याद्घृतस्य तु ॥

कात्यायनः ।

पाण्याहुतिर्द्वादशपर्व्वपूरिका ।

घृतादिना चेत् स्रुवपूरमात्रिका । इत्यादि ।

अथ नलिकादिना अग्निधमनम् ।

न मुखेनेत्यादि मदनपारिजाते ।

गोभिलः ।

अग्निहोत्रस्य होमार्थं शुचिस्तात्कालिको भवेत् ।

पञ्चयज्ञान्न कुर्व्वीत ह्यशुद्धः पुनरेव सः ॥

जातूकर्ण्यः ।

सूतके च समुत्पन्ने स्मार्त्तं कर्म्म कथं भवेत् ।

पिण्डं यज्ञं चरुं होममसगोत्रेण कारयेत् ॥

बृहस्पतिः ।

सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।

प्रवासादिनिमित्तेषु दापयेन्न तु हावयेत् ॥ इति ।

रात्रेस्तु षोड़शे भागे ग्रहनक्षत्रभूषिते ।

कालन्त्वनुदितं ज्ञात्वा होमं कुर्य्याद्विचक्षणः ॥

इति कात्यायनवचनं वाजसनेयिविषयम्। उपयमनप्रभृत्यौपासनस्य परिचरणमस्तमितानुदितयोरिति तत्सूत्रात्। उदितहोमस्तु आश्वलायनापस्तम्बादीनाम्। तत्सूत्रे तथा विधानात्। अत्र यद्द्रव्यं सायं तदेव प्रातः। एवं कर्त्तापि।

अत्र मुख्यकालासम्भवे गौणकालमाह मदनः।

स्वकालादुत्तरो गौणः कालः पूर्व्वस्य कर्म्मणः।
यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत्।
गौणकालत्वमिच्छन्ति केचित्प्राक्तनकर्म्मणि॥ इति।

अस्यार्थ उक्तो मदनपारिजाते। स्वकालाद्यत्काले कर्म्म विहितं तस्मान्मुख्यकालादुत्तरो यः काल उत्तरकर्म्मकालावधिकः स पूर्व्वकर्म्मणो गौणकालः। यद्वा आगामिकर्म्मणो यो मुख्यकालस्तस्यापि पूर्व्वकर्म्मणि केचिद्गौणकालत्वमिच्छन्ति। तत्र दृष्टान्तः। अन्तरालवदिति। यथा पूर्व्वोत्तरकर्म्मणोर्मध्यकालस्तद्वदयमपीत्यर्थः। उत्तरकर्म्मकाले पूर्व्वोत्तरकर्म्मणोः समावेशे यद्वेति पक्षः। तदसमावेशे तु अन्तराल एव गौणः* इति व्यवस्था ज्ञेया। स च गौणो यथा शक्नुयात्तथा कुर्य्यादित्युपबन्धादिति न्यायाद्विहिताङ्गाभावे तत्सदृशप्रतिनिधिग्रहणस्योचितत्वादावश्यकेषु नित्यनैमित्तिकेष्वेव मुख्यकालासम्भवे भङ्गं न तु काम्येऽपीति।

नन्वेवं दर्शश्राद्धादेरमावास्यादिविहितकालातिक्रमे गौणकाल-

---

* मलमासतत्त्वे तु एवं व्याख्यातम्। यद्वेति पक्षान्तरम्। प्राक्तनकार्य्ये मध्यकालवत् आगामिक्रियामुख्यकालस्यापि गौणकालत्वं यथा सायंसन्ध्याया रात्रिः प्रातःसन्ध्याकालस्य गौणकाल इति।

कर्त्तव्यता स्यादिति चेत्। अत्रोच्यते। कालोऽङ्गत्वेन कर्म्म विधीयते न कर्म्मणि कालः। तस्यानुपादेयत्वात्। तथाच कालो निमित्तम्। निमित्तभूतकालाभावे चाधिकाराभावादन्यकाले कृतं कर्म्म अकृतमेवेति न तत्र गौणकालग्रहणम्। यानि तु मुख्यकालासम्भवे गौणे कार्य्याणीति वाचनिकानि तान्येव गौणे कार्य्याणि।

यथा कथञ्चित्कर्त्तव्यं नित्यं कर्म्म विजानता।
न प्रातस्य विलोपोऽस्ति पैतृकस्य विशेषतः॥

दिवोदितानि कर्म्माणि प्रमादादकृतानि रात्र्याः प्रथमप्रहरे कार्य्याणीति। पैतृकं नाम आब्दिकश्राद्धम्।

श्राद्धविघ्ने समुत्पन्ने कदाचित्सूतकादिना।
सूतकान्ते तु तत्कार्य्यं पुनस्तदहरेव च॥

इति च याज्ञवल्क्योक्तेः। दर्शश्राद्धादौ वचनाभावान्न गौणकालकर्त्तव्यतेति सर्व्वं समञ्जसमित्यलं विस्तरेण। अत्र प्रायश्चित्तादि-सर्व्वविशेष औपासनविधाने द्रष्टव्यः।

औपासनानन्तरं ब्रह्मयज्ञकालः। पश्चाद्वा प्रातराहुतेरिति कात्यायनोक्तेः। अत्रासम्भवे तर्पणात् पूर्व्वं कार्य्यः।

अत्रावसरे देवतानिर्म्माल्योद्वासनमुक्तं नारदीये।

अपसारितनिर्म्माल्यं तरणेः किरणात् पुरा।
पूजकस्तु ततः कुर्य्यादासनादिकमात्मनः॥
अविवाहितकन्या च अस्नाता च सरस्वती।
देवता च सनिर्माल्या हन्ति पुण्यं पुराकृतम्॥ इति।

किरणात् किरणोदयादित्यर्थः।

मरीचिः।

विदध्याद्देवतापूजां प्रातर्होमादनन्तरम्।
स्थण्डिले प्रतिमायां वा वह्नौ वा हृदयेऽपि वा॥

इति प्रातर्होमविधानम्।

## अथ नित्यदानम्।

तत्र याज्ञवल्क्यः।

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः।
याचितेनापि दातव्यं श्रद्धापूतन्तु शक्तितः॥
अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे।
अनुद्दिश्य फलं तस्य ब्राह्मणाय तु नित्यकम्॥ इति।

हेमाद्रौ।

गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम्।
सहस्रगुणमाहूय याचिते तु तदर्द्धकम्॥ इति।
ग्रासादर्द्धतरो ग्रासो ह्यर्थिभ्यः किं न दीयते।
इच्छानुरूपो विभवः कदा कस्य भविष्यति॥
अस्नाताशी मलं भुङ्क्ते ह्यजपो पूयशोणितम्।
अहुत्वाग्निं क्रिमिं भुङ्क्ते ह्यदत्त्वा वि(ष)षमश्नुते॥

देयवस्त्वाह याज्ञवल्क्यः।

गोभूतिलहिरण्यादि पात्रे दातव्यमर्च्चितम्।
नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता॥

अथ नापात्र इत्यनेन द्रव्यादिसन्निधौ पात्रे असन्निहिते तदुद्देशेन त्यागं तस्मै प्रतिश्रवणं वा कृत्वा अर्पयेन्न त्वपात्रे देयमिति सूचितम्। प्रतिश्रुत्यापि तत्र* पापं ज्ञात्वा न तस्मै दद्यात्। अपात्रे दाननिषेधात्। अनधिकारिणा च न तद्ग्राह्यम्।

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च॥

इति स्मृतेः। अत्रेतिकर्त्तव्यविशेषश्चतुर्थस्तवके (ज्ञेयः) वक्ष्यते।

अत्र साध्वी स्त्री भर्तृकृत(पुण्यमर्द्धं/पुण्यार्द्धं) लभते तदुक्तं हेमाद्रिणा।

यद्देवेभ्यो यच्च पित्रादिकेभ्यः
कुर्य्याद्भर्त्ताभ्यर्च्चनं सत्क्रियाश्च।
तस्यार्द्धं सा तत्फलं नान्यचित्ता
नारी भुङ्क्ते भर्त्तृशुश्रूषयैव॥

या वञ्चयन्ति भर्त्तारं योनिदूषाश्च याः स्त्रियः।
योनिदोषात् पुण्यफलं नाश्नन्ति निरयङ्गमाः॥
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम्।
कौतूहलं मलं साध्व्या मलं दानस्य कीर्त्तनम्॥

इति नित्यदानविधानम्।

---

* तत्र अपात्रे इत्यर्थः।

अथ मङ्गलावेक्षणम् ।

तत्र दक्षः ।

देवपूजां ततः कृत्वा गुरुमङ्गलवीक्षणम् ।
रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् ॥

तथा ।

गुरुनग्नींश्च सूर्य्यञ्च प्रातः पश्येत्सदा बुधः । इति ।

भारते ।

वृद्धो ज्ञातिर्यथामित्रं दरिद्रो यो भवेदपि ।
गृहे वासयितव्यास्ते धनमायुष्य(मेव च)मिच्छता ॥
गृहे पारावता धन्याः शुकाश्च सहसारिकाः ।
गृहेष्वेते न पापास्तु तथा वै तैलपायिकाः ॥
उद्दीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा ।
अमङ्गल्यानि चैतानि तथाक्रोशो महात्मनाम् ॥

कात्यायनः ।

श्रोत्रियं सुभगामग्निं गामग्निचितमेव च ।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥

श्रोत्रियलक्षणमुक्तं भारते ।

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

याज्ञवल्क्यः ।

स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ॥

नारद. ।

लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥
एतानि सततं पश्येन्नमस्येदर्चयेद्बुधः ।
प्रदक्षिणानि कुर्वीत यस्तस्यायुर्न हीयते ॥

इति मङ्गलावेक्षणविधानम् ।

इति श्रीमन्नागदेवभट्टात्मजश्रीमदनन्तभट्टविरचिते
विधानपारिजाते आह्निकविधौ दिनप्रथम-
भागकृत्यविधानं समाप्तम् ।

अथ द्वितीये भागे अध्ययनं कार्यम् ।

तत्र दक्षः ।

द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।
समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥

वेदाभ्यासोऽनेकधा भवति ।

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं पुनः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा* ॥ इति ।

---

* तत्राप्यादौ परम्परागतो वेदः पठनीयः । तथाच वशिष्ठः—

पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः ।
प्रथम तमधीयीत तच्छास्त्रं कर्म चाचरेत् ॥
यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।
स शूद्रवद्बहिष्कार्य्यः सर्व्वकर्म्मसु साधुभिः ॥ इति ।

तत्र तावदृष्यादिकमुच्यते ।

ऋग्वेदस्य अग्निरृषिरग्निर्देवता गायत्री छन्दः अध्ययनादौ विनियोगः । यजुर्वेदस्य वायुरृषिर्वायुर्देवता त्रिष्टुप् छन्दः अध्ययनादौ विनियोगः । सामवेदस्य आदित्य ऋषिरादित्यो देवता जगती छन्दः अध्ययनादौ विनियोगः । अध्ययनञ्च

गुरुश्चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।
आहृतश्चाप्यधीयीत लब्धञ्चास्मै निवेदयेत् ॥

इति विधिना कर्त्तव्यम् । अधीत्य च वेदार्थोऽवगन्तव्यः ।

अधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥

इति स्मृतेः ।

कृतज्ञाद्रोहिमेधाविशुचिक(ल्पा)ल्यानसूयकाः ।
अध्याप्या धर्म्मतः साधुशक्ताप्तज्ञान*वित्तदाः† ॥

कल्य आधिव्याधिरहितः । शक्तो गुरुशुश्रूषायाम् । स्पष्टमन्यत् ।
एते कृतज्ञत्वादयो धर्म्मा व्यस्ताः समस्ता वा यथासम्भवं वेदितव्याः ।

वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥

मनुः ।

---

* अन्यज्ञानं ज्ञानान्तरम् ।

† मनुस्तु—आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्म्मतः ॥

न निन्दाताड़ने कुर्य्यात् पुत्रं शिष्यञ्च ताड़येत् ।
अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि ॥ इत्यादि ।

अथानध्यायाः ।

तत्र उशनाः ।

अयने विषुवे चैव शयने बोधने तथा ।
अनध्यायं प्रकुर्व्वीत मन्वादिषु युगादिषु ॥
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्म्मणि चोत्सर्गे स्वशाखाश्रोत्रिये (मृते) तथा ॥
चतुर्द्दश्यां पञ्चदश्यामष्टम्यां राहुसूतके* ।
ऋतुसन्धिषु† भुक्त्वा च श्राद्धिकं प्रतिगृह्य च‡ ॥

इदमेकोद्दिष्टव्यतिरिक्तविषयम् । महैकोद्दिष्टे त्र्यहं न कीर्त्तयेद्ब्रह्म इति विशेषोक्तेः । पशुमण्डूकादिभिरन्तरागमने अहोरात्रमनध्यायः§ । देशे अशुचावात्मनि चेति सप्तत्रिंशदनध्याया याज्ञवल्क्योक्तास्तात्कालिकाः ।

तथा ।

---

* राहुसूतके यच्च्युहानध्यायकीर्त्तनं तदयस्तात्वविषयमिति कश्चित् ।

† ऋतुसन्धिषु ऋतुसन्धिगतासु प्रतिपत्सु इति विज्ञानेश्वरः ।

‡ श्राद्धिकं प्रतिगृह्य च इत्येतत् पार्व्वणविषयम् । एकोद्दिष्टभोजनादौ मन्वादिभिस्त्र्यहोक्तेः । इति गोपीनाथः ।

§ पशुमण्डूकनकुलश्वाहिमार्ज्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥

इति याज्ञवल्क्यवचनात् । शक्रपातोच्छ्रयकालस्तु आश्विनशुक्लपञ्चम्यां तदुत्थापनं विजयदशम्यां तदवरोपणमिति ।

रात्री यामद्वयादर्व्वाग्यदि पश्चेत्त्रयोदशीम् ।
प्रदोष: स तु विज्ञेयश्चतुर्थी पूर्व्वयामगा ।
सप्तमी सार्द्धयामस्था प्रदोषोऽधीतिवर्ज्जित: ॥ इति ।

अत्रत्यो विशेषो ब्रह्मचारिप्रकरणे द्रष्टव्य: ।

इति श्रीविधानपारिजाते चाह्निकविधौ
द्वितीयभागकृत्यविधानं समाप्तम् ।

## अथ धनार्ज्जनविधि: ।

तत्र दक्ष: ।

तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ।

पोष्यवर्गस्तु ।

माता पिता गुरुर्भार्य्या प्रजा दीन: समाश्रित: ।
अभ्यागतोऽतिथिश्चाग्नि: पोष्यवर्ग उदाहृत: ॥

योगीश्वर: ।

उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये ।

ईश्वरमभिषेकादिगुणयुक्तमन्यं वा श्रीमन्तम् । अलब्धलाभो योग: लब्धस्य रक्षणं क्षेम: ।

मनु: ।

सप्तवित्तागमा धर्म्या दायो लाभ: क्रयो जय: ।
प्रयोग: कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥

दायोऽन्वयागतं धनं लाभो निधिदर्शनं प्रयोगो वृद्ध्यर्थं धन-

प्रदानम्। कर्म्मयोगः कथादिः। इदन्तु विप्रादेर्यथायोग्यं ज्ञेयम्।

तथाहि।

अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट्कर्म्माण्यग्रजन्मनः॥
षण्णान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥
प्रधानं क्षत्रिये कर्म्म प्रजानां परिपालनम्।
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्॥

कुसीदो वृद्धिजीवनम्।

शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्॥

मनुः।

अद्रोहेण च भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि॥
ऋतामृताभ्यां जीवे(त)त्तु मृतेन प्रमृतेन वा।
सत्यानृताभ्यां जीवेत* न श्ववृत्त्या कदाचन॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्॥
सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते।
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्ज्जयेत्॥

---

* सत्यानृताभ्याया वापि इति मनुसंहितायां पाठः।

[illegible]तथा ।

कुसूलकुम्भीधान्यो वा त्र्यहिकोऽश्वस्तनोऽपि वा* ।

कुसूलं कोष्ठकं कुम्भी उष्ट्रिका ताभ्यां परिमितं धान्यं यस्य स तथोक्तः । त्र्यहपर्य्याप्तं धान्यं यस्य स त्र्यहिकः । नास्ति श्वस्तनं धान्यं यस्य सोऽश्वस्तनः ।

कुसूलधान्यादिसङ्ग्रहोपायमाह याज्ञवल्क्यः ।

जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ।

शाल्यादेर्निपतितपरित्यक्तावक्षरीग्रहणं शिलम् । एकैकस्य त्यक्तकण-स्योपादानमुञ्छः । एषां कुसूलधान्यादीनां मध्ये परः पर उत्त-रोत्तरः श्रेयान् प्रशस्यतर इत्यर्थः । एतच्चातिसंयतं यायावरं प्रत्युच्यते न शालीनं प्रति ।

एतद्द्वैविध्यमुक्तं वशिष्ठेन ।

द्विविधो हि गृहस्थो यायावरः शालीनश्चेति । तत्रासंयतो यायावरः । शालीनस्तु प्रेष्यचतुष्पदधनधान्यादियुक्तः ।

शालीनस्यापि चातुर्विध्यमुक्तं मनुना ।

षट्कर्म्मको भवत्येषां त्रिभिरन्यः प्रवर्त्तते ।

द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति† ॥

---

* मनुसंहितायान्तु वचनमिदं किञ्चित्परिवर्त्तितं दृश्यते—

कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।

त्र्यैहिको वापि भवेदश्वस्तनिक एव वा ॥

† एषां गृहस्थानां मध्ये एकः (यो बहुपोष्यः) ऋतामृतादिपञ्चकं कुसीदञ्च चाश्रयेत् । अन्यस्ततोऽल्पपोष्यः विःभयोजनाध्यापनप्रतिग्रहैः द्वाभ्यां याजनाध्यापनाभ्यां ब्रह्मसत्रेण अध्यापनेन इति कुल्लूकः ।

अत्र षट्कर्म्माणि याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यानि।
शेषं सुगमम्।

कूर्म्मपुराणे।

देवेभ्यश्च पितृभ्यश्च दद्याद्भागन्तु विंशकम्।
त्रिंशद्भागन्तु विप्राणां कृषिङ्कृत्वा न दोषभाक्॥

कृषिप्रकारो वृद्धपाराशरे द्रष्टव्यः।

अथापदि प्रतिग्रहवृत्तिः।

चतुर्व्विंशतिमते।

सीदंश्चेत्प्रतिगृह्णीयाद्ब्राह्मणेभ्यस्ततो नृपात्।
ततस्तु वैश्यशूद्रेभ्यः शङ्खस्य वचनं यथा॥

असीदतस्तु।

विद्यमाने धने यस्तु प्रतिग्रहरुचिर्द्विजः।
रौरवं नरकं प्राप्य तत्रैव परिपच्यते॥

इति व्यासोक्तमाकलनीयम्।

याज्ञवल्क्योऽपि।

राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा।
दम्भिहैतुकपाषण्डिवकवृत्तींश्च वर्ज्जयेत्॥

युक्तिबलेन सर्व्वत्र संशयकारी हैतुकः। राजाऽत्र न्यायपरो न तु राजमात्रम्।

यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः।
स पर्य्यायेण यातीमान्नरकानेकविंशतिम्॥

इत्यन्यायपरराजप्रतिग्रहे निन्दाश्रवणात्।

...ऽपि ।

प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टा दशगुणं पूर्व्वात्पूर्व्वादेते यथाक्रमम् ॥

सूनी प्राणिहिंसापरः । चक्री तैलिकः । ध्वजी सुराविक्रयी । वेश्या
...ली ।

...ऽपि ।

अराजन्यप्रसूतस्य राज्ञः स्वच्छन्दवर्त्तिनः ।
घोरः प्रतिग्रहस्तस्य मध्वास्वादो विषोपमः ॥
तथैव राजमहिषी राजामात्याः पुरोहिताः ।
पापेनार्थेन संयुक्ताः सर्व्वे ते राजधर्म्मिणः ॥

...रते दानधर्म्माधिकारे ।

वेदविक्रयिणश्चैव वेदानाञ्चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥

मनुः ।

एधोदकं मूलफलमन्नमभ्युद्यतञ्च* यत् ।
सर्व्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥

सर्व्वतः शूद्रादपि । अभयदक्षिणान्तु म्लेच्छादेरपीति श्लोकार्थः ।

अत्र विशेषो विष्णुपुराणे ।

सम्मोह्य विप्रो गृह्णीयाच्छूद्रान्नं गृहमागतम् ।

---

* अभ्युद्यतमभिमुखमुपनीतमिति मेधातिथिः । अयाचितोपनीतमिति कल्लूकः ।

अत्र शूद्रान्नमामान्नम्।

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो* द्विजः।
आददीताममेतस्मादवृत्तावेकरात्रिकम्॥

इति मनूक्तेः।

तथा।

आममांसं मधु घृतं धानाः क्षीरमथोदितम्।
गुडं तक्रञ्च सङ्ग्राह्यं निवृत्तेनापि शूद्रतः॥

याज्ञवल्क्योऽपि।

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च॥

चकाराद्गृहादि।

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः॥

इति विशेषोक्तेः कुलटादेः प्रत्याख्येयमेव। अयमुपदेशः प्रतिग्रह-प्रवृत्तस्यैव न तु निवृत्तस्येति विज्ञानेश्वरः।

---

* अश्राद्धिनः श्राद्धादिपञ्चयज्ञशून्यस्य इति कुल्लूकः। मेधातिथिस्तु श्राद्धशब्देन 'पाक-यज्ञादिक्रिया शूद्रस्य विहिता लक्ष्यते तत्क्रियाननुष्ठायिनः। अश्रद्धिन इति वा पाठः अश्रद्धावत इति तदर्थः। एवं व्याचख्यौ।

अथ आपद्वृत्तिः ।

तत्र बृहस्पतिः ।

अजीवन् कर्म्मणा स्वेन विप्रः क्षात्त्रं समाश्रयेत् ।
वैश्यकर्म्माथवा कुर्य्याद्धीनकर्म्म* विवर्ज्जयेत् ॥

कौर्म्मे ।

कुसीदं कृषिवाणिज्ये प्रकुर्व्वीत स्वयङ्कृतम् ।
कृषेरभावे वाणिज्यं तदभावे कुसीदकम् ॥

कुसीदो वृद्धिजीवनम् ।

वृद्धिमाह याज्ञवल्क्यः ।

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ इति ।

अशीतिभागः अशीतितमो भागः । अन्यथा बन्धकरहिते प्रयोगे वर्णक्रमाद्द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति । अयं भावः । ब्राह्मणे अधमर्णे द्विकं शतं द्वौ भागौ अस्मिन्च्छते वृद्धिर्दीयते इति द्विकं शतम् । तदस्मिन् वृद्ध्यायलाभशुल्कापदा दीयते इति सूत्रेण कन् । एवं क्षत्रियादौ त्रिकादिशतं प्रतिमासं ज्ञेयम् ।

अत्र विशेषान्तरमाह स एव ।

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।
दद्युर्वा स्वकृतां वृद्धिं सर्व्वे सर्व्वासु जातिषु ॥

मनुः ।

---

* हीनकर्म्म शूद्रकर्म्म सेवादिरूपमित्यर्थः ।

नातिसांवत्सरीं वृद्धिं नाभीष्टाम्तु पुनर्हरेत् ।
चक्रवृद्धिः कालिका वा कारिका कायिका च या ॥
वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासन्तु कालिका ।
इच्छाकृता कारिका स्यात् कायिका कायकर्म्मणि ॥
हीनजातिं परिक्षीणामृणार्थं कर्म्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

मनुः ।

वानस्पत्यं फलं मूलं दार्व्वग्न्यर्थं तथैव च ।
तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥

यत्तु भारते लिखितम् । अपृष्ट्वा फलं गृह्णतो हस्तकर्त्तनम् तत्प्रकारान्तरेण निर्व्वाहे सति तथा न कार्य्यमित्येतदर्थमित्यवधेयम् ।

अङ्गिराः ।

व्याधितस्य दरिद्रस्य कुटुम्बात्प्रच्युतस्य च ।
अध्वानं वा प्रवृत्तस्य भिक्षाचर्य्यं विधीयते ॥

देवलः ।

याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् ।
कृत्वा सद्यः पतत्येव पतितेन न संशयः ॥

उशनाः ।

पतितान्नमादत्ते भुङ्क्ते वा ब्राह्मणो यदि ।
कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं समाचरेत् ॥

इति योगक्षेमविधानम् ।

अथ चतुर्थभागकृत्यम्।

तत्र दक्षः।

चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले॥

कृत्रिमादिति शेषः।

नदीषु देवखातेषु तड़ागेषु सरःसु च।
स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च॥
मन्त्रपूतैर्जलैः स्नानं प्राहुः स्नानफलप्रदम्।
अन्यथा वारिमग्नानां यादसामिव तत्समम्॥

[illegible]।

ब्राह्मणैः स्नातुमायातैः सह गच्छन्ति देवताः।
पितरश्चापि गच्छन्ति वायुभूता जलार्थिनः।
गत्वोदकान्तं विविक्तं स्थापयेत्तान् पृथक् क्षितौ॥

तान् मृदादिसम्भारान्।

त्रिधा कृत्वा मृदं तान्तु गोमयञ्च विचक्षणः।
मृदेकया शिरः क्षाल्यं द्वाभ्यां नाभेरथोपरि॥
अधश्च तिसृभिः (कार्य्यः) क्षाल्यं षड्भिः पादौ तथैव च।
प्रक्षाल्य सर्व्वकायञ्च द्विराचम्य यथाविधि।
मन्त्रन्यस्तोपवीतं यत्नोद्धरेत्तत्कदाचन॥

इति स्मृतिः कण्ठस्थमेव उपवीतं क्षालनीयमित्युक्तम्।

तत्र विशेषो छन्दोगाह्निके।

तैत्ता मैत्रा: कठा: काण्वा ये च वाजसनेयिन: ।
कण्ठादुत्तार्य्य सूत्रन्तु कुर्व्वीरन् क्षालनं द्विजा: ॥
बह्वृचा: सामगाश्चैव ये चान्ये याजुषा अपि ।
कण्ठादुत्तार्य्य सूत्रन्तु पुन: संस्कारमाप्नुयु: ॥

तथा ।

तूष्णीमेवावगाहेत यदि स्यादशुचिर्नर: ।
आचम्य विधिवत्पश्चात्तत: स्नानं समाचरेत् ॥

यम: ।

सपवित्रं करङ्कृत्वा आचम्य प्राङ्मुख: स्थित: ।
प्राणायामत्रयं कुर्य्यात्कालस्नानमत: परम् ॥ इति ।

गङ्गाव्यतिरिक्तस्थले विशेषमाह वामनपुराणम् ।

तीर्थं तु कल्पयेद्विद्वान्मूलमन्त्रेण मन्त्रवित् ।
नमो नारायणायेति मूलमन्त्र उदाहृत: ॥
चतुर्हस्तप्रमाणन्तु चतुरस्रं समन्तत: ।
प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षण: ॥
विष्णो: पादप्रसूतासि वैष्णवी विष्णुदेवते* ।
पा(त्रा)हि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् ॥
तिस्र: कोट्योऽर्द्धकोटी(टिश्च) च तीर्थानां वायुरब्रवीत् ।
दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि ॥
नन्दिनीत्येव ते नाम देवेषु नलिनीति च ।

---

* विष्णुपूजिता इति बहुषु निबन्धेषु पाठ: ।

दत्ता पृथ्वी च विहगा विश्वकाया शिवाऽमृता* ॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी ।
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ॥
एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् ।
भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥ इति ।

प्रकारान्तरमपि ।

नन्दिनी नलिनी सीता मालती च महापगा ।
विष्णुपादाब्जसम्भूता गङ्गा त्रिपथगामिनी ॥
भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी ।
द्वादशैतानि नामानि यत्र तत्र जलाशये ।
स्नानोद्यतः पठेन्नित्यं तत्र तत्र वसाम्यहम् ॥ इति ।

गङ्गायान्तु तीर्थान्तरं न स्मर्त्तव्यमित्युक्तं स्कान्दे ।

गङ्गानदीं समासाद्य नान्यां स्नाने नदीं स्मरेत् ।
यदि स्मरेत्तदा सद्यस्तस्य पुण्यं विनश्यति ॥
स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनैः ।
विना विष्णुपदीं क्वान्यत्समर्थमघशोधने ॥ इति ।

## अथ मध्याह्नस्नानविधिः ।

आश्वलायनपरिशिष्टे ।

अथ मध्यन्दिने तीर्थमेत्य धौतपादपाणिमुखो द्विराचम्य आयत
प्राणः शुचौ देशे खनित्रेण भूमिं गायत्र्युक्तेन खनित्वा उपरि मृद

* नन्दा पृथ्वी च सुभगा विश्वकाया शिवा (शि सिता । पाठोऽयं आर्त्तसम्मतः ।

चतुरङ्गुलमुद्धास्य अधस्तान्मृदं खनित्वा गायत्र्या आदाय गर्त्त-मुद्वासितया मृदा परिपूर्य्य मृदमुपात्तां शुचौ (देशे) तीरे निधाय गायत्र्या प्रोक्ष्य हस्ताद्यङ्गमनुलिप्य आस्नाप्लुत्य क्षालयित्वा आदित्यं निरीक्ष्य तं ध्यायन् स्नायादेतन्मङ्गलस्नानं प्राहुः ।

अथ तीरे द्विराचम्य तृतीय*मस्त्रेणादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणभागमस्त्रेण दशसु दिक्षु विक्षिप्य उत्तरं तीर्थे क्षिप्त्वा तृतीयं गायत्र्याऽभिमन्त्रितमादित्याय दर्शयित्वा तेन मू(र्द्धा)द्धि आपादाद्गायत्र्या प्रणवेन वा सर्व्वाङ्गमनुलिप्य सु-मित्र्या न आप ओषधयः सन्तु इति सकृदङ्गिरात्मानमभिषिच्य दुर्मित्र्यास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति मृदमद्भिः क्षालयेत्। अथ वरुणप्रार्थनादिना तर्पणान्तेनोक्तेन विधिना स्नायात्। नात्र प्राग्ब्रह्मयज्ञतर्पणाद्वस्त्रं निष्पीड़येत् अपुत्रादयो ह्यन्ते तर्प्या इत्येष स्नानविधिः। तदेतदसम्भवे अद्भिरेव कुर्य्याद्ग्रामा-दिषु। न च गृहे मृदा स्नायात् न शीतोदकेन। शीतोष्णोदकेन गृहे स्नायान्मन्त्रविधिञ्च वर्ज्जयेत्। वहिर्वा शुचौ देशे सर्व्वं पश्चात् कुर्य्यादिति। अत्र

न प्रातर्मृत्तिकास्नानं मध्याह्ने न च गोमयैः।

इति निषेधाद्गोमयस्नानं नोक्तं तदाश्वलायनविषयम्। कात्या-यनानान्तु मध्याह्नेऽपि तत्सूत्रे गोमयस्नानमुक्तम्। तेषां प्रातः-स्नानं सङ्क्षेपेण भवति अनुदितहोमित्वात्।

---

* मृदंशमित्यर्थः प्रकृतत्वात्।

तथाच छन्दोगपरिशिष्टे कात्यायनः।

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्म्मणः।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः।
प्रातः सङ्क्षेपतः स्नानं मध्याह्ने तु सविस्तरम्॥ इति।

अतश्च अथातो नित्यस्नानं नद्यादावित्येष स्नानविधिरित्यनन्तरकथित-कोक्तसर्व्वाङ्गोपवृंहितं स्नानं मध्याह्ने एव तेषां भवति।

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः।

इति कात्यायनवचनन्तु प्रधानभूतस्नानपरमनाहिताग्निपरं वेति ज्ञेयम्। प्रातर्न तनुयात् स्नानमिति तदुक्तेः।

काम्याघमर्षणे मन्त्रमाह याज्ञवल्क्यः।

जम्बूका नाम गायत्री वेदे वाजसनेयके।
अन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोहति॥
इदमाप इमं मन्त्रं* मुक्त्वा ह्यग्नो विमुच्यति।
तद्विष्णोरिति मन्त्रेण† स्नायादप्सु पुनः पुनः।
गायत्री वैष्णवी ह्येषा प्राजापत्यर्षिका स्मृता॥

अथास्मौ सङ्क्षेपस्नानविधिमाह योगी याज्ञवल्क्यः।

एष विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः।
असामर्थ्यान्न कुर्य्याच्चेत्तत्रायं विधिरुच्यते॥

---

* इदमापः प्रवहत यत्किञ्च दुरितं मयि।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्॥

† तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।
दिवीव चक्षुराततम्॥

स्नानमन्त्रजले चैव मार्ज्जनाचमने तथा ।
जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनम् ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतदुपदिष्टं महात्मभिः ॥ इति ।

अत्र विशेषमाह स एव ।

मृदा स्नानं न कुर्व्वीत रात्रौ सन्ध्याग्रहेषु च ।
नैमित्तिके तथा स्नाने तथा भौमार्कवारयोः ॥

तथा ।

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
मृदा स्नानं पिण्डदानं न कुर्य्यात्तिलतर्पणम् ॥

पिण्डदानमत्र काम्यं नित्यन्तु क्षयाहश्राद्धादि भवत्येव ।

आदित्येऽहनि जन्मर्क्षे तथा जन्मतिथावपि ।
शोभनेऽस्य दिने चैव न कुर्य्यात्तिलतर्पणम् ॥

शोभनदिनेषु श्राद्धमपि न कार्य्यम् ।

ये वा भद्रं दूषयन्ति स्वधाभिरिति श्रुतेः ।

इति पारिजाते । स्नानाङ्गतर्पणादि पूर्व्ववत् । मध्याह्नसन्ध्यावन्दने विशेषः पूर्व्वमेवोक्तः ।

अथ मध्याह्नसन्ध्यातर्पणप्रयोगः ।

सावित्र्याः कश्यपस्त्रिष्टुप् मध्याह्नसन्ध्यातर्पणे विनियोगः ।

ॐ भुवः पुरुषं तर्पयामि ॐ यजुर्व्वेदं ॐ मण्डलं ॐ रुद्ररूपिणं शोमन्तरात्मानं ॐ सावित्रीं ॐ वेदमातरं ॐ साङ्कृतिं ॐ सन्ध्यां ॐ युवतिं ॐ रौद्रीं शोमुषसं ॐ निमृजं ॐ सर्व्वार्थ-

सिद्धिकरीं ॐ सर्व्वमन्त्राधिपतिं ॐ भूर्भुवः स्वः पुरुषम्। एवं तर्पयित्वा उपस्थानादि सर्व्वं समाप्य

मध्याह्नसन्ध्याङ्गत्वेन गायत्र्या जपितेन च।
यथासंख्येन जप्तेन रुद्रो मे प्रीयतामिति॥

इति वसिष्ठोक्तेन मन्त्रेण जपं निवेद्य मुद्रादि च प्रदर्श्य ब्रह्मयज्ञं कुर्य्यात्। तत्र श्रुतिः शातपथी।

अथ ब्रह्मयज्ञः स्वाध्यायो वै ब्रह्मयज्ञ इत्यादिः।

योगी।

प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च।
दर्भेषु दर्भपाणिः स्यात्प्राङ्मुखस्तु कृताञ्जलिः।
स्वाध्यायञ्च यथाशक्ति ब्रह्मयज्ञार्थमारभेत्॥

अत्र कर्म्मादौ पवित्रादिप्राप्तावपि दर्भपाणिरिति पुनर्वचनं पवित्रोपग्रहव्यतिरिक्तदर्भप्राप्त्यर्थम्।

ब्रह्मयज्ञे च ये दर्भास्तेषां त्यागो विधीयते।

इति तेषां त्यागश्च श्रूयते न तु पवित्रादेः।

योगी।

आदावारभ्य वेदन्तु त्वात्वोपर्य्युपरि क्रमात्।
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः॥ इति।

अस्यायमर्थः। स्नात्वा सन्ध्यादिकं कृत्वा ओङ्कारव्याहृतिगायत्रीपूर्व्वकं मन्त्रब्राह्मणात्मकं वेदं प्रणवाद्यन्तं यथाशक्ति पठित्वा प्रतिदिनमेवमेव उपर्य्युपर्य्यध्ययनेन समाप्य अन्यवेदमारभ्य एवमेव समापयेदिति।

ऋषिच्छन्दोदैवतानि विनियोगं तथैव च ।
अविदित्वा जपेद्यस्तु महानर्थमवाप्नुयात् ॥

आश्वलायनः ।

ब्रह्मयज्ञप्रवृत्त्यर्थं स्वगृह्योक्तविधानतः ।
स्वाध्यायं प्रणवाद्यन्तं कुर्य्यादेवं द्विजः सदा ।
तदन्ते तर्पयेदग्निर्दैवतर्षिपितॄंस्तथा ॥

शौनकोऽत्र विशेषमाह ।

ग्रामात्प्राच्यामुदीच्यां वा प्रागुदीच्यामथापि वा ।
निष्क्रम्य तत्र नादेये* तड़ागस्थेऽपि वाम्भसि ॥
स्नात्वा यज्ञोपवीती च भूत्वाचम्योदकं तथा ।
पवित्रे लक्षणैर्युक्ते कृत्वाऽच्छिन्ने सुतारके ॥
तयोरेकैकमेकैकं पाणिना धारयेत् पृथक् ।
एवं पवित्रवन्तौ द्वौ पाणी कृत्वा द्वयोरथ ॥
सव्यस्य पाणेरङ्गुष्ठप्रदेशिन्योस्तु मध्यतः ।
दक्षिणस्याङ्गुली(र्य्यं)न्यस्य चतस्रोऽङ्गुष्ठवर्ज्जिताः ॥
तथा सव्यकराङ्गुष्ठं दक्षिणाङ्गुष्ठवेष्टितम् ।
कुर्व्वीत चैवं सम्बद्धौ पाणी दक्षिणजानुनि ॥
निधाय स्वस्य हृदये पश्यन् केवलमम्बरम् ।
सम्मीलिताक्षियुग्मो वा निरुध्य मनसो गतिम् ॥

---

* नादेये नदीसम्बन्धिनि ।

योगाधिरूढमात्मानं कृत्वानन्यमनास्ततः ।
यावन्तं मन्त्रमध्येतुं शक्यं स्वाध्यायकात्मनः ॥
तावन्तमनुवाकं वा सूक्तं वर्गमथापि वा ।
सङ्कल्प्य मनसा पूर्व्वमिदमध्येष्य इत्यथ ॥
समस्ता व्याहृतीः पूर्व्वं जपन् प्रणवपूर्व्वकम् ।
सावित्रीञ्च जपेत्पच्छः* पूर्व्वमर्द्धर्चशस्ततः ॥
पश्चात्समस्तामित्येवं जपित्वा त्रिः समाहितः ।
ततो यावत्प्रतिज्ञातमध्यायं सूक्तमेव वा ॥
ऋचं वाक्यं ततो(ऽ)वश्यमधीयीत स्वशक्तितः ।
पश्चाद्दौ नम इत्याद्यां करोमीत्यन्तसंयुताम् ॥
ऋचं जपित्वा पश्चादोमित्येवं समुदीरयेत्(यन्) ।
यद्द्यादतिथिभ्यः सा ब्रह्मयज्ञस्य दक्षिणा ॥ इति ।
माध्याह्निकात्पूर्व्वमेव तर्पणाद्ब्रह्मवेदिनाम् ।
अन्येषान्तु स्वगृह्योक्तं पश्चाद्वा पूर्व्वमेव वा ॥

इति स्मृत्यन्तरम् ।

जप्यानाह आश्वलायनः ।

ऋचो यजूंषि सामानि अथर्व्वाङ्गिरसो ब्राह्मणानि कल्पा(ल्पा)नाराशंसीरितिहासपुराणानीति ।

ऋग्विधाने ।

---

* पच्छः पादशः पादं पादमित्यर्थः ।

अग्निमीळे जपेत्सूक्तं* पापघ्नं श्रीकरं परम् ।
पारायणफलं तस्य वेदानां वै सहस्रकम् ॥ इति ।

यमः ।

ओङ्कारं व्याहृतीस्तिस्रो गायत्रीं त्रिपदां तथा ।
मनसैकमनुस्मृत्य वेदादिकमुपक्रमेत् ॥
स्वरव(र्ण)र्णलयोपेतं मात्रास्थानक्रियान्वितम् ।
वेदमेवं पठेद्यस्तु स्वाध्यायफलमश्नुते ॥

मनुः ।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

तथा ब्रह्मयज्ञे पुरुषसूक्तस्य फलातिशय उक्तः मात्स्ये ।

ब्रह्मयज्ञे जपेत् सूक्तं पौरुषं† चिन्तयन् हरिम् ।
स सर्व्वान् जपते वेदान् साङ्गोपाङ्गान् द्विजोत्तमः ॥ इति ।

एवमुक्तविधिना ब्रह्मयज्ञं कृत्वा स्वस्वशाखोक्तमार्गेण देवर्षिपितृ-तर्पणं कुर्य्यात् ।

अथ तर्पणधर्म्मा उच्यन्ते ।

स्मृत्यर्थसारे ।

वामहस्ते तिलान् दत्वा जलमध्ये तु तर्पयेत् ।

तिलान् संस्थाप्य तर्पयेदिति शेषः ।

---

* अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥

† सहस्रशीर्षेत्यादिकं षोडशर्चम् ।

स्नानशाट्यस्थले पात्रे रोमकूपे* न कुत्रचित् ।
असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिम् ॥

दाल्भ्यः ।

ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म्म च ।
अनोङ्कृत्य कृतं सर्व्वं न भवेत्सिद्धिकारकम् ॥ इति ।

तेन तर्पणप्रयोगे ओङ्कारः प्रयोक्तव्यः ।

हारीतः ।

आर्द्रवासा जले कुर्य्यात्तर्पणाचमनं जपम् ।
शुष्कवासाः स्थले कुर्य्यादिति वेदविदो विदुः ॥

तर्पणजलप्रक्षेपस्तु जले कार्य्यः ।

यत्तु कार्ष्णाजिनिराह ।

देवानाञ्च पितॄणाञ्च जले दद्याज्जलाञ्जलिम् । इति ।

तदशुचिस्थलविषयम् ।

तथाच विष्णुः ।

यत्राशुचिस्थलञ्च स्यादुदके देवतापितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्व्वं प्रतिष्ठितम् ॥
सव्येन देवकार्य्याणि वामेन पितृतर्पणम् ।
निवीतेन मनुष्याणां तर्पणन्तु विधीयते ॥

वामेन अपसव्येनेत्यर्थः ।

---

* रोमकूपेषु दाषातिशय उक्तो देवलेन ।

रोमसंस्थान् तिलान् कृत्वा यस्तु सन्तर्पयेत् पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन च ॥ इति ।

यत्तु ।

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।

अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम् ॥

इति व्यासवचनम् ।

अन्वारब्धेन* सव्येन पाणिना दक्षिणेन तु ।

इति योगिवचनम् ।

तथा ।

उभाभ्यामपि पाणिभ्यामुदकं यः प्रयच्छति ।

स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥

इति व्याघ्रपादवचनञ्च तच्छ्राद्धादिविषयमिति मदनपारिजाते उक्तम् । युक्तमेतत् ।

श्राद्धे विवाहकाले च पाणिनैकेन दीयते ।

तर्पणे तूभयेनैव विधिरेष पुरातनः ॥

इति कार्ष्णाजिन्युक्तेः । यद्वा येषां शाखायां विशिष्य एकहस्तेन तर्पणमुक्तं तद्विषयमिति ज्ञेयम् ।

मात्स्ये ।

उभयोर्हस्तयोः कृत्वा सलिलैः पूर्णमञ्जलिम् ।

देवानाञ्च पितॄणाञ्च शुचिस्तर्पणमाचरेत् ॥

प्रागग्रैस्तर्पयेद्देवानुदगग्रैस्तु मानुषान् ।

तानेव द्विगुणीकृत्य तर्पयेत्प्रयतः पितॄन् ॥

---

* पश्चाल्लग्नेनेत्यर्थः ।

प्राचीनावीत्यादिलक्षणमुक्तं भारद्वाजेन।

उत्क्षिप्ते वामबाहौ तु दक्षिणस्कन्धमाश्रितम्।
प्राचीनावीतिमित्याहुस्तत्पित्र्येष्वेव कर्म्मसु॥
कण्ठावलम्बितञ्चैव ब्रह्मसूत्रं यदा भवेत्।
तन्निवीतमिति ख्यातं प्रशस्तं कर्म्मणि मानुषे।
यथास्थानस्थितं सव्यं दैवे कर्म्मणि शस्यते॥

दैवर्षिदिव्यपितृतर्पणं जीवत्पितृकस्यापि भवति।

जीवत्पितृकोऽप्येतानन्यांश्चेतर इति कात्यायनोक्तेः।

न जीवत्पितृकः कुर्य्यात्तर्पणमिति निषेधस्तु पितृतर्पणमात्रविषयः।

तस्यापसव्यप्रकारमाह भृगुः।

अपसव्यं द्विजाग्र्याणां पित्र्ये सर्व्वत्र कीर्त्तितम्।
आप्रकोष्ठात्मकस्सव्यं मातापित्रोस्तु जीवतोः॥ इति।

आप्रकोष्ठात् प्रकोष्ठपर्य्यन्तम्।

न जीवत्पितृकः कुर्य्यात्तिलैः कृष्णैश्च तर्पणम्।

इति कृष्णतिलनिषेधात्तत्तर्पणे शुक्लतिला एव ग्राह्याः। अतिलमेव तर्पणमिति केचित्।

पराशरः।

शुक्लैस्तु तर्पयेद्देवान्मनुष्यान्शबलैस्तिलैः।
पितॄन्सन्तर्पयेत्कृष्णैस्तर्पणे सर्व्वदा द्विजः॥

कौर्म्मे तु।

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः।
पितॄंस्तिलैश्च सन्तर्पेदिति धर्म्मविदो विदुः॥ इति।

तथाच देवर्षितर्पणं यवैर्वा शुक्लतिलैर्वेति विकल्पः ।

बाहुं पूर्णं तिलैः कृत्वा जलस्थस्तर्पयेत्पितॄन् ।
स्थलस्थेन न कर्त्तव्यं पितॄणां प्रीतिमिच्छता ॥

इति पराशरः ।

यत्तु ।

रोमसंस्थैस्तिलैर्नैव तर्पयेन्मतिमान् पितॄन् । इति ।

तत्तु स्थलतर्पणविषयम् ।

योगी ।

आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान्शुभान् ।
प्रागग्रेषु सुरान् सम्यग्दक्षिणाग्रेषु वै पितॄन् ॥

अत्र आवाहनमन्त्रा विश्वेदेवाः स आगतेत्याद्या देवर्षिपितृलिङ्गका ग्राह्याः । कुशास्तरणमपि स्थलतर्पणविषयम् । जले असम्भवात् ।

यमः ।

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥
प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् ।
उदङ्मुखांस्तर्पेत पितॄन्दक्षिणतस्तथा ॥
सुरर्षिकर्म्म कुर्व्वाणः सव्यं जानु निपातयेत् ।
पितॄणां कर्म्म कुर्व्वाणो वामजानु निपातयेत् ॥
पाणिनैकगुणं प्रोक्तं दर्भैः शतगुणं भवेत् ।
तर्पणं खड्गपात्रेण ह्यक्षय्यायोपकल्पते ॥

दक्षः।

कुशाग्रैस्तर्पयेद्देवान्मनुष्यान् कुशमध्यतः।
पितृनथ समूलाग्रैस्तर्पयन्तु यथाक्रमम्॥
खड्गमौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणम्।
मणिकाञ्चनदर्भैर्वा न शून्येन कदाचन॥

इति शातातपवचनादशून्यो हस्तः खड्गादिमुद्रिकया कर्त्तव्यः। न तु खड्गादिपात्रग्रहणेन। अन्यथा अर्हन्ति पितरस्त्रींस्त्रीनित्यञ्जलि-विधायकवाक्यबाधापत्तेः।

अतएवोक्तं योगिना।

अनामिकाधृतं हेम तर्ज्जन्यां रौप्यमेव च।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः॥ इति।

यद्वा शिष्टाचाररक्षार्थं यस्मिन् सूक्ष्मपात्रे धृते अञ्जलिभङ्गो न भवति तद्ग्राह्यमित्यवधेयम्।

तथाच छागलेयः।

लघुपात्रं करे कृत्वा सौवर्णं खड्गमेव वा।
राजतं ताम्रजं वापि तेन सन्तर्पयेत्पितृन्॥

तथा।

जलान्ते तिलदर्भादीन् योऽनुष्ठानाय याचते।
नानुष्ठानफलं तस्य दातुरेव हि तत्फलम्॥

जलान्ते निषेधादन्यत्र तद्ग्रहणे न दोषः।

देवातिथ्यर्चनकृते गुरुभृत्यादिवृत्तये।
सर्व्वतः प्रतिगृह्णीयादित्युक्तत्वात्।

तिलापवादमाह मरीचिः ।

सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।

भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥

अन्यत्रापि ।

पक्षयोरुभयो राजन् सप्तम्यां निशि सन्ध्ययोः ।

विद्यापुत्रकलत्रार्थी तिलान् पञ्चसु वर्जयेत् ॥

तथा ।

सप्तम्यां रविवारे च जन्मर्क्षदिवसे तथा ।

गृहे निषिद्धं सतिलं तर्पणं तद्बुधैर्भवेत् ॥

बौधायनः ।

विवाहे चोपनयने चौले सति यथाक्रमम् ।

वर्षमर्द्धं तदर्द्धं च नेत्याहुस्तिलतर्पणम् ॥

एतस्य क्वचिदपवादमाह वशिष्ठः ।

उपरागे पितुः श्राद्धे ग्रमायाञ्चैव संक्रमे ।

निषिद्धेऽपि हि सर्व्वत्र तिलैस्तर्पणमाचरेत् ॥

कात्यायनः ।

मघायुगादिभरणीतीर्थपर्व्वविशेषतः ।

तिथिवारनिषेधेऽपि तिलैस्तर्पणमाचरेत् ॥

तथा ।

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।

निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥

इति त्रिस्थलीसेतौ ।

सङ्ग्रहे तु ।

कठाः काण्वाश्च जाबाला ये च वाजसनेयिनः ।

सतिलं तर्पणं कुर्य्युर्निषिद्धेषु दिनेष्वपि ॥

उद्धृतोदकतर्पणे तु विशेषस्तत्रैव ।

यद्युद्धृतं निषिञ्चेत्तु तिलान् सम्मिश्रयेज्जले ।

अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

अन्यथा अनुद्धृतोदकतर्पणे ।

मार्ज्जनं तर्पणं श्राद्धं न कुर्य्याद्वारिधारया ।

कुर्य्याच्चेद्वारिधाराभिस्तत्सर्व्वं निष्फलं भवेत् ॥

हेमरूप्यमयं पात्रं ताम्रं कांस्यसमुद्भवम् ।

पितॄणां तर्पणे शस्तं मृण्मयन्तु परित्यजेत् ॥

षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्त्तितम् ।

मध्यमन्तु त्रिभागोनं* कनिष्ठं द्वादशाङ्गुलम् ॥

इति शिवरहस्ये ।

तर्पणस्यावश्यकतामाह कात्यायनः ।

छायां यथेच्छञ्छरदातपार्त्तः

पयः पिपासुः क्षुधितो यथान्नम् ।

बालो जनित्रीं जननी च बालं

योषित्पुमांसं पुरुषश्च योषाम् ॥

तथा सर्व्वाणि भूतानि स्थावराणि चराणि च ।

---

* चतुर्व्विंशत्यङ्गुलमित्यर्थः ।

विप्रादुदकमिच्छन्ति सर्व्वाभ्युदयकाङ्क्षिणः ॥

पतितसन्न्यासिजीवत्पितृकस्तु देवर्षिदिव्यपितृतर्पणं कृत्वा स्वपितृपित्रादिभ्योऽपि तर्पयेत्तदाह लौगाक्षिः ।

वृद्धौ तीर्थे च सन्न्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः ॥

अविभक्तैरपि भ्रातृभिर्ब्रह्मयज्ञतर्पणे कार्य्ये ।

भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते ।
विभागे सति धर्म्मस्तु भवेत्तेषां पृथक् पृथक् ॥
होमाग्र्यदानरहितं न भोक्तव्यं कदाचन ।
अविभक्तेषु संसृष्टेष्वेकेनापि कृतङ्कृतम् ॥
पृथगप्येकपाकानां ब्रह्मयज्ञो द्वि(जाति)जन्मनाम् ।
अग्निहोत्रं सुरार्चा च सन्ध्या तर्पणमेव च ।
जपस्तपस्तीर्थयात्रा कार्य्यमेव पृथक् पृथक् ॥

इत्याश्वलायनोक्तेः । अग्निहोत्रमत्र औपासनम् अग्निहोत्रस्य निषिद्धत्वात् ।

तर्पणक्रममाह वशिष्ठः ।

देवानां तर्पणं पूर्व्वमृषीणां तदनन्तरम् ।
ततो दिव्यपितॄणाञ्च स्वकीयानां ततः परम् ॥

व्यासः ।

पूर्व्वं पित्रादयस्तर्प्यास्ततो मात्रादयोऽपि च ।
ततो मातामहाश्चैव मातामह्यस्ततः परम् ॥

हेमाद्रौ ।

पितृमातृमातामहपितृव्यभ्रातरः सुताः ।
पितृस्वसा मातुलाश्च तद्भगिन्यश्च यामयः ॥
भार्य्यापितृव्यपुत्राश्च भ्रातृपुत्रास्तथैवं च ।
दुहिता श्वशुरश्चैव भागुका गुरवस्तथा ॥
आचार्य्यः सुहृदः श्या(शा)ला उपाध्यायश्च पोषकाः ।
स्वामिनश्च सखायश्च मातापित्रोश्च बान्धवाः ॥
आत्मनो बान्धवाश्चैव ज्ञाताज्ञाता यथाक्रमम् ।
तर्पणे च गयाश्राद्धे तीर्थे महालये क्रमः* ॥ इति ।

सङ्ग्रहे तु ।

तातांबात्रितयं सपत्नजननी मातामहादित्रयं
स(स्त्रि)स्त्रीस्त्रीतनयादितातजननीस्वभ्रातरः सस्त्रियः ।
तातांबात्मभगिन्यपत्यधवयुग्जायापितासद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ इति ।

अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रिय एकैकमञ्जलिम् ।

इत्युक्तं तत्र विशेषमाह शालङ्कायनः ।

मातृमुख्यासु याश्तिस्रस्तासां दद्याज्जलाञ्जलीन् ।
त्रींस्त्रींश्चैव तथान्यासां दद्यादेकैकमञ्जलिम् ।
सपत्न्याचार्य्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जलीन् ॥

सपत्नी सपत्नमाता आचार्य्यः प्रसिद्धः पत्नी आत्मनः ।

स्वस्य मातरि जीवन्त्यां सप(त्नी)त्नजननी मता ।
तर्पयेत्केवलामेकां पुत्रिणीं वाप्यपुत्रिणीम् ॥

---

* तीर्थे चैव महालये । अयमेव पाठः समीचीनः ।

तथा ।

सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्व्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्व्वणम् ॥

इति हेमाद्रौ जातूकर्ण्योक्तेरयं विशेषः । मातामह
मातृवर्गस्य तर्पणं कार्य्यमिति केचित् । तन्न ।

अन्नमातामहान् कृत्वा मातॄणां यः प्रयच्छति ।
स मूढो नरकं याति यावदाभूतसंप्लवम् ॥

इति हेमाद्रौ तन्निषेधात् । न चैतदन्यविषयम् ।

पितृभ्यस्तर्पणं कुर्य्यात्ततो मातृभ्य एव च ।
ततो माताम(हानाञ्च)हेभ्यश्च क्रम एष हि तर्पणे

इति हारीतोक्तेः । तर्पण इत्युपलक्षणात् पिण्डदानादा
मेव ज्ञेयम् ।

प्रयोगक्रममाह यमः ।

सम्बन्धं प्रथमं ब्रूयान्नामगोत्रमतः परम् ।
श्राद्धेषु तर्पणे चैव विधिरेष सनातनः ॥

वशिष्ठः ।

सम्बन्धमनुकीर्त्त्यैव नामगोत्रमनन्तरम् ।
वस्वादिरूपं (सङ्कीर्त्त्य) सञ्चिन्त्य स्वधाकारेण तर्पयेत्

योगी तु ।

तृप्यत्विति समुच्चार्य्य तृप्यतामित्यथापि वा ।
विधिज्ञः प्रक्षिपेत्तोयं देवादीनामशेषतः ॥

अमुं तर्पयामीति वा प्रयोगः ।

नामान्ते तर्पयामीति स्वाहावोमिति च ब्रुवन् ।

इति कात्यायनोक्तेः । तथाच यथासूत्रं प्रयोगव्यवस्था द्रष्टव्या ।

यमतर्पणन्तु काम्यं दिनविशेष एव ।

तदाह वृद्धमनुः ।

यां काञ्चित्सरितं प्राप्य कृष्णपक्षे चतुर्द्दशी ।
यमुनायां विशेषेण नियतो नियतेन्द्रियः ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औ(ड़ु)दुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
इत्येतैर्नाममन्त्रैस्तु प्रणवादिनमोऽन्तकैः ।
तर्पयित्वा यमं देवं सर्व्वपापैः प्रमुच्यते ॥ इति ।

स्कान्दे तु ।

कृष्णपक्षे त्रयोदश्यामङ्गारकदिनं यदि ।
तदा स्नात्वा शुभे तोये तर्पयेद्(यमुनामपि)यमनामभिः ॥

इत्युक्तम् । यमतर्पणं वाजसनेयिनां नित्यं न तु काम्यम् । तत्सूत्रे नित्यत्वेन विधानादिति केचित् ।

सर्व्वतर्पणान्ते ब्रह्मवैवर्त्ते विशेष उक्तः ।

यत्रक्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥

संग्रहे तु ।

आब्रह्मस्तम्बपर्य्यन्तं* देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्व्वे मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥

एवमुक्तविधिना॰ सन्तर्प्य वस्त्रं चतुर्गुणीकृत्य स्थले अपसव्येनैव पी(निष्पी)ड़येत् ।

तदाह पराशरः ।

एवं हि तर्पणङ्कृत्वा सर्व्वेषां विधिवद्द्विजः ।
निष्पीड़येत्स्नानवस्त्रं तिलदर्भसमन्वितम् ॥
न पूर्व्वं तर्पणाद्वस्त्रं न चाम्भसि न पादयोः ।
शिलास्वधोदशं नैव द्विगुणं त्रिगुणं न वा ।
एतेषु पीड़यन् वस्त्रं राक्षसीं कुरुते क्रियाम् ॥

यत्तु ।

द्वादश्यां पञ्चदश्याञ्च संक्रमे श्राद्धवासरे ।
वस्त्रं निष्पीड़येन्नैव न च क्षारेण योजयेत् ॥ इति ।

तत् समन्त्रनिष्पीड़ननिषेधपरम् ।

तन्मन्त्रस्तु ।

ए(ये)के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते (तृप्यन्तु) गृह्णन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम् ॥ इति ।

अथ श्राद्धाङ्गतर्पणे विशेषः कथ्यते ।

प्रयोगपारिजाते ।

---

* आब्रह्मभुवनाल्लोका इत्यन्यतर्पणपद्धतौ पाठः ।

दर्शे तिलोदकं पूर्व्वं पश्चाद्दद्यान्महालये।
मातापित्रोः क्षये पूर्व्वं न पश्चात्तु परेऽहनि।
वर्षे(र्गे)कस्य क्षयो येषामन्येषान्तु विवर्ज्जयेत्॥

वृद्धशातातपः।

पूर्व्वं तिलोदकं दत्त्वा ग्रामश्राद्धं समाचरेत्।
प्रत्यब्दे न भवेत्पूर्व्वं परेऽहनि तिलोदकम्॥

हारीतोऽपि क्षयाहं प्रकृत्याह।

ततः परेऽह्नि कुर्व्वीत तर्पणं पुरुषः सुधीः।
तच्छेषैस्तिलदर्भैस्तु प्रातः स्नात्वा सुधासमम्॥

गार्ग्यः।

परेद्युः श्राद्धकृन्मर्त्त्यो यो न तर्पयते पितॄन्।
अतृप्ताः पितरस्तस्य शापं दत्त्वा व्रजन्ति ते॥
स्नात्वा तीरं समासाद्य उपविश्य कुशासने।
सन्तर्पयेत्पितॄन् पूर्व्वान् स्नात्वा वस्त्रञ्च धारयेत्॥

इदन्तु श्राद्धे देवताभूतपितृविषयम्। तेन नित्यतर्पणं बहुदैवत्यं श्राद्धदिने यथाकालं भवत्येव। अतएव

निषिद्धेऽपि दिने कुर्य्यात् क्षयाहे तिलतर्पणम्।

इति वचनं युज्यते नित्यतर्पणविषयत्वेन। अन्यथा क्षयाहे तर्पणमेव नास्तीति कुत्र प्रतिप्रसवः स्यादित्युक्तं प्रयोगरत्ने नारायणभट्टैः। महालयश्राद्धे तु देवर्षिपितृतर्पणं कृत्वा श्राद्धं कुर्य्यात्। श्राद्धानन्तरन्तु श्रा(द्ध)द्धदेवताभूतपितॄनेव तर्पयेत्। क्षयाहे तु नित्यतर्पणं पूर्व्वमेव कार्य्यम्। श्राद्धाङ्गभूततर्पणं द्वितीयदिने सन्ध्या-

वन्दनात् पूर्व्वमेव कार्य्यं तथैव शिष्टाचारात्।

तथा।

पञ्चश्राद्धन्तु नित्यं तर्पणं स्यादिने दिने।
सन्न्यस्ताहालये दद्यात्परेऽहनि तिलोदकम्॥
जीवमानः पिता यस्य माता यदि विपद्यते।
मातुः श्राद्धं सुतः कुर्य्यान्न कुर्य्याच्छ्राद्धतर्पणम्॥

इति सङ्ग्रहे। श्राद्धतर्पणं श्राद्धाङ्गतर्पणमित्यर्थः।

वृद्धिश्राद्धादौ तु नास्त्येव।

वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धे तथैव च।
मासानुमासिके चैव न कुर्य्यात्तिलतर्पणम्॥

इति गार्ग्योक्तेः। तीर्थप्राप्तौ तु स्वशाखोक्ततर्पणं कृत्वा देवा यक्षास्तथा नागा इत्यादि*पुराणोक्तमन्त्रैर्देवान् सन्तर्प्य सनकश्च सनन्दश्च इति मन्त्रेण ऋषीन् सन्तर्प्य अग्निष्वात्तास्तथा सौम्या इत्यादि पितृतर्पणं कुर्य्यादिति विश्वलोचेतावुक्तम्।

तर्पणफलमाह यमः।

---

देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः।
क्रूराः सर्पाः सुपर्णाश्च तरवो ज(जि)म्भगाः खगाः॥
विद्याधरा जलाधारास्तथैवाकाशगामिनः।
निराहाराश्च ये जीवाः पापे धर्म्मे रताश्च ये।
तेषामाप्यायनायैतद्दीयते सलिलं मया॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा।
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा॥

एवं य: सर्व्वभूतानि तर्पयेदन्वहं द्विज:।

स गच्छेत्परमं स्थानं तेजोरूपं निरामयम्॥ इति।

प्रकरणे निन्दोक्ता कात्यायनेन।

अतर्पिता देहाद्रुधिरं पिबन्तीति।

तर्पणानन्तरं जले देवतार्चनमाह योगी याज्ञवल्क्य:।

निष्पीड्य स्नानवस्त्रन्तु आचम्य विधिवत्तत:।

देवानामर्च्चनं कुर्य्याद्ब्रह्मादीनाममत्सर:॥

ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मैत्रवारुणै:।

तल्लिङ्गैरेव मन्त्रैस्तु अर्च्चयेत्सुसमाहित:॥

अप्स्वग्नौ हृदये सूर्य्ये स्थण्डिले प्रतिमासु च।

षट्स्वेतेषु हरे: सम्यगर्च्चनं मुनिभि: स्मृतम्॥ इति।

तल्लिङ्गा मन्त्रा ब्रह्म जज्ञानमित्यादय:।

अत्रावसरे नवग्रहपूजां केचिदिच्छन्ति। तत: सूर्य्यायार्घ्यं दद्यात्।

तदुक्तं नृसिंहपुराणे।

ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पसमन्वितम्।

उत्थाप्य मूर्द्धपर्य्यन्तं गायत्रीमन्त्रमुच्चरन्॥ इति।

योगी।

ततोऽवलोकयेदर्कं हंस: शुचिषदित्यृचा*।

---

* हंस: शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।

नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

१०म. २४म. यजु:।

स्वयंभू*रित्युपस्थाय सूर्य्यस्येति प्रदक्षिणम् ।
आवृत्य च नमस्कुर्य्याद्दिग्भ्यो दिग्देवता अपि ॥

तत्प्रयोगस्तु ॐ प्राच्यै दिशे नमः ॐ इन्द्राय नम इत्यादिकरूपो ज्ञेयः। एवमुक्तविधिना स्नानादि कृत्वा कलसमुत्तमोदकेनापूर्य्य पात्रहस्तो गृहं व्रजेत् ।

तदुक्तं मात्स्ये ।

जलदेवं नमस्कृत्य ततो गच्छेद्गृहं बुधः ।
पौरुषेण तु सूक्तेन ततो विष्णुं समर्च्चयेत् ॥ इति ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
मध्याह्नस्नानादिविधानम् ।

अथ गृहे देवतार्च्चनविधिः ।

तत्र ।

विधाय देवतापूजां प्रातर्होमादनन्तरम् ।
पूर्व्वाह्न एव कुर्व्वीत देवतानां समर्च्चनम् ॥

इति मरीचिवचनात् पूर्व्वाह्णो देवतार्च्चनस्य मुख्यः कालः ।

पौरुषेण तु सूक्तेन ततो विष्णुं समर्च्चयेत् ।
वैश्वदेवं ततः कुर्य्याद्बलिकर्म्म तथैव च ॥

इति कूर्म्मपुराणोक्तो मध्याह्नकालो गौणः ।

---

* स्वयंभूरसि श्रेष्ठो रश्मिर्वर्च्चोदा असि वर्च्चो मे देहि ।
सूर्य्यस्यावृतमन्वावर्त्ते ॥ २ अ. २६ म. यजुः ।

नारदीये तु।

प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत्।
यथा सन्ध्या स्मृता नित्या देवपूजा तथा बुधैः॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशवम्।
मध्याह्ने चैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत्॥ इति।

पूज्यदेवताश्च निगमे दर्शिताः।

ब्रह्माणं विष्णुमीशानं सूर्य्यमग्निं गणाधिपम्।
दुर्गां सरस्वतीं लक्ष्मीं गौरीं वा नित्यमर्च्चयेत्॥

पाद्मेऽपि।

आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम्।
नारायणं विशुद्धाख्यमन्ते च कुलदेवताः॥

कौर्म्मे।

न विष्ण्वाराधनादन्यद्विद्यते कर्म्म वैदिकम्।
तस्मादनादिमध्यान्तं विष्णुमाराधयेन्नरः।
तस्मिन्नाराधिते देवे सर्व्वमाराधितं भवेत्॥ इति।

पञ्चायतनस्थापनक्रम उक्त आचारदीपे।

शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करे-
भास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरे-
नार्य्याः शङ्करभागतोऽतिशुभदा व्यस्तास्तु ते हानिदाः॥

प्रधानस्य शङ्करभागतः। इनः सूर्य्यः। आर्य्या शक्तिः। ऐशान्यादिक्रमेणेत्यर्थः। शेषं प्रसिद्धम्।

न्यासमाह योगी ।

अङ्गुष्ठे चैव गोविन्दं तर्ज्जन्याञ्च महीधरम् ।
मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् ॥
कनिष्ठायां न्यसेद्विष्णुं करमध्ये च माधवम् ।
हस्तन्यासो मया प्रोक्तो द्विजानां पावनः परः ॥
अन्नौ हुतश्चैन्दवञ्च देवतार्च्चनमेव च ।
हस्तन्यासप्रसादेन सर्व्वं भवति चाक्षयम् ॥

शारदातिलके ।

भूतशुद्धिं तथा प्राणप्रतिष्ठां मातृकास्ततः ।
सन्ध्यादौ तु सकृत्कृत्वा न कर्त्तव्याः पुनः पुनः ॥ इत्युक्तम् ।

अथ अङ्गन्यासः ।

करयोः पादयोर्जान्वोः कव्योर्नाभौ हृदि क्रमात् ।
कण्ठे बाह्वोर्मुखे नेत्रे मूर्ध्नि वामादितो न्यसेत् ॥

अयं प्रत्यृचं पुंसूक्तन्यासः । षडङ्गन्यास इत्येके ।

षडङ्गन्यास इत्येके त्र्यृङ्गः षडृच उत्तरे ।
यथात्मनि तथा देवे न्यासञ्च परिकल्पयेत् ॥
षोङ्कारपूर्व्वकैर्मन्त्रैः षोडशभिः पृथक् पृथक् ।
न्यासेन तु भवेत्सोऽपि स्वयमेव जनार्द्दनः ॥
आवाहनासनं पाद्यमर्घ्यमाचमनीयकम् ।
स्नानं वस्त्रोपवीतेन गन्धमाल्यादिभिः क्रमात्* ॥

---

* वस्त्रोपवीते च गन्धमाल्यादि च क्रमात् । अयमेव समीचीनः पाठः, तृतीयान्तपदयोरनन्वयात् ।

धूपं दीपञ्च नैवेद्यं नमस्कारं प्रदक्षिणम् ।
षोड़शोपचारासनं कुर्य्यादेष नारायणो विधिः* ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।
अर्घ्यं स्नाने तथा वस्त्रे उपवीतोपहारयोः ॥ इति ।

आगमदीक्षावतस्तु तदागमोक्तप्रकारेण न्यासान् कृत्वा वैदिक-तान्त्रिकमिश्रमार्गेण पूजा कार्य्या । तदुक्तमेकादशस्कन्धे ।

वैदिकं तान्त्रिकं मिश्रं त्रिविधं तत्र मिश्रकम् ।
उत्तमं सर्व्वपूजानां विष्णुभक्तस्य माधव ॥ इति ।

अत्रोपयुक्तं लिख्यते ।

प्रक्षाल्य पादावाचम्य देवतायतनं विशेत् ।
समासीनस्तु सङ्कल्प्य पात्रासादनमाचरेत् ।
आराधकः स्वस्य पुरः शङ्खस्थापनमाचरेत् ॥
यः शङ्खं भुवि संस्थाप्य पूजयेत् पुरुषोत्तमम् ।
तस्य पूजां न गृह्णाति तस्मात्पीठं प्रकल्पयेत् ॥
शङ्खोदकं सदा पुण्यमतिप्रियतमं हरेः ।
उद्धरित्वा जलञ्चाद्यं नाप्सु शङ्खं निमज्जयेत् ॥
शङ्खस्य पृष्ठसंलग्नं पयः पापकरं ध्रुवम् ।
तेन न स्नापयेद्देवं पूजनात्पापसम्भवः ॥
सञ्छाद्य सितवस्त्रेण लिङ्गं संशोधितैर्जलैः ।
सुवर्णताम्ररजतपात्रस्थैः शङ्खसंस्थितैः ।
यद्वा नूतनमृत्पात्रसंस्थितैः स्नापयेच्छिवम् ॥

---

* षोड़शा तत्सख्याया पुरुषसूक्तीयया ऋचा इत्यर्थः ।

इत्यादित्यपुराणे पूर्व्वाध्याये उक्तम् ।

नारदीये ।

आत्मनो दक्षिणे भागे तुलस्यादि निधापयेत् ।
घृतदीपञ्च तत्रैव तैलस्य तु विपर्य्ययः ॥
वामभागे जलैः पूर्णं शङ्खमेव निधापयेत् ।
यथा देहे तथा देवे मन्त्रन्यासं समाचरेत् ॥

न्यासनिषेधः स्थावरपरः ।

चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्च्चने ।
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयम् ॥

इति भागवतोक्तेः ।

तथा ।

द्विजानामेव नान्येषां शालग्रामशिलार्च्चनम् ।
स्त्रीणाञ्चैवाथ शूद्राणां विप्रहस्तेन पूजनम् ॥
स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर ।
स्पर्शने नाधिकारोऽस्ति विष्णौ वा शङ्करेऽपि वा ॥

इति वृहन्नारदीये ।

कौर्म्येऽपि ।

ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती ।
सनाथा मृतनाथा वा तस्या नास्तीह निष्कृतिः ॥ इति ।

लिङ्गस्पर्शनिषेधोऽपीदानीन्तनप्रतिष्ठितलिङ्गविषयः ।

तथाहि नारदीये ।

यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि।
ततः प्रभृति शूद्रश्च योषिच्चापि न संस्पृशेत्॥
दीक्षितानां द्विजान्येषां स्त्रीणामपि तथैव च।
लिङ्गे स्वगुरुणा दत्ते पूजा नान्यत्र सा स्मृता॥

इति नन्दिपुराणोक्तेः स्त्रीशूद्राणां पार्थिवलिङ्गादिपूजाधिकारो ज्ञेयः।

यत्तु।

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्।
देवताराधनञ्चैव स्त्रीशूद्रपतनानि षट्॥ इति।

तत् शालग्रामादिविषयमिति सर्व्वमनवद्यम्।

निर्म्माल्योद्वासनं प्रातः कार्य्यमित्युक्तं नारदपञ्चरात्रे।

यः प्रातरुत्थाय विधाय नित्यं
निर्म्माल्यमीशस्य निराकरोति।
न तस्य दुःखं न दरिद्रता च
नाकालमृत्युर्न च रोगमात्रम्॥

क्रियासारे।

मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत्।
अङ्गुष्ठतर्ज्जन्यग्राभ्यां निर्म्माल्यमपनोदयेत्॥

ग्राह्यपुष्पाणि नृसिंहपुराणे।

पुष्पैररण्यसंभूतैः पत्रैर्वा गिरिसम्भवैः।
अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्ज्जितैः॥
आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेद्धरिम्।

शमीपुष्पं विल्वपुष्पं चम्पकं तगरं तथा ॥
करवीरं तथा श्वेतं पाटलं कुशपुष्पकम् ।
वनमालाऽप्यशोकञ्च सेवती कुब्जमालती ॥
त्रिसन्ध्यञ्च तथा श्वेतं कुन्दञ्च शतप(पा)त्रकम् ।
मल्लिका चैव जाती च सर्व्वपुष्पाद्विशिष्यते ॥

प्रयोगपारिजाते व्यासः ।

प्रतिमापटयन्त्राणां नित्यस्नानं न कारयेत् ।
कारयेत्पर्व्वदिवसे यदि वा मलधारणम् ॥

तथा ।

जातीपुष्पसहस्रेण दद्यान्मालां सुशोभनाम् ।
विष्णवे विधिवद्भक्त्या तस्य पुण्यमनन्तकम् ॥
अपामार्गं भृङ्गराजं शमीपत्रञ्च खादिरम् ।
दूर्व्वा च कुशपत्रञ्च दमनं मरुकं तथा ॥
ततः श्रेष्ठं विल्वपत्रं ततस्तु तुलसी वरा ।
एतैश्चाञ्च यथालाभं पत्रैरभ्यर्च्चयेद्धरिम् ॥
पुष्पेषु कलिका वर्ज्या ग्राह्यं कमलचम्पकम् ।
स्नातेन तुलसी ग्राह्या नान्यथा राजवल्लभा ॥
अस्नात्वा तुलसीं छित्त्वा देवार्थे पितृकर्म्मणि ।
तत्सर्व्वं निष्फलं याति पञ्चगव्येन शुध्यति ॥

इति पाद्मे ।

अथ वर्ज्यपुष्पाणि विष्णुधर्म्मोत्तरे ।

उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत् ।

अन्यायतनजातानि कण्टकीनि तथैव च ॥
रक्तान्यकालजातानि चैत्यवृक्षोद्भवानि च ।
श्मशानजातपुष्पाणां दानं देवे विवर्ज्जयेत् ॥
शकराख्यस्य पुष्पाणि तथा धुस्तू(धत्तू)रकस्य च ।
जपाश्च कुटजश्चार्कं नैव देयं जनार्द्दने ॥

शिवस्य वर्ज्यपुष्पाणि प्रसाददीपिकायाम् ।

जपा बन्धूकसिन्दूरं तथा वैसन्धिके शुभे ।
मदन्ती केतकी यूथी मालती कुटजानि च ॥
बर्व्वरी सर्ज्जपत्री च तथाच कुमुदद्वयम् ।
आनीतं नार्पयेच्छ(म्भोः)म्भौ प्रमादादपि दोषकृत् ॥

स्कान्दे तु ग्राह्याण्युक्तानि ।

वार्हतं कर्णिकारञ्च करवीरं तिलस्य च ।
विल्वपत्रञ्च कल्हारमर्कं मन्दारमेव च ॥
नीलोत्पलञ्च रक्तञ्च कमलं पद्मसंज्ञकम् ।
कदम्बञ्च कुसुम्भञ्च अशोकं वकुलं तथा ।
एवमादीनि पुष्पाणि विशिष्टानि शिवार्च्चने ॥

काशीखण्डे ।

कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुङ्कुमस्य च ।
चन्दनस्य त्रयो भागाः शशिनस्त्वेक एव हि ।
यक्षकर्दम इत्येष समस्तसुरवल्लभः ॥

गारुड़े ।

कर्पूरं चन्दनं दर्भं कुङ्कुमञ्च समांशकम् ।

सर्व्वगन्धमिति प्रोक्तं समस्तामरवल्लभम् ॥

देवीपुराणे विशेषः ।

शिवं विवर्ज्जयेत्कुन्दमुन्मत्तञ्च ह(रिः)री सदा।

देवीना(म)ञ्चार्कमन्दारावादित्ये तगरं तथा ॥

आचारदीपेऽपि ।

अक्षतैर्नार्च्चयेद्विष्णुं न तुलस्या गणेश्वरम् ।

दूर्व्वाभिर्नार्च्चयेद्दुर्गां न केतक्या महेश्वरम् ॥

जलं पर्य्युषितं त्याज्यं पत्राणि कुसुमानि च ।

तुलस्यगस्त्यबिल्वानि गङ्गावारि न दुष्यति ।

न निर्म्माल्यं हेमपुष्पमर्पयेदर्पितं सदा ॥ इति ।

तथा ।

वस्त्रानीतं करानीतं स्वयं पतितमेव च ।

एरण्डपत्रैरानीतं तस्य पूजा च निष्फला ॥

योऽर्च्चयेद्विधिवद्भक्त्या परानीतैश्च साधनैः ।

पूजाफलार्द्धमेवास्य न समग्रफलं लभेत् ॥

शौनकोऽपि ।

उत्तमा वनजा पूजा क्रयक्रीता तु मध्यमा ।

अधमा याचिता पूजा चौर्य्येणैव तु निष्फला ॥

चौर्य्यदोषः शूद्रस्य न द्विजस्य। तदुक्तं मिताक्षरायां याज्ञवल्क्येन ।

ग्रासेच्छया गोप्रचारो भूमौराजवशेन वा ।

द्विजस्तृणैधपुष्पाणि सर्व्वतः स्ववदाहरेत् ॥

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।

अनापृच्छन् हि गृह्णानः शूद्रो वै दण्डमर्हति ॥ इति ।

तुलसीग्रहणे निषिद्धदिवसादि कालनिर्णये ।

भा(नु)नौ भार्गवभौमे च व्यतीपाते च वैधृतौ ।

संक्रान्त्यां पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययोः ।

तुलसीं ये विचिन्वन्ति ते छिन्दन्ति हरेः शिरः ॥

वैष्णवस्य तु विशेषः स्कान्दे ।

न च्छिन्द्यात्तुलसीं विप्रो द्वादश्यां वैष्णवः क्वचित् ।

अन्येष्वपि निषिद्धेषु चिनुयात्तुलसीं सदा ॥ इति ।

गारुड़ेऽपि ।

भानुवारं विना दूर्व्वां तुलसीं द्वादशीं विना । इति ।

तुलसीग्रहणमन्त्रस्तु ।

तुलस्यमृतजन्मा(नामा)सि सदा त्वं केशवप्रिये ।

केशवार्थं विचिन्वानि(चिनोमि त्वां) वरदा भव शोभने ॥

अथ विल्वादीनामनिर्म्माल्यत्वदिनसंख्योच्यते । वृहदाह्निके ।

विल्वापामार्गजातीतुलसिश(स)मिशताकेतकीभृङ्गदूर्व्वा-

मन्दाम्भोजाह्विदर्भा मुनितिलतगरब्रह्मकह्लारमल्लाः ।

चम्पा(पद्मा)श्वारातिकु(न्ती)म्भादमनमरुवका

विल्वतोऽहानि शस्ताः*-

स्त्रिंशत्३०वेर३का१यं६रो६शो११दधि४निधि८वसु८भू१-

भू१यमा२ भूय एवम् ॥

---

* अस्यार्थः । मन्दी मन्दारः । शता शतावरी । अह्निर्नागकेशरः । मुनिरगस्त्यः ।

भारते दानधर्म्मे ।

हरिचन्दनकस्तूरीकर्पूरैः केसरान्वितम् ।
गन्धं दद्यात्प्रयत्नेन दुष्टगन्धान् विवर्ज्जयेत् ॥
गन्धेन देवास्तृप्यन्ति दर्शनाद्यक्षराक्षसाः ।
नागाः समुपभोगेन त्रिभिरेतैस्तु मानुषाः ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि धूपदानविधेः फलम् ।
निर्य्यासाः सारिणश्चैव कृत्रिमाश्चैव ते त्रयः ॥
निर्य्यासाः शल्लकीवर्ज्या देवानां दयितास्तु ते ।
गुग्गुलुः प्रवरस्तेषां सर्व्वेषामिति निश्चयः ॥
अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम् ।
दैत्यानां शल्लकीयश्च काङ्क्षितो यश्च तद्विधः ॥
अथ सर्ज्जरसादीनां गन्धैः पार्थिवदारवैः ।
फलितो रससंयुक्तैर्मनुष्याणां विधीयते ॥
दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम् ।
यथा येन यदा चैव प्रदेयो यादृशा च सः ॥
ज्योतिस्तेजः प्रकाशश्चाप्यूर्द्ध्वगश्चापि वर्ण्यते ।
प्रदानं तेजसां यस्मात्तेजो वर्द्धयते नृणाम् ॥
अन्धं तमस्तमिस्रञ्च दक्षिणायनमेव च ।
विनाशयति तत्सर्व्वं तमसश्चैव भेषजम् ॥

---

अश्वारातिः करवीरः। कुम्भी पाटला। विल्वमारभ्य षड्पर्य्यन्तं गणयित्वा दशमारभ्य पुनस्त्रिंशदादि गणयेत्। एतद्विगीतरं पर्य्युषितामीत्यर्थ इति पदार्थादर्शः।

आलोकदानाच्चक्षुष्मान् प्रभायुक्तो भवेन्नरः ।
दीपान्दत्त्वा नोपहिं(स्ये)स्याच्च हरेर्नोपनाशयेत् ॥
दीपहर्त्ता भवेदन्धस्तमोगतिरसुप्रभः ।
हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः ॥ इत्यादि ।

तथा ।

स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा ।
घण्टानादं प्रकुर्व्वीत तथा नीराजनेऽपि च ॥
वनस्पतीति मन्त्रेण* देवपादे च धूपयेत् ।
धूपयेद्व्यजनेनैव न करेण न वाससा ॥
तुलसीरहितं पुष्पं हृदि शल्यं ममार्पितम् ।
तुलसीमञ्जरी ग्राह्या तदभावे तु पल्लवः ॥
तदभावे तु पत्रं स्यात्तदभावे तु काष्ठकम् ।
तदभावे तु मूलं स्यात्तदभावे तु मृत्तिका ।
मृत्तिकाया अभावे तु तुलसीशब्द उच्यते ॥
स्वयं निर्व्वापितं दीपमाजिघ्रन्ति सुरारयः ।
तस्मान्निर्व्वापयेद्दीपं देवानां प्राणतुष्टये ॥
पूजाकाले तु नैवेद्यं न चेत्पुष्पादिनैव तु ।
कल्पनीयं यथा चोक्तं हरिणैवार्ज्जुनाय वै ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ इति गीताः

* वनस्पतिरसो(दिव्यो)त्पन्नो गन्धाढ्यः सुमनोहरः ।
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥

वशिष्ठः ।

उपादेयानि शाकानि भक्ष्याणि च फलानि च ।
सुपक्वानि सुभक्ष्याणि पवित्राणि निवेदयेत् ॥
कदली कारवल्ली च पटोली वृहतीद्वयम् ।
कुष्मांण्डं कुटजश्चैव उर्व्वारुद्वयमेव च ॥
पनसं नारिकेलश्च धात्री च बदरीफलम् ।
कपित्थं सुद्रहन्ताकमाम्रमाम्रातकं तथा ॥

अपवित्राणि तु स एवाह ।

कोद्रवाणि कुलित्थानि निष्पावश्च मसूरकम् ।
कृष्णानि यावकल्यानि मूलकं तिलपिष्टकम् ।
एतानि वर्ज्जयेन्नित्यं हरेर्नैवेद्यवेदने ॥

पञ्चरात्रे ।

पाकसंस्थान्हविर्भाण्डान् वारिभिः क्षालितान् बहिः ।
तन्मध्ये मध्ये चतुर्दिक्षु कृत्वोर्द्धाकारपुण्ड्रकान् ॥
देवस्य दक्षिणे पार्श्वे नीत्वा फलकभूमिषु ।
सुवर्णादिषु पात्रेषु परिस्थाप्यार्पयेद्धरेः ॥
न पिबेच्छङ्खतोयञ्च न च भूमौ विनिक्षिपेत् ।
न सम्प्रोक्षेत नैवेद्यं भुक्त्वा वै वायवान् भवेत् ॥
तस्मात् कुम्भोद्धृतेनैव नैवेद्यं प्रोक्षयेद्बुधः ।
ततः प्राणाद्याहुतयो* दातव्याः परमात्मनि ॥

---

* प्राणाद्याहुतयो यथा—प्राणाय स्वाहा, अपानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा, व्यानाय स्वाहा इति।

मूलमन्त्रं जपेदत्र ततो नारायणात्मकम् ।
अष्टोत्तरशतञ्चैव अष्टाविंशतिमेव वा ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।
धूपे दीपे च पाद्ये च ताम्बूले दन्तधावने ॥
घण्टानादं विना धूपं न विद्वान् दातुमर्हति ।
दीपोपचारं नैवेद्यं घण्टास्वनसमन्वितम् ॥
चतुरष्टाङ्गुलोत्सेधं दीपवर्त्तिसमन्वितम् ।
उच्चैरादाय हस्ताभ्यामापादतलमस्तकम् ।
त्रिः परिभ्राम्य देवेशं वह्निरेनं ततः क्षिपेत् ॥
नीराजने महाविष्णोर्मुखं सूर्य्य(शत)समप्रभम् ।
ये पश्यन्ति महाभागास्तेषां पुण्यमनन्तकम् ॥
कोट्यो वै ब्रह्महत्यानामगम्यागमकोटयः ।
दहत्यालोकमात्रेण विष्णोरारात्रिकं(रत्रिकं) सदा ॥ इति ।

तत्रैव ।

आवाहनञ्चासनञ्च सान्निध्यं सन्निरोधनम् ।
अर्घ्यञ्चाचमनञ्चैव गन्धपुष्पविभूषणम् ।
दद्यादेकोपचारांस्तु सर्व्वेभ्यश्च पृथक् पृथक् ॥
सदावरणसंस्थेभ्यः स्वाहान्तैः स्वस्वनामकैः ।
धूपदीपादिकं तेषां तत्सर्व्वं विष्णुना सह ॥ इति

अथ विष्णुशक्तयः ।

विमलोत्क(र्षि)र्षिणी ज्ञाना क्रियायोगा तथैव च ।
प्रह्वी सत्या तथेशानाऽनुग्रहा विष्णुशक्तयः ॥

अथ शिवस्य ।

वामा ज्येष्ठा तथा गौरी कला कलविकर्षिका ।
विकरिण्याह्वया प्रोक्ता बलाबलविकर्षिका ।
मनोन्मनोति सम्प्रोक्ताः शैवपीठस्य शक्तय: ॥

अथ गणेशस्य ।

तीव्राख्योज्ज्वलिनो नन्दा भोगदा कामरूपिणी ।
उग्रा तेजोवती सत्या नवमो विघ्ननाशिनी ॥

अथ सूर्य्यस्य ।

सूक्ष्मा जया च भद्रा च विभूतिर्विमला तथा ।
अमोघा वैद्युती चेति नवमो सर्व्वतोमुखी ॥

अथ दुर्गाया: ।

विभूतिरुन्नति: कान्ति: सृष्टि: कीर्त्तिश्च सन्नति: ।
व्युष्टिरुत्कृष्टिरृद्धिश्च दुर्गाशक्तय उदाहृता: ॥

तथा द्वादश्यां हरे: स्नानोपचारो न कार्य्य इत्युक्तं नृसिंहपरिचर्य्यायाम् ।

जन्मप्रभृति यत्किञ्चित् सुकृतन्तु पुरार्ज्जितम् ।
नश्यति द्वादशदिने हरेर्निर्माल्यलङ्घनात् ॥

इति पाद्मोक्ते: । न चैतत् निर्माल्यलङ्घनविषयं तस्य सर्व्वदेवसम्बन्धिन: सर्व्वदा निषिद्धत्वेन हरिद्वादशोपदयोर्वैयर्थ्यापत्ते: ।

स्नानं यो हरये दद्याद्द्वादश्यां वैष्णवो दिवा ।
पञ्चपूजाफलं तस्य वाष्कलेयापगच्छति ॥

इति पञ्चरात्रे स्पष्टमभिधानात् । दिवानिषेधाद्रात्रावभिषेको

द्वादश्यामिति गम्यते। दमनकपवित्रारोपणद्वादश्योस्तु रात्रावभि
नाभिषेकः।

दमनद्वादशी चैव पवित्रारोपणी तथा।
न स्नानं हरये दद्याद्रात्रावपि कदाचन॥

इति स्मृतेः। कार्त्तिकद्वादश्यां प्रातःस्नपनमुक्तं निर्णयामृते।

प्रातरुत्थाय मतिमान् विष्णोः स्नानं प्रकल्पयेत्।
दध्ना क्षीरेण मधुना तथा गन्धोदकेन च॥ इति।

नैवेद्यपात्रमुक्तं स्कान्दे।

सौवर्णं (हैरण्यं) राजतं ताम्रं कांस्यं पालाशपत्रकम्।
नैवेद्यायाब्जपत्रं वा पात्रं विष्णोरतिप्रियम्॥
भक्ष्यं भोज्यञ्च लेह्यञ्च चोष्यं पेयं गुणान्वितम्।
दद्याच्छ्रीहरये नित्यं यद्यत्प्रियमथात्मनः॥
प्रक्षिप्य तुलसीं प्रोक्ष्य सप्तकृत्वोऽभिमन्त्रयेत्।
नैवेद्यं शङ्खतोयेन प्रोक्षयेन्न कदाचन॥
पानीयञ्चामृतीकृत्य परेशाय निवेदयेत्।
ततो जवनिका कार्य्या मुहूर्त्तमनवेक्षणात्॥

चासीनो जपतीति नित्यपूजाप्रकरणे बौधायनोक्तेः।

गण्डूषार्थं जलं दत्त्वा दद्यादाचमनं ततः।
हस्तवासं सकर्पूरं मुकुटं भूषणानि च॥
कर्पूरैलादिसंयुक्तं ताम्बूलञ्च निवेदयेत्।
प्रदर्शयेदथादर्शं कल्पयेच्छत्रचामरे॥
महानीराजनञ्चैव पुष्पाञ्जलिमथ क्षिपेत्।

प्रदक्षिणनमस्कारान् कुर्य्याद्वै भक्तिपूर्व्वकम् ॥
पदात्पदान्तरं गच्छेत्करौ चलनवर्ज्जितौ ।
वाचा स्तोत्रं मनोध्यानं चतुरङ्गं प्रदक्षिणम् ॥
उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥

यत्तु ।

रक्तं स्पृष्ट्वा गुदं स्पृष्ट्वा लिङ्गं स्पृष्ट्वा तथैव हि ।
स्त्रीणां वक्षःस्थलं स्पृष्ट्वा सा भूमिर्नश्यति ध्रुवम् ॥ इति ।

तन्नमस्कारव्यतिरिक्तविषयम् । नमस्कारे उरसेति विधानात् ।

एकां चण्ड्यां रवौ सप्त तिस्रो दद्याद्विनायके ।
चतस्रः केशवे दद्याच्छिवे चार्द्धप्रदक्षिणम् ॥

अर्द्धप्रदक्षिणमपि देवालये न गृहे तत्र वृषचण्डाद्यभावात् ।

ततो देवं स्तुवीत ।

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्व्वज ॥
नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे ।
ॐ नमो भगवते वासुदेवाय शुद्धज्ञानस्वभाविने ॥
देवानां दानवानाञ्च सामान्यमधिदैवतम् ।
सर्व्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥

इत्यादि ऋग्विधानोक्तं स्तोत्रं प्रथमस्तवके पुरुषसूक्तविधाने द्रष्टव्यम् ।

एवं भगवन्तं प्रपूज्य ब्रह्मादीन् पूजयेत् ।

मुख्ये पुष्पाञ्जलिं दत्वा गणेशाद्यर्च्चनं भवेत्।
गणेश एव मुख्यश्चेत्तत्र सूर्य्यक्रमाद्भवेत्॥

इत्याचारदीपोक्तेः।

तत्र मन्त्रः।

रमाब्रह्मादयो देवाः सनकाद्याः शुकादयः।
श्रीनृसिंहप्रसादोऽयं सर्व्वे गृह्णन्तु शाश्वताः॥ इति।

गणेशस्य तु वक्रतुण्डाय। सूर्य्यस्य तु चण्डांशवे। शक्त्यास्तु उच्छिष्टचण्डाल्यै इति दद्यात्

अथ पूजापराधाः।

स्कान्दे।

नाङ्गुष्ठैर्मर्द्दयेद्देवं नाधःपुष्पैः समर्च्चयेत्।
कराग्रैर्न क्षिपेत्तोयं वज्रपातसमं भवेत्॥
शालग्रामशिलातोयमपीत्वा यस्तु मस्तके।
प्रक्षेपणं प्रकु(रुते)र्व्वीत ब्रह्महा स निगद्यते॥

गारुड़े।

पादोदकं पिबेन्नित्यं नैवेद्यं भक्षयेद्धरेः।
शेषास्तु मस्तके धार्य्या इति वेदानुशासनम्॥

पादोदकस्वरूपन्तु।

उदकं चन्दनं चक्रं शङ्खश्च तुलसीदलम्।
घण्टा सूक्तं शिला ताम्रं नवभिश्चरणोदकम्॥ इति।
पावनं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम्।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणञ्चरेत्॥

स्कान्दे ।

विष्णुमूर्द्धि स्थितं पुष्पं शिरसा यो वहेन्नरः ।
अपर्य्युषितपापः स्याद्यावद्युगचतुष्टयम् ॥

तीर्थग्रहणप्रकारस्तु ।

वस्त्रं चतुर्गुणीकृत्य प्रसार्य्य वामके करे ।
दक्षिणेन करेणाथ शङ्खोदकमथाददेत् ।
प्रक्षिप्य मस्तके विद्वांस्तीर्थं ग्राह्यं विष्णुतः ॥
देवदेव जगन्नाथ शङ्खचक्रगदाधर ।
देहि देव ममानुज्ञां तव तीर्थनिषेवणे ॥
लब्ध्वानुज्ञां ततस्तीर्थे पठेन्मन्त्रमिमं (ततः) बुधः ।
शालग्रामशिलावारि पापहारि निषेव्यताम् ॥
अकालमृत्युहरणं सर्व्वव्याधिविनाशनम् ।
सर्व्वपापोपशमनं विष्णुपादोदकं शुभम् ॥
विष्णोः पादोदकं पीतं कोटिजन्माघनाशनम् ।
तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥
स्नाने चाचमने चैव भोजनादौ तथैव च ।
तथैव भोजनस्यान्ते शालग्रामजलं पिबेत् ॥ इति ।

आदित्यपुराणे तु ।

अग्राह्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामस्य सम्पर्कात्सर्व्वं याति पवित्रताम् ॥

इति विशेषोक्तनिषेधस्तु केवलपरोऽवगन्तव्यः । शिवैकभक्तस्य तु ग्राह्यमपि भवति ।

निर्माल्यं धारयेद् भक्त्या शिरसा पार्वतीपतेः ।
राजसूयस्य यज्ञस्य फलं प्राप्नोति निश्चितम् ॥

इति वचनात् ।

अत्र भक्त्येति वदता लोभादिना न ग्राह्य मिति सूचितम् ।

यद्वा निषेधोऽयं महाख्यान परः ।
कूपे सर्वं विनिक्षिपेदिति पाद्मोक्तेः ॥

अन्यत्रापि—

बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदिस्थिते ।
सौवर्णे च मारकते शम्भोर्नैवेद्यभक्षणम् ॥

इति ॥

अथ वाराहोक्ताः पूजापराधाः ।
द्वात्रिंशत्तत्प्रमुख्यास्ते वाराहे विष्णुनोदिताः ॥
तिर्य्यक्पुण्ड्रधरो भूत्वा यः कृत्वा देवतार्चनम् ।
याचितैः पत्रपुष्पौघैर्यः करोति ममार्चनम् ॥
अप्रक्षालितपादो यः प्रविशेन्मम मन्दिरम् ।
मम दृष्टे रभिमुखं ताम्बूलं चर्व्वयेच्च यः ॥
कौ (कु) सुम्भशाकं मर्त्यो यो भक्षयेन्मम सेवकः ।
उरुवूकपलाशस्थैः * पुष्पैः कुर्य्यान्ममार्चनम् ॥

---

* एरण्डपत्रस्थैः ।

ममार्चां मासुरे काले यः करोति विमूढधीः।
अवैष्णवस्य पक्वान्नं यो मह्यं विनिवेदयेत्॥
नीलीरञ्जितवस्त्रं यन्मर्त्यो मह्यं निवेदयेत्।
नवमक्षालितं वस्त्रं जीर्णं यस्मै निवेदयेत्॥
अवैष्णवेषु पश्यत्सु मत्पूजां विदधाति यः।
वातमूत्रनिरोधेन मत्पूजां विदधाति यः॥
दिनान्तरितपक्वान्नं यो मह्यं विनिवेदयेत्।
अमौनी घर्मलिप्ताङ्गो मत्पूजां विदधाति यः॥
नखोदकेन स्नपनं कुरुते मम मानवः।
कृत्वा वातमनाचम्य तथा प्रावृतकम्बलः॥
पीठासनोपविष्टस्तु पूजयेद्वा निरासनः।
मृण्मये धूपदहनं दीपं च कुरुतेऽर्चने॥
मत्पूजको न कुरुते तां तु पूजां वदामि ते।
मत्पूजकः शिवद्वेषी मद्भक्तश्च शिवोत्तमः॥
भूताष्टम्यो न कुरुते नक्तं वा हरिवासरम्।
परस्य परिधानं यत् परिधायार्चयेच्च माम्॥
अपूजयित्वा विघ्नेशं सम्भाष्यच कपालिनम्।
ह्येत्र यत् कर्म्म क्रियते त्रिकालार्चनविघ्नकृत्॥
अन्धकारे स्पृशेन्मां च सम्भाष्य च रजस्वलाम्।
वामहस्तेन मां कृत्वा स्नापयेद् यदि मूढधीः॥
महापराधान् जानीहि द्वात्रिंश ( न्मयमापितान् )।
क्षमणानिमान्॥

अन्येऽपि—

अङ्गलग्नं च जीर्णंच वस्त्रं देवे नचार्पयेत्।
मृन्मये भिन्नपात्रे वा पाषाणे लोहकाष्ठजे॥
पल्लवे करभूम्योस्तु न नैवेद्यं समर्पयेत्।
यानैर्वा पादुकै र्वापि गमनं भगवद्गृहे॥
देवोत्सवाद्यसेवाच अप्रणाम स्तदग्रत:।
उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम्॥
शक्तौ गौणोपचारश्च अनिवेदितभक्षणम्।
तत्तत्कालोद्भवानां च फलादीना मनर्पणम्॥

इति अगस्त्योक्तापराधा:॥

अथ गृहिकर्त्तृकपूजायां पूज्यदेवतानियमो

भविष्य पुराणे—

गृहे लिङ्ग द्वयं नार्च्चेत् गणेशत्रितयं तथा।
शक्तित्रयं तथा नार्च्चेत् शालग्रामद्वयं तथा॥
द्वौ शङ्खौ नार्च्चयेच्चैव भग्नांच प्रतिमां तथा।
नार्च्चयेच्च तथा मत्स्य कूर्म्मादि दशकं तथा॥
द्वे चक्रे द्वारकायास्तु नार्च्चेत् सूर्य्यद्वयं तथा।
शालग्रामा: समा: पूज्या विषमा न कदाचन॥
विषमेषु त्रयं शस्तं समेषु द्वितयं नहि।
एतेषां पूजनान्नित्य मुद्वेगं प्राप्नुयाद् गृही॥

तथा रक्ता रुक्षा वक्राऽतिस्थूला शालग्रामशिला न पूज्या

इत्यपि पुराणे। अत्र गृहीत्युपादानाद् ब्रह्मचारित्वादे र्न-दोष इति गम्यते।

शालग्रामलक्षण मुक्तं स्कान्दे—

शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते।
महापूजां तु कृत्वादौ पूजयेत्तां ततो बुधः॥
खण्डितं स्फुटितं भग्नं पार्श्वतश्च विभेदितम्।
शालग्रामसमुद्भूत शैलं दोषावहं नहि॥
चक्रं वा केवलं तत्र पद्मेन सह संयुतम्।
केवला वनमाला वा हरिर्लक्ष्म्या सह स्थितः॥

अत्रापि दोषाभावो यत्यादिपरः।

द्वारदेशे च समे चक्रे दृश्येते नान्तरीयके।
वासुदेवः स विज्ञेयः शुक्लाभ श्चातिशोभनः॥
द्वौ चक्रावेकलग्नौ तु पूर्वभागश्च पुष्कलः।
सङ्कर्षणः सविज्ञेयो रक्ताभश्च स्वतेजसा॥
प्रद्युम्नः सूक्ष्मचक्र* स्तु पीतदीप्तिस्तथैवच।
शुषिरे (सुस्थिर) च्छिद्रबहुलं दीर्घाकारं तु तद् भवेत्॥
अनिरुद्धस्तु नीलाभो वर्त्तुल श्चातिशोभनः।
रेखा(त्र)द्वयं तु यद्द्वारि पृष्ठं पद्मेन लाञ्छितम्॥

---

* प्रद्युम्नः सूक्ष्मचक्रः स्याच्छिद्रं दीर्घं विचित्रितम्।
सु (षि) रेषु स्थिरान्त र्बहिश्छिद्रं पीत इष्टप्रदायकः।
पाद्मे श्लोकोऽयमेवं रूपो दृश्यते।

नानावर्णं मनन्तं स्यान्नागभोगेन चिह्नितम् ।
अनेकमूर्त्तिसंयुक्तं सर्वकामफलप्रदम् ॥
विदिक्षु दिक्षु सर्व्वासु यस्योर्द्धं दृश्यते मुखम् ।
स देवदेवोविज्ञेयः पुराणः पुरुषोत्तमः ॥
अर्द्धचन्द्राकृति र्देवो हृषीकेश उदाहृतः ।
तमाश्रित्य लभते स्वर्गं विषयां श्च समीहितान् ॥
श्रीधरं तु तथा देवं चिह्नितं वनमालया ।
कदम्ब कुसुमाकार रेखा पञ्चक संयुतम् ॥
मत्स्यरूपं तु देवेशं दीर्घाकारं तु तद् भवेत् ।
विन्दुद्वय समायुक्तं कांस्यवर्णं सुशोभनम् ॥
वामपार्श्वे स्थिते चक्रे शुभ्रवर्णेच विन्दुके ।
लक्ष्मीनृसिंहो विख्यातो भुक्ति मुक्ति फलप्रदः ॥
कपिलो नारसिंहोऽथ पृथुचक्रे सुशोभने ।
ब्रह्मचार्य्यधिकारी स्यान्नान्य स्तस्य प्रपूजने ॥
नरसिंह स्त्रिविन्दुः स्यात् कपिलः पञ्चविन्दुकः ।
ब्रह्मचर्य्येण पूज्यः स्यादन्यथा सर्व्वविघ्नदः ॥
स्थूलं चक्रद्वयं मध्ये गुड़लाक्षासवर्णकः ।
द्वारोपरि तथा रेखा पूजकस्य सुशोभना ॥
स्फुटितं विषमं चक्रं नारसिंहं तु कापिलम् ।
सम्पूज्य मुक्ति माप्नोति संग्रामे विजयी भवेत् ॥
त्रिविक्रमं तथा देवं श्यामवर्णं महाद्युतिम् ।
वामपार्श्वे तथा चक्रे रेखाचैव तु दक्षिणे ॥

प्रदक्षिणावर्त्तकृता वनमालाविभूषिता।
सा शिला कृष्णसंज्ञा स्याद् धनधान्यसुखप्रदा॥
स्थूलो दामोदरो ज्ञेयः सूक्ष्मचक्रो भवेत्तु यः।
चक्रे च मध्यदेशस्थे पूजितः सुखदायकः॥
चतस्रो यत्र दृश्यन्ते रेखाः पार्श्वे समीपगाः।
द्वे चक्रे मध्यदेशे तु सा शिला तु चतुर्मुखी॥
तथाप्यामलकीतुल्या सूक्ष्मा चातीव या भवेत्।
तस्यामेव सदा ब्रह्मन् श्रिया सह वसाम्यहम्॥
यथा यथा शिला सूक्ष्मा तथैव च महत् फलम्।
तस्मात्तां पूजयेन्नित्यं धर्मकामार्थसिद्धये॥

इत्यादि।

द्वारकायां चक्रतीर्थे चक्राङ्कं नेत्रमुत्तमम्।
समुत्पन्नं मुने साक्षात् कृष्णदृष्ट्यावलोकितम्॥
तस्माच्चक्राङ्कमिथुनं पूज्यं भक्त्या द्विजैः सदा।
भिन्नं चेदर्थनाशाय स्थूलं बुद्धिविनाशनम्॥
दीर्घं चायुर्हरं ज्ञेयं रुक्षं बुद्धिविनाशकृत्।
शुक्लवर्णं शुभं चक्रं वृत्तचक्रं तथैव च॥

(स्कान्देऽपि) प्रतिमामूर्त्तिलक्षणाद्यपि काशीखण्डादौ—
ज्ञेयम्। ग्रन्थगौरवभियात्रात्रोद्धृतम्॥

तथा—

पूज्य पूजकयोर्मध्ये पूर्वमित्यभिधीयते।
ऐशानं पूजकापेक्षं पूज्यापेक्षं तु तद् भवेत्॥

देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् ।
तदादिपरिचाराणां मङ्गाद्यावरणं क्रमात् ॥
इद मागमोक्तपूजाविषयम् ।
यस्मिन् विवस्वान् विषुवत्युदेति
प्राचीति तां वेदविदो वदन्ति ।
मध्यं पुनः पूजक पूजयोश्च
सदागमज्ञाः प्रवदन्ति पूर्व्वम् ॥
इति सङ्ग्रहोक्तेः ।

तथा—

अकुर्व्वन् देवतापूजां भुञ्जीयाद्ब्राह्मणो यदि ।
ग्राससङ्ख्याक्तोऽपिण्डानश्नाति यममन्दिरे ॥
न विष्ण्वाराधनादन्य द्विद्यते कर्म्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्य माराधयेद्धरिम् ॥
इति कूर्म्मपुराणोक्ते रित्यलमतिमङ्गलम् ।
इति श्रीमदनन्त भट्टविरचिते विधानपारिजाते
देवतार्च्चन विधानम् ॥

---

अथ पञ्च महायज्ञाः ।

तत्र क्रमः ।

पञ्च सूना गृहस्थस्य वर्त्तन्तेऽहरहः सदा ।
कण्डनी पेषणी चुल्ली जलकुम्भ उपस्करः ॥
एतानि वाहयन् विप्रो वाध्यते वा मुहुर्मुहुः ।
एतेषां पावनार्थाय पञ्चयज्ञाः प्रकीर्त्तिताः ॥
हिंसा स्थानं सूना । उपस्करो मार्जनादिः ।

कात्यायनोऽपि—

देवभूत पितृब्रह्म मनुष्याना मनुक्रमात् ।
महासत्राणि जानीयात्तएवहि महामखाः ॥

एतेच—

पञ्चयज्ञविधानं तु गृही नित्यं न हापयेत् ।
इति शङ्खवचनान्नित्या एव । न तु फलश्रवणात् काम्याः ।
न वा कण्डन्यादिनिमित्तश्रवणान्नैमित्तिकाः ।
तदुक्तं मिताक्षरायाम् ।
यदेषां फलश्रवणं तत् पावनत्व-
ख्यापनार्थं न काम्यत्वप्रतिपादनायेति ।
एव मेषां नित्यत्वेऽपि
सायं प्रातर्वैश्वदेवः कर्त्तव्योवलिकर्म्मच ।
अनश्नतापि सतत मन्यथा किल्बिषी भवेत् ॥
इति कात्यायन वचना द्वैश्वदेवाख्यं कर्म्म पुरुषार्थ मेव

मन्त्वन्नसंस्कारकम् । अतएव प्रवसतोऽप्यावश्यक मिद मित्याह परिशिष्टकारः ।

प्रवसेदाहिताग्निश्चेत् कदाचित् कालपर्य्ययात् ।
यस्मिन्नग्नौ भवेत् पाको वैश्वदेवस्तु तत्र वै ॥

मनुरप्येव मेवाह ।

वैश्वदेवेतु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥

यद्यन्नसंस्कारः स्यात्तर्हि वलिं नाम वैश्वदेवं न कुर्य्यादिति । अत्र वलिहरण निषेधा दन्नसंस्काराभावो वैश्वदेवस्य अवगम्यते इति तट्टीकापि ।

केचित्तु सायं प्रातः सिद्धस्य हविष्यस्य जुहुयादित्याश्वलायन-वचनात् पुरुषार्थकत्व मन्नसंस्कारकत्वं चेत्युभयात्मकत्वं मन्यन्ते । अत्र सायं शब्देन रात्रिः कथ्यते, प्रातः शब्दन दिनमिति ज्ञेयम् । धर्म्मप्रश्नेऽप्येव मेव । यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद् भोक्तव्यमिति । यस्येति कर्म्मणिषष्ठी यदन्नमित्यर्थः । अग्रं भिक्षा ।

सङ्ग्रहेऽपि—

भ्रातॄणामविभक्तानां पृथक् पाकोभवेद् यदि ।
वैश्वदेवादिकं श्राद्धं कुर्य्यु स्तेऽपि पृथक् पृथक् ॥

तथा—

अविभक्तेन पुत्रेण पितृमेधो मृतेऽहनि ।
स्थानान्तरे पृथक् कार्य्यो दर्शश्राद्धं तथैव च ॥

इति ।

अथाग्यविशेषं मदनपारिजाते जमदग्निराह—

वैश्वदेवं तथा रात्रौ कुर्य्याद्बलि (हुतिं) हुतिं तथा ।
महतः पञ्च यज्ञांस्तु दिवैवेत्याह धर्म्मवित् ॥

इति ।

अस्यार्थः । येषां तु शाखिनां ब्रह्मयज्ञ व्यतिरिक्त महायज्ञानां वैश्वदेवे बलिहरणे चान्तर्भाव स्तेषां वाजसनेयादीनां दिवैव वैश्वदेवाख्यं कर्म्म न रात्रौ । येषां तु स्वशाखायां कालद्वयेऽपि तद्विधान मस्ति नास्ति वा तेषा माश्वलायनादीनां कालद्वयेऽपि भवतीति निर्णय इति तत्रैव व्याख्यातम् ।

हविष्येषु यवामुख्या स्तदनु व्रीहयः स्मृताः ।

इत्यादि हविष्यं ज्ञेयम् ।

पञ्चयज्ञलक्षण माह मनुः—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥

अध्यापन मध्ययनस्याप्युपलक्षणम् । तर्पणं नित्यश्राद्धम् ।

अत्र विकल्प माह कात्यायनः—

श्राद्धं वा पितृयज्ञः स्यात् पित्र्योबलिरथापिवा ।

इति ।

पितृभ्यः स्वधा नम इति यो बलिः स पितृबलिः ।

मनुः—

दद्यादहरहः श्राद्ध मन्नाद्येनोदकेन वा ।
पयोमूलफलै र्वापि पितृभ्यः प्रीति मावहन् ।

पितॄणुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेवकः ॥

इति ॥

अशक्तितोऽत्राव्यवस्थेयम् ।

अत्रविशेष माह व्यासः—

ब्रह्मचर्य्यादिनियमो विश्वेदेवा स्तथैवच ।
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ॥

याज्ञवल्क्योऽपि—

नित्यश्राद्धं देवहीनं नियमादिविवर्ज्जितम् ।
दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितम् ॥

अत्र दक्षिणानिषेधो यथोक्त दक्षिणापरः । न तु तत् सामान्य परः ।

दत्त्वातु दक्षिणां शक्त्या नमस्कारै र्विसर्ज्जयेत् ।

इति नित्यश्राद्ध प्रकरणे व्यासोक्तेः । इदं श्राद्धं षड्दैवतम् ।

तत्तु षट् पुरुषं ज्ञेयं दक्षिणापिण्डवर्ज्जितम् ।

इति व्यासोक्तेः । इदं यत्र अमावस्याश्राद्धादौ षडपि देवता इष्टा स्तत्र न भवति । यत्र साम्वत्सरिकादौ नेष्टा स्तत्र भवति ।

नित्यश्राद्धं नकुर्व्वीत प्रसङ्गाद् यत्रसिध्यति ।

इति चमत्कारखण्डोक्तेः ।

तथा कालविशेषे काम्यश्राद्धमप्युक्तं हेमाद्रौ—

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
मन्वादौ च युगादौ च पिण्डनिर्वपणादृते ॥

सर्वसंक्रान्तिष्वपि तथा।

इत्यादि स्मृतिवशात् युगादि मन्वादि संक्रान्त्यमा पूर्णिमा वैधृति महालयाष्टकापातेषु काम्यादिश्राद्धान्यप्यनुसन्धेयानि। अथ वैश्वदेवधर्माः। तत्र व्यासः—

जुहुयात् सर्पिषाभ्यक्तं तैलं क्षारं विवर्ज्जयेत्।
दध्यक्तं पयसाक्तं वा तदभावेऽम्बसापिवा।

स्मृत्यर्थसारे—

अलाभे येन केनापि फल शाकोदकादिभिः।
पयोदधिघृतैः कुर्य्या द्वैश्वदेवं स्रुवेण तु।
हस्तेनान्नादिभिः कुर्य्या दद्भि रञ्जलिना ततः॥

कात्यायनः—

पाण्याऽऽहुति र्द्वादशपर्वं पूरिका घृतादिना चेत् स्रुव मात्र पूरिका।
दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्च्चिषि तच्च पावके॥

उत्तानेन तु हस्तेन अङ्गुष्ठाग्रेण पीड़ितम्।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः।
कोद्रवं चनकं माषं मसूरं च कुलित्थकम्।
क्षारं च लवणं सर्वं वैश्वदेवे विवर्ज्जयेत्॥

आपस्तम्बीयेऽपि—

न क्षारलवणहोमो विद्यते तथा परान्नसंसृष्टस्येति।

क्षारलवण परान्नसंसृष्टेन हविषा न होतव्य मिति मदनपारिजाते व्याख्यातम्।

:लवणं पुराणे।

तिल मुद्गादृते मैव्यं शस्ये गोधूमकोद्रवौ।
(चीनकं) वेणुकं देवधान्यं च चणकाश्च तथैवहि।
स्विन्नधान्यं सर्वशाका एष क्षारगणः स्मृतः॥

आश्वलायनगृह्य परिशिष्टे अत्र विशेष उक्तः। स एष देवयज्ञो ऽहरह र्गोदानसम्मितः सर्वाभीष्टप्रद स्तस्मादेन महरहः कुर्व्वीत तमेनं वैश्वदेव हुतशेषेण पृथगन्नेन वा कुर्य्यान्नाशेषेण वैश्वदेवं कुर्य्यादिति। स एव पञ्चायतनपूजारूप इत्यर्थः। तत्प्रकरणत्वात्। इदं तु शाक्तविषयं। वैष्णवानां तु—

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते॥
पितृशेषं तु यो दद्याद्धरये परमात्मने।
रेतोदाः पितर स्तस्य भवन्ति क्लेशभागिनः॥

इति पञ्चरात्रोक्ते नैवेद्यशेषेणैव पञ्च महायज्ञाः स्युः शेषनिवेदने दोषश्रवणात्।

यदि पूर्वं ब्रह्मयज्ञो न कृत स्तर्हीत्र मनुष्ययज्ञात् पूर्वमेव कर्त्तव्यः।

य(स्तु)श्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः।
सचार्व्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसानेवा नान्यत्रेत्यमिति स्मृतिः॥
इति कात्यायनोक्तेः। स च प्रत्यहं सकृदेव स्यात्।

न हन्तिं न होमं च स्वाध्यायं पितृतर्पणम् ।
नैकः श्राद्धद्वयं कुर्य्यात् समानेऽहनि कुत्रचित् ॥

इति मरीच्युक्तेः । हन्तति मनुष्ययज्ञः । होमो देवयज्ञः । स च येषां द्विवारं नोक्तः स्तेषामेव निषिद्धः ।
तर्पण मपि तीर्थं विशेष प्राप्तौ भवत्येव ।

कृततर्पणकोविप्रस्तीर्थे सन्तर्पयेत् पितॄन् ।
इति स्कान्दोक्तेः ।

अयं वैश्वदेवः श्राद्धे साग्नेः पूर्वं निरग्नेः पश्चाद् भवति । तदुक्तं कालनिर्णयदीपिकायाम्—

(दैव) भिन्नाग्नेनैव तु वैश्वदेवश्राद्धं चरेत् साग्निकः पश्चाद् भूत मखादि मनग्निश्च जन स्त्वग्नौकृते वोत्तरं ।

इत्युक्तेविकल्पस्य चाप्तवत तत् प्राक् कालेनाचरेदिति । अनु वैश्वदेवानन्तरं श्राद्धं चरेदित्यर्थः ।

हेमाद्रावपि—

पश्चात्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्य्यात् ततोऽन्वाहार्य्यकं बुधः ।
इति ।

तथा—

वैश्वदेवाहुतीरग्ना वर्व्वाग् ब्राह्मणभोजनात् ।
पितॄन् सन्तर्प्य विधिवद्बलिं दद्याद्विधानतः ॥
इति ।

अग्नौ अग्नौकरणे हुते ब्राह्मणभोजनात् पूर्वं वैश्वदेवः कार्य्य इत्यर्थः ।

यद्वा—

वैश्वदेवं तथा कृत्वा पश्चाद् ब्राह्मणवाचनम् ।

इति ।

अनेन विकिरानन्तरं स्वस्तिवाचनात् पूर्वं कर्त्तव्य इति गम्यते ।

पित्रर्थं निर्वपेत् पाकं वैश्वदेवार्थमेवच ।

वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम् ।

इति पृथक् पाकोक्तेः । वाजसनेयिनामुभयार्थमेक एव पाकः । उद्धृत्य घृतान्नमन्नं पृच्छति अग्नौ करिष्ये इति सूत्रव्याख्याने कर्काचार्य्येण तथा व्याख्यातत्वात् ।

साग्नेरपि क्वचिदन्ते भवति—

श्राद्धात् प्रागेव कुर्व्वीत वैश्वदेवं तु साग्निकः ।

एकादशाहिकं भुक्त्वा तत्र ह्यन्ते विधीयते ॥

इति शालङ्कायनोक्तेः । निरग्निविषये षट्त्रिंशन्मतम् ।

(प्रा)प्रति वात्सरिको होमः श्राद्धादौ क्रियते यदि ।

देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥

इति ।

पैठिनसिरपि—

पितृपाकं समुद्धृत्य वैश्वदेवं करोति यः ।

आसुरं तद् भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥

आश्वमेधिकेऽप्येतदपि स एवाह ।

श्राद्धं निर्वर्त्य विधिवद् वैश्वदेवादिकं ततः ।
कुर्य्याद्भिक्षां ततो दद्याद्धन्तकारादिकं ततः ॥
इति ।

यतोऽत्राच्छ्राद्धं तत इति निबन्धकारै र्व्याख्यातम् । तस्मा देका-
दशाहश्राद्धे चान्ते भिन्नपाकेन वैश्वदेवोभवति ।

एकोद्दिष्टे तु शेषं तु ब्राह्मणेभ्यः समुत्सृजेत् ।
इति देवलेन तदन्नस्योत्सर्गविधानात् ।

सम्प्राप्ते पार्वण श्राद्धे एकोद्दिष्टे तथैवच ।
अग्रतो वैश्वदेवः स्यात् पश्चादेकादशे ऽहनि ॥
इति वैश्वदेव विधानाच्चेति सर्व्वं मनवद्यम् ।

वैष्णवाना मत्र विशेष उक्तः पञ्चरात्रे—

साग्ने (स्तु) स्तद्गृहितस्यापि वैष्णवस्य विशेषतः ।
श्राद्धनैवेद्यशेषेण वैश्वदेवादिपूर्व्वकम् ॥
आदिशब्दा द्बलिहरणम् ।

बृहत् पाराशरे पञ्चमाध्याये--

वैश्वदेवं कदाकार्य्यं श्राद्धे च समुपस्थिते ।
पाकशुद्ध्यर्थं मेवैतत् पूर्व्वमेव विधीयते ।
वैश्वदेवोऽयतश्चैव साग्नेर्हीनाग्निकस्यच ।
कर्त्तव्यः पाकशुद्ध्यर्थं भुक्तोच्छिष्टं तु वर्ज्जयेत् ॥

कठ कात्यादेरपि विशेषो धर्म्मानुशासने--

निर्व्वर्त्य श्राद्धयज्ञं वै वैश्वदेवं विधायच ।
ततो भूतबलि र्देयः कठ कात्यादिकान् विना ॥

इति ।

स्थालीपाकदिने विशेषमाहदेवलः ।

अक्कृ(ते)त्वा वैश्वदे(वेतु)वन्तु स्थालीपाकाः प्रकीर्त्तिताः ।
अन्यत्र पितृयज्ञात्तु सोऽपराह्णे विधीयते ॥

पितृयज्ञः पिण्डपितृयज्ञः । स्थालीपाका इति बहुवचनं स्थाली-पाक साध्य कर्म्मोपलक्षकम् । नित्यश्राद्धं पितृयज्ञ इत्याश्वलाय-नादिविषयम् । वाजसनेयिनां तु पित्र्योबलिः पितृयज्ञः । अपरपक्षे श्राद्धं कुर्व्वीत इति सूत्रव्याख्यानं कुर्व्वता कर्काचार्य्येण श्राद्धशब्दस्य राजसूयवत् स (स) मुदायनामधेयत्वं पूर्वपक्षयित्वा असावेतत्ते इति मन्त्रवर्णादिना पिण्डदाने पितॄणां देवतात्वावगमात् पिण्ड-दानस्यैव नामधेयत्व मित्युक्तत्वात् । अङ्ग-प्रधानचिन्तायाः प्रयो-जनं तु प्रधानाकरणे नामकरण मिति तन्मते ब्राह्मणभोजनस्याङ्ग-त्वात् । गयादौ तथा दृष्टत्वाच्च । इत्यलं प्रपञ्चेन ।

अथ मनुष्य यज्ञः—

अचिन्तित मनाहूतं वैश्वदेवेष्ववस्थितम् ।
अतिथिं तं विजानीयान्नैकग्रामनिवासिनम् ॥
चक्षु र्दद्यान्मनोदद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥

इति दानधर्म्मे । इत्यादिलक्षणोपेताय अनापृष्टगोत्रकुलाय आसनादिना अर्च्चयित्वा अन्नं परिविष्य उदङ्मुखः सनकादीन् ध्यायन् इदमन्नं सनकादि--मनुष्येभ्योऽहं ददे इत्युक्त्वा दद्यात् । अन्नदानासामर्थ्ये कार्ष्णाजिनिः ।

भिक्षां वा पुष्कलां दद्याद्धन्तकारं मथापि वा।

इति।

मनुः—

ग्रासमात्रं भवेद् भिक्षा अग्रं ग्रासचतुष्टयम्।

अग्रं चतुर्गुणीकृत्य हन्तकारोऽभिधीयते॥

ब्राह्मणाभावे कात्यायनः—

अप्सु (भ्सु) धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि।

पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहः द्विजः॥

उद्धृत्य पात्रे निक्षिपेदित्यर्थः। तदभावे गवादौ दद्यात्। यदा वैश्वदेवात् प्रागतिथि रागच्छति तदा व्यासः—

अकृते वैश्वदेवे तु भिक्षुके गृहमागते।

उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत्॥

भिक्षुरपि तेनैव दर्शितः—

ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः।

अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः॥

इति पञ्चमहायज्ञा यथाकाले यदि अकृता स्तदाह यमः—

दिवोदितानि कर्म्माणि प्रमादादकृतानि चेत्।

शर्व्वर्याः प्रथमे यामे तानि सर्व्वाणि कारयेत्।

ब्रह्मचार्य्यवगाहं च क्षौरं च परिवर्ज्जयेत्॥

एवं स्व स्व शाखोक्त प्रकारेण वैश्वदेवः सान्ने भवति। निरन्नेऽपि दृष्टोद्दिष्ट विधानेन स्व शाखोक्त एव। तदुक्तं कात्यायन सूत्र परिशिष्टे।

अथातो धर्म्मजिज्ञासा ।

केऽग्नयन्तादूर्द्ध्वं सपत्नीक उत्सन्नाग्नि रनग्निकः प्रवासी ब्रह्मचारी विधुरोवा अन्वग्निरिति* ग्रामादग्निमाहृत्य पृष्ठोदिवी†त्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य “तां सवितु स्तत् सवितु‡ र्विश्वानि देव सवितः§” इति पूर्व्ववद्घृते हुत्वा पाकं पचेत् । तत्र स्वशाखोक्तं वैश्वदेवं कुर्य्याच्च वृथापाको भवति न वृथापाकं पचेत न वृथापाकमश्नीयात् तत्रैव पितृपितृयज्ञ पञ्चाध्यायययज्ञानि कुर्य्यादिति । आश्वलायनोऽपि—

लेखादयो नैवच तत् सतांस विश्वानि नोद्याम इमे च मन्त्राः ।
आरोपणं वाप्यवरोपणं वा व्युत्पत्तिरेवं विधुरानलस्य ॥

इति ।

अथ यदि आलस्यादिना पृष्ठोदिवि विधानं न करोति तदा शाकल वैश्वदेवः कार्य्यः । तदुक्तं व्यासस्मृतौ ।

अनग्निकस्तु यो विप्र आदायान्नं घृतप्लुतम् ।
शाकलोक्त विधानेन जुहुया ल्लौकिकेऽनले ॥

---

* अन्वग्नि रुषसा मग्र मख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्य्यस्य पुरुत्राच रश्मी ननु द्यावा पृथिवी आततन्थ ॥ ११अ. १७म. यजुः ।

† पृष्ठोदिवि पृष्ठो अग्निः पृथिव्यां नेता सिन्धूनां वृषभः स्तियानाम् । स मानुषी रभिविशो विभाति वैश्वानरो वावृधानो वरेण ॥ ७म. ५सू. २ऋक् ।

‡ तत् सवितु र्वरेण्यं भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् ॥

§ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ॥ ५म. ८२सू. ५ऋक् ।

व्यस्ताभिः* र्व्याहृति (ती) भिस्तु समस्ताभि† स्ततः परम् ।
षड्भि र्देवकृतस्येतीत्यादि मन्त्रै र्यथाक्रमम् ॥
प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहु (तिः) तीः ।
देवकृतस्येति षण्मन्त्रास्तु— ।

ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा । अग्नये नमऽइति सर्वत्र त्यागः ।

ॐकारपूर्वः स्वाहान्त स्त्यागः शिष्टविधानतः ।
भुवि दर्भान् समास्तीर्य्य बलिकर्म्म समाचरेत् ॥
विश्वेभ्यो देवेभ्य इति सर्वभूतेभ्य एवच ।
भूतानां पतये चेति नमस्कारेण शास्त्रवित् ॥
दद्याद्बलिमयं चाग्रे पितृभ्यश्च स्वधानमः ।
पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत् ॥
उद्धृत्य षोड़शग्रासमात्र मन्नं घृतोक्षितम् ।
इद मन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत् ॥
गोत्रनाम स्वधाकारैः पितृभ्यश्चापि शक्तितः ।
षड्भ्योऽन्नमन्वहं दद्यात् पितृयज्ञविधानतः ॥

---

* भूः स्वाहा भुवः स्वाहा स्वः स्वाहा एवं रूपाभिः ।

† भूर्भुवः स्वः स्वाहा एवंरूपाभिः ।

ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः।
काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद् ग्रास मेवच॥
उपविश्य गृहद्वारि तिष्ठेद् यावन्मुहूर्त्तकम्।
अप्रमत्तोऽतिथिं लिप्सु र्भावशुद्धः परीक्षकः॥

इति।

सच्छूद्रस्यापि वैश्वदेव उक्तो याज्ञवल्क्येन।
भार्य्यारतिः शुचि र्भृत्यभर्त्ता श्राद्धक्रियापरः।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेत्॥

इति।

न ह्रापयेदनुतिष्ठेत्। नमस्कारेण मन्त्रेणेति। देवेभ्योनमः। भूतेभ्योनमः। पितृभ्योनमः। मनुष्येभ्योनम इति नमस्कारान्तेन मन्त्रेण। यद्वा—

देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच।
नमः स्वाहायै स्वधायै नित्यमेव नमोनमः॥

इति वायुपुराणोक्तेन (वा) शूद्रस्य पञ्च महायज्ञा भवन्ति। ते च आमद्रव्येण कार्य्याः पक्वेन निषिद्धत्वात्।

पाकाभावे प्रवासेच तण्डुला नोषधो स्तथा।
पयोदधिघृतं वापि कन्दमूल फलानि वा॥

इति स्मृत्युक्तानुकल्पद्रव्येण पञ्च महायज्ञान् कृत्वा तद्भूयं विप्रकुले प्रवेशयितव्य मिति शास्त्ररहस्यम्।

श्राद्धे तु "आमेनैव तु शूद्रस्य" इत्यादि नियमादामेनैव श्राद्धं कर्त्तव्यम्। विवाहेतु—

विवाहमात्रं संस्कारं शूद्रोऽपि लभते सदा ।

इति विवाहेतरसंस्कारनिषेधपराद्ब्राह्मवचनात् शिष्टसमाचाराच्च लौकिकेऽग्नौ ब्राह्मणद्वारा नाम मन्त्रं घृतादिना होमो भवतीति गम्यते । स्कान्दे प्रभासखण्डे शूद्रस्य निषिद्ध मुक्तम्—

न दर्भाङ्कुरैश्छूद्रो न पिबेत् कापिलं पयः ।
मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि ॥
नोच्चरेद्वेदमन्त्रांश्च पुरोडाशं न भक्षयेत् ।
न शिखां नोपवीतं च नोच्चरेत् संस्कृतां गिरम् ॥
न पठेद्वेदवचनं शिपवं नहि सेवयेत् ।
नमस्कारेण मन्त्रेण क्रियासिद्धि र्भवेद्ध्रुवम् ॥
निषिद्धाचरणं कुर्व्वन् पितृभिः सह मज्जति ।

इति ।

न शिखा मित्येतदसच्छूद्रविषयम् । सच्छूद्रे तु परिचर्य्या शूद्रस्य नियतावृत्ति रनियताः केशवेशा इति वशिष्ठस्मरणाद् विकल्पेन शिखा भवतीति गम्यते ।

मनुः—

शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम् ।
वैश्यवच्छौच-कल्पश्च द्विजोच्छिष्टस्य भोजनम् ॥

वर्णैर्वैश्य स्वाहच्छौचे सूतकादौ कल्पः प्रकारः । शेषं स्पष्टम् ।

अन्यच्च—

देवार्च्चां पुरतः कृत्वा ब्राह्मणानां द्विजोत्तम ।
कोतव्य मेव शूद्रेण तथान्यैश्च द्विजातिभिः ॥

तथा—

स्त्रीभिः शूद्रैश्च श्रोतव्यं कृत्वा ब्राह्मणमग्रतः ।

पुराणं चेतिहासं (च) च श्रोतव्यं च दिने दिने ।

तथा—

क्षमा सत्यं दमः शौचं दानमिन्द्रियनिग्रहः ।

अहिंसा गुरुशुश्रूषा तीर्थानुगमनं दया ॥

आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।

अनभ्यसूयाच तथा धर्म्मः सामान्य उच्यते ॥

इति विष्णूक्ता साधारणधर्म्माः शूद्रेणाप्यनुष्ठेया इत्यलं बहु-प्रपञ्चेनेति प्रकृत मानुसीयते ।

एवं कृतवैश्वदेवो गोग्रासं दद्यात् ।

तदाह व्यासमुखः—

गवां ग्रासं च कुर्वीत नित्यमेव समाहितः ।

गवां कण्डूयनं सर्व्वं ग्रास माह्निक मेवच ॥

तत्र मन्त्रो यथा—

सौरभेय्यः सर्व्वहिताः पवित्राः पापनाशनाः ।

प्रतिगृह्णन्तु मे ग्रासं गाव स्त्रैलोक्यमातरः ॥

इतिमन्त्रेण संपूज्य गोग्रासं दद्यात् ।

ततो वहिःकाकवलिः ।

मनुः—

शुनाञ्च पतितानां च श्वपचां पापरोगिणाम् ।

वायसानां (छ) क्रिमीणां च शनकै र्निक्षिपेद् भुवि ॥

तन्मन्त्रस्तु—

ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋता स्तथा।

वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम्॥

वायसेभ्योनम इति नमस्कुर्यात्। इति वायसवलिः।

तथा—

द्वौ श्वानौ श्याम शवलौ वैवस्वत कुलोद्भवौ।

ताभ्यां पिण्डं प्रदास्यामि रक्षतां पथि मां सदा॥

श्वभ्योनमः। इति श्ववलिः।

तथा—

पिपोलिकाकोट पतङ्गकाद्य वुभुक्षिताः कर्मनिवन्धव (भाः) द्धाः।
प्रयान्तु ते तृप्ति मिदं मयान्नं तेभ्यो (पि) विसृष्टं सुखिनो भवन्तु।
क्रिमिकोट पतङ्गेभ्योनम इति तद्बलिर्देयः।

तथा—

प्रवासं गच्छतोयस्य गृहेकर्त्ता न विद्यते।

पञ्चानां महता मे(ष)तैः स यज्ञैः सह गच्छति॥

इत्यत्रिस्मरणात् प्रवासेऽप्येते यथाशक्ति कर्त्तव्या एव। तत्रापि वैश्वदेवकल्पो निषिद्धः।

चुल्लीहोमो श्राद्धदान मन्तृतौ गमनं तथा।

असंख्यातं तु यज्जप्तं तत् सर्व्वं निष्फलं भवेत्॥

तथा—

न पश्येद् भूवलिं वीर दत्त्वा ग्रहवलीन् द्विजः।

स्वयं तद्वो(नैवो)द्धरेन्मोहात् यदि तच्छ्रीर्विनश्यति॥

गालवः—

वैश्वदेवं दिवा नक्तं न भवेच्चेत् पृथक् पृथक् ।
प्रातरेव द्विरावृत्त्या कर्त्तव्यं स्मृतिशासनात् ॥

तथा—

दिवा वा यदि वा रात्रौ क्रियते वैश्वदेविकम् ।
द्विरावृत्त्या तदा कुर्य्यादिति वेदविदोविदुः ॥

एतच्च यच्छाखायां सायं प्रात वैँश्वदेवोविहित स्तद्विषयम् । अन्येषां सकृदेव भवतीत्युक्तमेव ।

शौनकः—

वैश्वदेवं तथा श्राद्धं ब्रह्मयज्ञं च सूतके ।
न कुर्य्यात् स्वयमन्येन कारयेन्नच सर्वथा ॥

स्मृत्यर्थ सारेऽपि—

कुर्य्यात् पञ्च महायज्ञानित्यदा सूतकं विना ।

इति ।

तथा—

आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनम् ।
वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् ॥

तथा—

अस्नाताशो मलं भुङ्क्ते त्वजपी पूयशोणितम् ।
अहुत्वाशो क्रिमिं भुङ्क्ते अनश्चर रुधिरं तथा ।

इत्यादि ।

ततस्तदीया वाक्त्र्येष्ठ गत्वा यथार्हं मन्त्रीयुः । अन्येऽपि

तत् काल समागता भोजनीयाः । भोजन काले समागतान् सखि सम्बन्धि बान्धवान् भोजयेदिति वसिष्ठोक्तेः । एवं पञ्च महायज्ञा अहरहः कार्य्याः ।

अन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्य श्चोद-पात्रादिति कात्यायनोक्तेः ।

विना सूतकं पञ्चमहायज्ञाकरणे प्रायश्चित्त मुक्तं स्मृतौ ।

स्वकर्म्महानौ पतन मब्देनैवत्वनापदि ।

स्वकर्म्महानौ नास्तिक्यात्मासेन पतनं स्मृतम् ॥

द्वादशाब्दव्रतेनैव तस्य शुद्धिस्तु नान्यथा ।

तन्निरीक्ष्यार्कमीक्षेत स्पृष्ट्वे स्नानं सचेलकम् ॥

वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे ।

स्नातकव्रतलोपेच प्रायश्चित्तमभोजनम् ॥

इत्यल मति प्रपञ्चेन ।

इति श्रीमदनन्त भट्टविरचिते विधानपारिजाते

आह्निकविधौ वैश्वदेव विधानम् ॥

---

## अथ भोजन विधानम् ॥

तत्र याज्ञवल्क्यः।

सम्भोज्यातिथि भृत्यांश्च दम्पत्योः शेष भोजनम्।
बालसु(स्व)वासिनो वृद्ध गर्भिण्यातुर कन्यकाः ॥

दम्पत्योरपि मध्ये पूर्व्वं गृहपतिः श्रेष्ठाश्च मश्नीया ततः पत्नीति।

भारतेदानधर्म्मे—

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥
अभुक्तवत्सु नाश्नाति ब्राह्मणेषु च यो नरः।
अभोजनेन तेनाथ जितः स्वर्गोभवत्युत ॥
देवेभ्यश्च पितृभ्यश्च संश्रितेभ्य स्तथैवच।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम्।

इति।

देवलः—

आहारं तु रहः कुर्य्यान्निर्हारं चैव सर्व्वदा।
गुप्ताभ्यां लक्ष्म्युपेतः स्यात् प्राकाश्ये हीयते श्रिया ॥

रह एकान्ते। निर्हारः पुरीषाद्युत्सर्गः स्त्रीसंसर्गश्च।

मैथुनं सततं गुप्त माहारं च सदाचरेत्।

इति दान धर्म्मोक्तेः।

व्यासश्च—

पञ्चार्द्रो भोजनं कुर्य्यात् प्राङ्मुखो मौन मास्थितः।

हस्तौ पादौ तथैवास्य मेषा पञ्चार्द्रताम्मृता ॥

आचारदीपे—

आस्यतोवरुणः कान्तिं* । भुञ्जतोऽग्निः श्रियं हरेत् ।

भुञ्जतोमृत्यु रायुष्यं तस्मान्मौनं त्रिषु स्मृतम् ॥

मनुः—

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणा मुखः ।

श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्तेह्युदङ्मुखः ॥

एतत् काम्यं नित्यविधिस्तु —

प्राङ्मुखोऽन्नानि भुञ्जीत तथोत्तर मुखोऽपि वा ।

इति ।

अनायुष्यं त्वेवं मुखस्य भोजनं मातु रित्युपदिश्यतीत्यापस्तम्ब स्मरणा ज्जीवन्मातृकस्य दक्षिणामुख भोजननिषेधः । आचारदीपेऽपि—

पुत्रवान् स्वगृहे नित्यं नाश्नीया दुत्तरामुखः ।

सोमवारे तथात्यन्तं वर्ज्जयेत्तु सदा बुधः ॥

भोजनकाल माह मनुः—

सायं प्रातर्द्विजातीना मशनं श्रुति चोदितम् ।

नान्तरा भोजनं कुर्य्यादग्निहोत्र समोविधिः ॥

भारते दानधर्म्मे—

---

* स्या (तु) तस्तु वरुण स्तेजः इत्याह्निक तत्त्वे पाठः। स एव समीचीनतया प्रतिभाति स्यतु भंविष्यन् काल विहितत्वेन प्रकृतानुपयोगात् ।

सायं प्रातर्मनुष्याणां भोजनं देवनिर्म्मितम् ।
नान्तरा भोजनं दृष्ट मुपवास विधिर्हि सः ॥
अतस्तु सायमाशश्च प्रातराशश्च यो नरः ।
सदोपवासो भवति यो न भुङ्क्ते ऽन्तरा (नरः) क्वचित् ॥

अत्र प्रातः शब्दः पञ्चधाविभक्त दिनस्य तृतीयभागवाचकः ।

तथा—

ततो भोजन वेलायां कृत्वाचारं सदात्मवान् ।
पोष्यवर्ग सहोपेतो भोजनं कारये द्बुधः ॥
मातापिता गुरुर्भार्य्या पुत्रोदास स्तथैवच ।
अभ्यागतोऽतिथिश्चाग्निः पोष्य वर्गा अमी नव ॥

ब्रह्म पुराणे—

अनु (उप) लिप्ते समे स्थाने शुचौ शुद्धासनान्विते ।
मण्डलं गोमयेन स्या दथवा गौरमृत्स्नया ॥

मण्डल माह व्यासः—

चतुरस्रं त्रिकोणञ्च वर्त्तुलं चार्द्ध चन्द्रकम् ।
कर्त्तव्य मानुपूर्व्वेण ब्राह्मणादिषु* मण्डलम् ॥

अन्यः—

आदित्या वसवोरुद्रा ब्रह्मा विष्णु स्तथैवच ।
मण्डलं तूपजीवन्ति तस्मात् कुर्व्वीत मण्डलम् ॥

---

* आदिपदेन क्षत्रियवैश्य शूद्राणां परिग्रहः । तत्र ब्राह्मणस्य चतुरस्रं क्षत्रियस्य त्रिकोणं वैश्यस्य वर्त्तुल शूद्रस्य अर्द्धचन्द्राभं मण्डलं विहित मिति बोद्धव्यम् ।

यातुधानाः पिशाचाश्च असुरा राक्षसा स्तथा।
हरन्ति रसमन्नस्य मण्डलेन विवर्ज्जितम्॥

आसन माह मनुः—

श्रीपर्णी च शमी शम्मी कदम्बोवारण स्तथा।
पञ्चासनोपविष्टस्तु स्नानहोमादिकं चरेत्॥

वर्ज्यं मुक्तं प्रचेतसा—

गोशकृन् मृन्मयं भिन्नं तथा पालाश पैप्पलम्।
लोहवद्धं तथे(सदै)वार्कं वर्ज्जयेदासनं बुधः॥

तथा—

मधु पर्के भोजनान्ते सन्ध्यादौ नित्यकर्म्मणि।
आसनस्थः सदाचामे दन्यत्र कुक्कुटायनः॥
यस्तु भोजनवेलाया मासनस्थ उपस्पृशेत्।
ब्राह्मणो भोजनात् पूर्वं तमाहुः पंक्ति दूषकम्॥
इत्यादि स्मृते रासनस्थस्य आचमन निषेधः।

पैठीनसिः—

एकएवतु योभुङ्क्ते विमले कांस्य भाजने।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशोबलम्॥

भिन्ने भोजन निषेधा दभिन्नं कांस्य पात्रं श्रेयम्।
सौवर्णे राजते चैव पात्रे भोजन माचरेत्।
इति स्मृतिः। सौवर्णादिक मपि विभवे सति कार्य्यम्।
ताम्र पात्रे न भुञ्जीत भिन्नकांस्ये मलाचिते।
इति ब्रह्म मनूक्ते स्ताम्रपात्रनिषेधः।

स्वीयपात्रे सर्व्वदा भोज्यम्।

परपात्रेषु भुञ्जानः प्राजापत्यं चरेद्विजः।

इति स्मृतेः।

पात्रपरिमाण माह योगी—

पञ्चाशतः पला दूर्द्धं महा भाजनमिष्यते।

नातिदीर्घं नातिह्रस्वं रत्नि मात्र प्रमाणकम्॥

ग्रन्थान्तरेतु—

पलविंशति मारभ्य शतजार्द्धं यथेच्छया।

इदमेव गृहस्थानां न यति-ब्रह्मचारिणाम्॥

इत्यल्प प्रमाण मप्युक्तं। तत् समन्ता ल्लघुपात्राणि निधेयानि न तन्मध्ये।

लघीयांस्यपि पात्राणि भूमौ स्थाप्यानि भारत।

पयः शाकादि भुक्त्यर्थं न महाभाजनोपरि।

सव्ये पार्श्वेच पानीयपात्रं दद्याद्विचक्षणः॥

आचारदीपे—

दक्षिणं तु परित्यज्य वामे नीरनिधापनात्।

अभोज्यं तद् भवेदन्नं पानीयं सुरयासमम्॥

तथा—

ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्।

यतिश्च ब्रह्मचारी च विधवा च विवर्ज्जयेत्॥

इति व्याघ्रपादुक्ते र्यत्यादेः कांस्यपात्र निषेधः।

अथ प्रसङ्गाद्विधवा धर्म्माः कथ्यन्ते।

स्कान्दे—

पत्यौ मृतेऽपि या योषिद्वैधव्यं पालयेद्यतिः ।
सा पुनः प्राप्य भर्त्तारं स्वर्गलोकान् समश्नुते ॥
एकाहारः सदा कार्य्यो न द्वितीयः कथञ्चन ।
त्रिरात्रं पञ्चरात्रं वा पक्षव्रत मथापिवा ॥
यवान्नेन फलाहारैः शाकाहारैः पयोव्रतैः ।
प्राण यात्रां प्रकुर्व्वीत यावत् प्राणः स्वयं व्रजेत् ॥
वैशाखे कार्तिके माघे विशेषनियमं चरेत् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं पुनः ॥
नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ।
कञ्चुकं न परि (री) दध्या द्वासो न विकृतं वसेत् ॥
विधवा कवरी बन्धो भर्त्तृबन्धाय जायते ।
शिरसोवपनं तस्मात् कार्य्यं विधवया सदा ॥
पर्य्यङ्क शायिनी नारी विधवा पातयेत् पतिन् ।
तस्मात् भूशयनं कार्य्यं पति सौख्य समीहया ॥
नैवाङ्गोद्वर्त्तनं कार्य्यं स्त्रिया विधवया क्वचित् ।
गन्धद्रव्यस्य सम्भोगो नैवकार्य्य स्तया पुनः ॥
यद् यदिष्टतमं लोके यच्च पत्युः समीहितम् ।
तत्तद् गुणवते देयं पति प्रीणन काम्यया ।
तर्पणं प्रत्यहं कार्य्यम् भर्त्तुः कुशतिलोदकैः ।
तत्पितु स्तत्पितुश्चैव तन्नामादिभ्य एवच ॥

तर्पणं तु पुत्र पौत्राभावे ज्ञेयम् ।

श्राद्धं च तर्पणं चैव न कुर्य्यात् पुत्रिणी सदा।

इति भृगूक्तेः—

विष्णोस्तु पूजनं कार्य्यं पति बुद्धया न चान्यथा।
पति मेव सदा ध्याये द्विष्णुरूपधरं परम्।
अपृष्ट्वा तु सुतान् किञ्चि न्नकुर्य्याद् भर्त्तृ तत्परा॥

इति।

पुत्राद्यभावे हरिवंशे पुण्यकव्रत कल्पे विशेष उक्तः—

मृण्मयं चित्रगं वापि कृत्वा भर्त्तार मात्मनः।
तदाज्ञया स्नानदान व्रतादी नाचरेत् सदा॥

इति।

अथ प्रकृत मनुस्रियते। कांस्य पात्राभावे यमः।

रम्भा कुटज मध्वाम्र जम्बू पनस चम्पकाः।
पद्मोदुम्बर पालाश ब्रह्मपत्रं पवित्रकम्*॥

अत्रिः—

वटार्काश्वत्थ पत्रेषु कुम्भी तिन्दुक पत्रयोः।
श्रीकामो नैव भुञ्जीत कोविदार करञ्जयोः॥
करे खर्परके चैव शिलायां ताम्र भाजने।
भिन्नकांस्ये च वस्त्रे च न भुञ्जीत तथाऽऽयसे॥
आसने पाद मारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित्।
मुखेन धमितं चान्नं तुल्यं गोमांसभक्षणैः॥

---

* पात्र मिति शेषः। तथाच रम्भादि पत्रेषु भोजने न कोऽपि दोष इति भावः।

दक्षः—

भोजनं हवनं दानमुपहारः प्रतिग्रहः ।
बहिर्जानु न कार्य्याणि तद्वदाचमनं जपम् ॥
नाश्नीयाद् भार्य्यया सार्द्धं नाकाशे न तथोत्थितः ।
शयानः प्रौढ़ पादश्च कृत्वा चैवावसक्थिकम् ॥

आकाशे यन्त्रादौ । पादारोपित पादः प्रौढ़पादः ।

सङ्ग्रहेऽत्र विशेष उक्तः—

मात्रा सहोपनीते स्यात् द्विवाहे भार्य्यया सह ।
अन्यत्र सह भुञ्जानः समः स्यात् पशुभिः सह ॥

प्रयोग पारिजाते गर्गः—

रम्भापत्रपलाशेषु यः कुर्य्यात् पारणं क्वचित् ।
सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥

यत्तु मिताक्षरायाम्—

पलाशपत्रभोजी च अहोरात्रेण शुध्यति ।

इति यो नित्यनिषेध उक्तः स वक्ष्यो पलाश विषयः । इति मदनपारिजाते व्याख्यातम् ।

पलाशपत्रभोजी यः सोऽनन्तं फल मश्नुते ।

इति विशेषोक्तः ।

यमः—

शाकादि पुरतः स्थाप्यं भक्ष्यं भोज्यञ्च वामतः ।
भक्तं मध्ये प्रतिष्ठाप्यं दक्षिणे घृतपायसे ॥
पात्रं धृत्वा तु वामेन यावद् भवति भोजनम् ।

पाणिना दक्षिणेनैव पर्य्युक्ष्य परिषेचयेत् ॥
अङ्गुष्ठ स्तर्ज्जनी चैव मध्यमा चैव सर्वदा।
तिस्रो ह्ये(द्वेऽ)काङ्गुली चैव प्रशस्ता पात्रधारणे ॥

भारते—

आज्याहुतिं विना चैव यत् किञ्चित् परिक्षिप्यते।
दुराचारैश्च यद् भुक्तं तं भागं रक्षसां विदुः ॥

मार्कण्डेयो ऽत्र विशेष माह—

न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान् महामुने।
शेष मुद्धृत्य भोक्तव्यं श्रूयता मत्र कारणम् ॥

इति।

उद्धृत्य यज्ञादौ स्थापयित्वेत्यर्थः।

यच्च मुक्तं सङ्ग्रहे—

कांस्यस्य काष्ठकस्यापि वंशस्यापि तथैव (च) हि।
यन्त्रिका तु त्रिकोणा वै कर्त्तव्या पात्रधारणे ॥

षट् त्रिंशन्मते—

ओदने परमान्नेच घृतपात्रं स्थितं यदि।
एतदाज्यं भवेद्भक्तं तदन्नं मांसमुच्यते ॥

ब्राह्मे—

सैन्धवं लवणं चैव तथा मानससम्भवम्।
सामुद्रं भूमिजं चैव प्रत्यक्षे चैव दुष्यतः ॥

तस्मादिदं द्रव्यान्तर युक्तं परिवेष्यम् (वेष्यम्)।

श्राद्धादि भोजने पात्राभावे विशेष उक्तो ब्राह्मे।

पञ्चग्रासां स्तु भुञ्जीत रुचिहेस्मनि सङ्कटे ।
पात्रमुद्धृत्य शेषं तु भक्षयेत् पैतृकाहृते ॥

गर्गः—

सत्यं त्वेति च वै प्रात र्वारिणा परिषेचयेत् ।
सायंकाले तथैवस्याहृतं त्वेत्यादितः क्रमात् ॥

आपस्तम्बः—

कौशं तु बिभृयान्नित्यं पवित्रं दक्षिणे करे ।
भुञ्जानस्तु विशेषेण ग्रहीतान्न विशुद्धये ।
भोजनं वर्त्तुलं प्रोक्तं पवित्रं ग्रन्थि वर्ज्जितम् ॥

इति ।

तथा—

उद्धृत्य किञ्चिदन्नाग्रं धर्म्मराजाय वै वलिम् ।
दत्त्वा च चित्रगुप्ताय भूतेभ्यश्च तथैवच ॥
अन्नेनैव घृताक्तेन नमस्कारेण वै भुवि ।
तिस्र एवाहुतीर्दद्याद् भोजनादौ च दक्षिणे ॥

इति भविष्य पुराणे । भोजनादा वन्नेनेत्युक्ते र्भोजनादन्यत्र-फलाहारादौ न चि(पवि) त्राहुतिरिति गम्यते ।

केचित्तु—

भूपतये भुवनपतये भूतानां पतये नमः ।
एवं वलित्रयं दद्याद् भोजनादौ विशेषतः ॥

इत्याहुः । यथाचारतो व्यवस्था । पितृकार्य्येतु—

पितॄणा मन्न उत्सृष्टे वलिं कुर्व्वन्ति ये द्विजाः ।

आसुरं तद् भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥

यमः—

स्पर्शनान्ते स्पृशेदन्नं संकल्पान्ते बलिं हरेत्।
होमस्तु मधुवातान्ते होमान्ते चोदकं पिबेत् ॥

इति।

तद्देश्वदैविकद्विजविषयम्। पितृद्विजस्य बलिदान निषेधात्। इति श्राद्ध कल्पे। सूतकेऽपि बलिदानापोशान प्राणाहुति पात्र-धारणादयो भुजिनियमा भवन्तीति स्मृत्यर्थसारे स्पष्ट मुक्तम्।

अन्यत्रापि—

नित्यस्नानं च शौचं च भोजनं नियमान्वितम्।
अस्पृश्य स्पर्शने स्नानं कुर्य्यादेवच सूतकी ॥

अन्यत्रानधिकारा तर्पण देवार्चादयो न भवन्ति।

मनुः—

दत्त्वा तु चित्रगुप्ताय हस्तं प्रक्षालयेद्द्विजः।
अप्रक्षालितकरो भु (क्त्वा) क्त्वा रौरवं नरकं व्रजेत् ॥

चन्द्रिकायां दक्षः—

भोजनादौ बलिं मुक्तं समुद्धृत्य च भोजनम्।
अनुद्धृत्यच यो भुङ्क्ते प्राणायामाष्टकं चरेत् ॥
उक्त्वा ऽमृतोपस्तरणमसि स्वाहान्त मेवच।
आपोशानं तदित्याहु र्भोजनादौ पिबेज्जलम् ॥
आपोशान मकृत्वा तु यो भुङ्क्ते द्विजसत्तमः।
अभोज्यं तद् भवेदन्नं भुक्त्वा दोष मवाप्नुयात् ॥

तद्दोषपरिहारार्थं प्राणायामान् समाचरेत्।
आपोशनार्थं यत्तोयं धृतं चेन्निःसृतं भवेत्॥
हस्तं प्रक्षाल्य तोयेन पुनर्वै धारयेज्जलम्।
आपोशानं करे क्षत्वा यथाशीर्वचनं पठेत्॥
अभोज्यं तद् भवेदन्नं दाता भोक्ता च किल्बिषी।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम्॥
तद्दोष परिहारार्थं मन्त्र मेत मुदीरयेत्।
अन्नं ब्रह्मा रसोविष्णु र्भोक्ता देवो महेश्वरः।
एवं ध्यात्वा द्विजो भुङ्क्ते ह्यन्न दोषै र्नलिप्यते॥
प्राणाहुतीरदत्त्वा (रहुत्वा) तु यश्चान्नं परिमर्द्दयेत्।
मर्द्दितं भोजयेद् यस्तु प्राजापत्यं ततश्चरेत्॥

चित्राहुतिदानानन्तरं हस्तं प्रक्षाल्य पंक्ति दोषसम्भावनायां जलधारादिना पंक्तिं भिन्द्यादित्युक्तं पारिजाते ह्यत्र मनुना।

एकपंक्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम्।
सर्व्वेषां तत् समं तावद् यावत् पंक्ति र्नभिद्यते॥
अग्निना भस्मना चैव स्तम्बेन सलिलेन वा।
द्वारेणैवच मार्गेण पंक्तिभेदो बुधैः स्मृतः॥

स्तम्भेनेति क्वचित् पाठः।

याज्ञवल्क्यः—

आपोशानेनोपरिष्टादधस्तादश्नतं तथा।
अन (न्न) ममृतं चैव कार्य्य मन्नं द्विजन्मना॥

दक्षः—

शब्देनापोशनं पीत्वा शब्देन घृतपायसम्।
शब्देनापः पयः पीत्वा सुरापानसमं भवेत्॥
आर्द्रामलक मात्रं (तु) वा यद्वा वदर मात्रकम्।
प्राणाहुति प्रमाणं स्यात् सघृतान्नस्य तद्‌ भवेत्॥
घृतहीनं तु यो भुङ्क्ते नर स्वाहुति पञ्चकम्।
पश्चाद्‌ घृतेन यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत्॥
घृताभावेतु गव्येन संस्कुर्व्वीत जलेन वा।

गव्येन दुग्धादिनेत्यर्थः।

पराशरः—

मुखे चान्नस्य निक्षेपो मन्त्रैः प्राणादि पञ्चभिः*।
भोजनं तद्धि विज्ञेयं तत्रैव नियमाः स्मृताः।
पात्रालम्भ स्तथा मौनं तदूर्द्ध मपि चेच्छया॥

शौनकः—

स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्रास्तु वायवः।
जिह्वया च ग्रसेदन्नं दशनेन न संस्पृशेत्॥
तथैव पञ्चौं दद्यात्तु सचैतन्ये सुखात्मनि।
तर्ज्जनी मध्यमाङ्गुष्ठ लग्ना प्राणाहुति भवेत्॥
मध्यमानामिकाङ्गुष्ठै रपाने जुहुया (द्धविः) द्बुधः।
कनिष्ठानामिकाङ्गुष्ठै र्व्यानेतु जुहुया द्बुधः॥

---

* प्राणाय स्वाहा। अपानाय स्वाहा। समानाय स्वाहा। उदानाय स्वाहा। व्यानाय स्वाहा। एवंरूपः।

कनिष्ठा तर्ज्जन्यङ्गुष्ठे उदानाय हुनेद्धविः ।
सर्वाङ्गुलिभिरादाय समानस्याहुति र्भवेत् ॥
तथैव षष्ठीं जुहुयात् सचैतन्ये सुखात्मनि ।

इति ।

केचित्प्राणे स्वाहेति सप्तमीमाहुः । श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमीति तैत्तिरीयारण्यके तथोक्तत्वादिति । इदं च प्राणाग्निहोत्रमिति ज्ञेयम् । तदुक्तं शतपथ ब्राह्मणे ।

ते पुरुषमाविशत स्तस्य मुखमेवाहवनीयं कुर्व्वाते जिह्वां समिध मन्न मेव शुक्रामाहुतिं ते पुरुषं तर्पयतः स य एवं विद्वा नश्नाति अग्निहोत्र मेवास्य हुतं भवतीति ।

श्रुत्यन्तरेऽपि—

स य इद मविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत् स्यात् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवतीति ।

गोभिल सूत्रे—

पञ्चग्रासान् ग्रसीयात् प्राणाय स्वाहेति गार्हपत्य मेव तेन जुहोति । अपानाय स्वाहेत्यन्वाहार्य्य पचन मेव तेन जुहोति । व्यानाय स्वाहेत्याहवनीय मेव तेन जुहोति । उदानाय स्वाहेति सभ्य मेव तेन जुहोति । समानाय स्वाहेत्यावसथ्य मेव तेन जुहोतीति ।

सामोपनिषद्यपि—

तद् यद् भक्तं प्रथम मागच्छेदित्यादि ।

नापोच्छिष्ट दोषः प्रत्याहुति ।

तदाह मनुः—

मधुपर्केच सोमेच अप्सु प्राणाहुतीषु च ।
भास्य होमेषु सर्वेषु नोच्छिष्टं मनुरब्रवीत् ॥

तथा स्मृति सङ्ग्रहे—

एवं पञ्चाहुतीर्हुत्वा ब्रह्मग्रन्थिं विसृज्यच ।
प्रक्षाल्य वामहस्तं तु पश्चाद् भोजन माचरेत् ॥
तर्जन्यां तु स्थिते रौप्ये ब्रह्मग्रन्थौ च मूर्द्धनि ।
कनिष्ठिकायां स्थिते खड्गे नैव भोजन माचरेत् ॥
अन्यथा भोजनं कूर्व्वन् प्राणायाम शतं चरेत् ।
यद् यद् भुङ्क्ते तदन्नं तु किञ्चि द्वै स्थापयेत् पृथक् ॥
यद् यद् यस्येप्सितं चान्नं गृहीत्वा भोजनं चरेत् ।
अनिधाय पृथक् चान्नं गायत्र्यात्वभिमन्त्रितम् ।
पुनरन्नं न गृह्णीयाद् यदि भुञ्जीत दोष भाक् ॥
पंक्ति भेदेन यो भुङ्क्ते परकीये स्वकेऽपि वा ।
तदन्नं मांसमित्याहुः क्षयरोगोच जायते ॥

सर्व्वाभि रङ्गुलीभिः सम मश्नीया दिति वशिष्ठोक्तेः समुदिताङ्गुलीभि र्भुञ्जीत ।

तथा—

जलपात्रं तु निक्षिप्य मणिबन्धे च दक्षिणे ।
विप्रो भोजनकाले तु पिबेद्वामेन पाणिना ॥

अन्यत्र तु—

धारया नोदकं पेयं पीत्वा दोष मवाप्नुयात्।
जलपात्रेण तत् पेय मिति शातातपोऽब्रवीत्॥
एक पंक्त्यु पविष्टानां विप्राणां सह भोजने।
यद्येकोऽपि त्यजेत् पात्रं नाश्नीयुरितरेऽप्यनु॥
भुञ्जानेषु तु विप्रेषु योऽग्रे पात्रं विमुञ्चति।
स मूढ़ो नरकं याति ब्रह्महा च निगद्यते॥

मर्य्यादाकरणे दोषो न इत्युक्त मेव प्राक्।

एक पंक्त्युपविष्टाना मन्योन्यं स्पृशते यदि।
तदन्न मत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत्॥
भवेदुच्छिष्ट संसर्गो भोक्तु र्वा भाजनस्य वा।
अन्नं तदेव भोक्तव्यं न त्याज्यं भाजने स्थितम्॥
अन्यदन्नं न भोक्तव्यं यदि भुञ्जीत किल्बिषी।
स्नात्वा ततो जपेद्देवीं* शतमष्टोत्तरं द्विजः॥

वृद्ध शातातपस्तु—

यदा भोजनकाले तु अशुचि र्भवति द्विजः।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा शुद्धि मवाप्नुयात्॥
अशित्वा सर्व मेवापि त्रिरात्रेण विशुध्यति।
अज्ञानाद् भोजनं कुर्व्वन् गायत्र्यष्ट शतं जपेत्॥

इत्यादि। मदनपारिजाते मार्कण्डेयः।

---

* देवीं गायत्रीमित्यर्थः।

यस्तु पाणितले भुङ्क्ते यः सशब्दं समश्नुते* ।
अङ्गुलिं चोद्धरेद् यस्तु गोमांसाशनवत् स्मृतम् ॥

विष्णुपुराणे—

अश्नीयात्तन्मनाभूत्वा पूर्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकान् ततः ॥
प्राग् द्रवद्रव्य मश्नीयान्मध्ये तु कठिनाशनः ।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥
नोच्छिष्टोच्छृत मादद्याद् तथा गव्यं विशेषतः ।
जठरं पूरयेदर्द्ध मन्नै र्भागं (जलस्य च) जलै स्तथा ।
वायोः सञ्चारणार्थाय चतुर्थ मवशेषयेत् ॥

आपस्तम्बः—

अष्टौ ग्रासा मुने र्भक्षं षोड़शारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥

पुलस्त्यः—

भोजनं तु न निःशेषं कुर्य्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दधिसक्ताज्य पलल क्षीर मध्वपाम् ॥
पललं मांसम् ।
अनिन्द्यं भक्षयेन्नित्यं वाग्यतोऽन्न मकुत्सयन् ।

इत्यादि स्मृते रनिन्द्यान्नं भोक्तव्यम् । तच्च न निन्द्यात् । अन्नं न निन्द्यात् तद्व्रत मिति तैत्तिरीय श्रुतेः ।

---

* समश्नुते इत्यत्र स्वादिगणीयस्य अशधातो र्व्याप्त्यर्थकत्व यद्यपि नियत । तथाप्यत्र प्रकरणादुपसर्गयोगाद्वा भोजन र्थत्वं बोद्धव्यम् ।

अथ वर्ज्यमाह याज्ञवल्क्यः—

अनर्चितं वृथा मांसं केश कीट समन्वितम् ।
शुक्तं पर्युषितोच्छिष्टं स्पृष्टं श्वपच कामतः ॥
उदक्यास्पृष्टसंघुष्टं पर्य्यायान्नं च वर्ज्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टं च कामतः ॥

अनर्चित मुक्तमायअवज्ञादत्तं यदन्नं तत् ।

वृथामांसं—

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विज काम्यया ।
देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोष भाक् ॥

इत्युक्त प्रकारेण असम्पादितं मांसं ।

केश कीट समन्वित मन्नं । शुक्तं यत् स्वय मनम्लं सत्काल-परिवासादिना अम्लीभवति तदित्यर्थः । पर्य्युषितं रात्र्यन्तरितं ।

उच्छिष्टं भुक्तोच्छिष्टं । उदक्या रजस्वला तया स्पृष्टम् । संघुष्टं को भुङ्क्ते इत्यादि यदाघुष्य दीयते । पर्य्यायान्नं अन्यसम्बन्धि अन्य-व्यपदेशेन यद्दीयते इत्यर्थः । अन्यत् स्पष्टम् ।

पर्य्युषिते प्रतिप्रसव माह स एव ।

अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूम यव गोरसविक्रियाः ॥

गोधूम विकारो मण्डकः । यवविकारः सक्तुः ।

शङ्खः—

अपूपाः सक्तवो धाना तक्रं दधि घृतं मधु ।
एतत् पण्येषु भोक्तव्यं भाण्डलेपो नचेद् भवेत् ॥

तथा—

आभीर भाण्डसंस्थानि पयोदधिघृतानि च।
तावत् पूतं हि तद् भाण्डं यावत्तत्र तिष्ठति॥
कलिङ्गंच पटोलंच वृन्ताकं सन्धितानि च।
उपोदकी रक्तशाक मेतान् वै वर्ज्जयेद्विजः॥

नारदीयेऽपि—

वृन्ताकं च कलिङ्गंच दग्ध मन्नं मसूरिका।
उदरे यस्य तिष्ठन्ति तस्य दूरतरो हरिः॥
शाक मूलफलेक्षूणि दन्तच्छेदै नं भक्षयेत्।
लवणं व्यञ्जनञ्चैव घृतं तैलं तथैव च॥
लेह्यं पेयञ्च विविधं हस्तदत्तं न भक्षयेत्।

अतो लवणादि दर्व्व्या देयम्।

अपक्वं स्नेह पक्वं च नतु दर्व्व्या कदाचन।

इत्युक्ते रपक्व स्नेह पक्वे हस्तेनैव देये। केचित्तु वृन्ताकनिषेधः श्वेत वृन्ताक पर इत्याहुः।

वर्ज्जयेच्छ्वेतवृन्ताक मलावुं वर्त्तुलं तथा।
छत्राकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत्॥

इति विशेषोक्तेः। तत्तु निवन्धे ष्वनुपलम्भा दुपेक्ष्यम्। राग-मूलत्वात्। उपलम्भे वा श्वेतत्व विशेषणं दोषाधिक्याय। नत्वितर प्रतिप्रसवाय। प्रायश्चित्ताधिक्य कथनादिति ज्ञेयम्।

तथा—

रात्रौ दधि न भोक्तव्यं दिवा च नवनीतकम्।

पय एकशफं ज्ञेयं तथा क्रामेलकाविकम् * ।

इति स्कान्दे । तथा तिथिविशेष वर्ज्यान्याह ।

बृहस्पतिः—

कुष्माण्डं तरुणीं चैव मूलकं बृहतीं तथा ।
श्रीफलं च कलिङ्गं च धात्रीं प्रतिपदादिषु ॥
वर्जयेत् सप्तमो याव दन्यथा कृच्छ्र माचरेत् ।
सप्तम्यां रविवारे च दिवारात्री तथैवच ॥
धात्रीफलं नरोऽश्नीयादलक्ष्मीको भवे(न्नरः)द्ध्रुवम् ।
विप्राणां भोजने काले यदि दीपोविनश्यति ॥
पाणिभ्यां पात्र मालभ्य गायत्रीं मनसा स्मरेत् ।
पश्चाच्च दीपकं दृष्ट्वा तच्छेषं भुञ्जते द्विजाः ॥
अन्यदन्नं न भोक्तव्यं भुक्त्वा कृच्छ्रं समाचरेत् ।
मक्षिका सन्तता धारा वेद सम्बन्धि विन्दवः † ।
सुरते स्त्रीमुखं चैव पवित्रं मनुरब्रवीत् ॥

अन्यच्च—

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।
देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक् ॥

इति यदुक्तं तस्यायमर्थः । अन्नाभावेन यदि प्राणनाश स्यादा मांस भक्षणे न दोषः । सर्व (तः) या आत्मानं गोपायीतेति श्रुतेः । तथा श्राद्धे निमन्त्रितो मांसमश्नीयात् ।

---

* क्रामेलक उष्ट्रः अविमेष सम्बन्धि ।

† वेदाध्यायिनां मुखनिःसृता स्फुत्कारकणाः ।

यथा विधि नियुक्तस्तु यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति सम्भवा नेकविंशतिम् * ॥

इति मनूक्तेः । तथा प्रोक्षणाख्य श्रौतसंस्कार संस्कृतमांस-भक्षणे न दोषः । विहितत्वात् । अभक्षणे यागासिद्धेश्च ।

तथा अतिथ्यर्चनार्थं सम्पादितं यन्मांसं द्विजप्रार्थनया तद्-भक्षणे न दोषः । अत्र यद्यपि दोषाभाव उक्तस्तथापि यागाद-न्यत्र मांसं वर्ज्यम् । तथाहि—

अक्षता (गोपशुश्चैव) श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्ज्जयेत् ॥

इति वृहन्नारदीयोक्तेः । अक्षता कृतविवाहा अनुपभुक्ता युगा-न्तरवत्र विवाह्येत्यर्थः ।

शौचं च पात्र शुद्धिश्च श्रद्धाच परमा यदि ।
अनन्त तृप्तिकृच्छ्राद्धे एतत् खलु निरामिषम् ॥

इति वृहत् पाराशरोक्तेश्च ।

निमग्ना कूपे यथा किञ्चिद्बाल(मा)श्रामुं तदिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥

इति निगमोक्तेः ।

न दद्यादामिषं श्राद्धे न चाद्याद्धर्म्मतत्त्ववित् ।
मुन्यन्नैः स्यात् परा प्रीति (यथा) स्तथा न पशुहिंसया ॥

---

* सम्भवान् जन्मानि । तथाच तेन एकविंशति जन्मसु पशुयोनी उत्पत्तव्य मित्यर्थः ।

इति भागवतोक्तेः ।

सर्वान् कामानवाप्नोति हयमेधफलं तथा ।
गृहेऽपि निवसन् विप्रोमुनि र्मांसविवर्ज्जनात् ॥

इति याज्ञवल्क्योक्तेश्च ।

प्रोक्षितमभ्युक्षितं मांसं तथा ब्राह्मण काम्यया ।
अल्पदोष मिदं ज्ञेयं विपरीते तु लिप्यते ॥

इति दानधर्म्मे अल्पदोष श्रुतेश्च ।

मनु—

पितॄणां मासिकं श्राद्ध मन्वाहार्य्यं विदुर्बुधाः ।
तदामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः ॥

तथा—

कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वथा ॥

इति मनु याज्ञवल्क्यादि स्मृतौ श्राद्धे मांसविधानाद्विधिनिषेधानां देशभेदेन व्यवस्था कुतो नाङ्गीक्रियते इति चेन्न । मांसनिषेधकवाक्ये कलावितिवद्देश भेद ग्रहणा भावात् । तत् कल्पनायां तु यावति देशे मांसवर्ज्जनं दृश्यते । तद्देशवाचक पदाभावा दनेक पद कल्पनेनैकवाक्य भेदा पत्तिः प्रसज्येत ।

देशाचाराः परिग्राह्या स्तत्तद्देशीयजैर्नरैः ।
अन्यथा पतितो ज्ञेयः सर्व्वधर्म्म वहिष्कृतः ॥

इति वृहन्नारदीय वचनवलान्नापि देशाचारतोव्यवस्था । इदं वचनं तत्तद्देश सदाचाराणामेव व्यवस्थापकं । न दुराचारस्य ।

यस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः ।
श्रुति स्मृत्यविरुद्धश्च त मनुष्ठातु मर्हति ॥

इति देवलोक्तेः । कलौ पञ्च विवर्ज्जयेदिति निरवकाशप्रमाण विरोधाच्च । इत्यलं समन्तानुप्रसक्तेन ।

प्रकृत मुच्यते । याज्ञवल्क्यः—

परपाकरुचिर्नस्या दनिन्द्यामन्त्रणादृते ।

षट्त्रिंशन्मतेऽपि—

दुराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्त्वा द्विजः कुर्य्यादिन मेक मभोजनम् ।

लिखितः—

परपाकनिवृत्तस्य परपाकरतस्य च ।
अपचस्य च भुक्त्वान्नं द्विज श्चान्द्रायणं चरेत् ॥

चान्द्रायण मभ्यासविषयम् । अनभ्यासेतु त्रिरात्रमभोजन मेव । तल्लक्षण मपि स एवाह—

गृहीत्वाग्निं समारोप्य पञ्चयज्ञान निर्वपेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥
पञ्चयज्ञान् स्वयं कृत्वा परान्न मुपजीवति ।
सततं प्रातरुत्थाय परपाक रतस्तु सः ॥
गृहस्थधर्म्म रतो यो ददाति परिवर्ज्जितः * ।
ऋषिभि र्धर्म्मतत्त्वज्ञैरपचः स प्रकीर्त्तितः ॥

---

* ददातिदानं तेन परिवर्ज्जितः शून्यः अदाता इत्यर्थः ।

इत्यादित्य पुराणे एकादशाध्याये ।

तस्मादहरहर्देय मन्न मेव विचक्षणैः ।
अपरोक्षैव सर्व्वेभ्य इति स्वायम्भु* शासनात् ॥

आम मन्नं गृहस्थाय पक्वं नैव कदाचन ।
दातव्यं हि निषिद्धं तद्दत्ते श्राद्धं शिवोऽब्रवीत् ॥

इति शातातपः ।

वनस्पति गते सोमे परान्नं ये तु भुञ्जते ।
तेषां मास कृतं पुण्यं दातार मधि गच्छति ॥

उपासते ये गृहस्थाः परपाक मबुद्धयः ।
तेन ते प्रेत्य पशुतां व्रजन्त्यन्ना (द्य) द्यदायिनाम् ॥

इति मनु वचनं लोभेन ग्रामाद् ग्रामान्तरं गत्वा परान्नं भुञ्जतो दोष विशेषावेदक मित्याकलनीयम् ।

अभोज्यान्ना न्याह याज्ञवल्क्यः ।

कदर्य्य बद्धचौराणां क्लीवरङ्गावतारिणाम् ।
वैनाभिशस्त वार्द्धुष्य गणिका गण(जीविनाम्) दीक्षिणाम् ॥

चिकित्सकातुर क्रुद्ध पुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्र पतितव्रात्य दाम्भिकोच्छिष्ट भोजिनाम् ॥
अवीरास्त्री स्वर्णकार स्त्रीजित ग्रामयाजिनाम् ।

---

* स्वायम्भु इति छन्दोऽनुरोधाद्दीर्घं ह्रस्वौ । अपिमाषं मषं कुर्य्याच्छन्दोभङ्गे त्यजेद् गिरम् । इति वचनात् ।

शस्त्रविक्रय कर्म्मार तन्तुवाय श्ववृत्तिनाम् ॥
नृशंस राज रजक कृतघ्न वधजीविनाम्।
चेलधाव सुराजीव सहोपपति वेश्मनाम् ॥
पिशुनानृतिनोश्चैव तथा चक्रिक वन्दिनाम्।
एषा मन्नं न भोक्तव्यं सोमविक्रयिण स्तथा ॥
इति।

अस्यार्थः—

कदर्य्योऽतिलुब्धः। बद्धो निगड़ादिना। चौरो ब्राह्मण हेमव्यतिरिक्त द्रव्यापहारो। क्लीवो नपुंसकः। रङ्गावतारी नटादिः। वैणो वेणुच्छेदनजीवो। अभिशस्तः पतनीय कर्म्मणाऽभियुक्तः। वार्द्धुषो निषिद्ध वृद्ध्युपजीवी। गणिका पण्यस्त्री। गणदीक्षो वहुयाजकः। चिकित्सको भिषग्वृत्त्युपजीवी। आतुरो महारोगाभिभूतः। पुंश्चली व्यभिचारिणी।

मत्तो विद्यादिना गर्व्वितः। विद्विट् शत्रुः। क्रूरोऽभ्यन्तराधिककोपः। उग्रो वागादिना उद्वेजकः। पतितो ब्रह्महादिः। व्रात्यः पतित सावित्रीकः। दाम्भिको वञ्चकः। अवीरा स्त्री पतिपुत्ररहिता स्वतन्त्रेत्यन्ये। ग्रामयाजी ग्रामशान्त्यादि कर्त्ता। कर्म्मारो लोहकारः। तन्तुवायः सूची शिल्पोपजीवी। श्ववृत्ती श्वभिर्वृत्तं जीवनमस्यास्तीति। नीचसेवको वा। नृशंसो निर्द्दयः। रजको वस्त्ररङ्गकृत्। चैलधावः वस्त्रनिर्णेजकः। सहोपपति वेश्मा सह सहितमुपपतिना जारेण वेश्म गृहं यस्याः सा तथा। पिशुनः परदोष वक्ता। चक्रिक स्तैलिकः। वन्दी जनस्तावकः।

सोमविक्रयी यस्ते सोमलताविक्रेता । कदर्य्यत्वादिदोष दुष्टाना मेषां द्विजाना मन्नं न भोक्तव्य मिति समूहार्थः ।

तथा—

अग्निहीन द्विजातेश्च नान्न मद्यादनापदि ।

इति ।

अग्निहीनः सत्यप्यधिकारे श्रौतस्मार्त्ताग्नि रहितः ।

शूद्रस्यान्नं न भोक्तव्य मिति वचनात् शूद्रस्य अभोज्यान्नत्वे प्राप्ते प्रतिप्रसव माह ।

शूद्रेषु दासगोपाल कुल मित्रार्द्धसीरिणः ।

भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

दासा गर्भदासादयः । अर्द्धसीरी सीरोपलक्षित कृषिफलार्द्ध ग्राही । शेषं प्रसिद्धम् ।

सङ्ग्रहे—

श्राद्धान्नं वारमालञ्च कोद्रवान्नं मसूरिका ।

कांस्यपात्रं च तैलं च मन्त्र वीर्य्यहराणि षट् ॥

गणान्नं गणिकान्नं च तथान्नं ग्रामयाजकात् ।

सूतकान्नं तथा भुक्त्वा द्विज चान्द्रायणं चरेत् ॥

शूद्रं स्पृष्टा च दृष्टाच तदन्नं तन्निमन्त्रणम् ।

प्रेषितान्नं च पक्वान्नं शूद्रान्नं षड्विधं स्मृतम् ॥

भुञ्जानेषु तु विप्रेषु प्रमादात् स्रवते गुदम् ।

उच्छिष्ट मशुचित्वं च तस्य शौचं कथं भवेत् ॥

पूर्वं कृत्वा तु तच्छौचं पश्चात् स्नानं समाचरेत् ।

अहोरात्रोषित: स्नात्वा पञ्चगव्येन शुध्यति ॥

वृहत् पाराशरे।

ब्राह्मणान्नं ददच्छूद्र: शूद्रान्नं ब्राह्मणोददत्।
द्वावप्येतावभोज्यान्नौ चरेतां तौ शशिव्रतम्* ॥
विप्रेणामन्त्रितोविप्र: शूद्रान्नन्तु योऽश्नुते।
आमन्त्रयितृभोक्तारौ शुध्येतां मैन्दवेन तु† ॥
वार्त्ताकंगृञ्जनं जग्ध्वाऽहोरात्रोपोषणाच्छुचि:।
गणिका गणयोरन्नं यदन्नं बहुयाजके ॥
सीमन्तोन्नयने भुक्त्वा द्विजश्चान्द्रायणं चरेत्।
भुङ्क्ते शय्याऽऽसनस्थोय: पिबेद्वापि द्विजोत्तम: ॥
अभक्ष्येण हि तत्तुल्यं चरेच्चान्द्रायणं व्रतम्।
आसनारूढ़ पाद: सन् वस्त्रस्यार्द्ध पटे कृतम् ॥
मुखेन धमितं भुक्त्वा द्विजश्चान्द्रायणं चरेत्।
उद्धृत्य वामहस्तेन यत् किञ्चित् पिबते नर: ॥
सुरापानेन तत्तुल्यं पीत्वा चान्द्रायणं चरेत्।
चान्द्रायणं नवश्राद्धे पराको मासिके तथा ॥
आब्दिके पाद कृच्छ्र:स्या देकाह मपराब्दिके।
स्नान मन्येषु कुर्व्वीत प्राणायामं जपं तथा ॥

---

* शशिव्रतं चान्द्रायणम्।

† ऐन्दवेन चान्द्रायणेन।

उच्छिष्टोच्छिष्ट संस्पृष्टो ब्राह्मणस्तु कदाचन ।
कुर्वीत तत्क्षणे स्नान माचामेन विशुध्यति ॥

इदं तु क्षत्रियादिस्पृष्ट ब्राह्मणविषयम् ।

ब्राह्मण स्पर्शे तु—

उच्छिष्टोब्राह्मणः स्पृष्ट उच्छिष्टेनाग्रजन्मना ।
आचम्यैवतु शुद्धः स्याद्विष्णुनामानुकीर्त्तनात् ॥
भुञ्जानाचम्य कुर्य्याद्धि विण्मूत्रे केहनिष्कृतिः ।
नक्तोपवासौ ह्याद्ये तु द्वितीये द्विगुणं चरेत् ॥

आद्ये मूत्रे । तत्रैव—

यज्ञोपवीतेन विना भोजनं कुरुतेद्विजः ।
अथ मूत्रपुरीषे वा रेतः सेचनमेववा ॥
त्रिरात्रोपोषितोविप्रः पादकृच्छ्रेण भूमिपः ।
अहोरात्रोषितो वैश्यः शुद्धि रेषाप्रकीर्त्तिता ॥
विप्रः क्षुत्कृत्य निष्ठीव्य कृत्वावाऽनृतभाषणम् ।
वचनं पतितैः कृत्वा दक्षिणं श्रवणं स्पृशेत् ॥
आज्यपात्रे स्थितं तक्रं मधुमिश्रं तु(यत् कृतम्)यद् घृतम् ।
ताम्रपात्रे स्थितं गव्यं त्रिषु सर्पिः सुरासमम् ॥

पारिजाते भृगुः—

गव्यं ताम्रेण संयुक्तं कांस्ये चैवेक्षु गोर (सः) सौ ।
सकांस्यं नारिकेलाम्बु मद्य तुल्यं घृतं विना ॥
आर्द्रकं सगुडं मद्यं दधि सम्मिश्रितो गुडः ।
नारिकेलाम्बु सम्मिश्र मेवं वदरं तथा ॥

मनु:—

ताम्रे गव्यं भुजौ * मद्य—समं च परिवेषणे ।

दोहे पाके तथा होमे ताम्रे गव्यं न दुष्यति ॥

गर्ग:—

मूला ऽपूपफलेक्ष्वादि दन्तच्छेदं न भक्षयेत् ।

ग्रास शेषं न चाश्नीयात् पीतशेषं पिबेन्नच ॥

अन्यथा कुरुते यस्तु जपेद्देवो व्रतं † ततः ।

यत्यन्नं यति पात्रस्थं यतिना प्रेरितं च यत् ।

दम्पत्योर्भुक्तशेषं च भुक्त्वा चान्द्रायणं चरेत् ॥

अर्कद्विपर्वरात्रौ ‡ च चतुर्दश्यष्टमी दिवा ।

एकादश्या महोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

अत्र सर्वत्र चान्द्रायण प्रायश्चित्तकथन मभ्यास विषयम् ।

अनभ्यासेतु अहोरात्र मभोजनम् ।

एषु सर्वेषु जातेषु अहोरात्र मभोजनम् ।

इतिविशेषोक्त: । ऋग्विधानेतु—

पर्वणो रर्कवारेच रात्रौ भुक्त्वाद्विजो यदि ।

त्वे सुमन्त्रं जपेद् भोक्तादशवारं विशु (ध्यति) द्वये ॥

---

* भुजि भोजनक्रिया तस्मिन् ।

† देवीव्रत मष्टोत्तर गायत्रीजपमित्यर्थ: ।

‡ अर्कस्य द्वे पर्वणी पूर्णिमा अमा च तयो रात्रिभोजने चान्द्रायण मनुष्ठे य मित्यर्थ: ।

§ त्वे सुपुत्र शवसोऽवृत्रन् कामकातय: । न त्वामिन्द्राति रिच्यते ।

—इति ८म. ९९सू. १४ऋक् ।

अष्टम्यां च चतुर्दश्यां यदि भुङ्क्ते दिवा द्विजः।

दशवारं जपेन्मन्त्र मभि स्व वृष्टि * मेवच॥

एकादश्यां यदा भुङ्क्ते स्वेच्छया व्याधि वर्ज्जितः।

त्वं सोमेति † (सोमासो) वेमूर्ध्ना जपेत्पापात् प्रमु(च्यते)क्तये॥

इदं प्रायश्चित्त मवैष्णव विषयम्। वैष्णवस्य तु एकादशी-भोजने प्रायश्चित्तविशेष श्रवणादितिदिक्।

यद्यप्यत्र—

कुष्माण्डं तरुणीं चैव मूलकं वृहतीं तथा।

इति वृहस्पतिना तिथिविशेषे मूलक भक्षण निषेध उक्त स्तथापि ब्राह्मणस्य सर्वदा मूलक भक्षणनिषेध उक्तो दक्षस्मृतौ चन्तिमाध्याये—

पितृणां देवतानां च मूलकं नैवदापयेत्।

ददन्नरक माप्नोति भोक्ताच ब्राह्मण स्तथा॥

ब्राह्मणोमूलकं भक्षंश्चरेच्चान्द्रायण व्रतम्।

अन्यथा याति नरकं पातित्यं चैवविन्दति॥

वरं भुक्त ममेध्यं च पिवेद्वा गर्हितं क्वचित्।

---

* अभि स्ववृष्टि मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः।
इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीँरिव त्रितः॥
—इति १म. ५२सू. ५ऋक्।

† त्वꣳसोमप्रचिकितोमनीषात्वꣳरजिष्ठमनुनेषिपन्थाम्।
तव प्रणीती पितरो न इन्दो देवेषु रत्न मभजन्तधीराः॥
—इति १९अ. ५२म. यजुः।

वर्ज्जनीयं सदाविप्रैर्मूलकं मदिरासमम् ॥
पितृणां वल्लभा येच ग्रन्ये ते वरमूलकाः ।
स्वयं जाताः पवित्राश्च भवन्ति वनवासिनः ॥
लोहितं वा सितं वापि मूलकं मदिरासमम् ।
देवानां वल्लभा येस्तु रन्ये ते वनमूलकाः ॥
मूलकं तु नरो भुङ्क्ते दुष्टोद्गारं दिनेदिने ।
न तस्य नरकोत्तारो यावदाभूत संप्लवम् ॥
इति ।

उशनाः—
क्षुरकर्म्मणि वान्तेच स्नानमात्रेण शुध्यति ।
इति ।

चन्द्रिकायां जीवत् पितृकादे विंशेष उक्तः ।
कनीयान् सपितानैव मु (भु) क्त्वा श्राद्धिक भोजनम् ।
प्राणाग्नि होत्रादन्यत्र न स मौनं समाचरेत् ॥
भोजनं तु न निःशेषं कुर्य्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दध्नः क्षीराद्वा घृतात् मधुन्य एवच ॥
भुक्त्वा पोत्वातु यः कश्चिच्छून्यं पात्रं विमुञ्चति ।
क्षुधार्त्तः सपिपासार्त्तो भवेज्जन्मनि जन्मनि ॥
भुक्तोच्छिष्टात् समादाय सर्व्वस्मात् किञ्चिदेवतु ।
उच्छिष्ट भागधेयेभ्यः सोदकं निर्वपेद् भुवि ॥

तत्मन्त्रो यथा—
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।

दुर्गतीनां मयादत्त मक्षय्य मुपतिष्ठतु ॥
रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम् ।
अर्थिना मुदकं दत्त मक्षय्य मुपतिष्ठतु ॥

व्यासः—

अर्द्धं पीत्वातु गण्डूष मर्द्धं त्याज्यं महीतले ।
रसातलगता नागा स्तेन प्रीणन्ति नित्यशः ॥
य(दु) च्छिष्टदनाचान्तो भुक्तवानासनाद्द्विजः ।
सद्यः स्नानं प्रकुर्व्वीत नान्यथा प्रयतो भवेत् ॥
उच्छिष्टोच्छिष्ट संस्पृष्टः शुना शूद्रेण वाद्विजः ।
उपोष्य रजनी मेकां पञ्चगव्येन शुध्यति ॥
गण्डूषकरणात् पूर्वं हस्तं प्रक्षालये द्विजः ।
ह (न्तं) तं देवं च पितरं च ह्यात्माचैवोपपातकैः ॥
यो वै गण्डूषसमये तर्ज्जन्या वक्त्र शोधनम् ।
कुर्व्वीत यदि मूढात्मा रौरवं नरकं व्रजेत् ॥
आचम्यच ततः कुर्य्याद्दन्तकाष्ठस्य भक्षणम् ।
भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ॥
अष्टं पञ्च तथा सप्त लोणि चोणि तथैवच ।
आचामेच्चुलुकान् प्राज्ञो मुखशुद्धिं यदीच्छति ॥ इति ।

गौतमः—

आचान्तोऽप्यशुचि स्तावद् यावत् पात्रं नचोद्धरेत् ।
उद्धृते ऽप्यशुचि स्तावद् यावद् भूर्न प्रमार्जिता ॥
इति ।

ब्रह्मपुराणे—

भोजनान्ते द्विराचम्य तज्जले नैव मार्ज्जनम्।

कार्य्यं चक्षुर्विवृद्ध्यर्थं भार्गवादींश्च संस्मरेत्॥

तदुक्तं भारते आरण्यक पर्व्वणि।

शर्य्यातिं च सुकन्यां च भार्गवं चाश्विनौ (स्मरः) नरः।

भोजनान्ते स्मरेद् यस्तु तस्य चक्षु र्न नश्यति॥

आहार परिणामार्थं मन्त्रानपि स्मरेत्।

अगस्त्यं कुम्भकर्णं च शनिं च वड़वानलम्।

अन्नस्य परिणामार्थं स्मरे (द्भामं) द्भीमं च पञ्चमम्।

इति। मार्कण्डेयः—

भूयोऽप्याचम्य कर्त्तव्यं ताम्बूलस्य च भक्षणम् (चर्व्वणम्)।

श्रवणं चेतिहासस्य तथा रामायणस्य च॥

इति।

ताम्बूल भक्षणे विशेष माह गर्गः—

प्रातःकाले फलाधिक्यं चूर्णाधिक्यं तु मध्यतः।

निशि पर्णाधिकं खादेत्तस्य लक्ष्मीर्विवर्द्धते॥

फलं पूगीफलम्—

पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः।

चूर्णपर्णं हरत्यायुः शिरा बुद्धिं विनाशयेत्।

तस्मादेतान् परित्यज्य ताम्बूलं भक्षयेत् सदा॥

अनिधाय मुखे पर्णं पूगं खादति योनरः।

सप्तजन्मदरि (द्री) द्रःस्या दन्ते नैव स्मरेद्धरिम्॥

पञ्च सप्ताष्टप (पा) त्राणि दश द्वादश वापि वा ।
दद्यात् स्वयं च गृह्णीयाद् भक्षणे बीटकस्य तु ॥
तर्ज्जन्या चूर्ण मादाय ताम्बूलं न तु भक्षयेत् ।
यदि वा भक्षयेन्मूढ़ो नरकं प्रतिपद्यते ॥
मध्यमाङ्गुलिनादाय चूर्णं पर्णेविलेपयेत् ।
अङ्गुष्ठाग्रेण वा तद्वदन्यथा दोष माप्नुयात् ॥
मृताशौचे तथा श्राद्धे मातापित्रोर्मृतेऽहनि ।
उपवासे च ताम्बूलं दिवारात्रौ विवर्ज्जयेत् ॥
यतिश्च ब्रह्मचारी च विधवा च रजस्वला ।
ताम्बूल चर्व्वणं तेषां तुल्यं गोमांसभक्षणैः ॥

इति । आयुर्वेदे—

भुक्त्वा वह्नि मुपस्पृश्य शनैः सप्तपदीं व्रजेत् ।
शयीत वामभागेन यतो रोगैर्न पीड्यते ॥
भुक्तोपविशतः स्थौल्यं बलमुत्तानशायिनः ।
आरोग्यं वामकुक्षौ तु मृत्यु र्धावति धावतः ॥

इत्याह्निके भोजन विधौ पञ्चमभाग कृत्यम् ।

अथ भोजनानन्तर कृत्य माह दक्षः ।

इतिहास पुराणाद्यैः षष्ठ सप्तमकौ नयेत् ।
अष्टमे लोकयात्रातु वहिः सन्ध्या ततः पुनः ॥

याज्ञवल्क्योऽपि—

अहः शेषं समासीत शिष्टैरिष्टैश्च वन्धुभिः ।

इति ।

इत्यनन्ताह्निक विधौ षष्ठ सप्तम भागकृत्यम् ।

अथ सायंसन्ध्या निरूप्यते ।

भविष्योत्तरे—

शौचं कृत्वा यथान्याय मर्द्धास्तमित भास्करे ।
बहिः सन्ध्यामुपासीत आसीन स्त्वथवा गृहे ॥

शातातपः—

अनृतं मद्यगन्धं च दिवा मैथुन मेवच ।
पुनाति वृषलस्यान्नं बहिः सन्ध्यामुपासिता ॥

यमः—

रवेरस्तमयात् पूर्व्वं घटिकैका यदा भवेत् ।
सायं सन्ध्यामुपास्याथ कुर्य्याद्धोमञ्च पूर्ववत् ॥

अथ मेव दीपदानसमयः —

रवे रस्तं समारभ्य यावत्तस्यो (सूर्य्यो) दयो भवेत् ।
यस्य तिष्ठेद् गृहे दीप स्तस्य नास्ति दरिद्रता ॥
आयुर्दः प्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः ।
प्रत्यङ्मुखो दुःखदोऽसौ हानिदोदक्षिणामुखः ॥

इति सङ्ग्रहे । सन्ध्याध्यानादिकं पूर्वमेवोक्तम् ।

अथ सायंसन्ध्यातर्पण मुच्यते ।

सरस्वत्या वशिष्ठ ऋषि विष्णुर्देवता जगतीच्छन्दः सायंसन्ध्या तर्पणे विनियोगः ।

ॐ स्वः पुरुषं तर्पयामि ।

सामवेदं तर्पयामि ।

मण्डलं तर्पयामि ।

विष्णुरूपिणं तर्पयामि ।

परमात्मानं तर्पयामि ।

सरस्वतीं तर्पयामि ।

वेदमातरं तर्पयामि ।

साकृतिं तर्पयामि ।

इरां तर्पयामि ।

वैष्णवीं तर्पयामि ।

उषसं तर्पयामि ।

निर्मृजीं तर्पयामि ।

सर्वार्थसिद्धिकरीं तर्पयामि ।

सर्वमन्त्राधिपतिं तर्पयामि ।

ॐ भूर्भुवः स्वः पुरुषं तर्पयामि ।

एवं तर्पणं कृत्वा सूर्य्योपस्थानादि कार्य्यम् ।

अत्र विशेष माह व्यासः —

जपेद्वारुण मन्त्रांस्तु इमं मे वरुणादिकान्* ।

---

* इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युरा चके ॥ १ ॥

तत् त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।

अहेडमानो वरुणेह बोध्युरुशं स मा न आयुः प्रमोषीः ॥ २ ॥

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः ।

यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥ ३ ॥

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।

अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि ॥ ४ ॥ २१ अ. । यजु. ।

चतुर्मन्त्रान् विशेषत: सन्ध्याफल मवाप्नुयात् ॥

गौतम:—

दर्भहीना तु यासन्ध्या सन्ध्याहीन स्तु योजप: ।

जलहीनं तु यद्दानं तत् सर्वं निष्फलं भवेत् ॥

जप मध्ये गुरु र्याति यतिर्वा ब्राह्मणोत्तम: ।

तस्य पूजां समाप्याथ जपशेषं समापयेत् ॥

यथाकाले सन्ध्याया प्रकरणे पारिजातेविशेष माह

गौतम:—

सन्ध्याकाले त्वतिक्रान्ते स्नात्वाचम्य यथाविधि ॥

जपेदष्टशतं देवीं* तत: सन्ध्यां समाचरेत् ।

यमस्तु—

प्राणायाम त्रयं प्रात: सङ्गवे द्विगुणं चरेत् ।

मध्याह्ने त्रिगुणं प्रोक्त मपराह्णे चतुर्गुणम् ।

सायाह्ने पञ्चगुणकं सन्ध्यातिक्रमणे भवेत् ॥

वशिष्ठस्तु—

कालातिक्रमणे चैव त्रिसन्ध्य मपि सर्व्वदा ।

चतुर्थार्घ्यं प्रकुर्व्वीत भानोर्व्याहृति सम्पुटम् ॥

सर्वथाऽतिक्रमे जमदग्नि:—

एकाहं चाप्यतिक्रान्त्य सन्ध्यावन्दनकर्म्म च ।

अहोरात्रोषितो भूत्वा गायत्र्या (चा) प्ययुतं जपेत् ॥

---

* देवीं गायत्री मित्यर्थ: ।

द्विरात्रे द्विगुणं प्रोक्तं त्रिरात्रे त्रिगुणं स्मृतम् ।
त्रिरात्रात् परत श्चेत् स्याच्छूद्र एव नसंशयः ॥
यः सन्ध्यां कालतः प्राप्तां मालस्यादति वर्त्तते ।
सूर्य्य हत्यामवाप्नोति मन्देहेषु (स) च जायते ॥

मन्देहा राक्षसाः * —

राष्ट्रक्षोभे नृपक्षोभे रोगार्त्तौ भय आगते ।
देवाग्निद्विज वेदानां कार्य्ये महति संस्थिते ॥
सन्ध्याहानौ न दोषोऽस्ति यत स्यात् पुण्य साधनम् ।

इत्यादि । तथा—

दिवोदितानि कर्म्माणि प्राप्नुवन्त्युत्तराणि च ।
दिवोदितानि कृत्वैव विदध्यादुत्तराणि तु ॥

---

* ते च सर्व्वदा नवोदितं सूर्य्यं खादितु मिच्छन्तः तस्य समन्ताद् भ्रमन्ति । यतन्ते च सर्व्वात्मना तस्य नाशाय । यदा पुन र्ब्राह्मणाः सूर्य्याय अर्घ्यं ददति तदैव ते तद्वारिणा वज्रत्वं गतेन दग्धाविनश्यन्ति । पुनर्दिवसान्तरे आयन्ति एवं प्रत्यह मुत्पद्यमानास्ते द्विजार्घ्यतोयेन नश्यन्ति ।

—इति पौराणिकीवार्त्ता ।

रामायणेऽपि—

तत्र शैलनिभाभीमा मन्देहानाम राक्षसाः ।
शैल शृङ्गेषु लम्बन्ते नाना रूपा भयावहाः ।
ते पतन्ति जले नित्यं सूर्य्यस्योदयनं प्रति ।
अभितप्तास्तु सूर्य्येण लम्बन्तेस्म पुनः पुनः ।
निहता ब्रह्म तेजोभि रहन्यहनि राक्षसाः ॥

इति ।

अन्योऽपि विशेषः प्रातःसन्ध्याप्रकरणे द्रष्टव्य इति दिक्।

कर्म्मविधाने तु—

यदा दीव्येति* मन्त्रेण सप्तवारं जपेद् यदि।
अकाले कुर्वतः कर्म्म काले काले† शतानि तु॥

भवन्तीति शेषः।

श्राद्धभोजिनां तु गर्गः—

दश कृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः।
ततः सन्ध्यामुपासीत शुध्यते तदनन्तरम्॥

ततः श्राद्धादिकृद् भवेदिति क्वचित् पाठः।

महाभारते तु—

जलाभावे महामार्गे बन्धने त्वशुचावपि।
उभयोः सन्ध्ययोः काले रजसाचार्घ्यं मुत्क्षिपेत्॥
ते तथैव महाराज दंशिता रणमूर्द्धनि‡।
सन्ध्यागतं सहस्रांशु मादित्य मुपतस्थिरे॥

इति।

## अथ सायंहोम विधानम्।

तस्य कालादिकं पूर्वमेवोक्तं।

---

* यदादीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव॥
—इति १०म. ३४सू. ५ ऋक्।

† काले काले इत्यत्र यथा काल मिति पाठः साधुः।

‡ दंशिता वर्मसन्नद्धाः। रणमूर्द्धनि युद्धक्षेत्रे।

उपस्थाने विशेष उच्यते—

जपेदाग्नेयमन्त्रां तु सायं होमादनन्तरम्।
स्वयं होमः प्रकर्त्तव्यः पत्न्या पुत्रादिकैरपि।
स्वयं होमस्य नियमो यजनीयेऽह्नि कीर्त्यते॥

इद मपि यजमानस्य सन्निधाने देशान्तरगतस्य नेतिज्ञेयम्।

सदा समस्य होमं तु कुर्य्यात् सायं विचक्षणः।
पृथक् कर्त्तुमशक्तिश्चेद्व्रताहस्य विवर्ज्जनात्॥

इत्यादि।

गालवः—

भस्माभिधारणं कार्य्यं त्र्यम्बकामित्यृचा* द्विजैः।
ललाटे हृदये वाह्वोर्यद्वा सर्व्वाङ्गलेपनम्॥

अत्रावसरे रात्रिभोजनं कार्य्यं। तद्विधिस्तु पूर्व्वमेवोक्तः।

श्राद्धादि दिने निषिद्धं द्वितीय भोजनम्।

श्राद्धाहे पर्व्वकाले च रविवारे तथैवच।
रात्रिभुक्ति र्न कर्त्तव्या सर्व्वदा द्विजसत्तमैः॥

इति स्मृतेः। इत्यनन्ताह्निके अष्टमभागकृत्यम्।

## अथ शयनविधानम्।

तत्र याज्ञवल्क्यः।

---

* "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥" (footnote as printed reads: "त्वा मिन्द्रि हवामहे सातौ वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः॥")

इति।

उपास्य पश्चिमां सन्ध्यां हुत्वाग्नीं स्तानुपास्यच ।
भृत्यैः परिवृतोभुक्त्वा नाति तृ(त्या)प्तोऽथ संविशेत् ॥

संविशेत् स्वपेत् । चकारेण वैश्वदेवादिकं समुच्चिनोति ।

अत्र च पाकान्तर मुक्तं विष्णुपुराणे ।

पुनः पाक मुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं वै सायं पत्न्या बलिं हरेत् ।

पत्न्याच—

स्त्रीभि र्भर्त्तृवचः कार्य्य मेषधर्म्मः परः स्त्रियाः ।

इति स्मृते राज्ञाकारिण्या अदुष्टया भवितव्यम् । यदि भर्त्तु-राज्ञां न सम्पादयति तदा अधिवेत्तव्या । तदुक्तं याज्ञवल्क्येन ।

सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥

अत्रावधि माह मनुः—

वन्ध्याऽष्टमेऽधिवेद्याब्दे नवमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्य स्त्वप्रियवादिनी ॥

इति ।

व्यासः—

शुचौ देशे विविक्ते तु गोमयेनोपलेपिते ।
प्रागुदक् प्रवणे चैव संविशेत्तु सदा बुधः ॥

तद्वत्—

जलं देवगृहं चैव शयनं च द्विजालयम् ।
निर्णिक्त पादः प्रविशेन्नानिर्णिक्तः कदाचन ॥

निर्णिक्तपादः प्रक्षालित चरणः ।

भविष्ये—

उपानहौ वेणुदण्ड मम्बुपात्रं तथैवच ।
ताम्बूलादीनि सर्वाणि समीपे स्थापयेद् गृही ॥
यानि कानि च पुष्पाणि यत् किञ्चिदनुलेपनम् ।
अलक्ष्मी परिहारार्थं नित्यं कुरु युधिष्ठिर ॥
माङ्गल्यं पूर्णकुम्भं तु शिरः स्थाने निधापयेत् ।
वैदिकै र्गारुड़ै र्मन्त्रै रक्षां कृत्वा स्वपेत्ततः ।

गारुड़ मन्त्रा हारीतेन प्रदर्शिताः ।

नर्म्मदायै नमः प्रात र्नर्म्मदायै नमोनिशि ।
नमोऽस्तु नर्म्मदे तुभ्यं पा (त्रा) हि मां विषसर्पतः ॥
सर्पापसर्प भद्रं ते दूरं गच्छ महाविष ।
जनमेजय यज्ञान्ते आस्तीकवचनं स्मर ॥
आस्तीकवचनं स्मृत्वा यः सर्पो न निवर्त्तते ।
शतधाभिद्यते मुर्द्धि शिंश वृक्षफलं यथा ॥

इति ।

मार्कण्डेयः—

शून्यालये श्मशाने च एकवृक्षे चतुष्पथे ।
महादेव गृहे चापि मृतवेश्मनि न स्वपेत् ॥

पराशरः—

प्राच्यां दिशि शिरः शस्तं याम्यायामथ वा नृप ।

सदैव * स्वपतः पुंसो विपरीतं तु रोगदम् ।

सङ्ग्रहे तु—

स्वगृहे प्राक्शिरः कुर्य्याच्छ्वाशुरे† दक्षिणामु(खः)खम् ।
प्रत्यङ्मु(खः)खं प्रवासे च न कदाचि दुदङ्मु(खः)खम् ॥
माता वा भगिनी वापि स्नुषा वाऽन्यस्त्रियोऽपि वा ।
एतासां सन्निधौ चैव न स्वपेच्च कदाचन ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ‡ ॥

स्मृत्यन्तरे—

निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत् ।
शिरसः पुष्पमालां च भार्य्यां च शयनात्त्यजेत् ॥
प्रज्ञां हरति ताम्बूल मायुर्हरति (पुष्पकम्) पुष्पकम् ।
सर्पाद् भयं च पुष्पेभ्यः प्रमदा बलनाशिनी ॥

इति ।

रतिरहस्ये—

पर्य्यङ्के सुविशाले च अभग्ने पुष्पमण्डिते ।
आस्तृते शयनं कुर्य्या न्न खट्वायां कदाचन ॥
दीपे जाज्वल्यमाने तु स्त्रियासङ्गं समाचरेत् ।

---

* सदैव इत्यत्र स्यादेव इति प्रासादे इति च ग घ पुस्तकयोः पाठौ ।

† श्वाशुरे श्वशुरालये इत्यर्थः ।

‡ मनुरपि । मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ इति ।

दीपे नष्टे तु यः सङ्गं करोति मनुजः स्त्रिया ।
सप्तजन्मदरिद्रत्वं लभते नात्र संशयः ॥
दी(घ)पशय्यासनच्छाया कार्पासाद्दन्तधावनम् ।
अजाखुररजःस्पर्शः शक्रस्यापि श्रियं हरेत् ॥

सङ्ग्रहेऽपि—

अजारजः खुररजस्तथा सम्मार्जनीरजः ।
दीपमञ्चकयोश्छाया शक्रस्यापि श्रियं हरेत् ।

अन्यस्य पर्य्यङ्के न स्वपेत् ।

आत्मशय्यासनं वस्त्रं जायाऽपत्यं कमण्डलुः ।
आत्मनः शुचि रेतानि परेषामशुचिर्भवेत् * ॥
पादौ प्रक्षालयेत् पूर्वं पश्चात् स्वापं समाचरेत् ।
अनार्द्रं हस्तचरणो दीर्घमायु रवाप्नुयात् ॥

मात्स्येऽत्रविशेषउक्तः—

रात्रिसूक्तं जपेत् स्मृत्वा देवांश्च सुखशायिनः ।
नमस्कृत्याव्ययं विष्णुं समाधिस्थः स्वपेन्निशि ॥

रात्रि सूक्तं शतपथब्राह्मणेऽभिहितं । चित्रावसो स्वस्ति ते पारमशीय मिरेतज्जपति रात्रिर्वैचित्रावसु रित्यादि ।
ऋग्वेदेऽपि रात्रिर्व्यख्य दित्यादिकम् † ।

---

* शुचीन्यात्मन एतानि न परेषां कदाचन ।
इति पाठोयुक्तः । शुचिरित्यस्य अशुचिरित्यस्य च अनन्वयापत्तेः ॥

† रात्री व्यख्यादायती पुरुत्रा देव्य क्षभिः ।
विश्वा अधि श्रियोऽधित ॥ १ ॥

सुखशायिनस्तु—

अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥

इति गोभिलोक्ताः ।

दक्षः—

प्रदोष पश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

इति ।

---

उर्वप्रा अमर्त्या निवतो देव्युद्वतः ।
ज्योतिषा बाधते तमः ॥ २ ॥
निरु स्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ॥ ३ ॥
सा नो अद्य यस्या नि ते यामन्नविक्ष्महि ।
वृक्षे न वसतिं वयः ॥ ४ ॥
नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः ।
नि श्येनास श्चिदर्थिनः ॥ ५ ॥
यावया वृक्यं वृकं यवय स्तेन मूर्म्ये ।
अथा नः सुतरा भव ॥ ६ ॥
उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित ।
उष ऋणेव यातय ॥ ७ ॥
उप ते गा इवाकरं वृणीष्व दुहितर्दिवः ।
रात्रि स्तोमं न जिग्युषे ॥ ८ ॥

—इति १०म. १२७सू. ऋग्वेदः ।

अत्र प्रदोषशब्दोरात्रेः प्रथमयामवाचकः ।

स्मृत्यादौ तथोक्तेः ।

## अथ स्त्र्यभिगमन विधिः ।

यस्मात्तस्मात् स्त्रियः सेव्या इति याज्ञवल्क्यस्मरणात् पुत्रोत्पादनार्थं स्त्रियः सेव्याः । तद्विशेष माह स एव ।

षोड़शर्त्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रस्तु वर्ज्जयेत् ॥

रजोदर्शनदिनमारभ्य षोड़श रात्रय ऋतु गर्भाधानयोग्यः कालः । तत्र स्त्रियं ब्रह्मचार्य्येव उपेयात् । तत्राद्याश्चतस्रोरात्रीः पर्व्वाणिच वर्ज्जयेदित्यर्थः ।

पर्व्वाण्याह गर्गः—

चतुर्द्दश्यष्टमी चैव अमावस्या च पूर्णिमा ।
चत्वार्य्येतानि पर्व्वाणि मनुः स्वायम्भुवोऽब्रवीत् * ।

मनुस्तु—

तासा माद्यश्चतः सर्व्वानिन्दितैकादशीतथा ।
त्रयोदशी च शेषाः स्युः प्रशस्तादशरात्रयः ॥

इति ।

याज्ञवल्क्यः—

एवं गच्छन् स्त्रियं क्षामां मघां मूलञ्च वर्ज्जयेत् ।

---

* मनुः स्वायम्भुवोऽब्रवीदित्यत्र रवि संक्रान्तिरेव च । इति पाठो बहुषु निबन्धेषु दृश्यते ।

सुस्थ * इन्द्री सकृत् पुत्रं लक्षण्यं जनयेत् पुमान् ॥

सकृदित्युक्ते रेकस्यां रात्रावेकवार मेव गमन मिति नियम्यते । क्षामामिति विशेषणं ।

पुमान् पुंसोऽधिके शुक्रे स्त्रीभवत्यधिकेस्त्रियाः ।

इति वचना च्छोणिताधिक्ये पुरुषाकारा स्त्र्येव भवतीति हेतो रल्पभोजनादिना स्त्रियाः क्षामता सम्पाद्या इत्येतदर्थम् । पुंसः शुक्राधिक्ये पुमान् । शुक्रशोणितयोः समत्वे नपुंसकं ।

द्विधा वीजोत्सर्गं युगल मित्येतदर्थं चेतिज्ञेयम् ।

अत्र तु संविशेदित्यस्य नियमविधित्वेऽपि ।

ऋतु स्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति ।

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

तथा—

ऋतुस्नातां तु यो भार्य्यां स्वस्थः सन्नोपगच्छति ।

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

अत्र सन्निधौ स्वस्थ इत्यादि विशेषणबलात् समर्थः सन्निहितः सन् यदि ऋतौ नोपगच्छति तदादोषो नत्वसन्निधानादा † विति ज्ञेयम् । अजातपुत्रस्यैवाय मृतुगमननियम इति मदन पारिजात मतम् ।

---

* सुस्थ इत्यत्र स्वस्थ इति पाठो निबन्धेषु दृश्यते स एव साधीयान् अस्वे प्रसक्ते इन्द्री चन्द्रशुद्धावित्यर्थः । सुस्थ इति पाठेतु सुस्थदेह इत्यर्थः ।

† आदिपदेन वधत्वादि परिग्रहः ।

ऋतौ स्त्रीविषये यमोऽपि—

ऋतु-स्नाता तु या नारी भर्त्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं च विवासयेत् ॥

इति ।

अनृतावपि स्त्रीकामनायां प्रतिषिद्ध वर्ज्जं मुपेयादेव । सर्व्वत्र वा प्रतिषिद्धवर्ज्जमिति गौतमोक्तेः ।

यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।

इति याज्ञवल्क्योक्तेः । यथा कामो वा काम (मा) (नो) विजनि (तोः) सम्भवाम (वेम) इति वचनादिति कात्यायनोक्तेश्च । ऋतौ गच्छेदितिनियमे सत्येव नियमान्तरमिद मिति वा ग्रन्थार्थः ।

अत्रच—

ऋतुस्नातां स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ।
नातिबालां न कुपितां नाप्रशस्तां न गर्भिणीम् ॥

इत्यादिविशेषोद्रष्टव्यः ।

गर्भिण्यां विशेष माह आश्वलायनः—

वपनं मैथुनं तीर्थं वर्ज्जयेद् गर्भिणीपतिः ।
श्राद्धं च सप्तमान् मासा दूर्द्धंचान्यत्र वेदवित् ॥

इति ।

अन्यान्यो विशेषः प्रथम स्तवके गर्भाधान प्रकरणे द्रष्टव्यः ।

अथ गर्भाधानप्रसङ्गा दष्टाचत्वारिंशत् संस्कारा लिख्यन्ते—

गर्भाधान मथोक्ति पुंसवनकं सीमन्तजात-क्रिया
नामान्नादन चौलकोपनयने वेदव्रताद्यप्युत ॥

चत्वारि स्नपनं विवाहकरणं पञ्चापि यज्ञा अथो
संस्थाः सप्तच सप्त सप्त गदिता श्चैत्र्याह्याप्यन्ततु ॥
एवं चानशनेन वेदपठनं कर्णे जपस्त्वोमिति
प्राणोत्क्रान्ति रथोर्द्धदेहिक मतः संप्लू (वू) ह्नं भञ्जनः ।
अस्थ्नां संचयनं ततः परमपि श्राद्धानि सापिण्ड्कं
चत्वारिंशदिति * स्मृतौ निगदिताः संस्कारकाश्चाष्ट च ॥

इत्येतौ मामकौ सङ्ग्रहश्लोकौ । एकविंशतिः संस्थास्तु अष्टका पार्व्वण श्राद्धं श्रावणी आग्रहायणी प्रौष्ठपदी चैत्री आश्वयुजीति सप्त पाकयज्ञसंस्थाः ।

अन्याधेयाग्निहोत्र दर्शपूर्णमासाग्रयण चातुर्मास्य निरूढ़ पशुबन्ध सौत्रामणीति सप्त हविर्यज्ञसंस्थाः ।

---

* गौतमेन तु चत्वारिंशदेव संस्कारा अष्टौ गुणाश्च ब्राह्मण्य हेतवो दर्शिताः । चत्वारिंशत् संस्कारा गुण सहिता अष्टाचत्वारिंशदित्येके । तेच गर्भाधान पुंसवन सीमन्तोन्नयन जातकर्मनामकरणान्नप्राशन चौड़ोपनयनानि । चत्वारि वेदव्रतानि स्नान सुद्वाह: पञ्च यज्ञाः अष्टकान्वष्टका पार्वणश्राद्ध श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्तपाकयज्ञ संस्थाः । अन्याधेयाग्नि-होत्रदर्शपौर्णमासाग्रयणानि चातुर्मास्य निरूढ़ पशुबन्ध सौत्रामणीति सप्त हविर्यज्ञसंस्था, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोड़शी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत् । अष्टौ गुणास्तु दया चान्त्यनसूया शौचानायास मङ्गलाऽकार्पण्यास्पृहाख्याः । यस्यैते संस्कारा गुणाश्च न सन्ति । न स ब्राह्मणः सायुज्यं लभते, यस्य पुनः संस्कारासा-मेकदेशोऽपि अष्टावात्मगुणा अथ स सायुज्यं सालोक्यं च लभते । इति ।

अग्निष्टोमात्यग्निष्टोक्थ षोड़शी वाजपे(यो)या (हि)प्तोर्यामोऽयमिति सप्त सोमसंस्थाः ।

यमः—

अष्टाचत्वारिंशदेते संस्कारा विहिता द्विजे ।
यएतैः संस्कृतो विप्रो ब्रह्मलोकं स गच्छति ॥
इति ।

मनुः—

वैदिकैः कर्मभिः पुण्यै र्निषेकादि र्द्विजन्मनाम् ।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्यचेहच ॥
इति ।

एतेषु कतिपय संस्कारा मन्त्रवर्ज्जं शूद्रस्यापि यथायोग्यं भवन्ति ।

श्रौतं द्विजातयः कुर्य्युः स्मार्त्तं शूद्रः समाचरेत् ।
इति पाद्मोक्तेः । प्रकृतमनुसरामः ।

द्वावेतावशुची स्यातां दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥
इत्यापस्तम्बोक्ताशुचित्वनिरासार्थं

एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयो र्द्वयोः ।
मूत्र शौचं समाख्यातं शुक्रेतु द्विगुणं भवेत् ॥
इति शातातपोक्तं शौचं कर्त्तव्यम् ।

इद मन्वृतुकाल विषयम् । ऋतु कालगमनेतु—

दुःस्वप्ने मैथुने वान्ते विरक्ते क्षुरकर्म्मणि ।
चितियूपश्मशानास्थ्नां स्पर्शने स्नान माचरेत् ॥

इति पराशरोक्तं स्नानं कार्य्यम्। क्वचिदनृतावपि स्नानमाह स्मृति:—

अष्टम्यां च चतुर्द्दश्यां दिवा पर्व्वणि मैथुनम्।
कृत्वा सचेलं स्नात्वा तु वारुणीभिश्च मार्ज्जयेत्॥

इति।

शयनसमये दु:स्वप्न दर्शने जप माह गर्ग:—

रामं स्कन्दं हनूमन्तं वैनतेयं वृकोदरम्।
शयने य: स्मरेन्नित्यं दु:स्वप्नस्तस्य नश्यति॥

इत्यनन्ताह्निके शयनविधानम्।

## अथ यमनियमादिक मुच्यते।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य तान्येव मोक्षमिच्छन् व्रजत्यध:॥

इति मनूक्ते मुक्तिप्राप्तये आत्मोपासनां कुर्य्यात्।

स्कान्दे—

यमैश्च नियमैश्चैव आसनै: प्राण संयमै:।
प्रत्याहारैश्च ध्यानेन धारणाभि: समाधिना॥
अष्टाङ्गेन प्रयोगेण उपास्यात्मा विमुच्यते।
ज्ञानेनैव सहैतानि नित्यकर्म्माणि कुर्व्वत:॥
निवृत्त फल सङ्गस्य मुक्ति स्तस्य करेस्थिता।
अहिंसा सत्य मस्तेयं ब्रह्मचर्य्यं क्षमा धृति:॥

दयाऽऽर्जवं मिताहारः शौचं चेति यमा दश ।
शौच मिज्या तपः शौचं स्वाध्यायोपस्थनिग्रहौ ।
व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥
इति व्यासोक्ता यमादयः ।
जान्वोरूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत् प्रचक्षते ॥
इत्यादिक मासनं ।

प्राणायामः प्रागुक्तः ।
इन्द्रियाणां प्रचरतां विष (मि) येषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥
इति प्रत्याहार उक्तः ।

ध्यानं तु—
ध्यान मात्मस्वरूपस्य वेदनं मनसा भवेत् ।
तदेव हि (गुणं) विधं प्रोक्तं सगुणं निर्गुणं तथा ॥
भ्रुवो (रुपरि) ऊर्द्धं मनः कृत्वा ब्रह्ममध्ये चिन्तयेच्छिवम् ।
पञ्चवक्त्रं दशभुजं त्रिनेत्रं स्मितसुन्दरम् ॥
कर्पूरगौरं चन्द्रार्द्ध शेखरं सुविभूषितम् ।
नीलग्रीवं नागहारं व्याघ्रचर्माम्बरं विभुम् ।
कमण्डलुञ्च सुधाहि पाश शूलधरं (विभुम्) हरम् ॥
इत्यादि सगुणं ।

निर्गुणं तु—
अह मेव परं ब्रह्म परमात्माह मव्ययः ।

एवं तद्वेदना तत्र निर्गुणं ध्यान मुच्यते ॥

इति।

निर्गुणोपासनात्तु ज्ञानिन एव।

काम क्रोधादि युक्तस्य विषयासक्तचेतसः।

अहं ब्रह्मेति यज्ज्ञान मात्मनाग्राय केवलम्।

इति ब्रह्मवैवर्तोक्तेः।

धारणातु—

यमादिगुणयुक्तस्य मनसास्थितिरात्मनि।

धारणा प्रोच्यते सद्भिर्योगशास्त्रार्थकोविदैः।

इति।

समाधिस्तु—

समाधिः समता तावज्जीवात्मपरमात्मनोः।

परात्मनिस्थितिः प्रोक्तः समाधिः प्रत्यगात्मनः॥

इति।

इत्यनन्ताङ्गिके यमादिलक्षणविधानम्।

## अथ रुद्रजप विधानम्।

सर्वेष्वेवहि धर्मेषु रुद्राध्यायजपः परः।

रुद्राध्या (नो)यी विमुच्येत जन्मसंसारसागरात्॥

लिङ्गार्चनं रुद्रजप स्तथा शिवतिथित्रयम्।

वाराणस्यां च मरणं मुक्ति रेषा चतुर्विधा॥

रुद्रजापी शिवः साक्षाद्रुद्र एव न संशयः ।
तस्मात् सर्व्वं परित्यज्य रुद्रजापी भवेत् सदा ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यति स्तथा ।
रुद्रजापेन परमां गतिं गच्छन्ति नान्यतः ॥
रोगाद्युपशमार्थाय परमाभ्युदयाप्तये ।
मनोरथफलप्राप्त्यै रुद्रजापी भवेन्नरः ॥

इति स्कान्दे । जाबालोपनिषदि ।

यः शत रुद्रियमधीते सोऽग्निपूतो भवति ब्रह्महत्यातः पूतो भवतीति ।

तत्रैव—

किं जप्येनामृतत्वं नोब्रूहीति शतरुद्रियकेणेति । शतरुद्रियं (कं) च रुद्राध्याय एव । चरमाया मिष्टिकायां शतरुद्रियं जुहोतीत्यादि ब्राह्मणवाक्ये तस्यैव विनियोगात् ।

शतपथब्राह्मणेऽपि—

अथातः शतरुद्रियं जुहोतीति चयने तस्यैव विनियोगाच्च ।

रुद्राध्यायस्तु साक्षाद् भगवद्वाचकः । अमृतस्यैव नामधेयान्येतानीति जाबालोपनिषदुक्तेः ।

"यावज्जीवं प्रणवमथवाऽऽवर्त्तयेद्रौद्रियं वा याजुर्वेद्य" मित्यादिना यावज्जीवं तज्जपविधानादवश्यं तज्जपादि कार्य्यम् ।

मदनमहार्णवेऽपि—

यद्यपि चरमेष्टिकाया मेकादशभी रुद्रानुवाकैर्होमो विहित स्तथापि रुद्राध्यायी मुच्यते सर्व्वं पातकैरिति ।

तथा—

रुद्राणां जपहोमार्च्चनविधिं व्याख्यास्याम इति वौधायनादिवाक्ये जपहोमार्चन कर्म्मस्वपि विनियोगाद्रुद्राध्यायस्य जपादिषु अङ्गत्वमस्तीति ।

शिवगीतायां च—

यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाकृतिम् ।
षड़क्षरं वा प्रणवं निष्कामो विजितेन्द्रियः ।
स च तेनैव देहेन शिवः सञ्जायते ध्रुवम् ॥

इति ।

याज्ञवल्क्योऽपि—

सुरापः स्वर्णहारी च रुद्रजापी जलेस्थितः ।
सहस्रशीर्षाजापीच * मुच्यते सर्व्वकिल्बिषैः ॥

इति ।

अङ्गिराः—

नमकं† चमकं‡ चैव पौरुषं सूक्त § मेवच ।

---

* सहस्रशीर्षा इति मन्त्रस्य प्रतीक । मन्त्रोयथा—
सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो (सर्व्वतो) वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥
—इति १० म. ९०सू. १ऋक् ।

† नमकं रुद्राध्यायम् ।

‡ चमकं "वाजश्चमे प्रसवश्चमे -इत्यादिक मेकादशानुवाकात्मकम् ॥

§ पौरुषं सहस्रशीर्षेत्यादिक षोडश ऋक्मित्युक्तं । तत्र प्रथमखण्डस्य १५५। १५६ पृष्ठायां प्रदर्शितम् ।

नित्यं त्वयं प्रयुञ्जानो ब्रह्मलोके महीयते ॥
रुद्राध्यायी वसेद् यत्र ग्रामेवा नगरेऽपिवा ।
न तत्र क्षुत्पिपासाद्या दुर्भिक्षं व्याधयोऽपिच ॥
ब्रह्माद्या स्तु सुराः सर्व्वे साध्याश्चैव विशेषतः ।
सततं हि समायान्ति वीक्षितुं रुद्रजापिनम् ॥

वायुपुराणे—

अनपत्यादिदोषेषु शाकिन्यादि ग्रहेषु च ।
सर्व्वज्वरविनाशाय रुद्रो जाप्यो न संशयः ॥
स्नात्वा ऽश्वत्थं जपेद् यस्तु रुद्रैकादशिनीं शुचिः ।
तथा सन्तान गोपालविद्यां चैव जपेन्नरः ॥
अनपत्यत्वनाशार्थं स्वस्वलाभार्थं सिद्धये ।
सर्व्ववर्णैश्च कर्त्तव्यो रुद्रजापः प्रयत्नतः ॥

इति ।

बृहत् पाराशरे—

रुद्राः पञ्चविधाः प्रोक्ता दैशिकैरुत्तरोत्तरम् ।
साङ्गस्त्वाद्योरूपकाख्यः प्रथमो रुद्र उच्यते ॥
एकादशगुणै स्तद्वद्रुद्रोसंज्ञोद्वितीयकः ।
एकादशभि रेताभि स्तृतीयो लघुरुद्रकः ॥
लघ्वेकादशभिः प्रोक्तो महारुद्रश्चतुर्थकः ।
पञ्चमः स्यान् महारुद्रै रेकादशभि रन्तिमः ।
अतिरुद्रः समाख्यातः सर्वेभ्योऽप्युत्तमोत्तमः ॥

इति ।

अङ्गान्युक्तानि जावालेन—

शिवसङ्कल्पकं * (हृदयं) हृत्स्यात् सूक्तं स्यात् पौरुषं शिरः ।
प्राहुर्नारायणं चैव शिखां तस्योत्तराभिधाम् ॥
आशुः शिशानः † कवचं नेत्रं विभ्राड्बृहत् ‡ स्मृतम् ।
शतरुद्रिय मस्त्रं स्यात् षडङ्गक्रमईरितः ॥
पूर्व्वमङ्गानि संजप्य रुद्राध्यायं ततोजपेत् ।
तदग्रे स(त्य)स मन्त्रांश्च वयं सोम § मत्स्थिरः ।
उग्रश्चेति ‖ यजुर्मन्त्रं जटामाहु र्जपेदिति ॥

---

* यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरङ्गमं
ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ।
—इति ३४. १. यजुः ।

† आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥
इति १७अ. ३३म. यजुः ।

‡ विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ॥
—इति ३३ ३०म यजुः ।

§ वयं सोम व्रते तव मनस्तनूषु बिभ्रतः ।
प्रजावन्तः सचेमहि ॥
—इति ३अ ३३म ।

‖ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ।
सासह्वांश्चाभियुग्वा च विक्षिपः स्वाहा ॥

अत्र शतरुद्रियं नाम त्वमग्ने रुद्रो असुर इत्यादि वयं स्याम पतयोरयीना मित्यन्तं मन्त्रजातमिति महार्णवकारः।

वाजसनेयिनां तु षोड़शर्च्चैः प्रथमानुवाकः शतरुद्रियं।

शिवसङ्कल्पमित्याद्यनुवाक पाठ सामानाधिकरण्यात्। शतरुद्रियत्वधर्म्मस्य वेदत्वादिवद् व्याप्यवृत्तित्वात् शिष्ट समाचाराच्च।

अत्र नैत्यजपादि वाजसनेयिविषयः। आपस्तम्बादीनामनुक्तत्वात्। चमकपाठ प्रकारमाह बौधायनः। नमस्ते रुद्रमन्यवे इत्याद्येकादशानुवाकाना मन्ते एकमेकं चमकानुवाकं पठेद् यावदेकादशावृत्तीति।

अयं प्रकार स्तैत्तिरीयाणा मेव। वाजसनेयिनां तु चमकाध्याये नवानुवाका इति कृत्वा यथासंख्याभावात्। अतस्ते रेकादशवारं रुद्राध्यायं जपित्वा अन्ते चमकाध्यायः पठनीय इति गम्यते। यद्वा शाखान्तराधिकरण न्यायेन तेषामपि यथासंख्य सम्भवः सम्पादनीयः। तद् यथा आद्या अष्टावनुवाकाः। नवमेऽनुवाके अथ नाम ग्राहं जुहोति वाजाय स्वाहा इत्युपक्रम्य प्रजानां त्वाधिपत्यायेति शतपथे मन्त्रद्वयस्य एकहोमाङ्गत्व मुक्तं तथा अथ कल्पान् जुहोति आयुर्यज्ञेन इत्यस्य मन्त्रस्य द्वितीय होमाङ्गत्व मुक्तम्। तथा अथाहस्तोमश्च यजुश्च इति मन्त्रस्य

इन्द्र दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्र दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्।
एवमिम यजमानं दैवीश्च विशोमानुषी श्चानुवर्त्मानो भवन्तु॥

—इति १७अ. ८६म. यजु.।

तृतीय होमाङ्गत्व मुक्तम्। तेनैवं ज्ञायते अन्त्यानुवाके त्रयो विभागा इत्येवं यथा सम्भव इति ।

यद्वा अन्त्यानुवाक स्त्रिरावर्त्तनीयः । अ(न्य)न्यासादिक मथातः पञ्चाङ्ग रुद्राणां न्यासपूर्व्वक मित्यापस्तम्बायुक्त मनुसन्धेयम् । ग्रन्थगौरवभीत्यानात्रलिख्यते ।

एव मुक्तप्रकारेण रुद्रजपं कृत्वा होमः कार्य्य इत्युक्तं शातातपेन —

एवं रुद्रजपं कृत्वा पश्चाद्धोमं समाचरेत् ।
तिलैः सबिल्वपत्रैश्च दशांशो होम इष्यते ॥

तत्र मन्त्रविभागो वहुधा दृश्यते । तत्र तैत्तिरीये त्रेधा विभक्तं । जुहोति त्रय इमेलोका इति त्रेधाविभाग उक्तः। तथा तिस्र उत्तरा आहुती र्जुहोति षट् सम्पद्यन्ते इमे लोका इति षोढ़ा विभागोऽपि ।

वाजसनेयकेऽपि स वै जानुदघ्ने प्रथमं स्वाहाकरोति अथ नाभिदघ्ने अथ मुखदघ्ने * इति ।

अस्मिन् पक्षे मन्त्रविभाग प्रकारस्तु नमस्ते रुद्र मन्यवे इत्यारभ्य नमः सभाभ्यः सभापतिभ्यश्च वोनम इत्यन्त एकोमन्त्रः †। सवा

* स्वाहा करोतीति प्रत्येक मभिसम्बध्यते ।

† नमस्ते रुद्र मन्यव उतोत इषवे नम ।
वाहुभ्यामुत ते नमः ॥ १ ॥
नम सभाभ्य सभापतिभ्यश्च वो नम ।
अस्मिन पक्षे अनुवाकादिगत मन्त्राणामेकमन्त्रत्व मभ्युपगमम् ।

आग्नीत्यांच स्वाहाकरोति प्रथमे चानुवाके इति श्रुतेः। तथा नमो अश्वेभ्य इत्यारभ्य नमः पार्य्याय च इत्यन्तो* द्वितीयो मन्त्रः। तथा; नमः प्रतरणाय च † इत्यारभ्य जम्भे दध्म इत्यन्त स्तृतीयो मन्त्रः। अत्र अविच्छिन्नानामनुवाकानां मन्त्रत्वं ज्ञेयं गवांशतं दक्षिणा इतिवत्।

यद्वा प्रत्यनुवाकत्रयमेकैको मन्त्रः। तथा षोढ़ा पक्षोऽपि। त्रि (त्रिः) त्वः प्रत्यवरोहतीत्युक्त्वा त्रिरित ऊर्द्धारोहति तत्षट् तस्योक्तो वन्धु रिति शतपथे उक्तः।

अत्रपक्षे पूर्व्वोक्ता स्त्रयो मन्त्राः। नमोऽस्तु रुद्रेभ्यो येदिवी-त्यादि प्रत्यवरोह संज्ञका स्त्रयो मन्त्रा इत्येवं षड् भवन्ति।

तैत्तिरीयाणां प्रकारस्तु महार्णवादौ ज्ञेयः।

तथा षोड़शधापक्षोऽपि बौधायनोक्तः।

नमस्ते रुद्र मन्यवे इत्येताननुवाकां स्त्रेधाविभज्य अथवा

---

नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः १६अ. ७म.

नमः पार्य्यायचावार्य्यायच। १६अ. ४२म. यजुः।

अस्मिन् पक्षे सप्त मन्त्राणामेकमन्त्रत्वं वेदितव्यम्।

नमः प्रतरणाय चोत्तरणायच। १६अ.?म.यजुः।

नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे येदिवि येषा वर्षमिषवः।

तेभ्यो दश प्राचीर्दश दक्षिणा दशप्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः।

तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु

ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः॥

— इति १६अ. ६४ यजु.।

प्रथमा दुपक्रम्य अनुवाक त्रयमेकोमन्त्र:। चतुर्थमारभ्य षष्ठान्तो द्वितीय:। सप्तममारभ्य आवर्त्तनावधि स्तृतीय:।

ततो दशावता (र्त्ता) नादश मन्त्रा:। प्रत्यवरोहाणि त्रीणी त्येवं षोड़श भवन्तीति। तथा सप्तदशधापक्षोऽपि। तत्र प्रथमानुवाक एकोमन्त्र:। तदुत्तर मनुवाकद्वयं द्वितीय:। शेषं पूर्व्ववत्।

अथ अष्टाचत्वारिंशत्पक्षो(ऽपि) वौधायनोक्त:। यथा प्रथमानुवाके षोड़शमन्त्रा: द्वितीय तृतीय चतुर्थ पञ्चमानुवाका श्चत्वारो मन्त्रा:। तत: षष्ठानुवाके नम: स्तुत्याय इत्यारभ्य नमोहृद्येभ्यो हरिकेशेभ्य इत्यन्त * एकोमन्त्र:। ततोनम स्ताराय एतावानेक मन्त्र:। ततो नम: श(स)म्भवाय च इत्यादि: शिवतरायच इत्यन्त एकमन्त्र:† । ततो नम: पार्य्याय इत्यारभ्य ‡ धनुष्कृद्भ्यश्च वोनम इत्यन्त एकोमन्त्र:। ततो नमोव: किरिकेभ्यो देवानां हृदयेभ्य- इत्यादय श्चत्वारो मन्त्रा: §। अत्र देवानां हृदयेभ्य इत्यस्य विशे-

* नम: स्तुत्यायच पथ्याय च। १६भ. ३७म. यजु:।
नमो वृक्षेभ्यो हरिकेशेभ्य:। १६भ. ४०म. यजु:।

† नम: शम्भवाय च मयोभवायच। १६भ. ४१म. यजु:।
मन्त्रोऽयं रुद्राध्यायेनोपलभ्यते।

‡ नम: पर्य्याय च पर्णशद्याय च। १६भ. ४६म यजु:।
नम इषुकृद्भ्योधनुष्कृद्भ्यश्च वोनम:। १६भ. ४६म. यजु।

§ नमो व: किरिकेभ्यो देवानां हृदयेभ्य: १६भ. ४६म. यजु:।
नमो विचीनकेभ्य: ॥ १६ ॥ नमो विचिन्वत्केभ्य: ॥ १७ ॥
नम आनिर्हतेभ्य: ॥ १८ ॥

पणस्य उत्तरेषु यजुःस्वनुषङ्गः कर्त्तव्यः । ततोद्रापे अन्धस* इत्यारभ्य य एतावन्तश्च इत्यन्ताः सप्तदश मन्त्राः । ततः प्रत्यवरोहाणि त्रीणि यजूंषीत्येव मष्टाचत्वारिंशन्मन्त्रविभागो ज्ञेयः ।

अथ षष्ठ्युत्तर शतात्मको विभागः प्रदर्श्यते । तत्र प्रथमानुवाके षोडश । ततो नमो हिरण्य बाहवे† इत्यारभ्य नमः श्वभ्यः श्वपति भ्यश्च वोनम इत्यन्ता उभयतो-नमस्काराः पञ्चचत्वारिंशत् ।

ततो नमो भवायचरुद्रायच इत्यारभ्य आनिर्हतेभ्य इत्यन्ता अन्यतरतोनमस्कारा नवसप्ततिः । ततो द्राप इत्यादिः पूर्व्ववद् विंशति रित्ययं प्रतिमन्त्रविभागः ।

एवं षष्टिश्च द्वे त्रीणि च शतानि अथ त्रिंशदथ पञ्चत्रिंश दित्यादि शतपथ श्रुतिप्रमाणकाः सपादचतुःशताशीत्यधिकशत-द्वयादि पक्षा अवगन्तव्याः । ते चास्माभिः शतरुद्रियाध्याये प्रपञ्चिताः । ग्रन्थगौरवभयादिह्नोक्ताः ।

एते त्रेधाविभागादि पक्षाः शक्तिफलतारतम्येन योज्याः । ग्रहणाग्रहणवत् । तैत्तिरीयाणां प्रतिमन्त्र विभागे एकोनसप्तत्युत्तरशत विभागः प्रसिद्ध एव इत्युपरम्यते ।

---

* द्रापे अन्धसस्पते दरिद्र नील लोहित । आसां प्रजाना मेषां पशूनां माभे र्मारोङ् मो च नः किञ्चनाममत् । १६भ. ४७म. यजुः ।

य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे ।

तेषाꣳ सहस्र योजनेऽव धन्वानि तन्मसि ॥

† नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः । १६भ. १७म. यजुः ।

नमः श्वभ्यः श्वपतिभ्यश्च वोनमः । १६भ २८म. यजुः ।

एभिः प्रकारै र्यदि होम मेव चिकीर्षति तदा होम एव प्रधान-भूतः कर्मस्थः। जपाद्यङ्गत्वेन होमचिकीर्षा चे त्तदा दशांशशतांशादिभेदेन होमः कार्य्यः। तत्र त्रेधाविभागपक्ष माश्रित्य एकादशावृत्त्यात्मकजपरुद्रहोमे तिस्र आहुतयोभवन्ति।

चमकाध्यायेन चान्ते वसोर्धाराः कार्य्याः। सम्पूर्ण होम पक्षेतु प्रति रूपकं तिस्रस्तिस्र आहुतय इति मिलिता स्त्रयस्त्रिंशत्। प्रति रूपकं चमकानुवाकाना मेकादशाहु (तिः)तयः।

वसोर्धारा त्वाज्येनैव चान्ते सर्वत्र चमकाध्यायेन कार्य्या।

वसोर्धारात्वाज्येनैवोदुम्बर्य्यास्रुचेत्यादि श्रुतेः। एवं षोढ़ा-विभागादि पक्षेऽपि आहुति संख्या ज्ञेया। ग्रन्थगौरवभयान्नोच्यते।

शतांश पक्षस्तु लघुरुद्रा (देव) दावेव। तत्रैव तत् सम्भवात्। तथाहि लघुरुद्रे एकविंशत्युत्तरं शतं रूपका भवन्ति तेन शतांश होमपक्षः सम्भवति। तत्र शतरूपाणा मेक-रूपहोमः।

तत्रापि त्रेधादि पक्षाः संयोज्याः। अवशिष्टैक विंशतिरूपाणा-मर्थं नमस्ते रुद्रइत्यनेन मन्त्रेण * एकाहुतिः। एवं महारुद्रादौ योज्यम्। अन्येतु यथाभिलषितरुद्रजपानन्तरं नमः शम्भवायेति † मूलमन्त्रेणैव होममिच्छन्ति। तदाह वौधायनः। मूलमन्त्रेण वा होमं कुर्य्यादिति। तत् प्रकारस्तु हेमाद्रौ मूलागमेऽभिहितः।

* ३८१ पृष्ठे प्रदर्शितम।

† नमः शम्भवाय इति। मन्त्रोऽयं ३८५ पृष्ठे प्रदर्शितः।

ततो होमं प्रकुर्व्वीत नमः प्रभृति मन्त्रतः ।
रुद्रैकादशनो जाप्या त्रयस्त्रिंशत्तथाहुतिः ।
रुद्रे शतत्रयं प्रोक्तं षष्ट्या त्र्यधिकमाधिकम् ।
रुद्रे लघुरुद्रे इत्यर्थः ।
चत्वारश्च महारुद्रे सहस्राः समवर्ज्जिताः ।
चत्वारिंशत् सहस्राश्च कर्त्तव्या शतुरुत्तराः ।
जनाश्च समसप्तत्या (श्च) त्यति रुद्रइति स्थितिः ॥

मूलमन्त्रन्यासादिकं प्रथम स्तवके रुद्रस्नानविधानेद्रष्टव्यम् ।

अथापरश्चतुःषष्टिविभागः स च हेमाद्रौ शान्तिकाण्डे रुद्रस्य स्नानेऽभिहिता । अविरुद्धत्वाद्धोमेऽपि भवति ।

तथाहि—

सुखासनोपविष्टाना माचार्य्यो रुद्रजापकः ।
अभिषिञ्चेत्ततस्तेषा मर्कपत्र पुटाम्बुना ।
अच्छिद्राण्यप्यनूनानि स्नानार्थं तान्युपाहरेत् ॥
चतुःष(ष्टि) त्र्यपेनैव रुद्रैर्णैकादशेन तु ।
शतानि सप्तवर्णानां चतुर्भिरधिकानि तु ॥

वर्णानां मन्त्राणामित्यर्थः । तेषां चतुःषष्टि संख्याना मेकादश शतः पठितानामियं संख्या निष्पद्यते । यद्यपि प्रायो रुद्राध्यायस्य यजुष्ट्वा-इत्वं नास्ति तथापि काण्वशाखायां चतुःषष्टि कण्डिका पाठोपलम्भे स्तदभिप्राय मन्वचन मिति द्रष्टव्यम् ।

तत् प्रकार स्तु अनुवाकेऽध्याये समाम्नातः । यथा । नमस्ते

इति* षोडश। नमो हिरण्यबाहवे†। नम उष्णीषिणे‡। नम स्तायुभ्यः§। नमो ज्येष्ठाय‖। नमः सूत्याय। नमः पार्य्याय। इति पञ्च पञ्च। द्रापे अन्धसोऽष्टादश¶। अष्टानुवाकेषु चतुःषष्टिरिति।

अथ सम्पूर्ण रुद्राध्यायेन एकाहुति पक्षोऽप्यभिहितः। परशुराम पद्धतौ रुद्रजामले—

प्रहृतिं हविषापूर्य्य रुद्राध्याय मधीत्यच।
जुहुयादाहुतिं चैकां सर्वकामसमृद्धये॥

इति।

हवि रत्र तिलादि कठिनद्रव्यम्। प्रहृति पूरण व्यपदेशात्। एतेषु सर्व्वेषु मन्त्रविभागपक्षेषु शक्तितारतम्येन योजितेष्वपि अस्मदनुसरणतविभाग पक्षः श्रेष्ठतम इति गम्यते। श्रुत्युक्तत्वात्। तथाहि। प्रथमानुवाके षोड़शमन्त्राणां होमाङ्गत्वं प्रथमे चानुवाके इति श्रुत्युक्तं। ततो नमोहिरण्यबाहवे इत्यारभ्य नम आनिर्हतेभ्य इत्यन्तेषु प्रति कण्डिकं चत्वारश्चत्वारो मन्त्राः।

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नम इत्येवं कृपा

---

* मन्त्रोऽयं ३८१ पृष्ठे दर्शितः।

† नमो हिरण्यबाहवे इति। मन्त्रोऽयं १८६ पृष्ठे दर्शितः।

‡ नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः— १६अ. २२म.

§ नम स्तायुभ्यो रथकारेभ्यश्च वो नमः— १६अ. २१म.

‖ नमो ज्येष्ठाय च कनिष्ठाय च— १६अ. ३२म.

¶ द्रापे अन्धस इति। मन्त्रोऽयं ३८४ पृष्ठे दर्शितः।

उभयतो नमस्कारा: पञ्चचत्वारिंशत्। ततो नमो भवायच इत्या-रभ्य अन्यतरतोनमस्कारा नवसप्तति:।

अथ इन्द्रिभ्यो जुहोति नमोऽसुषेच इत्युपक्रम्य नमो हिरण्य वाहवे सेनान्ये दिशांच पतयेनम इति श्रुत्यैव मन्त्रविभागस्य दर्शितत्वात्।

इन्द्रित्वं चात्र वाच्याभिप्रायेण मुक्तानां परमा गति रितिवत्।

नतु वाचकाभिप्रायेण तेषां वहुत्वदर्शनात्।

तथाच हिरण्यवाहवे सेनान्ये इत्येकं नाम। दिशां च पतये इति द्वितीयम्। एवमुत्तरत्र द्रष्टव्यम्।

तथा नमो वृक्षेभ्योहरिकेशेभ्य इत्येकं नाम। नमस्ताराये‌ति द्वितीयम्। ततोऽन्यानुवाके विंशति मन्त्रा:।

अथोत्तराणि जपति द्रापे अन्धसस्पते इत्युपक्रम्य सदैतानि यजूंषि भवन्तीत्युक्ता दशैतानि दशावतानान् जुहोतीत्युक्ता त्रीणि यजूंषि भवन्तीति श्रुत्या एवं मन्त्रविभाग कथनादित्यलं प्रपञ्चेन।

अथ रुद्राध्यायस्य प्रति मन्त्रं प्रयोग: कथ्यते—

नमकाश्रित मन्त्राणां प्रयोग: फल गोचर:।
नमस्ते रुद्र इत्यस्या: पुरश्चरण सिद्धये॥
प्राजापत्यं चरित्वैकं जपेन्मन्त्र ममुं तत:।
एकादश सहस्राणि शुद्धकाले निरन्तरम्॥
प्रदक्षिण नमस्कारौ कुर्यादीशस्य मन्त्रत:।

मन्त्रत: अनेनैव मन्त्रेण प्रदक्षिण नमस्कारौ यथाशक्ति कार्य्यौ।

हविष्य मन्नं भुञ्जीत ब्रह्मचारी ह्यध: स्वपेत्।

पुरश्चरण सिद्धस्य दक्षिणामूर्त्ति सन्निधौ ॥
एकादश सहस्राणां जपात् सर्व्वाधिनाशनम्।
अथ लक्षजपात् सप्तजन्म पापं प्रणश्यति ॥
ततः स्वगृह्य विधिना स्थापयित्वा हुताशनम्।
पायसं स्नपयित्वाज्य युक्तं तज्जुहुयाद्धविः।
दशांश संख्यया पश्चात् साक्षाद्देवं स पश्यति ॥

अपयाम इत्यस्य *।

दिना (दि) नि द्वादशैवामुं चरुभोजी जपेन्मनुम्।
विनियोक्तुं भवेद् योग्यः सर्व्वकामार्थ सिद्धये ॥

जपसंख्या पूर्व्ववत्।

अनेन सिद्धमन्त्रेण यद् यत् कामयतेद्विजः।
तत्तत् काम मवाप्नोति जपादयुत संख्यकात् ॥
इति।

अथ याते रुद्र इत्यस्य †।
वासरत्रितयं यावन्निरन्तर जपान्नरः।
नित्यकर्म्माविरोधेन पुरश्चरणवान् भवेत्।
ततः प्रयोगयोग्यः स्याद् यदा गो शान्ति कामना ॥

जपहोमादि पूर्व्ववत्।

* अपयाम इत्यस्य मन्त्रो रुद्राध्याये नोपलभ्यते।

† या ते रुद्रशिवातनूरघोराऽपापकाशिनी।
तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥
—इति म १ अ ३ ऋक्।

अथ यामिषु मित्यस्य * शिवेन वचसा † इत्यस्य च ऋग्द्वय मेको मन्त्रः ।

निरन्तरं जपेन्मन्त्रं दिनाना मेकविंशतिम् ।
पुरश्चरण मेवं स्यात् प्रयोगार्ह स्ततो भवेत् ॥
अकाल मरणाद्राष्ट्रं नाशमायाति (वैयदा) चेत्तदा ।
महीपतिः शान्ति कर्म्म कारयेदग्रजन्मना ।
ऋग्भ्या माभ्यां तिलव्रीहिगोधूमयवकल्पितम् ।
हविः प्रजुहुयाल्लक्षं वासरेष्वेकविंशतौ ॥
अकाल मरणाज्जातं साध्वसं नाशमृच्छति ॥

अध्यवोचदित्यस्य ‡ —

अर्द्धकृच्छ्रं चरित्वाथ वासरान् पञ्च संयतः ।
शाकमूलयवाशाशी दिवातिष्ठेन्निरन्तरम् ॥
जपन् पुरश्चरणवान् प्रयोगार्हस्ततो भवेत् ।
रक्षापुरःसरं राजा कामयन् चिरजीवनम् ॥
कारयेद्विधिना कर्म्म वक्ष्यमाणं द्विजन्मना ।
श्वेत सर्षपदूर्वाग्र यवै स्तण्डुलमिश्रितैः ॥

* यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ४ ऋक् ।

† शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥ ५ ॥ ऋक् ७ १ अ.

‡ अध्यवोच दधिक्रा प्रथमं ते गोभिषक् ।
अहीँश्च सर्वाञ् जम्भयन् सर्वाश्च यातुधान्यः । १अ. ६म.

होमं चाष्टसहस्रं स्यात् पश्चाहःसु निरन्तरम् ।
अथान्यो गर्भरोगस्य नाशाय प्रोच्यतेविधिः ॥
सहस्रजप्तो मनुना शतजप्तोऽथवा पुनः ।
अभिमन्त्र्य फलं सम्यङ् नारङ्गं पयसिक्षिपेत् ॥
स्नापयित्वा ततः स्वाम्भो होमः कार्य्योविधानतः ।
त(तः)त्र संख्या भवेदष्टौ सहस्राणि शतानिच ।
शेषं पिबेत् पयो गर्भरोग एवं प्रशाम्यति ।
असौ यस्ताम्र * इति मन्त्रद्वय प्रयोगः—
कृच्छ्र मेकं चरेत् पूर्वं ततः षोडशवासरान् ।
निरन्तरं जपेन्मन्त्रं नित्यकर्म्माविरोधतः ॥
अनावृष्टिभये घोरे समुत्पन्ने समन्ततः ।
पञ्चविप्रानथाहूय कारयेद्दृष्टि साधनम् ॥
हवि (षि) षा पायसं तत्र तण्डुलांश्च तिलान् यवान् ।
वैत(स्य:)सोः समिधश्चापि जुहुयाल्लक्षसंख्यया ॥
एकादशदिनैः साध्य मखिलं कर्म्मवृष्टिदम् ।
पञ्चानां तु जपेदेक श्चत्वारो जुहुयुर्द्विजाः ॥

* असौ य स्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।
ये चैनाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशो ऽवैषाꣳ हेड ईमहे ॥ ७म.
असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृश्र अदृश्र न्नुदहार्य्यः ।
उतैनं विश्वा भूतानि सदृष्टो मृडयाति नः— ८म १६.

अथ नमो अस्तु नीलग्रीवायेति मन्त्रस्य * प्रयोगः—

आलये पश्चिमद्वारे महेशस्य समीपतः ।
जपित्वा दिवसान् सप्त सततं संयतस्ततः ॥
सहस्रं जुहुयादर्कपुष्पैर्दशदिनावधि ।
पुरश्चरणमेवं स्यात् प्रयुञ्जीत ततो मनुम् ।
पुत्रकामः पुरीहन्तु † रालये वाथ गोष्ठके ॥
शमी समिद्भिरक्ताभि ‡ र्दध्याज्यमधुना भृशम् ॥
एकादश सहस्राणि चोत्तमान्यथपञ्चवा ।
अष्टौ सहस्राण्यर्द्धं § वा शतान्यष्टानि वेशितुः ॥
पञ्चैकहानि शिरसि विन्यसे सद्भावतः ॥
शमी पत्राणि तावन्ति || पुत्रकामः शिवेऽर्पयेत् ।
शतं द्विजान् भोजयित्वा पुत्रं प्राप्नोत्यसंशयम् ॥

अथ प्रमुञ्च ¶ धन्वने इत्यादि (तिसृणां) त्रयाणां प्रयोगः—

* नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ।
—म १ष. ८कं ।

† पुरीहन् त्रिपुरदाहकस्य शिवस्येत्यर्थः ।

‡ अक्ताभि र्मिश्रिताभिः ।

§ अर्द्धं चत्वारि सहस्राणि ।

|| तावन्ति उक्त संख्याका सप्तसहस्राणि ।

¶ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥ १० ॥

अक्षरमेकं चरित्वादौ जपेच्च नववासरान् ।
एवं कृते भवेत् सिद्धिः पुरश्चरण कर्मणः ।
महीपते रायुधानि मन्त्रयित्वा तु चैनतु ॥
कुशकण्टकहोमस्तु लक्षसंख्योऽथ शक्तितः ।
विद्वेषोविलयं याति शिवस्यैव प्रसादतः ॥

अथ याते हेति रिति तृचप्रयोगः *—

पुरश्चरणमासां स्यात् पूर्व्वोक्तानामृचामिव ।
एकादश सहस्राणां दीपानां दानमीश्वरे ॥
कृत्वा (ऽसतो) ततो रिपौ गच्छेत् सेनानीः पार्थिवंविना ।
दृष्ट्वाज्वालां प्रदीपानां शत्रुसेना विनश्यति ॥
यद्वा शङ्कु सहस्राणि अभिमन्त्र्य रिपोः पुरे ।
देवालये ऽथवा देवारामे वापि चतुष्पथे ॥

---

अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ।
निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव ॥ ११ ॥
विज्यं धनुः कपर्द्दिनो विशल्यो बाणवाꣳ उत ।
अनेशन्नस्येषव आभुरस्य निषङ्गधिः ॥ य १६. १२ऋक्

* याते हेति र्मीढुष्टम हस्ते बभूव ते धनुः ।
तयाऽस्मान् विश्वतस्त्व मयक्ष्मया परिभुज ॥ १३ ॥
नमस्ते अस्त्वायुधायाऽनातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ १४ ॥
परि ते धन्वनो हेति रस्मान् वृणक्तु विश्वतः ।
अथो य इषुधि स्तवाऽऽरे अस्मन्निधेहि तम् ॥ १५ ॥ १६.

खाते शालासु चान्येषु नगराङ्गेषु निक्षिपेत् ।
नश्येद्दर्षभयात् सापूर्व्वाध्यादिभि रुपद्रवैः ॥

इति प्रथमानुवाक प्रयोगः ।

अथ द्वितीयानु वाकस्य । *

अथ श्रीकामना यस्य स श्वेत कमलैः शुभैः ।
अयुतं जुहुयाद्दक्षो श्रीमान् भवति मानवः ॥

अथ तृतीयस्य † —

अथानेनानुवाकेन वक्ष्ये कर्म्माभिचारिकम् ।
परराष्ट्रे रोगमिच्छन् राजा वै कारयेत् क्रियाम् ।
वराह मेषमांसानि जुहुयाल्लक्षसंख्यया ॥

अथ चतुर्थस्य ‡ —

चतुर्थेनानुवाकेन मेहशान्तिरथोच्यते ।
मेहवान् खानले होमं कुर्य्यात् क्षौद्रेण सर्पिषा ॥
प्रति मन्त्र नमस्कारं मन्त्रविच्छेद ईरितः ।
संख्या नवसहस्राणि होमान् मेहो विनश्यति ॥

---

* द्वितीयानुवाकस्य नमो हिरण्यबाहवे सेनान्ये दिशां च पतयेनमः । इत्यादिः नमः स्रुतवीताय धावते सत्वनां पतये नमः । इत्यन्तस्य त्रयोदश मन्त्रात्मकस्य ।

† तृतीयस्य अनुवाकस्येति शेषः । स च नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः इत्यादिः नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नम इत्यन्तश्च सप्तदश मन्त्रात्मकः ।

‡ चतुर्थस्य । नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वोनमः । इत्यादिः नमः श्वभ्य. श्वपतिभ्यश्च वोनमः । इत्यन्तस्य सप्तदश मन्त्रात्मकस्य ।

मेहः प्रमेहरोगः—

अन्येषामपि कुष्ठादिरोगाणां शान्तयेऽपि वा।

अथ पञ्चम षष्ठयोः * —

अनुवाकद्वयस्यास्य पुरश्चरणसिद्धये।
त्रिरात्रं चरुभोजीस्याज्जपेदथ निरन्तरम्॥
एकादशदिनान्येवं पुरश्चरणयुग् भवेत्।
अथ राज्यरमा वृद्धि कामो राजातु कारयेत्॥
मन्त्रसिद्धै द्विजैः कर्म्म वक्ष्यमाणाद्यदन्वितम्।
यावदेकादशावृत्ति रनयोरनुवाकयोः॥
तावदेव सपर्य्यास्यात् पूर्व्वोक्तात्तु दिने दिने।
एकादश प्रतिदिनं भोजयेच्च द्विजानपि॥

पूर्वोक्ता कमलादिना लिङ्गपूजेत्यर्थः।

एवं कृते राज्यलक्ष्मी र्निष्प्रत्यूहं विवर्द्धते।

अथ सप्तमस्य † —

एकोपवासं कुर्व्वीत तत चाष्टशतं जपेत्।

* पञ्चमषष्ठयोः। पञ्चमे नमो भवाय च रुद्राय च। इत्यादीनि नमः शीघ्र्याय च शीभ्याय च इत्यन्तानि चतुर्दश यजूंषि सन्ति। षष्ठे च नमो ज्येष्ठाय च कनिष्ठाय च इत्यादीनि नमः श्रुताय च श्रुतसेनाय च इत्यन्तानि चतुर्दश यजूंषि सन्ति।

† सप्तमस्य। नमः दुन्दुभ्याय चाहनन्याय इत्यादि नमो वास्तव्याय च वास्तुपाय च इत्यन्तम् षोडश मन्त्रात्मकम्।

३८४ पुरश्चरण मेवं स्यात् प्रयोगार्हस्ततो भवेत् ॥
चातुर्वर्ण्यं (र्ण्य)स्य वश्यं यः कामयेतात्मनो द्विजः ।
उदुम्बर चलत्पत्र न्यग्रोधप्लक्षभूरुहान् ॥

चलत्पत्रोऽश्वत्थः ।

समिधो दधिमध्वाज्य संयुक्ताञ्जुहुयादसौ ।
अयुतं होम संख्यास्वाहस्य मेव समश्नुते ॥
मेधाकाम स्तु जुहुयात् सहस्राणां तु पञ्चकम् ।
अ१ कपिलाज्यं हविः प्रोक्त मेवं मेधा समश्नुते ॥

अथ द्रापे इत्यस्य* —

कृत्वोपवास मेकाहं जपेन्मन्त्र मथायुतम् ।
पुरश्चरण मेवं स्यादथ चेद्धनकामना ॥
आर्द्रायां जुहुयादाज्यं कापिलं प्रयतोऽयुतम् ।
धनं बहु भवेत्तस्य महेशस्य प्रसादतः ॥
ज्वरे जातेऽस्य शान्त्यर्थं शिरस्तो भुवि रोगिणः ।
जुहुयात् पञ्चसाहस्रीं दूर्वाणां ज्वर शान्तये ॥

दूर्वाहोमे दूर्वा त्रयं होतव्य मिति परिभाषाया मुक्तम् ।

अभिचारस्य शान्त्यर्थं वैकैकं तत्तदुद्भवाः ।
समिधोजुहुया होम संख्यात्वयुतं भवेत् ॥

---

* द्रापे अन्धसस्पते दरिद्र नीललोहित ।
एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किंचनाममत् ।
—इति य० १६ अ० ४७ क०

महाजनकृतद्रोह शान्त्यर्थं होम माचरेत् ।
तिलाना(तुषाना)ज्येनसम्मिश्राहोमसंख्याविधायुतम् ॥

अथ यातेरुद्र शिवा तनूः शिवेत्यस्य * —

अष्टौ शतानि कुर्व्वीत प्राणायामां स्ततः परम् ।
सहस्राणि जपेत् पञ्च पुरश्चरण सिद्धये ॥
कन्यार्थी लभते कन्यां हुत्वा लाजान् घृतप्लुतान् ।
अपामार्गसमिद्धोमै रलक्ष्मीं नाशयेद्बुधः ॥
सर्वकल्मषनाशाय जुहुयाच्च तिलाहुतीः ।
अहोरात्र मुपोष्यैवं पुत्रकामः शुचिव्रतः ॥
पायसं जुहुयादग्ना वष्टोत्तर शताहुतीः ।
ऋतुस्नातां ततो भार्य्यां शुचिवस्त्रामलङ्कृताम् ॥
भोजयेद्धुतशेषं तु जपन्नष्टशतं बुधः ।
ब्राह्मणान् भोजयित्वातु पुत्रं प्राप्नोति मानवः ॥

अथ मानो महान्त मित्यस्य † —

उपवासत्रयं कृत्वा जपेत् पञ्चसहस्रकम् ।
पुरश्चरण सिद्धः स्यात् प्रयुञ्जीताथ कर्म्मणि ॥

* या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी ।
शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ॥
— इति १०म ७म.

† मा नो महान्त मुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तन्वो रुद्र रीरिषः ॥
—इति १० म. ५म.

स्त्रीपतीवालवृद्धानां शान्तिमिच्छन्निदं चरेत् ।
प्रति संवत्सरं त्वार्द्रानक्षत्रे स्यादुपक्रमः ।
यवानां तिल मिश्राणां जुहुयादयुताहुतीः ॥

अथ मानःस्तोके इत्यस्य* —

कृच्छ्र मेकं चरित्वादौ पात्र औदुम्बरे घृतम् ।
निधाय कापिलं तस्य कुर्य्यान्नैवाभिमन्त्रणम् ॥
सहस्र संख्यया तेन स्वाग्नौ वा मथितेऽपिवा ।
जुहुयादष्टसाहस्रीं तथा व्याहृतिभिः शतम् ॥
एवं कृते सर्वकाम माप्नोत्येव न संशयः ॥

अथ आरात्ते इत्यस्य† —

लक्ष्म्यायुष्कामना यस्य जुहुयात् सोऽयुताहुतीः ।
मध्वक्तै स्तण्डुलैः शुक्लै र्वर्द्धते तस्य मायुषी ‡ ॥
दिनत्रय मुपोष्य प्राक् सिद्धमन्त्रस्य चोच्यते ॥

इति ।

* मा न स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधी र्हविष्मन्तो नमसा विधमते ।
—इति १०म. ६म.

† आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्न मस्मे ते अस्तु ।
रक्षा च नो अधिच देव ब्रूह्यधा च नः शर्म्म यच्छ द्विबर्हा ।
—इति १०म ७म.

‡ मामक्षीः आयुष्मते । इन्दिरा लोकमाता मा क्षीराब्धितनया
रमा इति कोष ।

अथ मीढुष्टमेत्यस्य * —

एकरा(त्रे) तंजपेत् पञ्च सहस्राणि सुसंयतः ।
पुरश्चरणसिद्धः स्यात् प्रयोगार्हस्ततो भवेत् ॥
अर्थनाशभये प्राप्ते तथैव प्राणसङ्कटे ।
तस्करादिभये चैव जुहुयात् सर्पिषाहुतीः ।
पञ्चैवतु सहस्राणि भयेभ्योमुच्यते भृशम् ॥

अथ सहस्राणीत्यस्य † —

कृच्छ्र मेकं चरित्वादौ जपेत् पञ्चसहस्रकम् ।
सचिवादि प्रधानानां पुरुषाणा मुपद्रवे ॥
तच्छान्तये महीपालः कारये दयुताहुतीः ।
समिधस्तत्र शाल्मल्यो विकङ्कतभवा अपि ॥
व्रीहयश्च यवाश्चापि होमद्रव्यं तिला अपि ।
यदि मारणकामः स्याज्जपेच्छत सहस्रकम् ॥
ततो वल्मीक संभूत मृदोलिङ्गं प्रकल्प्य च ।
मन्त्रेणानेनाभिषिञ्चेद् यावच्छीर्णं भवेद्धि तत् ।
एवं कृते भवेन्मृत्युर्विद्विषो नात्र संशयः ॥

---

* मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं
निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ।
—इति १०अ. १०म.

† सहस्राणि सहस्रशो बाह्वो स्तव हेतयः ।
तासा मीशानो भगवः पराचीना मुखा कृधि ॥
—इति १०अ. १२म.

अयं प्रकारो वाजसनेयिनामपि साधारणो यजुर्मन्त्राणामुक्तः । गौरवभीते रत्र नलिखितः ।

अथात्रसर्वत्रदक्षिणेयत्ता निरूप्यते । सापि महार्णवे

दक्षिणात्तूत्तमा मध्याऽधमाचेति त्रिधामता ।
तत्र सौवर्णनिष्काणां दशसाहस्रिकोत्तमा ॥
तदर्द्धं मध्यमा प्रोक्ता तृतीया त्रि सहस्रिका ।
उत्तमा त्रिशती साख्या द्विशती मध्यमा मता ॥
शतमात्राऽधमा ज्ञेया प्रकारोऽन्यश्च कथ्यते ।
उत्तमातु चतुः षष्टि स्तदर्द्धं मध्यमा स्मृता ॥
चतुर्विंशति रन्त्यास्या दद्यान्यो विधिरुच्यते ।
सहस्रं दक्षिणादेया दशपूरुष कर्त्तृके ॥
शतानि पञ्च देयानि ऋत्विक् पञ्चक कर्त्तृके ।
अथैककर्त्तृके देयं शतत्रय मिति स्थितिः ॥
सर्वत्रद्विगुणां दद्यादाचार्य्यायतु दक्षिणाम् ।
बहुपूरुषनिष्पाद्य उत्तमा प्रतिपूरुषम् ॥
अथैककर्त्तृके कर्त्तुरेकस्यैवोत्तमामता ।
राज्ञां तत्सदृशानां च दक्षिणाकथितोत्तमा ॥
अन्येषां मध्यमाऽन्त्या वा दक्षिणादाननिर्णयः ।
अ (सु) युक्त दक्षिणाकेषु प्रयोगेष्वियमीरिता ॥
विभवे सति यो मोहा न्नकुर्य्याद्विधिविस्तरम् ।
नैव तत् फलमाप्नोति प्रलोभाक्रान्त मानसः ॥

इति दक्षिणेयत्ता ।

तत्रैव—

अत्र न्यूनातिरिक्तोक्ति प्रत्यवाय जिहीर्षया।

स्तौमि स्वम्बेरमाधीश चर्मनिर्मित वाससम्॥

जय जय महाभैरव महाभीमभूत भूतिभूषित मूलकुण्डलि कुण्डलालङ्कृत अतिघनविलसित तड़िदुपमित चल दुरुत्तर-करवाल निखिलनिगमोपगीयमानसुरवरकरपरिचयविरचित चतुर चरण शृङ्गारकमल कलितकपाल सरसिजासन शिक्षारित समस्त-व्यस्तजगद्विस्तारसंहारसम्भारसमग्रगुण निरवधिकपरिमाणनीहार परीवार मरीचिविरिञ्चिव्यापार पाथोजललीन ललितजटाजूटाभि-राम हर दुरितहर अपरदिगङ्गनासंभोगसराग पतङ्ग भङ्ग्यालिङ्गि-तोत्तमाङ्ग भ्रूमध्यनयन मदनदमन मत्तमधुकर झङ्कार सङ्गाम मतभृङ्ग संराव किङ्किणी क्वणित ललित पदाहतिक्षितमही-मण्डलाधाराण्डजपति प्रसूयमान ताण्डवाडम्बर फूत्कारोत्-कर्षध्वस्त दैत्यदानवसङ्घातान्तरान्तरित शान्तान्तःकरण अनवरत-धाराधरध्वानगम्भीरवर्वरगलगवय फूत्कार निरस्त गह्वर गुहा-राजी विराजमान धराधराधीशकन्यका कान्ति संक्रान्त निज कलेवरैकदेश अखिलजगदधीश नमस्ते नमस्ते नमस्ते।

एवमन्यदपि स्तोत्रं स्तोतव्यम्। अत्ररुद्रहोमादौ येऽन्ये विशेषा आगमोक्ता स्ते ग्रन्थान्तरतोऽवसेयाः। इत्युपरम्यते।

इति विधानपारिजाते रुद्राध्यायविधानं समाप्तम्।

## अथ उपक्रान्त उपसंह्रियते ॥

आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एवच ।
तस्मादस्मिन् समायुक्तोनित्यं स्यादात्मवान् द्विजः ॥
विहिताकरणं ह्यत्र निषिद्धाचरणं तथा ।
नाना नरकदं पुंसां हीनयोनौ च जन्मदम् ॥
आचाराद्विच्युतो विप्रो न वेद फल मश्नुते ।
आचारेणतु संयुक्तः सम्पूर्ण फलभाग् भवेत् ॥
सर्वलक्षण हीनोऽपि सम्यगा (समुदा)चारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥
अक्रोधनः सत्यवादी भूताना मप्यहिंसकः ।
अजिह्मश्च वदान्यश्च शतं वर्षाणि जीवति ॥
अहन्यहनि विप्राणां कर्म नित्यमिहोदितम् ।
अह्ना निर्वर्त्यते यस्मादाह्निकं तद्विदु र्बुधाः ॥
अनन्ताह्निक नामेद मनन्तार्थ प्रकाशकम् ।
अनन्तेन कृतं यस्मादनन्तस्य प्रसादतः ॥
नागदेव तनूजोऽयं भट्टोऽनन्तो महामतिः ।
आह्निकामृत सेकेन द्विजवृक्षानवर्द्धयत् ॥
सन्ति ग्रन्थ सहस्राणि आह्निकस्य विधौ बुधाः ।
कोऽप्यस्य महिमा येयोऽभिज्ञै र्जयति सर्वतः ॥

न पाण्डित्याभिमानेन न च वित्तस्य लिप्सया ।
रचितं त्वाह्निकं किन्तु विदुषां परितुष्टये ॥
अनेन ग्रन्थदीपेन स्वसन्देहात्मकं तमः ।
अपास्य कर्म्म कुर्व्वन्तु निर्भया ज्ञानिसंसदि ।
वचन प्रसूनमाला वासुदेवे समर्पिता ।
भट्टानन्तेन विदुषा नानानिर्णय चित्रिता ॥

इति श्रीमद्वैदिकोत्तम नागदेव भट्टसूनुना प्रथम शाखिना
श्रीमदनन्तभट्टेन विरचिते विधानपारिजात समाह्वये
निबन्धे तृतीयस्तबके आह्निकप्रकरणं समाप्तम् ।

---

ॐ गणेशाय नमः ।

नत्वा लक्ष्मीपतिं कृष्णं तथा ब्रह्मादिकान् सुरान् ।
गणेशं विघ्नहर्त्तारं वन्दे हैमवतीसुतम् ॥
चतुर्दशसु विद्यासु निष्णाताः शुद्ध मानसाः ।
अपरोक्ष ब्रह्मतत्त्वा जयन्ति गुरवो मम ॥
वन्दे श्रीपितृचरणान् भट्टनागेश संज्ञितान् ।
यत् प्रसादादहं प्राज्ञः सञ्जातो जड़धीरपि ॥
श्रीमाननन्तभट्टोऽहं कायस्थाख्यो सतां मुदे ।
कालस्य निर्णयं वक्ष्ये स्मृतिवाक्यानुसारतः ॥
कला काष्ठामुहूर्त्तादि कालेनावर्त्तयन् जगत् ।
सर्वं नियमयत्येको हृदये स्यात् स मे हरिः ॥

उक्तानां कर्म्मणां काले कर्त्तव्यत्वात् कालः प्रस्तूयते । स च षोढ़ा अब्दोऽयनमृतुर्मासः पक्षो दिवसश्चे(श्च)ति । तत्र अब्दः षष्टि भेदः । तदाह गार्ग्यः—

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ।
अङ्गिराः श्रीमुखो भावो युवा धातेश्वर स्तथा ॥
बहुधान्यः प्रमाथी च विक्रमोऽथ वृषस्तथा ।
चित्रभानुः सुभानुश्च तारणः पार्थिवोऽव्ययः ॥
सर्वजित् सर्वधारी च विरोधी विकृतिः खरः ।
नन्दनो विजयश्चैव जयो मन्मथ दुर्मुखो ॥

हेमलम्बो विलम्बीच * विकारी शार्व्वरी प्लव: ।
शुभकृच्छोभन: क्रोधी विश्वावसु पराभवौ ॥
प्लवङ्ग: कीलक: सौम्य: साधारण विरोधकृत् ।
परिधावी प्रमादी च आन (न्दो)न्दो राक्षसो नल: ॥
पिङ्गल: कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती ॥
दुन्दुभीरुधिरोद्गारी रक्ता(क्षी)क्ष: क्रोधन: क्षय: ॥

इति ।

अयनं सौरन्तु षयात्मकं । "सौरन्तु चितयं प्रदिष्टमयन" मिति दीपिकोक्ते: । तत् द्विविधं दक्षिण मुत्तरं चेति । तत्र कर्क-संक्रान्तिर्दक्षिणं मकरसंक्रान्ति रुत्तरं । अनयो र्विनियोग माह सत्यव्रत:—

देवताराम वाप्यादि प्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाग्रामुखे कुर्व्वन्न तत्फल मवाप्नुयात् ॥

वैखानस:—

मातृभैरव वाराह नरसिंहत्रिविक्रमा: ।
महिषासुर हन्त्री च स्थाप्या वै दक्षिणायने ॥

वै शब्दो ऽप्यर्थे न तु दक्षिणायनएवेतिनियम: । पूर्व्व वचने दक्षिणायने निषिद्धाया देवप्रतिष्ठाया देवान्तरे प्रतिप्रसव माचात् ।

ऋतु र्मासद्वयात्मक: स च षोढ़ा वसन्तग्रीष्मवर्षाशरद्धेमन्त-शिशिरभेदात् । मलमासे तु मासद्वयात्मक एकोमास स्तेन मास-

* हेमलम्बो विलम्बोऽथ इति निर्णयसिन्धौ पाठ: ।

इयात्मकत्वमस्याऽविरुद्ध मिति। स द्वेधा चान्द्र: सौरश्च। चैत्रारम्भो वसन्तादिश्चान्द्र:, मीनारम्भोमेषारम्भो वा सौर:, मीनमेषयो र्मेष-वृषयोर्वा वसन्त इति बोधायनोक्त:। अनयोर्विनियोग माह त्रिकाण्डमण्डने:—

श्रौतस्मार्त्तक्रिया: सर्व्वा: कुर्य्याच्चान्द्रमसर्त्तुषु।
तदभावेतु सौरर्त्तुष्विति ज्योतिर्विदाम्मतम्॥

मासा चैत्राद्या चतुर्धा भिद्यन्ते। तदाह माधवाचार्य्य:—

मासास्तु सावन: सौरश्चान्द्रो नाक्षत्र इत्यमी।
दर्शान्त: पूर्णिमान्तो वा चान्द्रोऽसौ विप्रवैश्ययो:।
सौरो राज्ञ: सावनश्च यज्ञे ज्योतिषिके पर: *॥

इति।

दर्शान्तश्चान्द्रो मासो विन्ध्यस्य दक्षिणेभागे इतरस्तु उत्तरेभागे व्यवह्रियते। संक्रान्त्यादि संक्रान्त्यवधि: सौरोमास: त्रिंशद्दिन: सावन:। नक्षत्र परिवर्त्तनेन नाक्षत्र:।

एतेषां व्यवस्था माह गर्ग:—

सौरो मासोविवाहादौ यज्ञादौ सावन: स्मृत:।
आब्दिके पितृकार्य्येच चान्द्रोमास: प्रशस्यते॥
आयुर्दायविभागश्च प्रायश्चित्त क्रिया तथा।
सावनेनैवकर्त्तव्या शत्रूणां चाप्युपासना॥

इति।

---

* विप्रस्य दर्शान्त: वैश्यस्य पूर्णिमान्त: इत्यर्थ:। परो नाक्षत्र:।

विष्णु धर्म्मे—

नक्षत्रसत्राण्ययनानि चेन्द्रो मांसेन कुर्य्याद् भगणात्मकेन ।
इति ।

ब्राह्मे—

तिथिं कृत्येच कृष्णादिं व्रते शुक्लादिमेवच ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्द्दिशेत् ॥

मलमासादिक माह माधवाचार्य्यः—

चान्द्रोऽधिमासोऽसंक्रान्तः सोऽन्तर्भवति चोत्तरे * ।
असंक्रान्तावेकवर्षे द्वौ चेत् संसर्प आदिमः † ॥
क्षयमासो द्विसंक्रान्तः सचांहस्पति संज्ञकः ।
तत्र स्यात्त्या विवाहादौ संसर्पांहस्पतो उभौ ॥
शुद्धौ श्रौते तथा स्मार्त्ते ‡ मलमासो विविच्यते ।
काम्यारम्भं तत् समाप्तिं मलमासे विवर्जयेत् ॥
आरब्धं मलमासात् प्राक् कृच्छ्रं सत्रादिकं तु यत् ।
तत् समाप्यं सावनस्य मासस्यानति लङ्घनात् § ॥

---

* सः अधिमासः उत्तरे प्रकृते मासि अन्तर्भवतीत्यर्थः ।

† अर्थादन्तिमोऽधिमास इति भावः ।

‡ तथाच अधिमास संसर्पांहस्पतिषु त्रिष्वेव विवाहादि मङ्गलकार्य्याणि न कार्य्याणि श्रौतस्मार्त्त कर्म्माणि तु संसर्पांहस्पत्योः कार्य्याणीत्यर्थः ।

§ तथाच यत्र नवतिदिन साध्यं कर्म्म प्रारब्धं तत्र तथाविध सावन मासानुरोधेन मलमासेऽपि तत् समापनं कार्य्य मित्यर्थः ।

आरभ्यस्य समाप्तेश्च मध्ये स्याच्चेन् मलिम्लुचः।
प्रवृत्तमखिलं काम्यं तदानुष्ठेय मेव तु॥
कारीर्य्यादि तु यत् काम्यं तस्यारम्भ समापने।
कार्य्ये कालविलम्बस्य प्रतीक्षाया असम्भवात् *॥
अनन्य गतिकं नित्यमग्नि होत्रादि (कारयेत्) न त्यजेत्।
गत्यन्तर युतं नित्यं सोम यागादि वर्ज्जयेत् †॥
अगति ग्रहण स्नानं जातेष्टि र्गति संयुता ‡।
इयं नैमित्तिकं तस्य व्यवस्था नित्यवन् मता॥
शुद्ध मास कृतानां तु मलिने प्रथमाह्निकम्।

* कारीरी नाम यागविशेषः। अवग्रहेण शुष्यतां शस्यानां वृष्ट्या सञ्जीवनं तत् फलम्। अतस्तत्र कालप्रतीक्षा न सम्भवति।

† अग्निहोत्रादे रनन्य गतिकत्व सहजः कर्त्तव्यत्वात्। तद्विपरीत्याच्च सोमयागादे र्गत्यन्तरयुतत्वं बोध्यम्।

‡ अगतीति अनन्यगतिकमित्यर्थः। ग्रहण स्नानस्य अनन्यगतिकत्व ञ्च मलिम्लुचे ग्रहणे सति तद्विहितस्य स्नानस्य शुद्धमासे कर्त्तुमशक्यत्वात् बोध्यम्। "वैश्वानरं द्वादश कपालं निर्वपेत् पुत्रे जाते इति विहिताया जातेष्टेः पुत्र जननानन्तरकाले प्राप्तत्वेऽपि जातेष्टि जातकर्म्म सम्पादनानां क्रमेण विहितत्वात् तदानीं तत् करणं च कदाचित् बाल-विपत्ति शङ्कापि स्यात्। अत यथा शुद्धाया मलमासोपगमेऽपि तदाचरणात् तस्याः सगतिकत्व मिति भावः। तथाच अनन्यगतिकं नैमित्तिक मलमासेऽपि कार्य्यं गत्यन्तरयुतं तु नेत्यर्थः।

मलमास मृतानां तु मले स्यादाब्दिकान्तरम् * ॥
इति ।

जाबालोऽपि—

द्वादशाह सपिण्डान्तं कर्म्म यद्वत् जन्मनोः ।
सीमन्ते पुंसवे श्राद्धे हाविती जातकर्म्म च ॥
रोगे शान्ति रलभ्येच योगे श्राद्धं व्रतानि च ।
प्रायश्चित्तनिमित्तस्य वशात् पूर्वे परत्र च ॥
अश्वोदकुम्भ मन्वादि महालय युगादिषु ।
श्राद्धं दर्शोऽप्यहरहः श्राद्ध मूलादि मासिकम् ॥
मलिम्लुचान्यमासेषु मृतानां श्राद्ध माब्दिकम् ।
श्राद्धं तु पूर्वदृष्टेषु तीर्थेष्वेव युगादिषु ॥
मन्वादिषु च यद्दानं दानं दैनन्दिनं च यत् ।
तिल गोभूहिरण्यानां सन्ध्योपासनयोः क्रिया ॥
पर्वहोम स्वाग्रयणं साम्ने रिष्टिश्च पर्व्वणि ।
नित्याग्नि होत्र होमश्च देवतातिथि पूजनम् ॥
स्नानं च स्नानविधिनाप्यभक्ष्यापेय वर्ज्जनम् ।
तर्पणं च निमित्तस्य नित्यत्वा दुभयत्रच ॥
इति ।

---

* पूर्वाब्दे एव चैत्रादौ मृतानां पराब्दे चैत्रादि मंलमासत्वे मलमास एव प्रथमाब्दिकं स्यादित्यर्थः ।
मलमास चैत्रादौ मृतस्य प्रत्याब्दिक श्राद्धं पुनश्चैत्रादि मंलमासत्वे मल-मासि एव कर्तव्यं न तु शुद्ध चैत्रे इत्यर्थः ।

मात्स्ये तु—

अनिन्दु रिन्दुपूर्णाच हरिवारो बुधाष्टमी।
नाधिमासे परित्याज्याः सीमन्ताद्याशने शिशोः॥

इति।

अनिन्दु रमावस्या। यद्यप्यत्र सर्वं वार्षिकं श्राद्धं मलमासे शुद्ध मासेच कर्त्तव्य मित्युक्तं। तथा माधव हेमाद्र्यादि मतात् प्रथमाब्दिकं त्रयोदशे मलमासे। द्वितीयाद्याब्दिकं तु शुद्ध-मास्येव कार्य्यम्।

असंक्रान्तेऽपि कर्त्तव्य माब्दिकं प्रथमं द्विजैः।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा॥

इति हारीतोक्तेः।

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि।
मलमासे न तत् कार्य्यं व्याघ्रस्य वचनं यथा॥

इति सत्यव्रतीयं वचनं द्वितीयादिवार्षिकविषयम्।

आब्दिकं प्रथमं यत् स्यात्तत् कुर्व्वीत मलिम्लुचे।
त्रयोदशेच संप्राप्ते न कुर्य्यात् पुनराब्दिकम्॥

इति यमस्मृतेः।

निर्णयामृते तु। मलमासे श्राद्धदिनस्य वन्ध्यत्वनिरासार्थं पितृद्देशेन ब्राह्मणान् भोजयित्वा शुद्धमासे सपिण्डकं श्राद्धं कर्त्तव्यम्।

पिण्डवर्ज्ज मसंक्रान्तौ संक्रान्तौ पिण्डसंयुतम्।
प्रति संवत्सरं श्राद्ध मेवम् मासद्वयेऽपि च॥

मलमास मृतानां तु मले स्यादाब्दिकान्तरम् * ॥

इति ।

जावालोऽपि—

द्वादशाह सपिण्डान्तं कर्म्म यच्च जन्मनो: ।
सीमन्ते पुंसवे श्राद्धे ह्यावेती जातकर्म्म च ॥
रोगे शान्ति रलभ्येच योगे श्राद्धं व्रतानि च ।
प्रायश्चित्तनिमित्तस्य वशात् पूर्वे परत्र च ॥
अब्दोदकुम्भ मन्वादि महालय युगादिषु ।
श्राद्धं दर्शेऽप्यहरहः श्राद्ध मूलादि मासिकम् ॥
मलिम्लुचान्यमासेषु मृतानां श्राद्ध माब्दिकम् ।
श्राद्धं तु पूर्वदृष्टेषु तीर्थेष्वेव युगादिषु ॥
मन्वादिषु च यद्दानं दानं दैनन्दिनं च यत् ।
तिल गोभूहिरण्यानां सन्ध्योपासनयोः क्रिया ॥
पर्वहोम आग्रयणं साम्ने रिष्टिश्च पर्व्वणि ।
नित्याग्नि होत्र होमश्च देवतातिथि पूजनम् ॥
स्नानं च स्नानविधिनाप्यभक्ष्यापेय वर्ज्जनम् ।
तर्पणं च निमित्तस्य नित्यत्वा दुभयत्रच ॥

इति ।

---

* पूर्वाब्दे शुद्ध चैत्रादौ मृतानां पराब्दे चैत्रादि मलमासत्वे मलमास एव प्रथमाब्दिकं स्यादित्यर्थः ।

मलमास चैत्रादौ मृतस्य प्रत्याब्दिक श्राद्धं पुनश्चैत्रादि मलमासत्वे मल-मासि एव कर्तव्य न तु शुद्ध चैत्र इत्यर्थः ।

मात्स्ये तु—

अनिन्दु रिन्दुपूर्णाच हरिवारो बुधाष्टमी ।
नाधिमासे परित्याज्या: सीमन्ताव्राशने शिशो: ॥

इति ।

अनिन्दु रमावस्या । यद्यप्यत्र सर्वं वार्षिक श्राद्धं मलमासे शुद्ध मासेच कर्त्तव्य मित्युक्तं । तथा माधव हेमाद्र्यादि मतात् प्रथमाब्दिकं त्रयोदशे मलमासे । द्वितीयाद्याब्दिकं तु शुद्ध-मास्येव कार्य्यम् ।

असंक्रान्तेऽपि कर्त्तव्य माब्दिकं प्रथमं द्विजै: ।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा ॥

इति हारीतोक्तेः ।

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न तत् कार्य्यं व्याघ्रस्य वचनं यथा ॥

इति सत्यव्रतीयं वचनं द्वितीयादिवार्षिकविषयम् ।

आब्दिकं प्रथमं यत् स्यात्तत् कुर्व्वीत मलिम्लुचे ।
त्रयोदशेच संप्राप्ते न कुर्य्यात् पुनराब्दिकम् ॥

इति यमस्मृतेः ।

निर्णयामृते तु । मलमासे श्राद्धदिनस्य वन्ध्यत्वनिरासार्थं पितृद्देशेन ब्राह्मणान् भोजयित्वा शुद्धमासे सपिण्डकं श्राद्धं कर्त्तव्यम् ।

पिण्डवर्ज्ज मसंक्रान्तौ संक्रान्तौ पिण्डसंयुतम् ।
प्रति संवत्सरं श्राद्ध मेवम् मासद्वयेऽपि च ॥

इति वृद्धपाराशर स्मृता वुक्तम् । अत्र देशाचारतो व्यवस्था ज्ञेया । क्षयमासे मृतस्य तु यस्यास्तिथेः पूर्वार्द्धे मृतः सैवतिथिः क्षयमासात् पूर्वमासस्याग्राह्या । उत्तरार्द्धेचेन्मृतस्तदा उत्तर-मासस्था ।

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥

इति हेमाद्रिः ।

मलमास व्रत मुक्तं हेमाद्रौ पाद्मे ।
अधिमासेतु संप्राप्ते गुड़सर्पिर्युतानि च ॥
त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने ।
साज्यानि गुड़ मिश्राणि अधिमासे नृपोत्तम ।
अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः ॥
उद्दिश्यापूपदानेन पृथ्वीदान फलं लभेत् ।
एकस्मिन् वाहनि तथा भक्ति शक्त्याद्यभावतः ॥
त्रयस्त्रिंशदपूपाकं कांस्य पात्रे निधाय च ।
सघृतं सहिरण्यं च ब्राह्मणाय निवेदयेत् ॥

तत्र मन्त्राः—

विष्णुरूपी सहस्रांशुः सर्व्व पाप प्रणाशनः ।
अपूपान्न प्रदानेन मम पापं व्यपोहतु ॥
नारायण जगद्वीज भास्करप्रतिरूपक ।
व्रतेनानेन पुत्रांश्च सम्पदं चाभिवर्द्धय ॥
यस्य हस्ते गदाचक्रे गरुड़ो यस्य वाहनम् ।

शङ्ख: करतले यस्य स मे विष्णु: प्रसीदतु ॥
कलाकाष्ठादिरूपेण निमेष घटिकादिना।
यो वञ्चयति भूतानि तस्मै कालात्मने नम: ॥
कुरुक्षेत्र मयं देश: काल: पर्व्व द्विजोहरि:।
पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम ॥
मलानां च विशुद्ध्यर्थं पापप्रशमनायच।
पुत्र पौत्राभि वृद्ध्यर्थं तवदास्यामि भास्कर ॥

इति।

अथ पक्ष:—

स च द्वेधा शुक्ल: कृष्णश्चेति।
देवेमुख्य: शुक्लपक्ष: कृष्ण: पितॄ विशिष्यते।

इति माधवाचार्य्योक्ति:।

अथ तिथि:—

सा च द्वेधा शुद्धा विद्धाचेति।

तदाह माधवाचार्य:—

शुद्धाविद्धा * तिथि: शुद्धा हीना तिथ्यान्ययाहनि।
उदये पूर्व्वया तिथ्या विध्यते त्रिमुहूर्त्तकै: ॥

---

* तिथि: प्रथमतो द्विविधा शुद्धा विद्धाच। तत्र सूर्य्योदयमारभ्य सूर्य्यास्त पर्य्यन्त कालरूपे अहनि अन्यया पूर्व्वया उत्तरया वा तिथ्यारहिता तिथि: शुद्धेत्यर्थ:। इदमपि तावन्मात्र साध्ये कर्म्मणि। एतेन सूर्य्योदय मारभ्य द्वितीय सूर्य्योदय पर्य्यन्ता सर्व्वत्र कर्म्मणि शुद्धेति कैमुतिक न्यायेन सूचितम्।

सायं तूत्तरया तद्वन्न्यूनयातु न विध्यते ।
वेध्याऽपि त्रिमुहूर्त्तैव न न्यूना वेध मर्हति ॥
शुद्धायां नास्ति सन्देहो दैवे पित्रेऽच कर्म्मणि ।
उपवास मेकभक्तं नक्तं चायाचितव्रतम् ॥
दानं च षड्विधं दैवं क्रमादत्रविविच्यते ।
एकोद्दिष्टं पार्वणं च पित्र्यं द्विविध मीर्य्यते ।

अथ प्रतिपन्निर्णीयते—

शुक्लपक्षे दर्शविद्धा कृष्णेविद्धा द्वितीयया ।
उपोष्या प्रतिपच्छुक्ले मुख्या स्या दापराह्णिकी ॥
तदभावेतु सायाह्नव्यापिनी परिगृह्यताम् ।
प्रातः सङ्गव मध्याह्नापराह्णाः सायमित्यसौ ॥
अ(त)श्चाह्नः पञ्चधा भागो मुख्योद्वित्र्यादि भागतः ।
अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते ॥
तिथिस्त्रियामतोऽर्व्वाक् चे * त्तिथ्यन्ते पारणं भवेत् ।
यामत्रयोर्द्ध्वगामिन्यां प्रातरेवहि पारणम् ।
वत्सुत्सवश्च पूर्वेद्यु रुपवासवदाचरेत् ॥
मुख्य तिथ्यन्तराये तु † तिथि शेषोऽपि गृह्यताम् ।
शुद्धाधिकातु कृष्णापि पूर्व्वा संपूर्त्ति सम्भवात् ॥

---

* समाप्यते इति शेषः ।

† पूर्वं विद्धैव तिथि र्मुख्या । तस्या मन्तराये विघ्ने सति । विघ्नेन पूर्वविद्धायां विहित कर्म्माकरणे उत्तरविद्धाया मपि तत् कर्त्तव्य मिति भावः ।

ग्रहीतव्यात्वेकभक्ते मध्याह्न व्यापिनी तिथिः।
परेद्युरेव पूर्व्वेद्यु रेव व्याप्तिर्द्दिनद्वये * ॥
नोभयत्रोभयत्रांशे साम्यं वैषम्य मित्यमी।
षट्पक्षास्तेषु † चैकैकव्याप्तौ सैवात्र गृह्यताम्॥
दिनद्वयेऽपि तद्व्याप्तौ अव्याप्तौ चैकदेशतः।
समव्याप्तौ च पूर्व्वैव वैषम्ये त्वधिकेष्यताम्॥
मध्याह्नस्यैकभक्तस्य कालस्त्वह्नानुसारतः।
उपवासप्रतिनिधेस्तिथिः स्यादुपवासवत्॥
प्रदोषव्यापिनी नक्ते तिथि र्व्याप्तिर्द्दिनद्वये।
अव्याप्तिर्वाथवांशेन व्याप्तिः स्यात् सर्व्वथोत्तरा॥
सौरनक्ते तु सायाह्न व्यापिनी ‡ न प्रदोषगा।
अयाचिते तु तिथयः स्वीकार्य्या उपवासवत्॥
सोदय त्रि मुहूर्त्तायां § कुर्य्याद्दानं व्रतानि च।
उभयत्र तथात्वेतु पूर्व्वेद्यु स्तदनुष्ठितिः॥

---

परेद्युरेव तद्व्याप्तिः पूर्वेद्यु र्वा दिनद्वये। इत्याकरे पाठः।

पूर्वेद्युरेव मध्याह्नव्याप्ति रित्येकः पक्षः। उत्तरेद्युरेव तद्व्याप्तिरित्यपरः। दिनद्वयेऽपि मध्याह्नव्याप्ति रित्यन्यः। नैकस्मिन्नपि दिने मध्याह्नव्याप्ति रित्यपरः। कस्मिन्नपि दिने न सम्पूर्ण मध्याह्न व्याप्तिः किन्तूभयत्रैव अंशतस्तद्व्याप्ति रित्यन्यः पक्षः। अयं च पक्षोऽशंस्य साम्य वैषम्याभ्यां द्विधा भिद्यते इत्यमी षट् पक्षाः।

मुख्येति शेषः। प्रदोषव्याप्ति स्तु नक्तस्य इति भावः।

उदयेन सहिता त्रयो मुहूर्त्ता यस्या मिति विग्रहः।

परत्रैव तथात्वञ्चेत् पूर्वा ग्राह्यातिथिक्षये ।
तिथिः साम्येच वृद्धौ च ग्राह्यतां तिथिरुत्तरा * ।
अस्पर्शे (अप्राप्ते) चैकदेशस्य व्याप्तौ पूर्व्वैव गृह्यताम् ॥
एकोद्दिष्टे तु मध्याह्न युक्ता स्या देवभक्तवत् ।
एकदेश समव्याप्तौ क्षये पूर्व्वाऽन्ययोत्तरा ॥
कुतपाद्यपराह्णान्तव्याप्ति राब्दिक उत्तमा ।
तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः ॥
क्षये पूर्व्वोत्तरा वृद्धौ व्याप्तिश्चेदपराह्णयोः ।
न ग्राह्यौ तिथिगौ वृद्धिक्षया वृद्धितिथिस्तु तौ ॥
साम्ये तूद्धतिथे र्ग्राह्या परविद्धैव वृद्धिवत् ।
नस्पृशेदपराह्णौ चेत् पूर्वास्यात् कुतपोक्षया ॥
वैषम्येनैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः ।
साम्येन चेत् क्षये पूर्वा परास्याद्वृद्धिसाम्ययोः ॥
वृद्धिसाम्य क्षया ग्राह्यतिथिगा नोद्भगा इह ।
पूर्व्वेद्यु रसतौ प्रातः परेद्यु स्त्रिमुहूर्त्तगा ॥
सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽपरा † ।

* यदा तु पूर्वेद्युः सोदय त्रिमुहूर्त्तमस्पृश्य परेद्युरेव सोदय त्रिमुहूर्त्तं व्याप्नोति तदा ग्राह्यतिथे र्वृद्धिक्षय साम्यानुरोधेन निर्णयः। तत्र ग्राह्यतिथिः क्षये पूर्वा साम्ये वृद्धौ चोत्तरेति वक्तव्यार्थः।

† प्रातः मुहूर्त्तत्रयात्मके। अपरा भिन्ना पूर्वेद्यु स्त्रिमुहूर्त्तं व्यापिनी परेद्यु स्तद्व्यापिनी सर्वथा असती वेत्यर्थः। अयमर्थः। यद्यपि द्वितीया कृष्णा पूर्वा शुक्ला परा इति सामान्यतो निर्णय स्तथापि पूर्वेद्यु स्त्रिमुहूर्त्त-

सत्त्वारचीयः सामान्यात्तिथिषु प्रतिपन्नयः ॥

अथ तृतीया—

रम्भाख्यतीया पूर्वास्यादुत्तरास्याद्व्रतान्तरे ।
परेऽह्नि नास्ति चेत् पूर्वविद्धाऽप्यस्तु व्रतान्तरे ।
मुहूर्त्तं मात्र सत्त्वेऽपि दिने गौरीव्रतं परे * ॥
युग्माधिक्याया मप्येवं गणयोग † प्रशंसनात् ।

अथ चतुर्थी—

चतुर्थी तु परोपोष्या गणनाथ व्रतस्य तु ।
मध्याह्नव्यापिनी पूज्या तद्भाग चतुर्थ्यपि ॥
परेद्युरेव मध्याह्न व्याप्ती विघ्नस्य सोत्तरा ।
अन्यथा पूर्वविद्धैव मातृयोग ‡ प्रशंसनात् ॥
पूर्वेद्युरेव तद्व्याप्ती पूर्वा स्यं प्रिया तिथिः ।

---

व्यापित्व एव ग्राह्या पूर्वा नोचेत् परैव । यदि परदिनेऽपि त्रि मुहूर्त-न्यूना नास्त्येव वा तदापि पूर्वैव । एवं परदिने त्रि मुहूर्त व्यापित्व एव ग्राह्या परा, यदि परदिने ततो न्यूना नास्त्येव वा तदापि पूर्वैव ।

* परे दिने इत्यर्थः । मुहूर्त्तमात्रेति पूर्वविद्धा विषय मिति केचित् । परदिने मुहूर्त्त मात्र सत्त्वेऽपीत्यन्ये । ते तु वदन्ति मुहूर्त्त मात्रेति मतान्तर न तु ग्रन्थकर्त्तु र्मतं । तन्मते त्रिमुहूर्त्तादर एवेति । युग्माधि-क्याया मिति तु पूर्वदिने घटिकाद्वयोत्तरं प्रवृत्तविषयं । तदा तस्याः त्र्यहव्याप्तेऽपि त्रिविध विद्धाभावेन पूर्वावत् प्रशस्तादिति भावः ।

† गणो गणपति स्तत्तिथि चतुर्थीति यावत् ।

‡ माता मातृदैवताका तृतीया ।

नोचेत् सर्पस्य पञ्चम्या योगोऽत्यन्तं प्रशस्यते ॥
गौर्य्याः शुक्लजयाप्यस्तु नागविद्धा निषिध्यते ।

अथ पञ्चमी—

सर्वत्र पञ्चमी पूर्वा ग्राह्या स्कन्दव्रते परा * ।

अथ षष्ठी—

नागविद्धा स्कन्दषष्ठी सा निषिद्धा व्रतान्तरे ।
उत्तरस्या अलाभेतु नागविद्धापि गृह्यताम् ।
विना द्वादश नाडीभि र्नागवेधो न दोषकृत् ॥

अथ सप्तमी—

सप्तमी पूर्व्वविद्धैव व्रतेषु निखिलेष्वपि ।
अलाभे पूर्व्वविद्धायाः परविद्धापि गृह्यताम् ॥

अथ अष्टमी—

व्रतमात्रेऽष्टमी कृष्णा पूर्व्वा शुक्लाष्टमी परा ।
दूर्वाष्टमी च शुक्लापि पूर्व्वविद्धाविधीयते ॥
पञ्चद्वयेऽप्युत्तरयुक् † शिवशक्ति महोत्सवे ।

---

* माधव मत मेतत् हेमाद्रि मतेतु कृष्णा पूर्वा सितापरा ।
कृष्णापूर्व युता सिता परयुता स्यात् पञ्चमीति दीपिकोक्तेः ।
वस्तुतस्तु माधवोक्ति रुपवास विषया । प्रतिपत्पञ्चमी चैव
सावित्री भूत पूर्णिमा । नवमी दशमी चैव नोपोष्याः परसंयुताः ।
इति ब्रह्मवैवर्त्तवचनात् ।

† पञ्चद्वये प्युत्तरैव रत्नाकरे पाठ' ।

ज्येष्ठा योगेतु पूर्वैव * ग्राह्या ज्येष्ठाव्रतेतिथिः ॥
मध्याह्नादूर्द्ध्वं वृद्धचेत् परेद्युः सा प्रशस्यते ।
ज्येष्ठर्क्ष भानुवाराभ्यां युक्ताष्टम्यतिदुर्लभा ॥
जयन्त्याख्यं व्रतं भिन्नं कृष्णजन्माष्टमीव्रतात् ।
शुद्धाच सप्तमीविद्धेत्येवं जन्माष्टमी द्विधा ॥
सप्तमी चेन्निशीथात् प्राग्विद्धा शुद्धाऽन्यथा भवेत् ।
शुद्धायां नास्ति सन्देहो विद्धाच त्रिविधेष्यते ॥
निशीथ योगः पूर्वेद्युः परेद्युर्वा द्वयोरुत ।
पूर्वैव प्रथमे पक्षे परैवोत्तरपक्षयोः ॥
अष्टमी रोहिणीयुक्ता जयन्ती सा चतुर्विधा ।
शुद्धा शुद्धाधिकेत्येवं विद्धा विद्धाधिकेति च † ॥
शुद्धायामपि विद्धायां न सन्धाव्योत्तरा तिथिः ।
शुद्धाधिकायां योगश्चे देकस्मिन् वा दिनद्वये ॥
नैकयोगेऽस्ति सन्देहोद्वियोगे प्रथमं दिनम् ।
सदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधमः ॥
योग स्त्रिधापि पूर्व्वेद्युः सम्पूर्णत्वा दुपोषणम् ।

---

* ज्येष्ठर्क्षयोगे पूर्वापि इत्याकरे पाठः ।

† या पूर्वदिने सप्तमीयोग मप्राप्तवती तत्रैव समाप्यते सा अष्टमी शुद्धा ।
या तु पूर्वदिने सम्पूर्णा सती परदिनेऽपीषन्निःसरति सा शुद्धाधिका ।
या पुनः सप्तमीयुक्तापि पूर्वदिन एव समाप्यते सा विद्धा ।
यात् पूर्वदिने सप्तमीविद्धासती परदिनेऽपि निःसरति सा विद्धाधिका ।

इति ।

विद्धाधिकाया मध्येऽह्नि योगे स गृह्यताम् ॥
द्वयोर्योगस्त्रिधाभिन्नो निशीथे वृत्तिभेदतः ।
तद्वृत्तिर्हिन एकस्मिन्नुभयो र्नोभयो रिति ॥
एकस्मिंश्चेत्तद्दिनं स्यात् पक्षयोरुभयोः प(रा)रम् ।
बुधे सोमे जयन्ती चेद्वारे सातिफलप्रदा ॥
तिथ्यृक्षयो र्द्वयोरन्ते उत्तमं पारणं भवेत् ।
एकस्यान्ते मध्यमं स्यादुभयान्तेऽधमं स्मृतम् ॥
यस्मिन् वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा ।
अन्तर्भूता जयन्त्यां स्या द्वययोग प्रशस्तितः ।
नोपवासद्वयं कार्य्यमुपोष्यं तु परं दिनम् ॥

अथ नवमी—

नवमी पूर्वविद्धैव पक्षयोरुभयोरपि * ।
न कुर्य्यान्नवमीं चैव दशम्येतां कदाचन ॥

अथ दशमी—

कृष्णा पूर्व्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ।

अथ एकादशी—

सनत्कुमारसंहितायाम्—

एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः ।
तस्यां तु भोजनं कुर्व्वन् रौरवं नरकं व्रजेत् ॥

---

* मध्याह्ने रामनवमी पुनर्वसुसमन्विता ।
ग्राह्या नैवाष्टमीयुक्ता सनवचापि वैष्णवैः ॥
इति कमलाकरः ।

वरं स्वमातृगमनं वरं गोमांसभक्षणम्।
वरं हत्या सुरापानं नाश्न मेकादशीदिने॥
साय माद्यन्तयो रह्नोः सायं प्रातश्च मध्यमे।
उपवास फलं प्रेप्सु र्जह्याद् भक्तचतुष्टयम्॥
अथ मुपवासो नित्यः काम्यश्च—
नित्यं सदा यावदायु र्नकदाचि दतिक्रमेत्॥
उपेत्या (इत्युक्त्वा)तिक्रमे दोष श्रुते रत्याग चोदनात्।
फलाश्रुतेर्वीप्सयाच तन्नित्य मिति कीर्त्तितम्॥
द्वादशी न प्रमोक्तव्या यावदायुः सुवृत्तिभिः।
एकादश्या मुपवसेन्न कदाचिदतिक्रमेत्॥
परमापद मापन्नो हर्षे वा समुपस्थिते।
सूतके मृतकेचैव न त्यजेद्द्वादशीव्रतम्॥
पक्षे पक्षेच कर्त्तव्य मेकादश्यामुपोषणम्।
उपवासे त्वशक्तानां मशीतेरूर्द्ध जीविनाम्॥
एकभक्तादिकं कार्य्य माह वौधायनो मुनिः।
एक भक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन दानेन न निर्द्वादशिको भवेत्।
पयोमूलं फलं वापि हविं कुर्व्वीत मानवः॥
असामर्थ्ये शरीरस्य व्रतेच समुपस्थिते।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम्।
भ्रातरं भगिनीं शिष्यं कारयेद्ब्राह्मणादिकः।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्॥

पितृ मातृ स्वसृ भ्रातृ गुर्व्वर्थेच विशेषतः।
उपवासं प्रकुर्व्वाणः पुण्यं शतगुणं लभेत्॥
दक्षिणामात्र दातव्या शुश्रूषा विहिताहि सा।
नारी च पतिमुद्दिश्य एकादश्यामुपोषिता।
यज्ञजं फल माप्नोति प्राहुरेवं विपश्चितः।
उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम्॥
राज्यस्य क्षत्रियस्यार्थे एकादश्या मुपोषितः।
पुरोधाः क्षत्रियस्यार्द्धं फलं प्राप्नोतिनिश्चितम्॥
पितामहादीनुद्दिश्य एकादश्यामुपोषणे।
कृते ते तु स्वयं विप्राः समग्रं फल माप्नुयुः॥

ते पितामहादयः—

कर्त्तादशगुणं पुण्यं प्राप्नोत्यत्र न संशयः।
एकादश्या महोरात्रं भुक्त्वा चान्द्रायणं चरेत्॥
इत्याद्यस्य नित्यत्वाववोधकम्।
एकादशी समं किञ्चित् पापत्राणं न विद्यते।
स्वर्गं मोक्ष प्रदाह्येषा राज्य पुत्र प्रदायिनी॥
सुकलत्रप्रदाह्येषा शरीरारोग्यदायिनी।
अनायासेन राजेन्द्र प्राप्यते वैष्णवं पदम्॥
इत्यादि काम्यत्वाववोधकम्।

काम्ये नैक भक्तादि प्रतिनिधिः—

काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः।
काम्येऽप्युपक्रमादूर्द्ध्वं केचित् प्रतिनिधिं विदुः॥

इति वचनात् ।

अथ दिनत्रयेतिकर्त्तव्यता लिख्यते ।

ब्रह्मवैवर्त्ते—

प्राप्ते हरिदिने सम्यग् विधाय नियमं निशि ।
दशम्या मुपवासस्य प्रकुर्य्यादन्तधावनम् ॥
अक्षारलवणा: सर्वे हविष्यान्ननिषेविण: ।
अवनीतल्पशयना: प्रियासङ्गविवर्ज्जिता: ॥

इदमक्षारादिक मन्यस्य विहित प्रतिषिद्धस्योपलक्षणं काम्ये तदुपसंहारस्य आवश्यकत्वात् ।

उपवासफलं प्रेप्सु र्जह्याद् भक्तचतुष्टयम् ।

इत्यत्र फलपदश्रवणेन काम्यविषयताया: स्वीकरणाच्च ।

एतद् व्रतारम्भमन्त्रो विष्णुधर्म्मोत्तरे—

शरीर मन्त: करणोपघातं वाचश्च विष्णुर्भगवानशेषम् ।
शमं नयत्वस्तु ममेह शर्म्म पायादनन्तो हृदि सन्निविष्ट: ॥
अन्त: शुचिं बहि: शुचिं शुद्धो धर्म्ममयोऽच्युत: ।
स करोतु ममैतस्मिन् शुचिरेवास्मि सर्वदा ।
वाङ्मोपघातानमघो वीतांश * भगवानज: ।
शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थित: ॥

इति ।

* वाङ्मोपघातनिलयाभीष्टांश । इत्येकादशीतत्त्वे पाठ: ।

एकादश्यां सङ्कल्पमन्त्रोवक्ष्यते—

उपवास निर्वचनं विष्णुधर्म्मोत्तरे।

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः सविज्ञेयः सर्वभोगविवर्ज्जितः॥

पापेभ्यो व्रताङ्गनिषेधरूपेभ्यः। तानिच।

असत्य भाषणं द्यूतं दिवा स्वप्नं च मैथुनम्।
एकादश्यां न कुर्व्वीत उपवास परो नरः॥

इत्यादीनि।

गुणै र्व्रताङ्गत्वेन विहितैर्जप ध्यानार्च्चनादिभिः।

ते च विष्णुधर्म्मोत्तरे—

तन्मन्त्र जपनं ध्यानं तत् कथा श्रवणादिकम्।
तदर्च्चनं च तस्यैव कीर्त्तन स्मरणादिकम्॥
एकादश्यां विशेषेण मोक्तव्यं भोजनद्वयम्।
रात्रौ जागरणं चैव दिवाच हरिकीर्त्तनम्॥
उपवासकृतामेते गुणाः प्रोक्तामनीषिभिः।

इति।

सर्वभोगाः भोजनताम्बूल स्रग्वनितासङ्गादयः तैर्वर्ज्जित स्पवासः अहोरात्र मवस्थान मित्यर्थः।

भोगास्तु विष्णुरहस्ये—

अन्नावलोकन गन्धादिस्वादनं परिकीर्त्तनम्।
अन्नस्य वर्ज्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम्॥
गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम्।

असकृज्जलपानं च दिवास्वापं च मैथुनम् ।
व्रतस्थो वर्ज्जयेत् सर्वं यच्चान्यच्च विनाशनम् ॥

हारीतः—

पतित पाषण्डि नास्तिकसंभाषण मनृताश्लीलादिकं उपवासादिषु वर्ज्जयेत् ।

कूर्म्मपुराणे ।

बहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥
उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।
श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्र्याः शतसंपूत मम्बु प्राश्य विशुध्यति ॥

केचित्तु—

तृण पर्णैः सदा कुर्य्यादमामेकादशीं विना ।
तयोरपिहि कुर्व्वीत जम्बूम्राम्रपल्लवैः ॥

इत्याहुः ।

स्त्रीणां सम्प्रेक्षणात् स्पर्शात्ताभिः सङ्कथनादपि ।
भिद्यते ब्रह्मचर्य्यं च स्वदारेष्वनुसङ्गमात् ॥

इति च ।

ब्राह्मे—

एकादश्यां नरो भक्त्या निराहारः समाहितः ।
नानापुष्पै र्मुनिश्रेष्ठ विचित्रं पुष्पमण्डपम् ।
कृत्वा चावरणं पश्चाज्जागरं कारयेन्निशि ॥

सम्पूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः ।
प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।
अज्ञान तिमिरान्धस्येति मन्त्रेण * ॥
द्वादश्यां पारणं कुर्य्याद्वर्ज्जयित्वाम्बुपोदकीम् † ।
इति ।

माधवाचार्य्योऽपि—

जयन्तीव्रतवन्नित्यं काम्यं चैकादशीव्रतम् ।
अरुणोदयवेधोऽस्त्ववेधः सूर्य्योदये तथा ‡ ॥
उक्तौ द्वौ दशमीवेधौ वैष्णव स्मार्त्तयोः क्रमात् ।
कला काष्ठादि वेधोऽपि ग्राह्योऽत्र निमुहूर्त्तवत् ॥
वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः § ।
विद्धा त्याज्या वैष्णवेन शुद्धाप्याधिक्यसंभवे ॥
एकादशी द्वादशी वा ऽधिकाचेत्त्यज्यतां दिनम् ।
पूर्वं ग्राह्यं तूत्तरं स्यादिति वैष्णवनिर्णयः ॥

---

* अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥

† उपोदकी पूतिका द्वादश्यां तद्भक्षण निषेधात् ।

‡ उदयात् प्राक् चतस्रो नाडिका अरुणोदयः । तत्र दशमी प्रवेशे ऽरुणोदय वेधः सूर्य्योदये तत् प्रवेशे सूर्य्योदयवेध इति विवेकः ।

§ आदिना नारद पञ्चरात्रादि परिग्रहः । तेनाप्रसिद्धवैष्णवोऽपि भागवतः यद्यपि स स्मार्त्त एव तथापि तेन अरुणोदयविद्धापि सर्वथा त्याज्या इति वेदितव्यम् ।

तत्त्ववादिनस्तु—

एकादशी यदा शुद्धा द्वादश्येवातिरिच्यते।
उपवासद्वयं कृत्वा द्वादश्यामेव पारयेत्॥
कला वा घटिका वापि परेद्युर्द्वादशी यदि।
द्वादश द्वादशी र्हन्ति। पूर्वेद्युः पारणे कृते *॥
इति पद्म पुराणोक्तेरित्याहुः।
उदये नवमी किञ्चित् सकला दशमी यदि।
तदा परदिनं ग्राह्य मिति वैष्णव सम्मतिः॥
परमापद मापन्नो हर्षे वा समुपस्थिते।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी॥
समात्मा सर्वजीवेषु निजाचारा दविप्लुतः।
विष्णुर्पिताखिलाचारः स हि वैष्णव उच्यते।
यथा शुक्ला तथा कृष्णा ह्युपोष्या वैष्णवैः सदा॥
इति पद्मपुराणोक्तस्मार्त्तनिर्णय उच्यते।
एकादशी द्वादशी चेत्युभयं वर्त्तते यदा।
तदा पूर्वदिनं त्याज्यं स्मार्त्तैर्ग्राह्यं परं दिनम्॥
एकादशी मात्र वृद्धौ गृहियत्योर्व्यवस्थितिः।
उपोष्या गृहिभिः पूर्वा यतिभि स्तूत्तरातिथिः।
द्वादशी मात्र वृद्धौतु शुद्धा विद्धे व्यवस्थिते॥
शुद्धा पूर्वोत्तरा विद्धा स्मार्त्तनिर्णय ईदृशः।
द्वादशी मात्र वृद्धौ तु स्मार्त्तैः पूर्व्वैवकार्य्येत्यर्थः॥

* त्रयोदश्यां तु पारणमित्येकादश्युक्तमत्र पाठः।

यत्तु हेमाद्रौ—

वहुवाक्य विरोधेन सन्देहो जायते यदा ।
द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणम् ।

इति मार्कण्डेय वचनं ।

तथा—

सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत् ।
पारणाच त्रयोदश्या माज्ञेयं मामकी मुने ॥

इति पद्मपुराण वचनं च । तद्वैष्णवविषय मिति मन्तव्यम्

विवादेषु च सर्वेषु द्वादश्यां समुपोषणम् ।
वैष्णवस्तु तदा कुर्य्या त्रयोदश्यां तु पारयेत् ॥

इति पुराण समुच्चयोक्तेः ।

यत्तु—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थ यति धर्म्मोऽयं शुक्ला मेव सदागृही ॥

इति देवलवचनम् ।

शयनी बोधनी चैव याकृष्णैकादशी भवेत् ।
सैवोपास्या * गृहस्थेन नान्याकृष्णाकदाचन ॥

इति पाद्मवचनम् ।

तथा—

विधवाया वनस्थस्य यतं श्चैकादशीद्वये ।

---

* सैवोपोष्या इति बहुषु निबन्धेषु पाठः ।

उपवासो गृहस्थस्य शुक्लाया मेव पुत्रिणः ।

इति सुमन्तु वचनं च ।

पुत्रवद् गृहस्थस्य कृष्णैकादश्युपवासं निषेधति ।

तद्वैष्णवविषयम्—

पुत्रवांश्च गृहस्थश्च बन्धुयुक्त स्तथैव च ।

उभयोः पक्षयोश्चैव व्रतं कुर्य्याच्च वैष्णवः ।

इति नारदोक्तेः ।

उपवासनिषेधेऽपि भोजनं न कार्य्यम् ।

तदुक्तं वायवीयसंहितायाम्—

उपवासनिषेधेतु * किञ्चिद् भक्ष्यं प्रकल्पयेत् ।

न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

भक्ष्यमपि तत्रैवोक्तम्—

नक्तं हविष्यान्न मनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।

यत् पञ्चगव्यं यदि वाथ वायुः प्रशस्त मत्रोत्तरमुत्तरं च । †

अत्र एकादशी व्रतोपयुक्तं किञ्चिदुच्यते ।

माधवीये कात्यायनः—

अष्ट वर्षाधिको मर्त्त्योह्यशीतिन्यूनवत्सरः ।

---

* उपवासे निषिद्धे तु इति कालमाधवीये पाठः ।

† उपवासासमर्थस्तु एकभक्तादीनि कुर्य्यात् ।

तथा च स्मृतिः—

उपवासे त्वशक्तानां सर्व्वेषां वृद्धजीविनाम् ।

एकभक्तादिकं कार्य्यं माह बौधायनो मुनिः । इति ।

एकादशी मुपवसेत् पक्षयोरुभयोरपि।
ब्राह्मणः क्षत्रियोवैश्यः शूद्रास्चापि तथास्त्रियः॥
इति।

यत्तु—

पत्यौ जीवति या नारी उपवासव्रतं चरेत्।
आयुष्यं हरते भर्त्तुर्नरकं चैवगच्छति॥
इति विष्णु वचनं तत्तु भर्त्तुननुज्ञाविषयम्।
भार्य्या पत्यु र्मतेनैव व्रतादीनाचरेत् सदा॥
इति कात्यायनोक्तेः।

एकादशी व्रताकरणे प्रायश्चित्तमाह कात्यायनः।

अर्के पर्वद्वये रात्रौ चतुर्द्दश्यष्टमी दिवा॥
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत्।

## अथ दशम्यादिनियमाः।

कूर्म्म पुराणे--

कांस्यं मांसं मसूरांश्च चनकान् कोरदूषकान्।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् *॥
शाकं माषं मसूरांश्च पुनर्भोजन मैथुने।
द्यूतमत्यम्बुपानं च दशम्यां वैष्णवस्त्यजेत्॥

हेमाद्रौ देवलः—

असकृज्जलपानाच्च सकृत्ताम्बूलचर्व्वणात्।

* अत्रोपवसन्निति तद्दिने भोजनाभावात् सामीप्यात् पूर्वापरदिनयो र्ग्रहणं।

उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ।
असकृज्जलपानाच्च नोपवासः प्रणश्यति ॥

विष्णुरहस्येऽपि—

गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् ।
व्रतस्थो वर्ज्जयेत् सर्वं यच्चान्यच्च निराकृतम् * ॥

एषु संजातेषु प्रायश्चित्तमुक्तं तत्रैव—

स्तेन हिंसकयोः सख्यं कृत्वा स्तैन्यं च हिंसनम् ।
प्रायश्चित्तं व्रती कुर्य्याज्जपेन्नाम शतत्रयम् ॥
मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे ।
अष्टाक्षरं † व्रतीजप्त्वा शतमष्टोत्तरं शुचिः ॥

पैठीनसिरपि—

ताम्बूलचर्व्वणे स्त्रीसंभोगे मांसनिषेवणे ।
व्रतलोपो भवेत् कुर्य्यात् कृष्णनामजपं हृदि ॥

इति ।

उपवासे तथा श्राद्धे न कुर्य्याद्दन्तधावनम् ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ‡ ।
तृण पर्णैः सदा कुर्य्यादमामेकादशीं विना ॥

इति तृणादेरपि निषेधः ।

* निराकृतं दोषजनकत्वेन मुनिभिर्निषिद्धम् ।

† ओं नमो नारायणाय इत्यात्मकम् मन्त्रमिति शेषः ।

‡ हन्ति सप्त कुलानि च । इति माधवीये पाठः ।

प्रमादाद्दन्तकाष्ठ भक्षणे प्रायश्चित्तमुक्तं विष्णुरहस्ये—

श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ॥
गायत्र्या: शतसंपूत मम्बु प्राश्य विशुध्यति ।
वर्ज्जयेत् पारणे मांसं व्रतार्होऽप्यौषधं सदा ॥

इति ।

एकादश्यां श्राद्धप्राप्तौ माधवीये कात्यायन: ।
उपवासो यदानित्य: श्राद्धं नैमित्तिकं भवेत् ॥
उपवासं तदाकुर्य्यादाघ्राय पितृसेवितम् ।
मातापित्रो: क्षयेप्राप्ते भवेदेकादशी यदि ।
अभ्यर्च्य पितृदेवांश्चाजिघ्रेतपितृसेवितम् ।

इति हेमाद्रि निबन्धेच ।

अत्र वैष्णवानां विशेष उक्तोनृसिंहपरिचर्य्यायां विष्णुभक्ति चन्द्रोदये च पद्मपुराणे ।

एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत् ।
तद्दिनं तु परित्यज्य द्वादश्यां श्राद्ध माचरेत् ॥

न चात्र काललोप: शङ्का: । तदादिवाभिसम्बन्धा सदन्त-मपकर्षेस्यादिति तदन्तापकर्ष: । मांसन्या(स)यसिद्धत्वादिति ।

स्मृति चन्द्रिकायामपि—

अन्नाश्रितानि पापानि तद्भोक्तुर्दातुरेवच ।
मज्जन्ति पितरस्तस्य नरके शाश्वती: समा: ।
एकादश्यां ततो नैव श्राद्धं कुर्व्वीत वैष्णव: ॥

इति ।

## अथैकादश्यां व्रतसङ्कल्पो माधवीये ।

गृहीत्वौदुम्बरं पात्रं * वारिपूर्णं मुदङ्मुखः ॥
उपवासं तु गृह्णीयाद् यद्वा वार्य्येव धारयेत् ॥

तत्र मन्त्रः—

एकादश्यां निराहारः स्थित्वाह मपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥

इति ।

केचिद्दशम्यां दन्तधावनं कृत्वा देवाग्रे त्विमं मन्त्रं पठन्ति ।

अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसी(सा)द सुमुखो भूत्वा ज्ञानदृष्टि प्रदोभव ॥

इति ।

द्वादश्यां वर्ज्यान्याह बृहस्पतिः—

दिवानिद्रां परान्नं च पुनर्भोजन मैथुने ।
क्षौद्रं कांस्यामिषे तैलं द्वादश्यामष्टवर्ज्जयेत् ॥

ब्रह्माण्डपुराणेऽपि--

पुनर्भोजन मध्यायो भार आयास मैथुने ।
उपवासफलं हन्यु दिवानिद्राच पञ्चमी ॥

विष्णुधर्म्मे--

असम्भाष्यान् हि सम्भाष्य तुलसीतसिकादलम् ।
आमलक्याः फलं वापि पारणे प्राश्य शुध्यति ॥

* औदुम्बरं ताम्रम् ।

पारणे पारणासमये—

एकादशीव्रतं सूतकेऽप्यनुष्ठेयमित्याह विष्णुः—

सूतके मृतके वापि नत्याज्यं द्वादशी व्रतम् ॥
त्यजन् वै नरकं याति यावदाभूतसंप्लवम् * ।

तत्र त्यक्तं दानादि तु सूतकान्ते देयम् ।

सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्द्दनम् ।
दानं दत्त्वाविधानेन व्रतस्य फल मश्नुते ॥

इति मात्स्योक्तेः ।

एतद्रजस्वलयापि कार्य्यम्—

एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि ।

इति पाद्मोक्तेः ।

एते नियमाः काम्यव्रते नियताः नित्यव्रतेतु यथाशक्ति कार्य्याः ।

इति विज्ञाय कुर्व्वीतावश्य मेकादशी व्रतम् ।
विशेष नियमाशक्तोऽह्नोरात्रं भुजिवर्ज्जितः ॥

इति ब्रह्मवैवर्त्तोक्तेः ।

द्वादश्यां यदि श्रवणर्चं भवति तदा द्वादश्यामुपवासः कार्य्यः ।

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयो(रप्यु)रेवोपवासश्च त्रयोदश्यां तु पारणम् ।

इति नार(दोक्तेः) दीये

उपवासद्वयाशक्तौ द्वादशीं समुपोषयेत् ।

इति च ।

---

* भूतानां संप्लवो लयस्तत्पर्य्यन्तमाप्रलयमित्यर्थः ।

## अथाष्टौ महाद्वादश्यः ।

तत्र शुद्धाधिकैकादशी युता द्वादशी उन्मीलनी संज्ञा। द्वादश्येव शुद्धाधिका वर्द्धमाना वञ्जुली। वासरत्रयस्पर्शिनी त्रिस्पृशा। अग्रे पर्वणः सम्पूर्णाधिकत्वे पक्षवर्द्धनी। पुष्यर्क्षयुता जया। श्रवणर्क्षयुता विजया। पुनर्वसुयुता जयन्ती। रोहिणीयुता पापनाशनी। अत्र विशेषवचनानि कालनिर्णयदीपिका विवरणादौ द्रष्टव्यानि। विष्णुप्रीति कामः पापक्षयमुक्तिकामश्च एता अष्टौ महाद्वादशी रुपवसेत् ।

एकादशी मुपोष्यैव द्वादशीं समुपोषयेत् ।

इति विष्णुरहस्योक्तेः। अशक्तौ द्वादशी मेव ।

एव मेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।
पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयम् ॥

इति तत्रैवोक्तेः ।

अत्राष्ट महाद्वादशीषु श्रवण द्वादश्युपवास एवकार्य्यः सोऽपि द्वादशी श्रवणयो र्मध्याह्न योगे सत्येव ।

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
प्रातरारभ्य मध्याह्न व्यापित्वे समुपोषणं ॥

इति विष्णुरहस्योक्तेः। अतएव माधवाचार्य्योऽपि श्रवणद्वादश्या मुपवास मनुक्त्वाऽऽह ।

श्रवणेन युताचेत् स्याद्द्वादशी सा हि वैष्णवैः ।
सार्द्धं सोपोषणीयास्यादिति वेदविदाम्मतम् ॥ इति ।

यदा द्वादश्यल्पा तदा विशेषोऽभिहितो हेमाद्रौ मात्स्ये-

यदा भवति स्वल्पापि द्वादशी पारणादिने।

उषः काले द्वयं कुर्य्यात् प्रातर्माध्याह्निकं तदा॥

नारदीयेऽपि--

अल्पायां मथविप्रेन्द्र द्वादश्यामरुणोदये।

स्नानार्च्चनक्रियाः कार्य्या दान होमादि संयुताः।

इति।

द्वादश्यतिक्रमे दोष माह विष्णुधर्म्मोत्तरे।

द्वादशी तु कला मात्रा तस्यामेव तु पारयेत्॥

द्वादश द्वादशी हन्ति द्वादशी यदि लङ्घिता।

अत्र वैष्णवानां विशेषो नृसिंहपरिचर्य्यायां विष्णुभक्ति चन्द्रोदयेच। द्वादशी श्राद्धं त्रयोदशी श्राद्ध मपि कला मात्र द्वादश्यामेव कार्य्यम्। तथाहि एकादश्यां यदा राम इत्युपक्रम्योक्तम्।

द्वादशी चेत् कला मात्रा निशीथा दूर्द्ध मेवहि।

पारणाः क्रियाः सर्वाः कर्त्तव्याः शम्भुशासनात्।

इति।

सङ्कटेतु माधवीये देवलः---

सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम्।

अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत्॥

अशिताऽनशितायस्मा दापोविद्वद्भिरीरिताः।

अम्भसा केवलेनैव करिष्ये व्रतपारणम्॥

इति।

अत्र विशेष उक्तो विष्णुधर्म्मोत्तरे—

द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः ।
तमतिक्रम्य कुर्व्वीत पारणं विष्णु तत्परः ॥

इति ।

मदन रत्ने—

यदा भूयसी द्वादशी तदापि प्रात मुंहूर्त्तत्रये पारणं कार्य्यम् ।

सर्व्वेषामुपवासानां प्रातरेवहि पारणम् ॥
कुर्व्वीत मतिमान्नित्यं विना धारण पारणम् ॥

इति गर्गोक्तेः ।

प्रमादा देकादश्युपवासातिक्रमे अपरार्केवाराहे ।

एकादशी विप्लुता चेद् द्वादशी परतः स्थिता ।
उपोष्या द्वादशी तत्र यदीच्छेत् परमं पदम् ॥

इति ।

एव मेकादशीं निर्णीय व्रतान्तरे निर्णय माह

माधवाचार्य्यः—

उपवास व्रतादन्यव्रते मार्द्ध मुहूर्त्तकैः ।
सप्तभिर्दशमीविद्धा मेता मेकादशीं त्यजेत् ॥
द्वादशी पूर्व्वविद्धैव निखिलेषु व्रतेष्वपि ।
शुक्ल त्रयोदशी पूर्व्वा परा कृष्ण त्रयोदशी * ॥

---

* परदिने त्रिमुहूर्त्तान्यामं कृष्णत्रयोदश्यपि पूर्व्वैव सर्व्वकर्म्मसु ग्राह्या ।
परेति मार्गशीर्ष शुक्ल त्रयोदशी परविद्धै वग्राह्यः ।

अलाभे सापि पूर्वैव पराऽनङ्ग त्रयोदशी ।
या शुक्ला गृह्यते पूर्वा गृह्यतां साऽपराह्णिकी * ।
चतुर्दश्युत्तरा शुक्ला पूर्वा कृष्णाचतुर्दशी † ।
उदये द्विमुहूर्त्तापि ग्राह्या नक्तव्रते तिथिः ॥
शुक्लापि रात्रि युक्ता स्या चैत्रश्रावण मासयोः ‡ ।
शुक्लासर्वापि पूर्वैव यदिस्यादापराह्णिकी § ॥
प्रदोषे वा निशीथे वा द्वयोर्वा यास्ति सा भवेत् ।
शिवरात्रिव्रते तत्र द्वयोः सत्ता प्रशस्यते ।
तदभावे निशीथैक व्यापिनी परिगृह्यते ।
तस्याश्चासम्भवे ग्राह्या प्रदोषव्यापिनीतिथिः ।
पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः ‖ ।
नाड्योऽष्टादश भूतस्य स्युश्चेत्तच परेऽहनि ।

---

* या शुक्ला त्रयोदशी पूर्वा ग्राह्यत्वेनोक्ता सा न सायाह्न मात्र व्यापिनी किन्तु आपराह्णिकीत्यर्थः ।

† उपवासभिन्नविषय मिदं । द्विमुहूर्त्तापि इत्यपिना त्रिमुहूर्त्तादि परिग्रहः ।

‡ दमनक पवित्रारोपणयो र्निर्णय माह । शुक्लापीति पूर्वैवेत्यर्थः ।

§ वट दैवत्योपवासे निर्णय माह । शुक्ला सर्वापीति अपिना कृष्णा परिग्रहः । यदिस्यादित्यनेन अपराह्णे ऽलाभे परापीति सूचितम् ।

‖ पञ्चदशी चात्र शुक्ला कृष्णा च । चेदिति पूर्वेणान्वयि । यद्यपि पूर्वदिने चतुर्दश्या अष्टादश नाड्यः सन्ति तथापि पूर्वविद्धैवेत्यर्थः ।

व्रतान्तराणि सर्व्वाणि परेऽह्न्येव सर्वदा * ॥

इति द्वादश्यादि निर्णयः ।

## अथ अमावास्यानिर्णयः ।

सा च व्रतादौ परविद्धा ग्राह्या ।

भूतविद्धा न कर्त्तव्या अमावस्या च पूर्णिमा ।

वर्ज्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

इति ब्रह्मवैवर्त्त वचनात् ।

अत्र योगविशेषे फलविशेषमाह शातातपः ।

अमावास्या भवेद्वारे यदा भूमिसुतस्य वै ॥

जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत् ।

अमावस्येन्दुवारेण रविवारेण सप्तमी ।

चतुर्थी भौमवारेण विषुवत् सदृशं फलम् ॥

व्यासोऽपि —

सिनीवाली कुहूर्वापि यदा सोमदिने भवेत् ।

गोसहस्रफलं दद्यात् स्नानं वै मौनिना कृतम् ॥

इति ।

श्राद्धे तु अमावास्या त्रेधाविभक्तदिनस्य तृतीयांश व्यापिनी ग्राह्या ।

पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।

---

* सर्वाणि उपवासादीनि सर्वदा ताद्दशवेधे इति भवति पैठर्वः ।

वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपतः * ॥

इति कात्यायनोक्तेः।

दर्शं च पौर्णमासं च पितुः साम्वत्सरं दिनम्।

पूर्वविद्ध मकुर्वाणो नरकं प्रतिपद्यते ॥

इति नारदीयेनिन्दनाच्च।

दर्श श्राद्धं तु यत् प्रोक्तं पार्वणं तत् प्रकीर्त्तितम्।

अपराह्ने पितॄणां च तत्र दानं प्रशस्यते ॥

इति शातातपोक्तेश्च।

दिनद्वये तस्याः सत्त्वे या सर्वापराह्णव्यापिनी साग्राह्या।

अपराह्णद्वयव्यापिन्यमाशस्या यदा भवेत्।

तत्राल्पत्व महत्त्वाभ्यां निर्णयः पितृ कर्म्मणि ॥

अस्याऽपराह्णे त्याज्यास्याद् ग्राह्यास्याद् याधिका भवेत्।

इति माधवीयस्मृते निर्णतथा।

दिनद्वयेऽपराह्णव्याप्त्यभावे ऽंशतोव्याप्तौ च

तिथिक्षये पूर्वाग्राह्या इति हेमाद्रिः।

यदा चतुर्द्दशीयामं तुरीय मनु पूरयेत्।

---

* पिण्डान्वाहार्य्यक मिति। ततः प्रभृति पितरः पिण्डसंज्ञां न लेभिरे" इति वचनात् पिण्डानां पितॄणां अन्वाहार्य्यं मासिक तृप्तिजनक यत् तथा। तथाच मनुः। पिण्डानां मासिक श्राद्ध मन्वाहार्य्यं विदुर्बुधाः। राजनि चन्द्रे अस्यते इत्यनेन क्वचिचन्द्र क्षयाभावेऽपि श्राद्ध सूचित। तृतीयेऽंशे त्रिधाविभक्तस्य दिनस्य तृतीयभागे। नातिसन्ध्या समीपत इति। सन्ध्यासमीप मुहूर्त

अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते * ॥

इति कात्यायनोक्तेः ।

क्षीयमाणा परदिने अपराह्णव्यापिनी भवेदित्यर्थः ।

---

आपद्यपि वर्ज्जनीय इत्यर्थः । तेन रात्रौ वेलाया अपि मुहूर्त्तत्रय मनुमतं अतिसूक्ष्म स्वरसात् । अतएव हारीतः—त्रिमुहूर्त्तापि कर्त्तव्या पूर्वा दर्शाच्च बह्वृचैः । इति । तेन पूर्वदिने मुहूर्त्तत्रय मात्र लाभे परदिने वासरतृतीयांशालाभे च पूर्वदिन एव श्राद्धम् ।

* चतुर्दशी याममिति । चतुर्दशी सम्बन्धि दिन याम मित्यर्थः तद्दिनस्य अमावस्या सम्बन्धेऽपि चतुर्दशीनिर्देशः अधिकेनव्यपदेशा भवन्तीति न्यायात् । तेन चतुर्दशी सम्बन्धिदिनस्य चतुर्थं प्रहरं कृत्स्नं किञ्चिन्न्यून वा अमावस्या अनुपूरयेत् व्याप्नोति प्रहरत्रय व्यापिनी किञ्चिदधिकप्रहरत्रय व्यापिनी वा चतुर्दशीत्यवगम्यते । ततश्च उभयवासरीय तृतीयांश सम्बन्धि पञ्चधाविभक्तापराह्णैकदेश द्वादश मुहूर्त्तयोः "व्रतोपवास नियमे घटिकैकायदा भवेत् । सा तिथिः सकला ज्ञेया पित्र्ये चापराह्णिकी । इति भविष्य पुराणात् मुहूर्त्तान्यूनदर्शनाभि वेधम् । नत्वेकदिनमात्रे तल्लाभे । अत्र वासरस्य तृतीयांशे द्वयमेवैव द्वैधानुदयात् । एवं द्वैधे पूर्वदिन चतुर्दश्यपेक्षया परदिने अमावास्या क्षीयमाणा न्यूनकाल व्यापिनी न तु पूर्वापरदिवसीय यावच्चतुर्दश्यपेक्षया अनुपस्थितेः । एवं अन्वितावर्त्तमानयोरपि तदैव पूर्वदिन एव । यत्र तु पूर्वापरदिने वासर तृतीयांशीय मुख्यापराह्ण मुहूर्त्तानि दर्शस्याभ तत्रापि पूर्वदिने श्राद्ध वासर तृतीयांश चन्द्रक्षयाति सूक्ष्म स्वरसात् त्रिमुहूर्त्तापीत्यनुरोधाच्च ॥ इति आर्त्ताः ।

वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपतः * ॥

इति कात्यायनोक्तेः।

दर्शं च पौर्णमासं च पितुः साम्वत्सरं दिनम्।
पूर्वविद्ध मकुर्वाणो नरकं प्रतिपद्यते ॥

इति नारदीयेनिन्दनाच्च।

दर्शे श्राद्धं तु यत् प्रोक्तं पार्वणं तत् प्रकीर्त्तितम्।
अपराह्णे पितॄणां च तत्र दानं प्रशस्यते ॥

इति शातातपोक्तेश्च।

दिनद्वये तस्याः सत्वे या सर्वापराह्णव्यापिनी साग्राह्या।

अपराह्णद्वयव्यापिन्यमाऽऽवास्या यदा भवेत्।
तत्राल्पत्व महत्त्वाभ्यां निर्णयः पितृ कर्म्मणि ॥

अस्याऽपराह्णे त्याज्यास्याद् ग्राह्यास्याद् याधिका भवेत्।

इति माधवीयस्मृते र्निर्णतत्वात्।

दिनद्वयेऽपराह्णव्याप्त्यभावे अंशतोव्याप्तौ च
तिथिक्षये पूर्वाग्राह्या इति हेमाद्रिः।
यदा चतुर्द्दशीयामं तुरीय मनु पूरयेत्।

* पिण्डान्वाहार्य्यक मिति। ततः प्रभृति पितरः पिण्डसंज्ञा न लेभिरे" इति वचनात् पिण्डानां पितॄणां अन्वाहार्य्यं मासिक तृप्तिजनकं यत् तथा। तथाच मनुः। पिण्डानां मासिकं श्राद्ध मन्वाहार्य्यं विदुर्बुधाः। राजनि चन्द्रे प्रस्थते इत्यनेन क्षयिचन्द्र क्षयाभावेऽपि श्राद्ध सूचित। तृतीयेऽशे त्रिधाविभक्तस्य दिनस्य तृतीयभागे। नातिसन्ध्या समीपत इति। सन्ध्यासमीप मुहूर्त

अमावास्या क्षीयमाणा तदैव श्राद्ध मिष्यते * ॥

इति कात्यायनोक्तेः ।

क्षीयमाणा परदिने अपराह्ण व्यापिनी नचेदित्यर्थः ।

---

आपद्यपि वर्ज्जनीय इत्यर्थः । तेन राक्षसी वेलाया मपि मुहूर्त्तद्वय मनुज्ञातं अतिसन्ध स्वरसात् । अतएव हारीतः—त्रिमुहूर्त्तापि कर्त्तव्या पूर्व्वा दर्शाच वह्वृचैः । इति । तेन पूर्व्वदिने मुहूर्त्तत्रय मात्र लाभे परदिने वासरतृतीयांशालाभे च पूर्व्वदिन एव श्राद्धम् ।

* चतुर्दशी यामनिति । चतुर्दशी सम्बन्धि दिन याम मित्यर्थः तद्दिनस्य अमावस्या सम्बन्धेऽपि चतुर्दशीनिर्देशः अधिकेनव्यपदेशा भवन्तीति न्यायात् । तेन चतुर्द्दशी सम्बन्धिदिनस्य चतुर्थ प्रहरं व्याप्य किञ्चिन्न्यूनं वा अमावस्या अनुपूरयेत् व्याप्नोति प्रहरत्रय व्यापिनी किञ्चिदधिकप्रहरत्रय व्यापिनी वा चतुर्दशीत्यवगम्यते । ततश्च उभयवासरीय तृतीयांश सम्बन्धि पञ्चधाविभक्तापराह्णीयैकादश द्वादश मुहूर्त्तयोः "अर्त्तोपयाम नियमे घटिकैकावदा भवेत् । सातिथिः सकला ज्ञेया पित्र्ये चापराह्णिकी । इति भविष्य पुराणात् मुहूर्त्तांशमात्रदर्शलाभे द्वैधम् । तत्रैकदिनमात्रे तल्लाभे । अथ वासरस्य तृतीयांशे इत्यनेनैव द्वैधानुदयात् । एव द्वैधे पूर्व्वदिन चतुर्द्दश्यपेक्षया परदिने अमावास्या क्षीयमाणा न्यूनकाल व्यापिनी न तु पूर्व्वापरदिवसीय यावच्चतुर्द्दश्यपेक्षया अनुपपत्तेः । एवं खण्डितावर्द्धमानयोरपि तदैव पूर्व्वदिन एव । यत्र तु पूर्व्वापरदिने वासर तृतीयांशीय मुख्यापराह्णं मुहूर्त्तेन दर्शलाभ तत्रापि पूर्व्वदिने श्राद्ध वासर तृतीयांश अन्तर्भयाति अव्यवस्थात् त्रिमुहूर्त्तापीत्यनुरोधात् ॥ इति आत्मा: ।

तथाच बौधायनः—

चतुर्दश्यां चतुर्यामे ऽप्यमावस्या न दृश्यते।
श्वोभूते प्रतिपद्येत् स्यादूभूते कव्यादिका क्रिया॥

इति।

वर्द्धमानत्वेतु पराग्राह्या।

परेऽहनि तृतीयेऽंशे घटिकार्धेऽप्यमा यदि।
तत्रैव पितृयज्ञः स्यादन्यथा प्रथमेऽहनि॥

इति स्मृतेः।

पिण्डपितृयज्ञस्तु कात्यायनै र्यागदिनात् पूर्वेद्युः कार्य्यः। पूर्व्वाङ्गत्वात् पिण्डपितृयज्ञ इति तत् सूत्रात्।

व्याख्यातं चैतत् कर्काचार्य्यैः। पूर्व एव दर्शात् पिण्डपितृयज्ञो न पश्चात्। कुतः अङ्गत्वात्। तथाच श्रुतिः। तस्मात् पूर्वेद्युः पितृभ्यः क्रियते उत्तर मह्र्देवान् यजते इति। पूर्वेद्युः पितृभ्यो यज्ञं निपृणीय प्रातर्देवेभ्यः प्रतनुते इति च। तेन लक्ष्यते अङ्गमेव पिण्डपितृयज्ञः। तदुक्तम्। अङ्गं वा समभिव्याहारादिति। तेन कर्काचार्य्यमते चतुर्द्दश्योयुक्तदर्शे पिण्डपितृयज्ञः कार्य्य इति। श्रीमदनन्तभाष्येतु परेद्युरित्युक्तम्। अत्र द्वेधाप्याचारोदृश्यते। आपस्तम्बादीनां परदिने निमुहूर्त्तमपिदर्शसत्त्वे तत्रैव पिण्डपितृयज्ञो भवति। अमावास्यायां यदहश्चन्द्रं न पश्यति तदहः पिण्डपितृयज्ञं कुरुते इत्यापस्तम्ब सूत्रात्। रुद्रदत्तादिभि स्तथा तद्व्याख्यानाच्च। यदैवैष न पुरस्तान्न पश्चाद् ददृशे अथ पितृभ्योददातीति शतपथश्रुतेश्च। आश्वलायनाना

मपि शेष पर्व्वणि पिण्डपितृयज्ञः स्यात् । अमावास्याया मपराह्णे पिण्डपितृयज्ञ इत्याश्वलायन सूत्रात् । नारायणवृत्तिकृद्भि स्तथा व्याख्यातत्वाच्च ।

यत्तु—

पश्चान्तं कर्म्म निर्वर्त्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकं बुधः ।

इति क्रमविधायक लोगाक्षि वचनं विरुद्धमिव दृश्यते । तत्तु सम्पूर्ण दर्शविषयं कात्यायनविषयं वेति सर्वमनवद्यम् ।

पश्चान्तं कर्म्म अन्वाधानं । वैश्वदेवः पञ्चमहायज्ञान्तःपाती बलिहरणान्तः । पिण्डयज्ञः पिण्ड पितृयज्ञः । अनु पिण्डपितृयज्ञस्य पश्चादाक्रियते इत्यान्वाहार्य्यकं दर्शश्राद्धमिति माधवाचार्य्यै रिदं व्याख्यातम् । ननु चतुर्द्दशीयुक्त दर्शे पिण्डपितृयज्ञ दर्शश्राद्धे कात्यायनैः कर्त्तव्ये इत्युक्तं । तन्नोपपद्यते । नद्वै एतेजोनाम ब्राह्मणं योऽस्य शक्नोति व्रतं चरितुं स मासि मासि पितृभ्यो दद्यात् । यदहरेष पुरस्ताच्चन्द्रमा नोदेति तदहर्ददाति एष वै सोमो राजा देवानामन्नं यच्चन्द्रमा स्तदेताः समिं क्षीयते य(त)स्मिन्नपि देवाना मन्ने पितृभ्यो ददातीति ।

यदैवैष न पुरस्तान्न पश्चाद्दृशे अथ पितृभ्यो ददाति इत्यादि शतपथ श्रुतौ एष चन्द्रमा यदहः पुरस्तात् पश्चाच्च न दृश्यते तदहः पितृभ्यो ददातीति कात्यायन श्रुत्यर्थविरोध इति चेत् । न एतच्छ्रुते रखण्डदर्शविषयत्वात् ।

चतुर्दशी चतुर्यामा अमावास्या न दृश्यते ।

क्षीभूते प्रतिपच्चेत् स्यात् पूर्वां तत्रैव कारयेत् ॥
चतुर्द्दशी यदा पूर्णा द्वितीया क्षयगामिनी ।
चरमिष्टि रमायां स्याद् भूते कव्यादिकाक्रिया ॥
पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपतः ॥
इति वोधायन कात्यायनस्मृतिभि स्तथा
व्यवस्थापनात् ॥

यत्तु—

यदा चतुर्दशी यामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ।

इति कात्यायन वचनं । तदपि न विरुद्धम् । अमावास्याया चतुर्द्दशी चतुर्थयामपूरणं कादाचित्कं । तदपि प्रतिपदि चन्द्रदर्शनक्षमं ज्ञेयम् । अन्यथा एतत् स्मृतीनां निर्विषयत्वेन अप्रामाण्यापत्तेः । माधवाचार्य्योऽपि एव मेवाह । तथाहि एतेषां वचनाना मयमर्थः । यद्दि चतुर्दशी सम्पूर्णा अस्तमयादर्व्वाक् अमावस्या स्वल्पास्ति तत एव अपराह्णव्यास्यभावात् श्राद्धाय अन्वाधानाय वा पूर्व्वोक्तरीत्या यद्यपि निमित्तभावं न भजते । तथापि प्रतिपदि द्वितीयायां सत्यां चन्द्रस्य दृश्यमानत्वात् तद्दर्शने चेष्टे र्निषिद्धत्वात् प्रतिपद्युताया ममावास्याया मिष्टिः स्वल्पामावास्योपेतायां केवलायां वा चतुर्द्दश्या मन्वाधान श्राद्धादिकं कर्त्तव्यमिति ।

चन्द्रदर्शने इष्टिं निषेधति वशिष्ठ:—

आदित्येऽस्तमिते चन्द्र: प्रतीच्या मुदियाद् यदि ।
प्रतिपद्यतिपत्ति: स्यात् पञ्चदश्यां तदा यजेत् ॥

अतिपत्तिरिष्टि निवृत्ति: । प्रमादात्तत्र यागे कृते प्रायश्चित्त माह कात्यायन:—

यजनीयेऽह्नि सोमश्चेत् प्रतीच्यां दिशि दृश्यते ।
तत्र व्याहृतिभि र्हुत्वा दण्डं दद्याद्द्विजातये ॥

इति ।

यदह: पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्निमाण् लोका-नभ्युदेतीति शतपथ ब्राह्मणम् । एष वै सुमना नामेष्टिर्य मद्ये आनं पश्चाच्चन्द्रमा अभ्युदेति अस्मिन्नेवास्मै लोकेर्धुकं भवतीति तैत्तिरीय ब्राह्मणं च । यत्तु चन्द्रदर्शनदिने इष्टिं विदधाति तद्बौधायन कात्यायनव्यतिरिक्त शाखिविषयम् । एतदेव बौधाय-नादिमत मुपोद्बलयति तैत्तिरीय श्रुति: । यस्मिन्नह्नि पुरस्तात् पश्चात् सोमो न दृश्यते तदहर्यजेत इति । शतपथ श्रुतिरपि यागदिने चन्द्रदर्शन मनर्थ साधनमित्याह । अथ अमावस्येति मन्यमान उपवसति अथैष पश्चाद्दृशे हैषदिव्य: स्रा स यजमानस्य पशूनभ्यवेक्षते तदपशव्यण् स्यादिति । अस्यार्थ: । कर्त्ता अद्य अमावस्येति मत्वा व्रतं गृहीत्वा द्वितीयेऽह्नि यागं करोति तद्दिने पश्चिमायां दिशि एव चन्द्रमा यदि दृश्यते स चन्द्रमा दिवि भव: श्वेव यजमानस्य पशूनभ्यवेक्षते स्यादित्तु मिच्छति ।

तस्मात्तद्दिने यजन मपशुच्छितं स्यादिति ।

इन्दुक्षयकाल माह कात्यायनः—

अष्टमेऽंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावस्याष्टमांशेच पुनः किल भवेदणुः ॥

इति ।

चतुर्दश्या अष्टमे प्रहरे इन्दुक्षय प्रारम्भः । अमावास्यायाः सप्तमे प्रहरे तत् समाधिः । अष्टमे प्रहरे पुनरणु र्भवतीत्यर्थः ।

वेदभाष्यकारोऽपि चन्द्रदर्शनदिने यागं निषिद्धवान् । तथाहि सर्वथा यागदिने चन्द्रदर्शनं निषिद्धम् ।

द्वितीया त्रिमुहूर्त्ताचेत् प्रतिपच्चापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥

इति बोधायनोक्तेः । अत्रत्रिमुहूर्त्तव्यापित्व मुपलक्षणं चन्द्र दर्शनस्यैव हेतुत्वात् । तेन एकमुहूर्त्तद्विमुहूर्त्त सद्भावेऽपि प्रतिपदि यदि चन्द्रदर्शनं तदा यागः पूर्वेद्युः चतुर्दश्या मन्वाधानं पिण्डपितृयज्ञो दर्शश्राद्धं च भवतीति परमार्थः ।

इदमेव अभिप्रेत्योक्तं कात्यायनेन—

यजनीयेऽह्नि सोम श्चेद्वारुण्यां दिशिदृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्विजातये ॥

इति ।

हेमाद्राववत्रविशेष उक्तः—

यज्ञकालस्थितिर्विधे पट्कलो यदि लभ्यते ।
पर्वं तत्रोत्तरं याह्यं हीने पूर्व उपक्रमेत् ॥

कलात्र मुहूर्त्तं न तु घटिका इति तत्रैवोक्तम् ।

वर्द्धमाना ममावस्यां लभेच्चेदपरेऽहनि ।
यामां स्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥
इति ।

तस्मादत्यन्तापचये सत्येव चतुर्दश्या मन्वाधानादि कार्यं नान्यथेति निर्णीतम् । निर्णयोऽयं साग्ने र्ज्ञेयः । निरग्निकादिभिस्तु ममावस्या कुतपकालव्यापिनी परा ग्राह्या ।

भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापिवा ।
पित्र्ये कर्म्मणि विद्वद्भिर्ग्राह्याकुतुपकालिकी ॥

इत्युक्त्वा —

सिनीवाली द्विजैः कार्य्या साग्निकैः पितृकर्म्मणि ।
स्त्रीभिः शूद्रैः कुहुः कार्य्या तथैवानग्निकै र्द्विजैः ॥

इति लोगाक्षिणा विशेषोक्तेः । अच साग्निरौपासनाग्निरपीति मदनपारिजाते उक्तम् ।

सिनीवाल्यादिलक्षण माह व्यासः—

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहुः स्मृता ।

कुतपस्तु—

अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्त्तोयः स कालः कुतपः स्मृतः ॥

तुलापुरुषादिदान पितृ देव प्रीत्यर्थोपवासादौ परायाह्येति पूर्वमेवोक्तम् भूतविद्धा न कर्त्तव्या इत्यादिना ।

दर्शे च मासिक वार्षिक श्राद्ध प्राप्तौ कालादर्शे विशेष उक्तः ।

दर्शस्य चोदकुम्भस्य दर्शं मासिकयोरपि ।

नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि ॥

इत्युक्त्वा—

संपाते देवता भेदाच्छ्राद्धयुग्मं समाचरेत् ।

इति ।

अत्र क्रमो निर्णयदीपे उक्तः—

नष्टचन्द्रे यदा काले क्षयाहदिवसो भवेत् ।

दैवादेवं क्षयश्राद्धं कुर्य्यात् प्राग्दर्श-कर्म्मणः ॥

धर्म्मसूत्र वृत्तावपि—

दर्शे प्रत्याब्दिकं श्राद्धं कुर्य्याद्दर्शं ततः परम् ।

इति ।

एतदनुपनीतेनापि कार्य्यम् ।

अमावस्याष्टमी कृष्णा पक्ष पञ्चदशीषु च ।

एतच्चानुपनीतोऽपि कुर्य्यात् पर्वसु पर्वसु ॥

भार्य्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः ।

शूद्रोऽप्यमन्त्रवत् कुर्य्यादनेन विधिना बुधः ॥

इति मत्स्य पुराणात् । इदममाश्राद्धं षड्दैवतम् ।

नित्यश्राद्धं तथादर्शं षड्दैवत्यं समाचरेत् ।

इति हारीतोक्तेः । अत्र श्रौताग्निः स्मार्त्ताग्निश्च अग्नौ अग्नौकरणं कुर्य्यात् । विच्छिन्नाग्निकादिश्च द्विजपाणौ ।

साग्निरग्नौ वसन्नि तु द्विजपाणावथाप्सुवा ।

कुर्य्यादग्नौ क्रियां नित्यं लौकिके नेति निश्चितम् ॥

इति वाक्य मुदाहृत्य । यत्तु अग्नौकृताग्निनया समुच्छिन्ना-

न्नितया भार्य्याविधुरतया वा अग्निरहित स्तस्य द्विजपाणौ जले वा होमो भवतीति हेमाद्रिव्याख्यानात्।

इदं श्राद्धं नित्यम्।

अमावास्या व्यतीपात पौर्णमास्यष्टकासु च।
द्विजः श्राद्ध मकुर्व्वाणः प्रायश्चित्तीयते हि सः॥

इति गर्ग स्मृतेः। प्रायश्चित्तसमुच्चयविधाने—

ब्युषुवाचं जपेन्मन्त्रं शतवारं दिने दिने। *
अमाश्राद्धं यदा नास्ति तदा सम्पूर्ण (मेति तत्) तां व्रजेत्॥

इदं श्राद्धं द्विजातिभि रन्नेनैव कार्य्यम्।

अमाश्राद्धं क्षयाहंच अन्नेनैव समाचरेत्।

इति हारीतोक्तेः।

अन्ना(तद)सम्भवे तु आमहेमभ्यामपि कार्य्यं नित्यत्वात्।

इति श्रीमदनन्तभट्टकृते विधानपारिजाते
(पञ्चदश) तिथिनिर्णयः।

## अथ नक्तम्।

तत्र दिवानशनपूर्वं रात्रिभोजनरूपम्। तत्र प्रदोषव्यापिनी तिथि र्ग्राह्या।

---

* ब्युषुवाचं प्रभरे भयामहे भिरश्नाय सदनै विवस्वतः।
न चिदि दवं समतामिवाविदमपृद्धति विवोदैषु अस्यते।
१म. ५३म. १ऋक्।

प्रदोष व्यापिनी ग्राह्या ति थिर्नक्तव्रते सदा * ।

इति वत्सोक्तेः । प्रदोषस्तु—

त्रिमुहूर्त्तः प्रदोषः स्याद् भानावस्तं गते सति ।

नक्तं तत्र तु कर्त्तव्य मिति शास्त्र विनिश्चयः ॥

इति व्यासोक्तेः । तत्रापि आद्यं त्रिदण्डं वर्ज्यम् ।

तत्र चत्वारि कर्म्माणि सन्ध्यायां परिवर्ज्जयेत् ।

आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥

इति मार्कण्डेयेन भोजन निषेधात् ।

सायं सन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः ।

इति स्कान्दे दण्डत्रयस्य सन्ध्यात्वात् । सायंकाले नक्तं तु दिनद्वये प्रदोषास्पर्शे ग्राह्यम् ।

अतथात्वे परत्रस्यादस्तादर्वाग् यतोऽपि सा ।

इति जावाल्युक्तेः ।

प्रदोष व्यापिनी न स्याद्दिवानक्तं विधीयते ।

(आत्मानो द्विगुणोच्छाया) आत्मनोद्विगुणोच्छाया

मन्दीभवति भास्करे ।

तन्नक्तं नक्तमित्याहु र्न नक्तं निशि भोजनम् ।

इति स्कान्दात् । यत्यादीनामिद मेव ।

---

* एकादश्यां तु यन्नक्तं तन्नोदय व्यापिनी तिथिर्ग्राह्या तदुक्तं स्कन्दपुराणे—

प्रदोषव्यापिनी ग्राह्या सदानक्तव्रते तिथिः ।

उदयस्था सदा ग्राह्या हरिनक्तव्रते पुनः ॥

इति ।

यतिश्च विधवा चैव कुर्य्यात्तत् सदिवाकरम् ।
इति माधवीय स्मृतेः । इति तिथिनक्तम् ।
यस्मिन्नस्तमियाद् भानु स्तन्नक्षत्र मुपोषणे ।
मुख्यं तस्यासम्भवेतु ग्रहीतव्यं त्रियामयुक् ॥
उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः * ।
उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रतदानयोः ॥
दिनद्वयतथात्वेतु पूर्वं स्याद्दलवत्त्वतः † ।
श्रवणं तूत्तरं ‡ ग्राह्यमुपाकरण कर्म्मणि ॥
पित्र्ये तु तिथिवत् सर्वो नक्षत्रस्य विनिर्णयः ।
पूर्वः § स्यादुपवासादा वुत्तरो व्रतदानयोः ॥
योगः श्राद्धे कर्म्मकालव्यापस्तु परिगृह्यताम् ।
करणं ‖ यद्दिने तत्तु ग्राह्यं रात्रौ यदा तदा ॥
दिनद्वयैकभक्ताभ्या मुपवासः प्रसिध्यति ।

---

* तथाच नाम तिथिवत् मध्याह्न प्रदोष व्याप्त्या निर्णय इति भावः ।

† सम्पूर्णाहोरात्र व्यापित्वाद्दलवत्त्व बोध्यम् ।

‡ उत्तरं धनिष्ठायुतम् ।

§ योगे निर्णय माह । पूर्वः पूर्वदिन सम्बन्धी आदिना नक्तैकभक्त परिग्रहः ।

‖ करणस्य तिथ्यर्द्धमितत्वाद्दिनद्वय व्याप्त्यसम्भवेन सन्देहाभावात् यद्दिने करणं तद्दिने एवोपवासः । यदा तु सायमारभ्य प्रथम करणं परेद्युः सूर्य्योदयात् प्रागेव परिसमाप्यते तदा पूर्व्वापरयो र्दिनयो रेकभक्ताभ्यामुपवाससिद्धि रिति तात्पर्य्यम् ।

वारेषु संशयाभावाद् ग्रहीतव्यं यथास्थितम् ॥

इति ।

## अथ सङ्क्रान्ति निर्णयः ।

स एवाह—

आसन्नाः संक्रान्तेः पुण्याः स्नानादिकर्मसु ।
चरे(षु)तु विंशतिः पूर्वा मकरे विंशतिः परा ॥
वर्त्तमाने तुला मेषे नाड्यस्तूभयतो दश ।
वृषभादौ स्थिरे पुण्याः प्राक् पश्चादपि षोडश ।
मिथुनादौ द्विस्वभावे उत्तराः षष्टिनाडिकाः ।
अह्नः संक्रमणे राज्ञा वनुष्ठान निषेधतः ॥
उक्तौ कालौ व्यवस्थाप्यौ तद्दलात् पूर्वपश्चिमौ * ।
रात्रौ संक्रमणे भानो र्दिनार्द्धं स्नानदानयोः ॥
अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरिक्रिया ।
ऊर्द्धं संक्रमणे चोर्द्ध मुदयात् प्रहरद्वयम् † ॥
पूर्णे चे दर्द्धरात्रे तु यदा संक्रमते रविः ।
प्राहु र्दिनद्वयं पुण्यं मुक्ता मकर कर्कटौ ।
कर्कटे मकरे रात्रावप्याचारा दनुष्ठितिः ‡ ॥

---

* उक्तौ पूर्वपश्चिमौ कालौ व्यवस्थाप्यौ विवक्षतया आवश्यकानुष्ठेयत्वेनाश्रयणीयौ ।

† अर्द्धरात्रात् परतः संक्रमणे परदिने उदयादूर्द्ध प्रहरद्वय मित्यर्थः ।

‡ अनुष्ठितिः शिष्टाचारानुसारेणानुष्ठानमित्यर्थः । तत्र रात्रौ वचन संक्रमे रात्रावेव पूर्वापर भावेन स्नानादि क्रियेति प्राच्यशिष्टाचारः ।

चरेष्विति। मेष कर्कतुला मकरेष्वित्यर्थः। एव मुत्तरत्रापि। मेषादि चतुर्षु राशित्रिकेषु प्रथमा श्चत्वारो मेषादयश्चरसंज्ञाः *। मध्यमा वृषभादयः स्थिरसंज्ञाः। चरमा मिथुनाद्या द्विस्वभावाः। तेषु सर्वेषु यथोक्तया विंशत्यादि संख्यया पुण्यकालावधि रभिधीयते इत्यर्थः।

संक्रान्तिषु कार्य्यविशेषा हेमाद्रौ —

मेषे गौर्वस्त्रधान्यं च वृषधेनु स्तथैवच।
ससुवर्णं छत्रदानं वेश्मनां दानमेव च॥
गोरसा दीपमालाच वस्त्राणि वाहनानि च।
काष्ठमम्बु तथा स्नानं मेषादिषु यथाक्रमम्॥
आद्यसंक्रमणे भानोः प्रशस्तं पृथिवीपते॥

इति विष्णुधर्म्मोत्तरात्।

अथप्रसङ्गात् सर्वमन्वादिनिर्णय उच्यते।

कालनिर्णय दीपिकायाम्—

तिथ्यन्नौ न तिथि स्तिथ्याशे कर्णभोऽनलो यहः।
तिथ्यर्कौ न शिवोऽब्धोऽमातिथौ मन्वादयोमधोः॥

अस्यार्थः। तिथिः पञ्चदशी पूर्णिमा अग्नि स्तृतीया नेति

रात्रौ कर्कटसंक्रान्तौ पूर्वमेव दिनं मकरसंक्रान्तौ तु परमेव दिनं ग्राह्यमिति दाक्षिणात्य शिष्टाचारः। तथाच शिष्टाचारानुभयं प्रमाणमिति भावः।

* चरस्थिर द्व्यात्मक नामसंज्ञा मेषादयोऽमी क्रमतः प्रदिष्टाः। इत्युक्तः।

वैशाखे नास्तीत्यर्थः। आशा दशमी। कृष्णेभः कृष्णाष्टमी। अनल स्तृतीया। ग्रहो नवमी। अर्को द्वादशी नेति मार्गशीर्षे नास्तीत्यर्थः। शिव एकादशी। अश्वः सप्तमी। अमा अमावास्या मधोश्चैत्रादारभ्य क्रमेणैता मन्वादय इत्यर्थः। एतामन्वादयः शुक्लपक्षस्थाः पौर्वाह्णिका ग्राह्याः।

कृष्णपक्षस्था आपराह्णिकाः—

पूर्वाह्णे तु सदा ग्राह्याः शुक्लामनुयुगादयः।
दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः॥

इति गरुडपुराणात्।

तृतीया माधवे शुक्ला नवम्यूर्जे त्रयोदशी।
कृष्णा नभस्ये माघेऽमा ज्ञाता (दे) एते युगादयः॥
द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः।
कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु॥
हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत्।

इति।

हायनानि वर्षाणि। हायनोऽस्त्री शरत् समा इत्यभिधानात्।
मन्वादि श्राद्धं मलमासे सति मासद्वयेऽपि कार्य्यम्।
मन्वादिकं तैर्थिकं च कुर्य्यान्मासद्वयेऽपि च।
इति स्मृतिचन्द्रिकोक्तेः। इदं श्राद्ध मपिण्डकं। तदुक्तं कालादर्शे—

विषुवायन संक्रान्ति मन्वादिषु युगादिषु।
विहाय पिण्डनिर्वापं सर्वं श्राद्धं समाचरेत्॥

इति वचनात्। इदं श्राद्धं नित्यं। अकरणे प्रायश्चित्त श्रवणात्।

तदुक्तमृग्विधाने—

त्वं भुवः प्रतिमानं* च शतवारं जले जपेत्।
मन्वादयो यदा न्यूनाः कुरुते नैव वापि यः॥

इति।

एवं यत्र यत्र प्रायश्चित्तदोषादि दर्शनं तानि षण्णवति श्राद्धानि नित्यानीति ज्ञेयम्।

तानिच—

अमामनुयुगक्रान्ति धृति पातमहालयाः।
आन्वष्टक्यं च पूर्वेद्युः षण्णवत्यः प्रकीर्त्तिताः॥

इति वचनसिद्धानि। चकारादष्टकाग्रहणम्।

## अथ ग्रहण विधानम्।

भार्गवार्च्चनदीपिकायां मेधातिथिः।

आरनालं पयस्तक्रं दधिस्नेहाज्य पाचितम्।
मणिकस्थोदकं† चैव न दुष्ये द्राहु सूतके।

इति।

मन्वर्थ मुक्तावल्यामपि—

अन्नं पक्वमिहत्याज्यं स्नानं सवसनं ग्रहे।

---

* त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः।
विश्व माप्रा अन्तरिक्ष महित्वा सत्य मद्धा नकिरन्यस्त्वावान्।
१म. ५२ सू. १२ ऋक्।

† मणिक अलिञ्जर जाला इति यस्य प्रसिद्धिः।

वारि तक्रारनालादि तिलदर्भे नं दुष्यति ॥

ग्रहे ग्रहणे इत्यर्थः। जले खदोषो गाङ्ग विषयः।

ग्रहोषितं जलं पीत्वा पादकृच्छ्रं समाचरेत् ॥

इति मन्वर्थ मुक्तावल्यां चतुर्विंशतिमतवचनेन

अन्यजलपाने प्रायश्चित्तोक्तेः।

वर्ज्यं पर्य्युषितं पुष्पं वर्ज्यं पर्य्युषितं जलम्।

न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥

इति नारदोक्तेश्च।

निर्णयदीपे—

तत्र सर्वोऽपि वर्णः सूतकी भवति।

तथाच वृद्धवशिष्ठः—

सर्वेषा मेव वर्णानां सूतकं राहुदर्शने।

सचेलं च भवेत् स्नानं सृत मन्नं विवर्जयेत् ॥

इति।

सृतं पक्वम्। अपक्वे तु दोषो नास्ति।

दधिदुग्धाज्यमांसेषु लवणे सारवे तथा।

ग्रहणार्व्वाक् * क्षिपेद्दर्भं ततो भुक्तं न दुष्यति।

ग्रहणे कालविशेषे तीर्थविशेषोऽभिहितो देवी पुराणे ॥

मार्गे तु ग्रहणे पुण्यं देविकायां महामुने।

पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ॥

फाल्गुने वरणा पुण्या चैत्रे पुण्या सरस्वती।

* ग्रहणार्वाक् ग्रहणात् पूर्वमित्यर्थः।

वैशाखे चन्द्रभागाच ज्येष्ठे पुण्याच कौशिकी ॥
आषाढ़े तापिका पुण्या सिन्धुर्वै श्रावणे तथा ।
भाद्रे वै गण्डकी पुण्या आश्विने सरयू स्तथा ।
कार्त्तिके ग्रहणं श्रेष्ठं गङ्गाय(या)मुन सङ्गमे ॥

नक्षत्रविशेषे ग्रहणे फल माह गर्गः—

ज्येष्ठे माद्रं तथा मैन्द्रं प्राग्वैश्वं वासवं तथा ।
वैष्णवं वैश्वदेवं च पुरुहूतस्य मण्डलम् ॥
मण्डले ऽस्मिन् समुत्पन्ने ग्रहणे जगतां शुभे ।
आनन्दः सर्वभूतानां भवत्येव विशेषतः ॥
तिष्य माजपदं चैव याम्यं भाग्यंच पैतृकम् ।
ऐन्द्राग्नि मग्निदैवं च समेते ह्यनलोगणाः ॥
आनले मण्डले दृष्टं ग्रहणं सोमसूर्य्ययोः ।
राज्ञां भयकरं विद्यात् प्रजानां बहुविघ्नकृत् ॥
आहिर्बुध्नं तथा पौष्णं मौल माप्यं च वारुणम् ।
वारुणं सर्पदैवत्यं वारुणं मण्डलं स्मृतम् ॥
एतस्मिन्नुपरागे स्यात् मण्डले सोमसूर्य्ययोः ।
दुर्भिक्षं भयनाशौच प्रजानामिति निश्चयः ॥
त्वाष्ट्रं चार्य्यमादीनि चत्वारि च पुनर्वसु ।
सौम्यं चैवाश्विदैवत्यं वायव्यं मण्डलं स्मृतम् ॥
समरं च भयं चैव दुर्भिक्षं कुरुतेऽचिरात् ।
व्याधि मत्स्यादि कोपः स्याद्मण्डलेऽस्मिन्नुपप्लवे ॥

इति ।

एतेषु मण्डलेषु ग्रहणे राज्ञा तत्तद्देवतापूजाजपहोमादिरूपा शान्तिः कार्य्या—इत्युक्तं काश्यपेन।

आग्नेयीं कारयेच्छान्तिं शान्तिं कुर्य्याच्च वारुणीम्।
वायव्यां (कारयेच्छान्तिं) शान्तिमिच्छेत माहेन्द्रीं तत्र कारयेत्॥

जन्म राश्यादिषु ग्रहणफलमुक्तं गर्गेण—

जन्मसप्ताष्ट रिप्फाङ्कदशमस्थे दिवाकरे।
ह(ष्टे)ष्टोरिष्टप्रदोराहुर्जन्मर्क्षे निधनेऽपिच॥

दिवाकरे इत्यत्र निशाकरे इति क्वचित् पाठः। रिप्फो द्वादशोराशिः। अङ्को नवमः। जन्मर्क्षं जन्म तारा। निधनं सप्तमी तारा।

तथा—

शस्तास्तृतीयोऽष्टमगश्चतुर्थ।
स्तथायसंस्थः शुभदः स्वराशिः।
धर्म्मान्त्यधी सप्तमगश्च मध्यः
पूज्यो द्विषट्द्वादशगस्तथाद्यः॥

आय एकादशराशिः धर्म्मोनवमः। अन्त्योद्वादशः। धीः पञ्चमः। द्वि द्वितीयः। षट् षष्ठः। आद्यो जन्मराशिः।

अत्र आद्यस्य उत्तमत्व मधमत्वं च द्रष्टव्यम्। वचनात्।

तथा—

होरायां गृह्यते यस्य नक्षत्रे वा निशाकरः।
प्राण सन्देह माप्नोति यद्वा मरण मृच्छति॥

होरायां जन्मलग्ने।

तथा—

अभिभवति सैंहिकेय चन्द्रार्कौ यस्य जन्म नक्षत्रे ।
तस्यान्तकारिजं भयं विद्यादुग्रं मनस्तापम् ॥

अन्तको मृत्युररि रमित्रः तज्जन्यं भयमित्यर्थः ।

तथा—

येषां (यस्य)विजन्म नक्षत्रे * ग्रस्येते शशिभास्करौ ।
तज्जा तेषां भवेत् पीड़ा ये नराः शान्तिवर्जिताः ॥

ज्योतिर्निबन्धेऽपि—

संक्रान्तिरथवा येषां जन्मत्रितयेऽथवाऽहिसंस्पर्शः ।
बहुरोगमृत्युजननो दानाहुतयो जपश्च कर्त्तव्याः ॥

जन्मत्रितये जन्मदशमैकोनविंशताराम्नु । अहीराहुः । जन्म-राशौ ग्रहणे तद्दोष निवर्हणाय शान्तिरुदिता हेमाद्रौ शान्ति-काण्डे मत्स्यपुराणे ।

यस्य राशिं समासाद्य भवेद् ग्रहण सम्भवः ।
तस्य स्नानं प्रवक्ष्यामि मन्त्रौषधिसमन्वितम् ॥
चन्द्रोपरागे संप्राप्ते कृत्वा ब्राह्मण वाचनम् ।
सम्पूज्य चतुरोविप्रान् शुक्ल माल्यानुलेपनैः ॥
पूर्वमेवोपरागस्य समानीयौषधादिकम् ।
स्थापयेच्चतुरः कुम्भानव्रणः सागराणि च ॥
गजाश्वरथ्या वल्मीक सङ्गमाद्ध्रद गोकुलात् ।

* जन्मनक्षत्र तत् पूर्वोत्तरं च विजन्म नक्षत्र मिति निर्णयसिन्धुः ।

राजद्वारप्रदेशाच्च मृद आनीय निक्षिपेत् ॥
पञ्चगव्यं पञ्चरत्नं पञ्चत्वक् पञ्चपल्लवम् ।
रोचनं पद्मकं शङ्खं कुङ्कुमं रक्तचन्दनम् ॥
शुक्ति स्फटिक तीर्थाम्बु सितसर्षपगुग्गुलून् ।
म (धु) धूकं देवदारुञ्च विष्णुक्रान्तां शतावरीम् ॥
बलांच सहदेवीं च निशाद्वितय मेव च ।
गजदन्तं कुङ्कुमं च तथैवोशीरचन्दनम् ॥
एतत् सर्वं विनिक्षिप्य कुम्भेष्वावाहयेत् सुरान् ।
सर्वे समुद्राः सरित स्तीर्थानि जलदा नदाः ॥
आयान्तु यजमानस्य दुरितक्षयकारकाः ।
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ॥
सहस्र नयन चन्द्र* ग्रह पीडां व्यपोहतु ।
मुखं यः सर्वदेवानां सप्तार्चि रमितद्युतिः ॥
चन्द्रोपरागसंभूतामग्निः पीडां व्यपोहतु ।
यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः ॥
यमचन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ।
रक्षोगणाधिपः साक्षान्नीलाञ्जन समप्रभः ॥
खड्गहस्तोऽतिभीमश्च ग्रहपीडां व्यपोहतु ।
नागपाशधरो देवः सदा मकरवाहनः ॥
स जलाधिपति चन्द्रग्रहपीडां व्यपोहतु ।

---

* चन्द्र इत्यत्र सूर्य: इति निर्णयसिन्धौ पाठ: ।

प्राणरूपोऽपि लोकानां सदा कृष्णमृगप्रियः ॥
वायुश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ।
योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः ॥
चन्द्रोपरागकलुषं धनदो मे व्यपोहतु ।
योऽसाविन्दुधरो देवः पिनाकी वृषवाहनः ॥
चन्द्रोपरागपापानि स नाशयतु शङ्करः ।
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥
ब्रह्मविष्ण्वर्करुद्राश्च दहन्तु मम पातकम् ।
विश्वान्तःस्थानि भूतानि पवित्राणीतराणि च ॥
तानि सर्वाणि चन्द्रोपग्रहदोषं दहन्तु मे ॥
एवमावाहयेद्देवानग्नेरेभिश्च वारुणैः ।
वारुणैरिमम्मे वरुण इत्यादिभिः * ॥
एतानेव तथा मन्त्रान् स्वर्णपट्टे विलेखयेत् ।
ताम्रपट्टेऽथवालिख्य नववस्त्रेऽथवा पुनः ॥
मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः ।
कलशान् द्रव्यसंयुक्तान् नानारूपविभूषितान् ॥
गृहीत्वा स्नापयेद् गूढं भद्रपीठोपरिस्थितम् ॥

गूढं ग्रहणदर्शनं यथा न भवति तथा । छत्रादिना क्षत-व्यवधानमित्यर्थः ।

पूर्व्वोक्तैरेव मन्त्रैस्तु यजमाने द्विजोत्तमाः ।

---

* इमं मे वरुण श्रुधि हवमद्या च मृडय । त्वामवस्युराचके ।
—इति २१अ. १म. यजुः ।

अभिषेकं ततः कुर्य्युर्मन्त्रैर्वारुण सूक्तकैः ॥
ततः शुक्लाम्बरधरः शुक्ल माल्यानुलेपनः ।
आचार्य्यं वरयेत् पश्चात् स्वर्णपट्टं निवेदयेत् ॥
अत्र केवलं पूजनं । कर्म्मादौ वरणस्य कृतत्वात् ।
आचार्य्ये दक्षिणां दद्याद् गोदानं च स्वशक्तितः ॥
पूजयेदस्य गोदाने ब्राह्मणानपि शक्तितः ।
होमं चापि प्रकुर्व्वीत तिलैर्व्याहृतिभिस्तथा ॥
निवृत्ते ग्रहणे सर्वं ब्राह्मणेभ्यो निवेदयेत् ।
दानं च शक्तितो दद्याद् यदीच्छेद्धित मात्मनः ॥
सूर्य्यपट्टे सदा सूर्य्य नाम मन्त्रांश्च * कीर्त्तयेत् ।
पूर्वोक्तश्लोकेषु चन्द्रपदस्थाने सूर्य्य पदं प्रक्षिपेदित्यर्थः ।
अनेन विधिना यस्तु ग्रहणे स्नानमाचरेत् ।
न तस्य ग्रहणे दोषः कदाचिदपि जायते ॥
इति ।
पृथ्वीचन्द्रोदये तु प्रकारान्तरेण शान्तिरुक्ता पुराण समुच्चये —
सूर्य्यस्य संक्रमो वापि ग्रहणं चन्द्रसूर्य्ययोः ।
यस्य भिजन्म नक्षत्रे तस्य रोगोऽथवा मृतिः ॥
तस्य दानं च होमं च देवार्च्चनजपौ तथा ।
उपरागाभिषेकं च कुर्य्याच्छान्ति र्भविष्यति ॥
स्वर्णेन वाथ पिष्टेन कृत्वा सर्पस्य चाकृतिम् ।

* नाममन्त्रं च इति क्षपुस्तके पाठः ।

ब्राह्मणाय ददेत्तस्य न रोगादिश तत् क्षतः ॥

सर्पस्य तदाकारस्य राहोरित्यर्थः ।

अद्भुतसागरे भार्गवः—

यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते ।

राज्यभङ्गं सुहृन्नाशं मरणं चात्र निर्दिशेत् ॥

राज्यस्य नक्षत्रे राज्याभिषेक नक्षत्रे यस्मिन्नक्षत्रे राज्ये अभिषिक्त स्तस्मिन्नित्यर्थः ।

ज्योतिःसागरेऽपि—

सौवर्णं कारयेन्नागं पलेनाथ (तदर्द्धतः ।) पलार्द्धतः ।

तदर्द्धेन तदर्द्धेन फणायां मौक्तिकं न्यसेत् ॥

ताम्रपात्रे निधायाथ घृतपूर्णे विशेषतः ।

कांस्ये वा कान्तिलोहेवा न्यस्य दद्यात् सदक्षिणम् ॥

चन्द्रग्रहे तु रूप्यस्य विम्बं दद्यात् सदक्षिणम् ।

नागं रुक्ममयं सूर्य्यग्रहे विम्बं च हेमजम् ।

तुरङ्गरथगोभूमि तिल सर्पिश्च काञ्चनम् ॥

इति ।

कालविवेकेऽपि—

सुवर्ण निर्म्मितं नागं सतिलं कांस्य भाजनम् ।

सदक्षिणं सवस्त्रं च ब्राह्मणाय निवेदयेत् ॥

तद्दानमन्त्रो यथा—

तमोमय महाभीम सोमसूर्य्यविमर्द्दन ।

हेम नाग प्रदानेन * मम शान्ति प्रदो भव॥
विधुन्तुद नमस्तुभ्यं सिंहिकानन्दन प्रभो।
दानेनानेन नागस्य रक्ष मां वेधजाद् भयात्॥

एवमन्या अपि शान्तयः सन्ति विस्तरभयान्नात्रोद्धृताः।
अत्र अनुष्ठेयक्रमो दर्शितो माधवीये॥

ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते †॥

चतुर्विंशति मतेऽपि—

मुक्तौ यस्तु न कुर्व्वीत स्नानं ग्रहण सूतके।
स सूतकी भवेत्तावद् यावत् स्यादपरोग्रहः॥

इदं स्नान ममन्त्रक मिति रत्नावली कारः।

व्यासः—

इन्दो र्लक्षगुणं पुण्यं रवेर्दशगुणं ततः॥
गङ्गा तोये तु संप्राप्ते इन्दोः कोटीरवेर्दश ‡॥
गवां कोटि सहस्रस्य§ यत् फलं लभते नरः।

---

* हेम तारा प्रदानेन इति निर्णयसिन्धौ पाठः।

† होम दानव देवार्चन मपि स्नान द्वय मध्ये कार्य्यम्। तदुक्तं ब्रह्मवैवर्त्ते। स्नानं स्या दुपरागादौ मध्ये होमः सुरार्चनम्। इति।

‡ गङ्गेतर महानदी तोयेषु लक्षगुणदशलक्षगुणत्वं गङ्गातोयेषु कोटिगुण दशकोटिगुणत्व मित्यर्थः।

§ कोटि प्रदानस्य इति माधवीये पाठः।

तत् फलं समवाप्नोति * ग्रहणे चन्द्रसूर्य्ययोः॥

गङ्गाया (अभावे) असम्भवे यङ्गः—

वापीकूपतड़ागेषु गिरिप्रस्रवणेषु च।
नद्यां नदे देवखाते सरसीषूद्धृताम्बुनि।
उष्णोदकेन वा स्नायाद् ग्रहणे चन्द्रसूर्य्ययोः॥

अत्र तारतम्य माह मार्कण्डेयः—

शीत मुष्णोदकात् पुण्य मपारक्यं परोदकात्।
भूमिष्ठ मुद्धृतात् पुण्यं ततः प्रस्रवणोदकम्॥
ततोऽपि सारसं पुण्यं तत पुण्यं नदीजलम्।
तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम्।
तत स्ततोऽपि गङ्गाम्बु पुण्यं पुण्य स्ततोऽ म्बुधिः॥

इति।

अम्बुधिस्नान मपि पर्व्वण्येव। तदुक्तं भारते—

अश्वत्थवारिधी सेव्यौ न स्प्रष्टव्यौ कदाचन।
अश्वत्थं मन्दवारे तु सागरं पर्व्वणि स्पृशेत्॥

इति।

उष्णोदक मातुरस्यैव—

उष्णोदकेन वै स्नान मातुरस्य सदा भवेत्।

इति स्मृते।

ग्रहणे तीर्थासम्भवे यत्र क्वापि जले स्नायादेव।

* तत् फलं जाह्नवी स्नाने इति माधवीये पाठः।

सर्वं गाङ्गसमं तोयं सर्वे ब्रह्मसमा द्विजाः।
सर्वं स्वर्णसमं दानं राहुग्रस्ते दिवाकरे *।

इति विष्णूक्तेः। अत्र स्नानोत्तरं तर्पणं श्राद्धे अपि कार्य्ये। तदाह कात्यायनः—

चन्द्रसूर्य्यग्रहे यस्तु स्नानं विधिवदाचरेत्।
तेनैव सकला पृथ्वी दत्ताविप्रस्य वै करे॥
सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्व्वाणस्तु नास्तिक्यात् पङ्के गौरिवसीदति॥

इति।

विष्णुः—

राहुदर्शनदत्तं हि श्राद्ध माचन्द्रतारकम्।
गुणवत् सर्वकामीयं पितॄणा मुपतिष्ठते॥

इति।

आचन्द्रतारकं प्रलयपर्य्यन्तं। तच्च आमेन हेम्ना वा कार्य्यं न पक्वान्नेन।

आपद्यनग्नौ तीर्थे च (ग्रहणे चन्द्रसूर्य्ययोः)।
चन्द्रसूर्य्य ग्रहेतथा।
आमश्राद्धं प्रकुर्व्वीत हेमश्राद्ध मथापिवा †।

इति हेमाद्रौ शातातपोक्तेः। अपरार्कस्तु द्विजानां पाका-

* ग्रहणे चन्द्र सूर्य्योश्चो रिति माधवीये पाठः।
† आम श्राद्धं द्विजोदद्यात् शूद्रोदद्यात् सदैवहि।
. इति माधवीये पाठः।

भावे एव आमश्राद्धमित्याह ।

पाकाभावे द्विजातीनामामश्राद्धं विधीयते ।

इति सुमन्तूक्तेः ।

तथा—

सैंहिकेयो यदा राहुं ग्रसते पर्व्वसन्धिषु ।

गजच्छाया तु साप्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ।

घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत् ॥

इति वायवीयोक्तेश्च ।

विज्ञानेश्वरोऽप्याह—

ग्रहणे श्राद्धे भोक्तुर्दोषो दातुस्त्वभ्युदय इति ।

सूतके मृतके भुक्ते गृहीते शशिभास्करे ॥

छायायां हस्तिनश्चैव नभूयः पुरुषोभवेत् ।

इत्यापस्तम्बेन भोजननिषेधाच्च । अयं च निषेधः श्राद्ध भोजनस्य हस्तिच्छायासाहचर्य्यात् । अत्र देशाचारतो व्यवस्थाद्रष्टव्या । अत्र ग्रहण निमित्तकश्राद्धेनैव अमा संक्रान्त्यादि श्राद्ध सिद्धिः । दार्शिकालभ्ययो रपीति कालादर्शोक्तेः ।

अत्र अशौच सद्भावेऽपि स्नान श्राद्धादि कार्य्य मेव—

सूतके मृतकेचैव न दोषो राहु दर्शने ।

तावदेव भवेच्छुद्धि र्यावन् मुक्ति र्न दृश्यते ॥

इति माधवीये वृद्ध वशिष्ठोक्तेः ।

स्मार्त्त कर्म्म परित्यागो राहोरन्यत्र सूतके ।

इति व्याघ्र पादोक्तेश्च । इयं च शुद्धि रविशेषात् मन्वादीना-

पुरश्चरणादि सर्वस्मार्त्तकर्म्म विषया। रजस्वलाया ग्रप्यत्र स्नानाद्य-धिकारः।

न सूतकादिदोषोऽस्ति ग्रहे होमजपादिषु।
ग्रस्ते स्नाया दुदक्यापि तीर्थादुद्धृत वारिणा।

इति सूर्य्योदय निबन्धोक्तेः।

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला।
पात्रान्तरित तोयेन स्नानं कृत्वा व्रतं चरेत्॥

इति मिताक्षरोक्तः स्नानविधिर्द्रष्टव्यः।

ग्रहणे रात्रा वपि स्नान श्राद्धादि कार्य्यम्—

ग्रहणोद्वाहसंक्रान्ति यात्रार्त्ति प्रसवेषु च।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥

इत्यपरार्के व्यासोक्तेः।

चन्द्रग्रहे तथारात्रौ स्नानं दानं प्रशस्यते।

इति देवलस्मृतेश्च। यदाच ज्योतिःशास्त्रगम्यो दिने चन्द्र-ग्रहो रात्रौ च सूर्य्यग्रहश्च स्तदा स्नानादिकं न कार्य्यम्।

सूर्य्यग्रहोयदारात्रौ दिनेचन्द्रग्रहस्तथा।
तत्र स्नानं न कुर्व्वीत दद्याद्दानं न च क्वचित्॥

इति षट्त्रिंशन्मतोक्तेः।

ग्रहणदिने श्राद्धप्राप्तौ तु प्रयोगपारिजाते गोभिलः—

दर्शे रविग्रहेपित्रोः प्रत्याब्दिक मुपस्थितम्।
अन्नेनासम्भवे हेम्ना कुर्य्यादामेन वा सुतः॥

इति।

अत्र दर्शरविपिहस्तुतशब्दाः प्रदर्शनार्थाः । न्यायसाम्यात् । तेन चन्द्रग्रहणेऽपि सपिण्डादि वार्षिक श्राद्ध मघादिना तद्दिने एव कार्य्य मिति मदन पारिजाते व्याख्यातम् ।

यत्तु—

आमश्राद्धं प्रकुर्व्वीत मास संवत्सरादृते ।
अन्नेनैवाब्दिकं कुर्य्याद्धेम्नावाऽऽमेन नक्वचित् ॥

इति मरीचि लोगाक्षिवचनं । तद् ग्रहण दिनातिरिक्तविषय मितिनिर्णयामृतोक्तिः ।

यानि तु—

ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे ।
अस्तोदये यदा चन्द्रे प्रत्यब्दं समुपस्थितम् ॥
तद्दिने चोपवासः स्यात् प्रत्यब्दं तु परेऽहनि ।
ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतोयदि ॥
प्रत्यब्दं तु तदा कार्य्यं परेऽहन्येव सर्व्वदा ।
चन्द्र सूर्य्योपरागेच तथा श्राद्धं परेऽहनि ॥

इत्यादीनि वचनानि । तानि महानिबन्धेषु क्वाप्यनुपलब्धादमूलानि समूलत्वे वा देशाचारतो व्यवस्थेयानि ।

कौर्म्मे—

स्व-स्वेष्ट देवतामन्त्रजपं कुर्य्यात् प्रयत्नतः ।
चन्द्रसूर्य्योपरागेतु मालिन्य मजपाद् भवेत् ॥

इत्यतो जप्तव्यम् ।

अत्र प्रसङ्गाद्दीक्षाकालः कथ्यते ।

ग्रहणादि सप्तदिन पर्य्यन्तं दीक्षां कुर्य्यात् ॥

मन्त्राद्यारम्भणं कुर्य्याद् ग्रहणे चन्द्रसूर्य्ययोः ।
ग्रहणाद्द्यापि देवेशि कालः सप्तदिनावधिः ॥

इति शिवार्च्चनचन्द्रिकोक्तेः ।

रत्नसागरेऽपि—

सत्तीर्थेऽर्के विधुग्रासे तन्तुदामनपर्वणोः * ।
मन्त्रदीक्षां प्रकुर्व्वाणो मासर्क्षादीन्न शोधयेत् ॥

अत्रापि † ग्रहोमुख्यः—

सूर्य्यग्रहणकाले तु नान्य दन्वे षितं भवेत् ।
सूर्य्यग्रहण कालेन समो नान्यः कदाचन ॥
न मासतिथि वारादि शोधनं सूर्य पर्वणि ।

इति ।

अथ ग्रहण वेधे भोजननिषेधः प्रस्तूयते ।

तत्र चन्द्रोपरागे यस्मिन् यामे ग्रहणं भवति तस्मात् पूर्वं प्रहर-त्रयं न भुञ्जीत । सूर्य्यग्रहेतु प्रहरचतुष्टयं न भुञ्जीत ।

सूर्य्यग्रहेतुनाश्नीयात् पूर्वं यामचतुष्टयम् ॥

* तन्तुपर्व परमेश्वरोपवीतदान तिथिः श्रावणी द्वादशी ।
दामनपर्व दमन भञ्जनतिथिश्चैत्रशुक्लचतुर्दशी ।

† अत एव मत्स्योपाख्यानादिषु मन्त्रे गृहीते ग्रहण मुख्यत्वे निर्णयः कृत्य. सं भवम ।

चन्द्रग्रहेतु यामांस्त्रीन् वालवृद्धातुरैर्विना।

इति माधवीये वृद्धपाराशरस्मृतेः।

तथा—

ग्रहणं तु भवेदिन्दोः प्रथमा दधि यामतः।

भुञ्जीतावर्त्तनात् पूर्वं पश्चिमे प्रथमादधः॥

रवेस्त्वावर्त्तनादूर्द्धमर्वागेव निशीथतः।

चतुर्थप्रहरे चेत् स्याञ्चतुर्थप्रहरा दधः *॥

इति मार्कण्डेयोक्तेश्च। अधिरत्र जर्द्धार्थकः। ननु चन्द्रग्रहणे यामचतुष्टयनिषेध उचितो न तु सूर्य्यग्रहे। सूर्य्योदयात् प्राग् भोजनाप्राप्तेः। नैवं। वचनस्यास्य प्रथमप्रहरे सूर्य्यग्रहे सति पूर्व्वद्युः पूर्व्वरात्रे भोजन निषेध परत्वात्।

चन्द्रग्रहे विशेष माह वृद्ध वशिष्ठः—

ग्रस्तोदये विधोः पूर्वं नाह्न भोजन माचरेत्।

इति।

द्वयोर्ग्रस्तास्ते तु व्यासः—

अमुक्तयो रस्तगयो रद्या दृष्ट्वापरेऽह्नि।

इति।

* रात्रौ प्रथम यामा दृद्धं चन्द्रग्रहणं तु आवर्त्तनात् मध्याह्नात् पूर्व्वं भुञ्जीत। रात्रि पश्चिम यामेचेत् रात्रि प्रथम यामादर्वाग् भुञ्जीत। अह्न स्तृतीय प्रहरे चंद्रविग्रह स्तदा पूर्व्वदिनस्यार्द्धरात्रात् प्राग् भुञ्जीत अह्न श्चतुर्थ प्रहरे रविग्रहे रात्रेः चतुर्थ प्रहरा दर्व्वाग् भुञ्जीत। इति माधवाचार्य्यः।

विष्णुधर्म्मेऽपि—

> अहोरात्रं न भोक्तव्यं चन्द्रसूर्य्यग्रहोयदा ।
> मुक्तिं दृष्ट्वाऽनुभोक्तव्यं स्नानं कृत्वा ततः परम् ॥

अत्र अहोरात्र निषेधः सूर्य्यग्रस्तास्ते । एतदनाहिताग्नि विषयम् । अपराह्णे व्रतोपायनीय मश्नीत इति कात्यायनोक्ते-र्व्रतस्यश्नीतत्वेन विहितस्य प्राबल्यात् । अग्निर्व्रतं कुर्य्यादिति निर्णयदीपकृत् । बालवृद्धातुराणां तु ग्रहण यामात् पूर्व्वमेकयामो निषिद्धः ।

> सायाह्ने ग्रहणं चेत् स्यादपराह्ने न भोजनम् ।
> अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ।
> भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भोजन क्रिया ॥
>
> इति मार्कण्डेयोक्तेः । सङ्ग्रहे ।
>
> निद्रायां जायते व्याधिर्मूत्रे दारिद्र्य माप्नुयात् ।
> पुरीषे क्र (क्रि) मियोनिः स्यान् मैथुने ग्रामशूकरः ॥
> अभ्यङ्गेच भवेत् कुष्ठी भोजनेस्यादधोगतिः ।
> बन्धनेच भवेत् सर्पो वधेच नरकं व्रजेत् ॥
> पत्रं दारुतृणं पुष्पं शाकं नैवेद्य (भक्षयेत्) तक्षयेत् ॥
>
> इति ।

वेधकाले ग्रहण समये वा भोजने प्रायश्चित्तमुक्तं माधवीये कात्यायनेन—

> चन्द्रसूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।

तस्मिन्नेवदिने भुक्ता त्रिरात्रेणैव शुध्यति ॥

इति।

तथा एकरात्रं त्रिरात्रं वा उपोष्य श्रेयोऽर्थिभि र्ग्रहण स्नानं कार्य्य मित्युक्तं लिङ्ग पुराणे।

एकरात्र मुपोष्यैव स्नात्वा दत्त्वाच शक्तितः।
कञ्चुकादिव सर्पस्य निष्कृतिः पापकोष(श)तः ॥
त्रिरात्रं समुपोष्यैव ग्रहणे चन्द्रसूर्य्ययोः।
स्नात्वा दत्त्वाच विधिवद्ब्रह्मणा सह मोदते ॥

इदं च पुत्रवदतिरिक्तविषयम्।

आदित्येऽहनि संक्रान्तौ चन्द्रसूर्य्यग्रहे तथा।
पारणं चोपवासं च न कुर्य्यात् पुत्रवान् गृही ॥

इति जैमिनि स्मृतेः। यदातु रवेर्ग्रस्तास्त स्तदा पुत्रिणः प्रहरद्वयं हित्वा बालादिवद् भोजनं नतूपवासः।

सायाह्ने सङ्गवेऽश्नीयाच्छारदे सङ्गवादधः।
मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रहे ॥

इति हेमाद्र्युक्तेः। शारदोऽपराह्णः।

माधवाचार्य्यस्तु पुत्रिणोऽप्युपवासं मन्यते।

अहोरात्रं न भोक्तव्यं चन्द्रसूर्य्य ग्रहोयदा।

इति पूर्वोक्तनिषेधस्य तेनापि पालनीयत्वात्। उपवास-निषेधस्तु व्रतरूपोपवास परः किञ्चिद्भक्ष्यपरोवेति ध्येयं।

उपवासनिषेधेतु किञ्चिद् भक्ष्यं प्रकल्पयेत्।

इति वशिष्ठोक्तेः।

ग्रहणे गर्भिण्याविशेषोऽभिहितो ब्रह्मसिद्धान्ते—

*सर्वैः पटस्थितं वीक्ष्यं खस्थं तैलाम्बुदर्पणैः ।*

ग्रहणं गुर्व्विणी जातु न पश्येत पटं विना ।

तथा मङ्गल कृत्येषु वेध विशेषो हेमाद्रौ—

त्रयोदशादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।

माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्य्ययोः ॥

प्रकारान्तरं चोक्तं तत्रैव—

द्वादशादि तृतीयान्तो वेध इन्दुग्रहेस्मृतः ।

एकादशादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥

इदं सम्पूर्णग्रासेद्रष्टव्यं । त्र्यहं खण्डग्रहेतयोरिति तत्रैवोक्तः ।

तथा—

नित्यनैमित्तिके जाप्ये होमे यज्ञ क्रियासु च ।

उपाकर्म्मणि चोत्सर्गे ग्रहवेधो नविद्यते ।

इति ।

इदमपि प्रारब्धनित्यकर्म्मविषयम् ।

अन्यच्च—

ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् ।

यावच्च रविणा भुक्ता मुक्तं भं दग्धकाष्ठवत् ॥

ग्रहण प्रसङ्गात् कुरुक्षेत्रे दाने विधिरुच्यते—

अभ्युत्तारण पूर्वं तु राजाधिराज मन्त्रतः ।

कौवेरीं स्वर्ण प्रतिमां दद्यात् सूर्यग्रहेबुधः ॥

मन्त्रो यथा—

उत्तराशापते देव कुबेर नरवाहन।
निधीनां शङ्ख पद्मानां पते श्रीकण्ठवल्लभ॥
अदाना (द्यै) द्वैव यत् प्राप्तं दारिद्र्यं ममदुःखदम्।
तत् सर्व्वं त्वत्प्रदानेन पापमाशुविनाशय॥ इति।

फलं तु—

त्रयोदशगुणा वृद्धिस्त्रयोदश दिनावधिः।
द्व(द्व)त्येकगुञ्जामित हेम वृद्धिः चैते कुरूणां दिवसैस्त्रिचन्द्रैः।
सूर्य्योपरागे ददतां नराणां वृद्धि स्तथा निक्षिपतां ध्रुवं स्यात्॥
रसाग्नियुग्मेन्दु ख नन्द वृत्वा
नागाब्धि वह्नि प्रमिता मणाः स्युः।
वह्निन्दुशैरैर्दशतोलकैश्च।
माषे महेन्द्रैर्दश रत्तिकादिः।

इति।

अथ तत्प्रतिग्रहे प्रायश्चित्त मुच्यते—

तथा चारुण स्मृतौ—

प्रतिग्राही कुरुक्षेत्रे न भूयः पुरुषो भवेत्।
तथापि मनसः शुद्ध्यै प्रायश्चित्तं समाचरेत्॥
तत्र कृच्छ्रद्वयं कुर्य्यां देन्द्वेन समन्वितम्।
मन्त्रेण वा यजेताथ जपेद्वा लक्ष सप्तकम्।

जपोऽत्र गायत्र्याः प्राधान्यात्।

तथा—

वापीकूपतडागादि खननैर्विप्रभोजनम्।

ब्राह्मणस्य विवाहादिक्रियार्थं सर्व्वमुत्सृजेत् ॥

इति।

एतच्च प्रायश्चित्तं धनोत्सर्गानन्तरं कार्य्यम्।

यद् गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम् ॥

तस्योत्सर्गेण शुध्यन्ति दानेन तपसैवच।

इति मनुस्मृते रिति दिक्।

अत्र केचित् साक्षाद् ग्रहण दर्शने स्नानादि कार्यं नान्यथा।

स्नानं दानं तपः श्राद्ध मनन्तं राहुदर्शने।

चन्द्र सूर्य्योपरागेतु यावद्दर्शनगोचरः ॥

इति जावालस्मृतौ चाक्षुषज्ञानस्यैव प्रयोजकत्वोक्तेरित्याहुः।

निर्णयामृतेऽपि—

तेन मेघाच्छादने अन्धादीनां च स्नानश्राद्धादौ नाधिकार

इति।

तदेतत्तुच्छं। यदि चाक्षुष ज्ञानं निमित्तं स्यात्तदा

सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा।

तत्र स्नानं न कुर्व्वीत दद्याद्दानं च न क्वचित् ॥

इति वाक्यं व्यर्थं स्यात्। चाक्षुषज्ञानाभावेन प्राप्त्यभावात्। प्राप्तिपूर्वकत्वान्निषेधस्य। किञ्च।

नेक्षेतोद्यन्त मादित्य मस्तं यान्तमपि क्वचित्।

नोपरक्तं नवारिस्थं नमध्यं नभसोगतम् ॥

इति मनुवचनं बाध्येत। अन्धस्य पूर्व्वकाल वेधइव याव-द्दर्शनं भोजननिषेधापत्तिश्च।

किंच—

जन्ममध्ये भस्मीभूतस्य यावद्यत्नः प्राप्ते उपवास प्रसङ्गश्च ।

राहुदर्शने इत्येतन्निमित्तमात्रं । संक्रान्तौ स्नायादितिवत् ।

तस्माद्दर्शन वाक्यानां ग्रस्तास्त विषयत्वात् स्नानस्य चार्थतः प्राप्ते ग्रहणज्ञानमात्रं निमित्तं । तेन मेघाद्याच्छादने भस्यादेव स्नानादि भवत्येवेति सर्वमनवद्यम् ।

इति ग्रहण निर्णयः ।

## अथ प्रसङ्गात् समुद्रस्नान विधानम् ।

तत्राश्वलायनः—

समुद्रे पर्वसु स्नाया दमायां च विशेषतः ।

पापैर्विमुच्यते सर्वैं रमायां स्नानमाचरन् ॥

भारतेऽपि—

अश्वत्थ सागरौ सेव्यौ नस्प्रष्टव्यौ कदाचन ।

अश्वत्थं मन्दवारेतु सागरं पर्वणि स्पृशेत् ॥

न कालनियमः सेतौ समुद्र स्नानकर्म्मणि ॥

इति ।

तद्विधिस्तु—

पिप्पलाद समुत्पन्ने कृत्ये लोक भयङ्करे ।

पाषाणं ते मया दत्त माहारार्थं प्रकल्प्यताम् ॥

इति मन्त्रेण समुद्रे पाषाणं प्रक्षिप्य

त्रिशाचौ च घृताचीच त्रिशयोनि विशां पते ।

सान्निध्यं कुरु(भो देवि) मे देव सागरे लवणाम्भसि ॥

इति प्रार्थ्य ।

नमस्ते विश्वगुप्ताय नमोविष्णो अपाम्पते ।

नमो जलधि रूपाय नदीनां पतये नमः * ॥

अग्निश्च योनि रनिलश्च देहो रेतोधाविष्णुरमृतस्य नाभिः ।

एतद् ब्रुवन् पाण्डव सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥

इति भारतोक्तान् मन्त्रान् पठित्वा विधिवत् स्नात्वा समुद्राय अर्घ्यं दद्यात् ।

तत्र मन्त्रः—

सर्वरत्नोद्भवः श्रीमान् सर्वरत्नाकरोयतः ।

सर्वरत्न प्रधानस्त्वं गृहाणार्घ्यं महोदधे ॥

इत्यर्घ्यं दत्त्वातर्पयेत् ।

तन्मन्त्राः स्कान्दे—

पिप्पलादं विकर्णं च कृतान्तं जीवकेश्वरम् ।

वशिष्टं वामदेवं च पराशर मुमापतिम् ॥

वाल्मीकिं नारदं चैव वालखिल्यांस्तथैवच ।

---

* अतः परं ।

समस्तजगदाधार शङ्खचक्रगदाधर ।

देवदेहि ममानुज्ञां तव तीर्थनिषेवणे ।

त्रिलोकात्मक मीशान नमो विष्णुमुमापतिम् ।

सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ।

एतच्छ्लोकद्वयं निर्णयसिन्धावधिकं दृश्यते ।

नलं नीलं गवाक्षं च गवयं गन्धमादनम् ॥
जाम्बवन्तं हनूमन्तं सुग्रीवं चाङ्गदं तथा ।
मैन्दं च द्विविदं चैव ऋषभं शरभं तथा ॥
रामं च लक्ष्मणं चैव सीतां चैव यशस्विनीम् ।
एतांस्तु तर्पयेद्विद्वा नब्धि (जल)मध्ये विशेषतः ॥
आब्रह्मस्तम्बपर्य्यन्तं यत् किञ्चित् सचराचरम् ।
मया दत्तेन तोयेन तृप्ति मेवाभिगच्छतु ॥

इति ।

इति समुद्र-स्नानविधानम् ।

इति श्रीमत् परमवैदिक नागदेवभट्टसूनुना
श्रीमदनन्तभट्टेनविरचिते
विधानपारिजाते तिथिनिर्णयः समाप्तः ।

---

साम्निध्यं कुरु(भो देवि) मे देव सागरे लवणाम्भसि ॥

इति प्रार्थ्य ।

नमस्ते विश्वगुप्ताय नमोविष्णो अपाम्पते ।

नमो जलधि रूपाय नदीनां पतये नमः * ॥

अग्निश्च योनि रनिलश्च देहो रेतोधाविष्णुरमृतस्य नाभिः ।

एतद् ब्रुवन् पाण्डव सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥

इति भारतोक्तान् मन्त्रान् पठित्वा विधिवत् स्नात्वा समुद्राय अर्घ्यं दद्यात् ।

तत्र मन्त्रः—

सर्वरत्नोद्भवः श्रीमान् सर्वरत्नाकरोयतः ।

सर्वरत्न प्रधानस्त्वं गृहाणार्घ्यं महोदधे ॥

इत्यर्घ्यं दत्त्वातर्पयेत् ।

तन्मन्त्राः स्कान्दे—

पिप्पलादं विकर्णं च कृतान्तं जीवकेश्वरम् ।

वशिष्टं वामदेवं च पराशर मुमापतिम् ॥

वाल्मीकिं नारदं चैव वालखिल्यांस्तथैवच ।

---

* अतः परं ।

समस्तजगदाधार शङ्खचक्रगदाधर ।

देवदेव ममानुज्ञां तव तीर्थनिषेवणं ।

तिलस्त्वात्मक श्रीमान् नमो विष्णुमनःपतिम् ।

सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ।

एतत्कोशदग्ध निर्लग्न [illegible] इष्यते ।

नलं नीलं गवाक्षं च गवयं गन्धमादनम् ॥
जाम्बवन्तं हनूमन्तं सुग्रीवं चाङ्गदं तथा ।
मैन्दं च द्विविदं चैव ऋषभं शरभं तथा ॥
रामं च लक्ष्मणं चैव सीतां चैव यशस्विनीम् ।
एतांस्तु तर्पयेद्विद्वा नब्धि (जल)मध्ये विशेषतः ॥
आब्रह्मस्तम्बपर्यन्तं यत् किञ्चित् सचराचरम् ।
मया दत्तेन तोयेन तृप्ति मेवाभिगच्छतु ॥

इति ।

इति समुद्र-स्नानविधानम् ।

इति श्रीमत् परमवैदिक नागदेवभट्टसूनुना
श्रीमदनन्तभट्टेनविरचिते
विधानपारिजाते तिथिनिर्णयः समाप्तः ।

---

यस्य हस्ते गदाचक्रं गरुडो यस्य वाहनम् ।
लक्ष्मीर्यस्याङ्कसंस्थाना स मे विष्णुः प्रसीदतु ॥



## अथ मास विधानानि उच्यन्ते ।

तत्र चैत्र शुक्ल प्रतिपदि संवत्सरारम्भ उक्तः ।
सा चोदय व्यापिनी ग्राह्या ।

चैत्रे मासि जगद्ब्रह्मा ससर्ज्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्य्योदये सति ॥

इति हेमाद्रौ ब्रह्मपुराणात् ।

दिनद्वये तद्व्याप्तौ अव्याप्तौ वा पूर्व्वैव ।
चैत्रे सितप्रतिपदि यो वारोऽर्कोदये स वर्षेशः ।
उदय द्वितये पूर्वौ नोदय युगलेऽपि पूर्वः स्यात् ॥

इति ज्योतिर्निबन्धोक्तेः । यदा तु चैत्रो मलमासो भवति तदा तत्र देवकार्य्यस्य निषिद्धत्वात् शुद्धेमासि संवत्सरारम्भ इति केचित् । निष्कर्षस्तु ।

शुक्लादेर्मलमासस्य सोऽन्तर्भवति चोत्तरे ।

इति वचना दग्निमवर्षान्तः पातित्वेन मलमासमारभ्यैव नव-वर्षारम्भः शुक्लाम्तादाविव कार्य्य इतिवयं साधु प्रतीमः ।

अत्र तैलाभ्यङ्गो नित्यः—

वत्सरादौ वसन्तादौ बलिराज्ये तथैवच ।
तैलाभ्यङ्गमकुर्व्वाणो नरकं प्रतिपद्यते ॥

इति वृद्धवशिष्ठोक्तेः ।

भविष्येच—

चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा ।
तस्यां वै निम्बपत्राणि प्राश्य संशृणुयात्तिथिम् ॥
तत्र वत्सरभूपमन्त्रिणां रसधान्येश्वर मेघ पालिनाम् ।
श्रवणात् पठनाच्च वै नृणां शुभतां यात्यशुभं सहश्रिया ॥

इति ।

अस्यां प्रतिपदि नवरात्रारम्भ उक्तो मार्कण्डेयपुराणे—

शरत्काले महापूजा क्रियते या च वार्षिकी ।
वसन्तकाले सा प्रोक्ता कार्य्या सर्व्वैः शुभार्थिभिः ॥

इति ।

तिथिरत्र परविद्धा ग्राह्या ।

अमायुता न कर्त्तव्या प्रतिपच्चण्डिकार्चने ।
मुहूर्त्त मात्रा कर्त्तव्या द्वितीयादिगुणान्विता ॥

इति देवीपुराणात् ।

तिस्रोह्येताः पराः प्रोक्ता स्तिथयः कुरुनन्दन ।
कार्त्तिकाश्वयुजोर्मासोश्चैत्रे मासिच भारत ॥

इति ब्राह्मोक्तेश्च ।

परा: परयुताः ।

अन्योऽत्र विशेषः शारद नवरात्रे वक्ष्यते ।

अथ प्रपादान मुक्त मपरार्के भविष्य पुराणे—

अतीते फाल्गुने मासि प्राप्ते चैव महोत्सवे ।

पुण्येऽह्नि विप्रकथिते प्रपादानं * समाचरेत् ।

तत श्चोत्सर्जयेद्विद्वान् मन्त्रेणानेन मानवः ॥

मन्त्रो यथा—

प्रपेयं सर्वसामान्याद् भूतेभ्यः प्रतिपादिता ।

अस्याः प्रदानात् पितर स्तृप्यन्तु च पितामहाः ॥

इति ।

अनिवार्य्यं ततो देयं जलं मासचतुष्टयम् ।

प्रपांदातु मशक्तेन विशेषाद्धर्म्मीप्सुना ॥

प्रत्यहं धर्म्मघटको वस्त्रसंवेष्टिताननः ।

ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः ॥

तत्र मन्त्रः—

एष धर्म्मघटोदत्तो ब्रह्मविष्णुशिवात्मकः ।

अस्य प्रदानात् सफला मम सन्तु मनोरथाः ॥

अनेन विधिना यस्तु धर्म्मकुम्भं प्रयच्छति ।

प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः ॥

इति ।

प्रपा दानेतिकर्त्तव्यता विशेषश्चतुर्थस्तवके द्रष्टव्यः ।

---

* प्रपा पानीय शालिका जलसत्रमिति यस्याः प्रसिद्धिः ।

चैत्रशुक्लतृतीयायां गौरीमीश्वरयुतां सम्पूज्य दोलोत्सवं कुर्य्यात् ।

तृतीयायां यजेद्देवीं शङ्करेण समन्विताम् ।
कुङ्कुमागुरु कर्पूर मणिवस्त्रैः सुगन्धकैः ॥
स्रग्गन्ध धूपदीपैश्च दमनेन विशेषतः ।
आ(न्दो)दोलयेत्ततो वत्स यावन्माधवमासकम् ॥

इति निर्णयामृते देवीपुराणोक्तेः ।

इयं तिथिः परविद्धापाह्या—

मुहूर्त्तमात्र सत्त्वेऽपिदिने गौरीव्रतं परे ।

इति माधवोक्तेः ।

चैत्र शुक्लतृतीयायां * मत्स्य जयन्ती ज्ञेया ।
चैत्र शुक्ल तृतीयायां भगवान् मीनरूपधृक् ।

इति मत्स्यपुराण वचनात् ।

## अत्रैव प्रसङ्गात् दशावतार जयन्त्यो निर्णीयन्ते ।

पुराण समुच्चये—

मत्स्योऽभूद्धुतभुग्दिने मधुसिते कूर्म्मोविधौ माधवे ।
वाराहो गिरिजासुते नभसि यद्भूते सिते माधवे ॥
सिंहो भाद्रपदे सिते हरितिथौ श्रीवामनो माधवे
रामो गौरितिथा वतः पर मभूद्रामो नवम्यां मधौ ॥
कृष्णोऽष्टम्यां नभसि च परे चाश्विने यद्दशम्यां ।
बुद्धः कल्कि र्नभसि समभूच्छुक्लपक्षा्यां क्रमेण ॥

---

* शुक्ल तृतीयेव इति निर्णयसिन्धौ पाठ ।

कालविशेषोऽपि तत्रैव—

अह्नोमध्ये वामनो रामरामौ मत्स्यः क्रोड़श्चापराह्णे विभागे ।
कूर्म्मः सिंहो बुद्धकल्की च सायं कृष्णोरात्रौ कालसाम्येन पूर्व्वा ।
इति ।

हुतभुग् दिनं तृतीया । मधुसिते चैत्रशुक्लपक्षे । गिरिजासुतश्चतुर्थी ।
भूतं चतुर्द्दशी । हरितिथि र्द्वादशी । गौरितिथि स्तृतीया ।
स्पष्टमन्यत् ।

यत्तु—

आषाढ़े शुक्लपक्षेतु एकादश्यां महातिथौ ।
जयन्ती मत्स्यनाम्नीति तस्यां कार्य्य मुपोषणम् ॥

इति वराह वचनं विरुद्धं भासते तत् कल्पभेदेन व्यवस्थापनीयम् । एता जयन्त्य स्तत्तदुपासकानां नित्याः । अन्येषां तु काम्या इति हेमाद्रिः ।

ब्रह्मणो यो दिनस्यादिः कल्पादिः सा प्रकीर्त्तिता ।
वैशाखस्य तृतीया या कृष्णा या फाल्गुनस्य च ॥
पञ्चमी चैत्रमासस्य तथैवान्या तथा परा ।
शुक्ला त्रयोदशी माघे कार्त्तिकस्य तु सप्तमी ॥
नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् ।
कल्पानामादयो ह्येता दत्तस्याक्षय कारिकाः ॥
इति ।

अत्र सर्व्वोनिर्णयोमन्वादिवज् ज्ञेयः ।

चैत्र शुक्लनवमी श्रीरामनवमी । सा च मध्याह्न योगिनी ग्राह्या ।

चैत्र (शुक्ला तु) शुक्ला च नवमी पुनर्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥

इति स्कान्दोक्तेः ।

दिनद्वये मध्याह्नव्याप्तौ तदभावे वा निर्णयमाह

माधवाचार्य्यः—

नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां च दशम्यां चैव पारणम् ॥

नक्षत्र योगेतु—

पुनर्वसुऋक्षसंयोगः स्वल्पोऽपि यदि दृश्यते ।
चैत्र शुक्लनवम्यां तु सा तिथिः सर्वकामदा ॥

इति स्मरणान्मध्याह्नयोगाभावेऽपि ऋक्षयुक्तैवोपोष्या । योगस्य स्तुति प्राशस्त्यात् । पारणं तु उभयान्ते एकान्ते वा स्यात् इति । इदं च व्रतं संयोग पृथक्त्वन्यायेन काम्यं नित्यं च ।

उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ।
तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्ति मभीप्सुभिः ॥
यः श्रीरामनवम्यां तु भुङ्क्ते मोहाद्विमूढधीः ।
कुम्भी पाकेषु घोरेषु पच्यते नात्र संशयः ॥

इति हेमाद्र्युक्तेः ।

केचिदिदं श्रीरामोपासकाना मेव नित्यं नत्वन्येषामित्याहुः । प्रत्यवाय श्रवणस्य व्रतमात्रे सत्त्वात् सर्वव्रतस्य नित्यत्व प्रसङ्गादित्यनिष्ट मपि वदन्ति ।

जन्माष्टमी तु वीप्साप्रत्यवायादि श्रवणान्नित्यैवेति सर्व्वं समञ्जसम् ।

व्रत प्रकारस्तु अगस्त्यसंहितायां द्रष्टव्यः।

तत् प्रयोगस्तु—

यथाशक्ति सुवर्णेन सीतासमेत रघुनाथ प्रतिमां भरत शत्रुघ्न लक्ष्मण प्रतिमाश्च निर्म्माय पञ्चामृतेन संस्नाप्य संपूज्य दण्डवत् प्रणिपत्यच अशोक कुसुमैर्युक्त मर्घ्यं दद्यात्।

तत्र मन्त्रः—

दशानन वधार्थाय धर्म्मसंस्थापनाय च।
राक्षसानां विनाशाय दैत्यानां निधनायच॥
परित्राणाय साधूनां जातो रामः स्वयं हरिः।
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ॥
पुष्पाञ्जलिं पुनर्हुत्वा यामे यामे प्रपूजयेत्।

ततो रात्रौ जागरणं कृत्वा प्रातःकृत्यं विधाय साज्येनपायसेन मूलमन्त्रेण शतमष्टोत्तरं हुत्वा प्रतिमा (चतुष्टय) माचार्य्याय निवेद्यच ब्राह्मणैःसह भुञ्जीत। इति।

ननु रामनवम्यादे र्नित्यत्वपक्षे मलमासेऽपि कर्त्तव्यतास्याद्धरिवासरवदितिचेन्न।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

इत्यादि निषेधस्य मलमासेऽपि पालनीयत्वादिह तथात्वाभावात्।

उत्तरे देवकार्य्याणि पितृकार्य्याणि चोभयोः।

इति स्मृतेश्च शुद्धमासे एव जयन्त्युपवास इति सिद्धम्। एवं जन्माष्टम्यादौ ज्ञेयम्।

इति रामनवमीव्रतविधानम्।

चैत्र शुक्लैकादश्यां हरेर्दोलोत्सव उक्तो ब्राह्मे—

चैत्रमासस्य शुक्लाया मेकादश्यां तु वैष्णवैः।
आन्दोलनीयो देवेशः सलक्ष्मीको महोत्सवैः॥

इत्यादि।

चैत्र शुक्ल द्वादश्यां हरेर्दमनोत्सव उक्तो रामार्च्चनचन्द्रिकायाम्—

द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः।
बोधायनादिभिः प्रोक्तः कर्त्तव्यः प्रतिवत्सरम्॥

इति।

एतदकरणे प्रत्यवाय उक्तः पाद्मे—

ऊर्ज्जव्रतं मधौ दोलां श्रावणे तन्तु पूजनम्।
चैत्रे च दमनारोप मकुर्व्वाणोव्रजत्यधः॥

इति।

शिवस्य तु—

शिवाय च चतुर्द्दश्या मर्पयेद्दमनं बुधः।

इति विशेषः। अत्रच द्वादशीमतिक्रम्यात्र पारणदिनं प्राप्त मित्युक्तं तत्रैव—

पारणाहे न लभ्येत द्वादशी घटिकापि चेत्।
तदा त्रयोदशी ग्राह्या पवित्र दमनार्पणे॥

इति।

गौणकालोऽप्युक्त स्तत्रैव—

हरेर्दमनारोपः स्यान्मधौ विघ्नतो यदि।

वैशाखे श्रावणे वापि तत्तिथौ स्यात्तदर्पणम् ॥

इति ।

अन्यच —

उपाकर्म्मोत्सर्ज्जनं च पवित्रदमनार्पणम् ।

ईशानस्य वलिर्विष्णोः शयनं परिवर्त्तनम् ।

कुर्य्याच्छुक्रस्य च गुरोर्मौढ्येऽपीति विनिर्णयः * ॥

इति ज्योतिर्निबन्धे शुक्रास्तादावपि कार्य्यमित्युक्तम् । मलमासेतु इदं न भवत्येव ।

उपाकर्म्मोत्सर्ज्जनं च पवित्र दमनार्पणम् ।

इति वर्ज्येषु परिगणनात् । एतत् प्रयोगस्तु । स्वयमारामाद्दमनक मानीय देवाग्रे नूतन वस्त्रोपरि अवस्थाप्य तत्र कामदेवरती आवाह्य पूजयित्वा क्लीं कामदेवाय नमः क्लींरत्यै नम इति यथाशक्ति अभिमन्त्र्य तत्तन्मूलमन्त्रेण विष्ण्वादिभ्यः समर्पयेत् ।

इति श्रीमदनन्तभट्टविरचिते
विधान पारिजाते
चैत्रमास कर्त्तव्यानि ।

---

* मासत्रयेऽपि शुक्रास्ते कर्त्तव्यमिति नारद । इति पाठान्तरम् ।

## अथ वैशाखमासविधानानि।

कृत्यचन्द्रोदये विष्णुः—

तुला मकर मेषेषु प्रातः स्नानं विधीयते।
हविष्यं ब्रह्मचर्य्यं च महापातकनाशनम्॥

इति सौरमास उक्तः।

अन्यत् पक्षद्वयमपि उक्तं तत्रैव—

मधुमासस्य शुक्लाया मेकादश्यामुपोषितः।
पञ्चदश्यां च भो वीर मेषसंक्रमणे तु वा॥
वैशाख स्नान नियमं ब्राह्मणाना मनुज्ञया।
मधुसूदन मभ्यर्च्य कुर्य्यात् सङ्कल्प पूर्व्वकम्॥

तत्र मन्त्रोयथा—

वैशाखं सकलं मासं मेषसंक्रमणे रवेः।
प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः॥
मधुहन्तुः प्रसादेन ब्राह्मणाना मनुग्रहात्।
निर्विघ्न मस्तु मे पुण्यं वैशाखस्नान (मन्वहं) मन्वहम्॥
माधवे मेषगे भानौ मुरारे मधुसूदन।
प्रातःस्नानेन मे नाथ फलदो भव पापहन्॥

इति।

यदि तीर्थे स्नानं तदा तन्नाम ग्राह्यम्। तदज्ञाने विशेषो माधवे—

यदा न ज्ञायते नाम तस्य तीर्थस्य भो द्विजाः।

त(ते)देत्युच्चारणं कार्य्यं विष्णुतीर्थमिदं त्विति ।
तीर्थस्य देवता विष्णुः सर्वत्रापि न संशयः ॥
इति ।

अन्यच्च—

तुलसी कृष्णगौराख्या तयाभ्यर्च्य मधुद्विषम् ।
विशेषेण तु वैशाखे नरो नारायणो भवेत् ॥
माधवं सकलं मासं तुलस्या योऽर्चयेन्नरः ।
त्रिसन्ध्यं मधुहन्तारं तस्य नास्ति पुनर्भवः ॥
कण्डू (य) य्य पृष्ठतो गां तु स्नात्वा पिप्पल सेचनम् ।
कृत्वा गोविन्दमभ्यर्च्य न दुर्गति मवाप्नुयात् ॥

तथा—

एकभक्तमथोनक्त मयाचित मतन्द्रितः ।
माधवे मासि यः कुर्य्याल्लभते सर्वमीप्सितम् ॥
वैशाखे विधिना स्नानं देवनद्यादिके वहिः ।
हविष्यं ब्रह्मचर्य्यं च भूशय्या नियमस्थितिः ॥
व्रतं दानं दमो देवि मधुसूदनपूजनम् ।
अपि जन्मसहस्रोत्थं पापं दहति दारुणम् ॥

एवं सम्पूर्णमासाशक्तो त्र्यहं वा स्नायात् ।

तदुक्तं पाद्मे—

त्रयोदश्यां चतुर्दश्यां वैशाख्यां वा दिनत्रयम् ।
एवं सम्यग् विधानेन नारी पुरुष एव वा * ।

* नारी वा पुरुषोऽपि वा इति निर्णयसिन्धौ पाठ ।

प्रातः स्नातः सनियमः सर्व्वपापैः प्रमुच्यते ॥

इति ।

यदि मलमासो वैशाख स्तदा मासद्वयेऽपि स्नातव्यम् नित्यत्वादिति * ।

अन्यो विशेष उक्तोऽपरार्के वामनपुराणे—

गन्धाश्च माल्यानि तथा वैशाखे सुरभीणिच ।
फलानि पानकादीनि मधूनि सुरभीणि च ॥
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ।
प्रत्यहं दिनमेकं वा शक्त्यभावेन मानवैः ॥

इति ।

एवं स्नात्वा अन्ते उद्यापनं कार्य्यम् । तच्च पाद्मे द्रष्टव्यम् ।

यथोक्तकरणाशक्तौ तु तत्रैवोक्तम्—

वैशाख्यां विधिवत् स्नात्वा भोजयेद्ब्राह्मणान् दश ।
पञ्च त्रीन् वा यथाशक्ति मुच्यते सर्व्वपातकैः ॥

इति ।

वैशाख शुक्लतृतीया अक्ष(क्ष)य तृतीया उच्यते । सा च पूर्वाह्ण व्यापिनी ग्राह्या दिनद्वये तद् व्याप्तौ परैव ; तदुक्तं निर्णयामृते नारदीये—

वैशाखे शुक्लपक्षे तु तृतीया रोहिण्णी युता ।
दुर्लभा बुधवारेण सोमेनापि युता तथा ॥

* काम्यस्य मलमासे समाप्तिनिषेधादिति कमलाकरः ।

पूर्व्वविद्धा न कर्त्तव्या परविद्धा प्रशस्यते ॥

इति ।

इयं युगादिरपि । सा चोक्ता रत्नमालायाम्—

माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी ।

तृतीया माधवे शुक्ला नवम्यूर्ज्जे युगादयः ॥

इति ।

अत्र श्राद्धमुक्तं मात्स्ये—

कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।

हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत् ॥

इति ।

श्राद्धेऽपि पूर्वाह्णव्यापिन्येव ग्राह्या—

पूर्व्वाह्णे तु सदा कार्य्याः शुक्ला मनु युगादयः ।

दैवे कर्म्मणि पित्र्ये च कृष्णाश्चैवापराह्णिकाः ॥

इति पाद्मोक्तेः ।

द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।

शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥

इति हेमाद्रौ नारदीयोक्तेश्च ।

कृत्यार्थ सारेऽपि—

युगादि मन्वादि श्राद्धेषु शुक्लपक्षे उदयव्यापिनी कृष्णपक्षे अपराह्णव्यापिनी तिथि र्ग्राह्या । इति ।

दिवोदासीये गोभिलः—

वैशाखस्य तृतीयां यः पूर्वविद्धां करोति वै ।

हव्यं देवा न गृह्णन्ति कव्यंच पितर स्तथा॥

इति।

दिनद्वये तद् व्याप्तौ परैवेति हेमाद्र्यादयः।

यत्तु कालादर्शे। अमाश्राद्ध मापराह्णिक मित्युक्का

एव मन्वन्तरादीनां युगादीनां विनिर्णयः।

इत्युक्का च द्वे शुक्ले इत्यादि वचनं तु विष्णुपूजनविषय मित्युक्तम्।

तत् पूर्वोक्तानेकमतविरोधाद् गोभिलेन कव्यं च पितर स्तथा।

इत्यादृत्य निषेधा दुपेक्षणीयम्।

अत्र दानविशेषो भविष्ये—

उदकुम्भान् सकनकान् सान्नान् सर्वरसैः सह।

यवगोधूमचणकान् सक्तून् दध्योदनं तथा।

ग्रैष्मिकं सर्व मेवात्र सस्यं दाने प्रशस्यते॥

इति।

उदकुम्भदानमन्त्रस्तु—

एष धर्म्मघटोदत्तो ब्रह्मविष्णुशिवात्मकः।

अस्य प्रदानात् तृप्यन्तु पितरोऽपि पितामहाः॥

गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं जलान्वितम्।

पितृभ्यः सम्प्रदास्यामि अक्षय्य मुपतिष्ठतु॥

इति।

अत्र च पिण्डरहितं श्राद्धं कुर्य्यात्—

अयनद्वितये श्राद्धं विषुवद्वितये तथा।

मन्वादौ च युगादौ च पिण्डनिर्वपणादृते॥

इति हेमाद्रौ पुलस्त्योक्तेः। अत्र रात्रिभोजने प्रायश्चित्त मुक्त मृग्विधाने—

रात्रौ भुङ्क्ते वत्सरे तु मन्वादिषु युगादिषु।
अभिस्ववृष्टिं मन्त्रं * च जपेदग्न पावकम्।
इति।

अत्र मलमासे मासद्वयेऽपीदं कार्य्यम्।

यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम्।
मन्वादिकं तैथिकं च कुर्य्यान्मासद्वयेऽपि च॥

इति स्मृति चन्द्रिकोक्तेः। अपरपक्षः कृष्णपक्षः। न तु महालयः। अस्य तत्र निषेधादिति तत्रोक्तम्। अत्र श्राद्धाकरणे प्रायश्चित्त मुक्त मृग्विधाने—

न यस्य द्यावामन्त्रं † च शतवारं तदा जपेत्।

---

* अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः।
इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीँरिव त्रितः॥
—इति १म. ५२सू. ५ऋक्।

† न यस्य द्यावा पृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः।
यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि॥
—इति १०म. ८९सू. ६ऋक्।

न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः।
नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक्।
—इति १म ५२सू १४ऋक्।

अनयो रेकतरम्।

युगादयो यदा तूनाः कुरुते नैववापि यः ॥

इति ।

सम्पूर्णा भवन्तीति शेषः—

इयमेव तृतीया परशुराम जयन्ती। सा च प्रदोष व्यापिनी ग्राह्या ।

वैशाखस्य सितेपक्षे तृतीयायां पुनर्वसौ ।

निशायाः प्रथमे यामे जातोरामः कुठारभृत् ॥

इति रामार्चन चन्द्रिकोक्तेः । दिनद्वये तद्व्याप्तौ अंशतो व्याप्तौ अव्याप्तौ(वा) च परैव ।

शुक्लातृतीया वैशाखे शुद्धोपोष्या दिनद्वये ।

निशायाः पूर्वयामे चेदुत्तरान्यत्र पूर्व्विका ॥

इति ।

तथा वैशाख शुक्ल सप्तम्यां गङ्गोत्पत्तिरुक्ता ब्राह्मे—

वैशाख शुक्ल सप्तम्यां जह्नुना जाह्नवी पुरा ।

क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ।

तां तत्र पूजयेद्देवीं गङ्गां गगन मेखलाम् ॥

इति ।

इयं च मध्याह्नव्यापिनी ग्राह्या । शिष्टाचारात् । वैशाख-शुक्ल चतुर्द्दशी नृसिंह जयन्ती । सा च प्रदोष व्यापिनी ग्राह्या । तदुक्तं हेमाद्रौ नृसिंहपुराणे—

वैशाखे शुक्लपक्षे तु चतुर्द्दश्यां निशामुखे ।

मज्जन्म सम्भवं पुण्यं व्रतं पाप प्रणाशनम् ।

वर्षेवर्षे तु कर्त्तव्यं मम सन्तुष्टिकारकम् ॥

इति ।

स्कान्दे च—

वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके ।
अवतारो नृसिंहस्य प्रदोष समये द्विजाः ॥

इति ।

अनिलर्क्षं स्वातीनक्षत्रं। दिनद्वये तद्व्याप्तौ अंशतो व्याप्तौ च परा ग्राह्या। विषमव्याप्तौ तु अधिकव्याप्तिमती ग्राह्या। दिनद्वयेऽपि व्याप्तौ परेति (परदिने गौणकालव्याप्तेः सत्त्वात् पूर्वदिने च तदभावात्) निर्णेतव्या।

इयमेव योगविशेषे अतिप्रशस्ता। तदुक्तं नृसिंहपुराणे—

स्वाती नक्षत्र योगे च शनिवारे तु मद्व्रतम्।
सिद्धयोगस्य संयोगे वणिजेकरणेतथा।
पुंसां सौभाग्य योगेन लभ्यते दैवयोगतः ॥

तथा—

एभिर्योगैर्विनापिस्यान् मद्दिनं पापनाशनम्।
सर्वेषा मेव वर्णाना मधिकारोऽस्ति मद्व्रते।
मद्भक्तै स्तु विशेषेण कर्त्तव्यं मत् परायणैः ॥

इति।

तथा—

विज्ञाय मद्दिनं यस्तु लङ्घयेत् पापशबरः।
स याति नरकं घोरं यावच्चन्द्रदिवाकरौ ॥

इति।

एतदपि नित्यं काम्यं च संयोगपृथक्त्वन्यायात्। प्रयोगस्तु नृसिंहपुराणोक्तः। मध्याह्ने तिलामलकैः स्नात्वा

नृसिंह देवदेवेश तवजन्मदिने शुभे।
उपवासं करिष्यामि सर्वभोगविवर्ज्जितः॥

इति मन्त्रेण सङ्कल्पं कृत्वा आचार्य्यं वृत्वा सायंकाले श्रीलक्ष्मीसहित नृसिंहस्य यथाशक्ति स्वर्णनिर्म्मितां प्रतिमां कलशोपरि प्रतिष्ठाप्य षोडशोपचारैः सम्पूज्य रात्रौ जागरणं कृत्वा प्रातःस्नानादि विधाय पुनर्देवं सम्पूज्य—

नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते।
अनेनार्चाप्रदानेन सफलाः स्युर्मनोरथाः॥

इति मन्त्रेण आचार्य्याय प्रतिमां दत्त्वा ब्राह्मणान् भोजयित्वा स्वयं पारणं कुर्य्यादिति संक्षेपः।

वैशाखपौर्णमास्यां विशेषमाह अपरार्के जावालिः—

घृतान्न मुदकुम्भं च वैशाख्यां च विशेषतः।
निर्द्दिश्य धर्म्मराजाय गोदान फल माप्नुयात्॥
सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च वा।
तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति॥

इति।

मन्त्रस्तु एष धर्म्मघटोदत्त इति अक्षय्यतृतीयाप्रकरणे अभिहितः।

विष्णुरपि—

तिलान् कृष्णाजिने कृष्णान् हिरण्यं मधुसर्पिषी।

ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥

इति ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
वैशाखविधानानि समाप्तानि ॥

---

## अथ ज्यैष्ठमासविधानानि ।

तत्र गारुडे हरेर्जलक्रीडा उक्ता—

घनागमे प्रकुर्वन्ति जलस्थं ये जनार्दनम् ।
ये जना नृपशार्दूल न ते यान्ति पुनर्भवम् ॥
स्वर्णपात्रेऽथवा रौप्ये ताम्रे वा मृण्मयेऽपि वा ।
तोयस्थं योऽर्चयेद्विष्णुं शालग्रामशिलोद्भवम् ॥
प्रतिमां वा महाभाग तस्य पुण्यमनन्तकम् ॥

इति ।

तत्र शुक्लतृतीयायां रम्भाव्रतमुक्तं माधवीये भविष्ये—

भद्रे कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम् ।

ज्येष्ठ शुक्लतृतीयायां स्नाननियमतत्परा ॥

इत्यादि।

सा च पूर्वविद्धा कार्य्या इत्युक्तं प्राक्।

ज्येष्ठ शुक्लदशमी दशहरा।

तदुक्तं हेमाद्रौ ब्राह्मे—

ज्येष्ठमासि सितपक्षे दशमी हस्तसंयुता।
हरते दशपापानि तस्माद्दशहरा स्मृता ॥

इति।

वाराहेऽपि—

दशम्यां शुक्लपक्षेतु ज्येष्ठमासि कुजेऽहनि।
अवतीर्णा यतः स्वर्गा हस्तर्क्षेच सरिद्वरा।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥

इति।

अत्रान्योविशेषः काशीखण्डे उक्तः। विस्तरभीत्या नात्र-लिखितः। यदि ज्येष्ठोमलमासो भवति तदा तत्रैव दशहरा कार्य्या न तु शुद्धे।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।

इति हेमाद्रौ ऋष्यशृङ्गोक्तेः। गङ्गाया असम्भवे तीर्थान्तरेऽपि इदं कार्य्यम्।

यां काञ्चित् सरितं प्राप्य स्नात्वा दद्यात्तिलोदकम्।
मुच्यते दशभिः पापैः स महापातकोपमैः ॥

इति स्कान्दोक्तेः।

अस्यां तिथौ सेतुबन्धरामेश्वर नमस्कारादि विशेषपूजा कार्य्या इत्युक्तं स्कान्दे सेतु माहात्म्ये ।

ज्येष्ठेमासि सिते पक्षे दशम्यां बुधहस्तयोः ।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषेरवौ ॥
दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम् ।
रामो वै स्थापयामास शिवलिङ्ग मनुत्तमम् ॥
तस्मिन् दिने तमीशानं नत्वा स्यान् मोक्षभाजनम् ।

इति ।

ज्येष्ठ शुक्लैकादशी निर्ज्जला । तत्र निर्जल मुपोष्य उदकुम्भं विप्राय दत्त्वा मुच्यते इति निर्णयामृते उक्तम् । ज्येष्ठ पौर्णमास्यां सावित्रीव्रतमुक्तं भविष्ये—

ज्येष्ठेमासि सितपक्षे पौर्णमास्यां तयाव्रतम् ।
चीर्णं पुरा महाभक्त्या कथितं ते मया नृप ।

इत्यादि ।

इदं ज्येष्ठामावस्यायामप्युक्तं निर्णयामृते भविष्ये—

अमायां ज्येष्ठ मासस्य वटमूले महासती ।
त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ॥

इदं व्रतं दाक्षिणात्याः पूर्णिमायां पाश्चात्या अमाया माचरन्ति । अत्रापि पूर्णिमामावास्ये पूर्वविद्धे ग्राह्ये ।

भूतपा तथा रम्भा सावित्री वटपैतृकौ ।
कृष्णाष्टमीचभूताच कर्त्तव्यासम्मुखीतिथिः ॥

इति स्कान्दोक्तेः ।

भूतविद्धासिनीवाली न तु तत्र व्रतं चरेत्।
वर्ज्जयित्वा तु सावित्रीव्रतं भोः शिखिवाहन॥

इति वचनाच्च। यदा तु परदिने अष्टादशघटिकाव्यापिनी तदा परैव ग्राह्या।

पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः।
नाद्योऽष्टादश भूतस्य परतश्चेत् परेऽहनि॥

इति माधवाचार्य्योक्तिः।

अत्र विशेष आदित्यपुराणे उक्तः—

ज्येष्ठमासि तिलान् दद्यात् पौर्णमास्यां विशेषतः।
अश्वमेधस्य यत् पुण्यं तत् प्राप्नोति न संशयः॥

इति।

इयंमन्वादिरपि। सा च पौर्वाह्णिकी ग्राह्या इत्युक्तं प्राक्।

इति विधानपारिजाते ज्येष्ठमासविधानानि।

---

## अथ आषाढ़मासविधानानि।

आषाढ़ शुक्लदशमी पौर्णमासी च मन्वादिः। सा च पूर्वाह्णव्यापिनी ग्राह्या इत्युक्तं। आषाढ़ शुक्लैकादश्यां (वातपू) शङ्ख चक्रादिधारणं मुक्तं रामार्च्चनचन्द्रिकायां नृसिंहपरिचर्य्यायां च भविष्ये—

अयन्यां चैव वोधिन्यां चक्रतीर्थे तथैव च ।
शङ्खचक्रविधानेन वह्नि पूतो भवेन्नरः ॥

ऋग्वेदे नवमाष्टके तृतीयाध्यायेऽपि—

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्य्येषि विश्वतः ।
अतप्त तनु र्न तदामो अश्नुते शृतास इद्वहन्त स्तत् समाशत ॥
म ९. सू ८३. ऋक् १ ।

तथा—

तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतार माशवो दिवस्पृष्ट मधि तिष्ठन्ति चेतसा ॥
म ९. सू ८३. ऋक् २ ।

तथा तत्रैवाष्टके चतुर्थाध्याये—

चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि विभ्रत् ।
अपा मूर्म्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥
म ९. सू ९६. ऋक् १९ ।

तथा परोमातयेति सूक्तपरिशिष्टेऽपि—

चक्रं बिभर्त्तिवपुषाभितप्तं बलं देवाना ममृतस्य विष्णोः ।
स याति नाकं दुरिता विधूय विशन्ति यद् यतयो वीतरागाः ॥
देवासो य (च) त्पवितेनबाहुना सुदर्शनप्रयताः स्वर्ग मायन् ।
येनाङ्किता मानवा लोकसृष्टिं वितन्वन्ति ब्राह्मणास्ताहव्हन्ति ।
इति ।

यजुर्वेदेऽपि—

येन देवाः पवित्रेण आत्मानं पुनते सदा ।

तेन पवित्रेण सहस्रधारेण पावमान्यः पुनन्तु मा ॥

इति।

तैत्तिरीयारण्यके—

यस्य पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि।

तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥

इति।

काण्वशाखायामपि—

पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत।

अग्ने क्रत्वा क्रतूं रनुयत्ते पवित्र मर्चिष्यग्ने विततमन्तरा ॥

ब्रह्म तेन पुनातु मा ॥

इति।

शतपथेऽपि—

स होवाच याज्ञवल्क्य स्तस्मात् पुमानात्महिताय हरिं भजेत्।

सुश्लोकमौले वंशाग्निना सन्तप्ते।

इति।

सामवेदेऽपि—

प्रते विष्णो भज वर्म *।

पाद्मेऽपि—

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा।

ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥

इति।

* मन्त्रोऽयं सामवेदे नोपलभ्यते।

विष्णुभक्तिचन्द्रोदयेऽपि ब्राह्मे नारदः—

विष्णुनामाङ्कितां मुद्रा मष्टाक्षर समन्विताम् ।
शङ्खचक्रायुधैर्युक्तां स्वर्णरौप्यमयीं तथा ॥
धत्ते भागवतो यस्तु कलिकाले विशेषतः ।
प्रह्लादस्य समो ज्ञेयो ह्यन्यथा कलि वल्लभः ॥
शङ्खचक्राङ्कितो भक्त्या श्राद्धं यः कुरुते द्विजः ।
विधिहीनं तु सम्पूर्णं पितॄणां तु गया समम् ॥
यथाग्निर्दहते कक्षं वायुना प्रेरितोभृशम् ।
तथा दहन्ति पापानि दृष्टाकृष्णायुधानि वै ॥
शङ्खाङ्कितनतनुर्विप्रो भुङ्क्ते यस्य तु वेश्मनि ।
तदन्नं स्वय मश्नाति पितृभिः सह केशवः ॥
कृष्णायुधाङ्कितं दृष्ट्वा सम्मानं न करोति यः ।
द्वादशाब्दार्जितं पुण्यं वाष्कलेयापगच्छति ॥
कृष्णायुधाङ्कितोयस्तु श्मशाने म्रियते यदि ।
प्रयागे या गति स्तस्य सागतिर्नियताध्रुवम् ॥
कृष्णायुधैः कलौ नित्यं मण्डितोयस्य विग्रहः ।
तस्याश्रयं प्रकुर्व्वन्ति विबुधा वासवादयः ॥
यः करोति हरेः पूजां कृष्णशस्त्राङ्कितोनरः ।
तस्यापराधसाहस्रं नित्यं हरति केशवः ॥
कृत्वा काष्ठमयं बिम्बं कृष्णशस्त्रैस्तु चिह्नितम् ।
तेनाङ्कयति चात्मानं तत् समो नास्ति वैष्णवः ॥
पाषण्डपतिते व्रात्ये नास्तिकालाप तत्परे ।

न लिप्यते कलिजातैः कृष्णशस्त्राङ्कितो नरः ॥

इत्यादि ।

द्वारकामाहात्म्ये ऽपि वायव्ये—

अग्निनैवतु सन्तप्तं चक्रमादाय वैष्णवः ।
धारयेत् सर्ववर्णानां हरिसालोक्यसिद्धये ॥
कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम् ।
चिह्नयेद् वैष्णवो यस्तु स याति परमां गतिम् ॥

नवप्रश्न पञ्चरात्रे शुक्रमाहेश्वरसंवादेऽपि—

सौवर्णं राजतं कांस्यं ताम्रं काष्ठमयं तु वा ।
चक्रं कृत्वा तु मेधावी धारयीत विचक्षणः ॥

नारदीय पञ्चरात्रेऽपि—

द्वादशारं तु षट्कोणं वलयत्र (संयुतम्) समन्वितम् ।
हरेः सुदर्शनं तप्तं धारयीत विचक्षणः ॥

पाद्मेऽपि—

उपवीतादिवद्धार्य्याः शङ्खचक्रगदादयः ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥
उपवीतं शिखाबन्ध चक्रलाञ्छन मेवच ।
चक्रलाञ्छन हीनस्य विप्रस्य विफलाक्रिया ॥
चक्राङ्किताय दातव्यं हव्यं कव्यं द्विजोत्तमैः ।
तस्माच्चक्राङ्कितस्तिष्ठेत् पवित्रं तरति श्रुतेः ॥

वाराहेच—

शङ्खचक्राङ्कनं कुर्य्यादात्मनो वाहुमूलयोः ।

कलत्रापत्यभृत्येषु पश्वादिषु विशेषतः ॥
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदोविदुः ॥
चक्रादि धारणं पुंसां हरिसम्बन्धवेदनम् ।
पातिव्रत्यनिमित्तं हि यथा वलयभूषणम् ॥
तप्तं वै विधिवत् कृत्वा पञ्चायुधविधानतः ।
तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् ॥

गौतमीतन्त्रेऽपि—

ललाटे च गदाधार्य्या मूर्ध्नि चापं शरं तथा ।
नन्दकं चैव हृन्मध्ये शङ्खचक्रं भुजद्वये ॥

इति ।

निन्दने निषेधश्च ब्राह्मे—

तप्तचक्राङ्कितं दृष्ट्वा ये निन्दन्ति नराधमाः ।
अवलोक्य मुखं तेषामादित्य मवलोकयेत् ॥

इत्यादि ।

काशीखण्डेऽपि—

अन्येऽपि ये ऽहरिहराङ्कधरा धरायां
ते दूरतः पुनरहो परिवर्ज्जनीयाः ।

इत्यादि ।

तत्रैव ध्रुवाख्याने—

शङ्खचक्राङ्किततनुः शिरसा मञ्जरीधरः ।
गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः ॥ इति ।

भारतेऽपि—

नाव्यदेवं नमस्कुर्य्यान्नाव्यदेवं निरीक्षयेत्।
चक्राङ्कितः सदातिष्ठेच्छङ्खः पाण्डुनन्दन॥
भीष्मपर्वण्यपि देवान्प्रति ब्रह्मवचनम्।
स एष शाश्वतोदिव्यः सर्वभूतमयोहरिः॥
वासुदेव इति प्रोक्तो यं मां पृच्छसि भारत।
ब्राह्मणैः क्षत्रियै र्वैश्यैः शूद्रैश्च कृतलक्षणैः।
सेव्यते ऽभ्यर्च्यते चैव नित्यभक्तैः स्वकर्मभिः॥

इति।

कृतलक्षणैः कृतहरिचिह्नै रित्यर्थः। देवो भूत्वा देवान् यजेतेति श्रुतेः।

हरिवंशेऽपि—

चक्राङ्किताः प्रवेष्टव्या यावदागमनं मम।
नामुद्रिताः प्रवेष्टव्या यावदागमनं मम॥

इति।

एवं श्रुतिस्मृतिपुराणेतिहासागमादिसिद्धत्वाच्चक्राद्यङ्कनं कार्य्यमिति। ननु पवित्रं ते इत्यादि श्रुति स्तप्तमुद्राधारणे प्रमाणत्वेनोदाहृता। तन्नोपपद्यते। वेदभाष्यकृतामाधवाचार्य्येण अन्यथा व्याख्यातत्वात्। तथाच तद्भाष्यम्। पवित्रं ते इति पञ्चर्चं सूक्तं। आङ्गिरसस्य पवित्रस्य आर्षं जागतं पवमानसोमदेवताकं। तथाचानुक्रान्तं। पवित्रं ते इत्यभिष्टवे आर्षो जगत्यो वक्तव्ये। सूत्रितं च। पवित्रं ते विततं ब्रह्मणस्पते इति द्वे।

वियत् पवित्रं धिषणा अतन्वत इति च । तत्र प्रथमा । पवित्रं ते इति । हे ब्रह्मणस्पते मन्त्रस्य स्वामिन् सोम ते पवित्रं शोधकं अङ्गं विततं सर्व्वत्र विस्तृतम् । स प्रभुः प्रभविता त्वं गात्राणि पा(गा)त्र रङ्गानि पर्य्येषि परितोगच्छसि विश्वतः सर्वतः तव तत् पवित्रं । अतप्ततनूः पयोव्रतादिना असन्तप्तगात्रः अतएव आमः अपरिपक्वः नाश्नुते नव्याप्नोति । शृतास इत् शृताएव परिपक्वा एव वहन्तो यागं निर्वहन्तः तत् पवित्रं समाशत व्याप्नुवन्ति ।

तपोः शत्रूनां तापकस्य सोमस्य पवित्रं शोधकमङ्गं तेजो वा दिवस्पदे द्युलोकस्य उच्छ्रिते स्थाने विततं विस्तृतं । तृतीयस्यामितोदिवि सोम आसीदितिहि ब्राह्मणम् । अस्य तन्तवः अंशवः शोचन्तोदीप्यमानाः व्यस्थिरन् विविधं तिष्ठन्ति । पृथिव्यां हविर्धाने वा । अस्य सोमस्य आशवः शीघ्रगामिनो रसा अवन्ति रक्षन्ति । कं पवीतारं पावयितारं यजमानं । होमद्वारा

पश्चात् हुताः । दिवोद्युलोकस्य पृष्ठं पृष्ठसदृश मुन्नतदेशं चेतसा बुद्ध्या देवगमनेच्छावत्या अधितिष्ठन्ति आश्रयन्ते इति ।

तथा चमूषच्छ्येन इति एकोनविंशी सोमावापे विनियुक्ता । चमूषदिति चमन्ति भक्षयन्ति अत्र इति चम्वश्चमसा स्तेषु सीदतीति चमूषत् । यद्वा । चम्वौ अधिश्रयणफलके । तयो र्वर्त्तमानः । तथा श्येनः शंसनीयः शकुनः शक्तः सामर्थ्यकारी विभृत्वा हरतेरातोमनिन्नित्यादिना क्वनिप् । पात्रेषु विहरणशीलः । छन्दसोभं इतिभत्वं । गोविन्दुः यजमानानां गवांलम्भकः । विन्दुरिच्छुरित्यनेन उप्रत्ययान्तत्वेन निपातः ।

द्रप्सो द्रवणशीलः । आयुधानि स्फ्य कपालादीनि बिभ्रत् धारयन् अपामूर्मिं प्रेरकं समुद्रं अन्तरिक्षनाम एतत् । अन्तरिक्षलोकं सच-मानः सेवमानः महिषो महान् य एवंविधः सोमः स तुरीयं चतुर्थं धाम चान्द्रमसस्थानं विवक्ति सेवते । सूर्य्यलोकस्योपरि चन्द्रलोको विद्यते । यमः पृथिव्या अधिपतिः स मावतु इत्या-दिभिः चन्द्रमानक्षत्राणामधिपतिः स मावतु इत्यन्ते मन्त्रे श्रूयत इति ।

तथा—

चरणं पवित्रमिति । विष्णोर्ब्राह्मणस्य वा स्तुतिरियम् ।

पवित्रेणेति यन्ते पवित्रमिति च सौत्रामणीयागे विनि-यु(क्ता)क्ते । स होवाच इत्यादयस्तु पठ्यमानतया नोपलभ्यन्ते । अतो नोक्तार्थे प्रमाणं । पृथ्वीचन्द्रोदयनिबन्धे तप्ताङ्कधारण निषेधाश्च ।

तथा—

यस्तु सन्तप्त शङ्खारिलिङ्गचिह्नतनुर्नरः ।
स सर्वयातनाभोगी चण्डालोजन्मकोटिषु ॥

द्विजं तु तप्त शङ्खारिचक्राङ्कित तनुं नरः ।
संभाष्य रौरवं याति यावदिन्द्राश्चतुर्द्दश ॥

इति वृहन्नारदीयोक्तः ।

शङ्खचक्राद्यङ्कनं च नृत्यगीतादिकं तथा ।
एकजातेरयं धर्म्मो न जातु स्याद्द्विजन्मनः ॥

शङ्खचक्रगदां यस्तु कुर्य्यात्तप्तायसेन वा ।

स शूद्रवद्बहिष्कार्य्यः सर्व्वस्मात् द्विजकर्म्मणः ॥
यथा श्मशानगं काष्ठ मनर्हं सर्वकर्म्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्म्मसु गर्हितः ॥
इति विष्ण्वाश्वलायनादि वचनात् ।
स्वशरीरेऽन्य(हे) देहे वा भवेदङ्किकिणो द्विजः ।
इति मनुस्मृतेः ।
नाङ्कनात् प्रदहेद्देहं दहेच्चेत् कामकारतः ।
नाधिकुर्व्वीत दग्धाङ्गः श्रौतस्मार्त्तेषु कर्म्मसु ॥
इति बौधायनवचनात् ।
शैवान् पाशुपतान् जैनान् लोकायतिकनास्तिकान् ।
तप्तचक्रधरान् दृष्ट्वा सवासा जलमाविशेत् ॥

इति स्मृतिसंग्रहवचनाच्च । तस्माद्विधानाभावात् निषिद्धत्वाच्च तप्ताङ्कनं न धार्य्यम् । यदि तु पुराण वचनानि प्राकरस्यतया उपलभ्यन्ते । तदापि शूद्रमात्र विषय मेतत् ।

एकजातेरयं धर्म्मो न जातु स्याद्द्विजन्मनः ।
इति विष्णुस्मृत्या तथा व्यवस्थापनात् ।

तस्माच्चेतत् शूद्रविषय मेवं प्राप्तेऽभिधीयते ।

वैदिकै र्धार्य्यमाणत्वात्तत्परिग्रहदार्ढ्यतः ।
प्रत्यक्षश्रुतिमूलत्वात्तप्ताङ्काः सप्रमाणकाः ॥
लिङ्गादयविधिः कल्प्योप्यस्मदाम श्रुतौयथा ।
निषेधवचनं तत्र वृत्तिकायसपक्षगम् ।
अदीक्षाविषयं यद्वेत्येव मतव्यवस्थितिः ॥

तथाहि—

वेदोऽखिलोधर्म्ममूलं स्मृतिशीलेच तद्विदाम् ।
आचारश्चैव साधूना मात्मन स्तुष्टिरेवच ॥

इति मनुस्मृत्या धर्म्मप्रसमय: प्रमाणम् । वेदाश्चेत्यादि श्रुत्या च सदाचारस्य प्रामाण्यकथनात् । वेदविद्भिर्वहुभि स्तस्य धार्य्यमाणत्वात् । न च तेषां भ्रान्त्या तदारस्य मिति वाच्यम् । माध्व रामानुजीय विष्णुस्वामि सम्प्रदायिना मनेकेषां भ्रान्ति कल्पनस्य अन्याय्यत्वात् । क्वाचित्कस्य होलाकाद्याचारस्य यदा सदाचारत्वं तदा किमुताख्य सर्वदेशानुगतस्य सदाचारत्वं वक्तव्य मिति । किञ्च यद्येते अशिष्टत्वेनाभिमता स्तदा एभि वैदिकानां विवाहभोजनाद्यविगीतव्यवहारो मिथो न स्यात् ।

ननु—

यस्मिन् देशे य आचार: पारम्पर्य्यक्रमागत: ।
श्रुतिस्मृत्यविरुद्धश्च सदाचार: स उच्यते ॥

इति स्मृत्या सदाचारस्य निर्वचनात् प्रकृतस्य तप्तमुद्रस्य उदाहृतस्मृति विरुद्धत्वात् कथं सदाचारत्वमिति चेत् । इत्थ मवेहि । यत्रविधिंविना निषेधमात्रं तस्यैव असदाचारत्वं कल (नि) ञ्जभक्षणादिवत् । यत्र तु द्वयमपि अस्ति । तत्र विकल्पो ग्रहणाग्रहणादिवत् । फलातिशय तदभाव कामस्यैव ।

यद्वा—

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्म्मावुभौ स्मृतौ ।
स्मृतिद्वैधेतु विषय: कल्पनीय: पृथक् पृथक् ॥

इति वचना न्निषेधस्य मृदायसादि निर्म्मित तप्ताङ्क विषयत्व मिति साधुः पन्थाः ।

चक्रबिम्बं मृदा कृत्वा तथा तप्तायसेन वा ।
तदङ्कधारणान् मर्त्त्योनरकं प्रतिपद्यते ॥
सौवर्णं राजतं ताम्रं चक्रं कांस्यमयं तथा ।
द्विजातिर्धारयेन्नित्यं सर्वकर्म्मसु पाव (वाच)नम् ।
इति नारदीय पञ्चरात्रोक्तेः ।

तथा—

चक्रादिकं सदाधार्य्यं दीक्षितैर्वैष्णवागमे ।
विष्णुभक्तैर्विशेषेण द्विजै र्वेदार्थ तत्परैः ॥
अदीक्षितो धारयेद् यः पतत्येव न संशयः ।
इति त्रैलोक्य मोहन पञ्चरात्रोक्तेश्च ।

न चात्र तप्तायसेनेति पूर्वोक्त श्लोके तप्तपदवैयर्थ्यं । आयसेन इत्येतावतैव चार्थसिद्धेरिति वाच्यम् । तप्तपदस्य शुद्धपर्य्यायत्वेन शुद्धलोहनिर्म्मितमपि चक्रं न धार्य्यम् इत्येतदर्थपरत्वात् । तप्तायसं शुद्धलोह मिति विश्वकोषोक्तेः ।

यदुक्तम्—

शङ्खचक्राद्यङ्कनं च नृत्यगीतादिकं तथा ।
एकजाते रयं धर्म्मो न जातु स्याद्विजन्मनः ॥
इति ।

चक्रादिधारणं वर्ज्जनीयं ( द्विजैः ) नृत्यं तथा हरिभक्ति रहितं अनतोषक्तादिति स्कान्दे मार्गशीर्षमास माहात्म्य प्रकरणोक्तेः ।

यज्ञादिकं सदाधार्य्यं दीक्षितै र्वैष्णवागमैः ।
विष्णुभक्तैर्विशेषेण द्विजै र्वेदार्थ तत् परैः ॥
इति पूर्वोक्तविशेषोक्तेश्च ।

न चैषां वचनानां निबन्धादावनुपलम्भादप्रमाणत्वमिति वाच्यम् । पुरुषदोषोऽयं न प्रमाण दोषाः । अन्यथा भारतादि समस्त पुराणस्य निबन्धादावनुदाहृतत्वात्तस्यापि अप्रामाण्यं प्रसज्येत इत्यलं प्रपञ्चेन ।

यद्वा । एकजातेः एकस्मादेव पितुर्जातिर्जन्म यस्य स एकजातिः विशुद्ध मातापितृक स्तस्यैवायं धर्म्मो न द्विजन्मनो द्वाभ्यां पितृभ्यां जन्म यस्य स द्विजन्मा कुण्डगोलकादि स्तस्य नायं धर्म्म इति वाक्यार्थः । जाति शब्दस्य जन्मार्थत्वञ्च "तत् सिद्धिजाति साकल्य" मिति मीमांसा सूत्रव्याख्याने अग्निर्वै ब्राह्मण इत्यु-दाहरण वाक्यादौ दृष्टम् ।

विष्णुदीक्षाधिकारस्तु शुद्धस्यैव नान्यथा । यत्र यथा पञ्च-मूकपतितादिविवर्ज्जनादिति कूर्म्म पुराणोक्तेः । प्रमाणं तु पवित्रं ते इति श्रुतिरत्नैव । यदुक्तं तेषां कर्म्मान्तरे विनियुक्तत्वेन भाष्यादौ तत् परत्वानुपलब्धिरिति । तदपि न साम्प्रतम् ।

उ त्वा दिवि दक्षिणावन्तो अस्थु (स्थु) र्ये अश्वदाः सह । ते सूर्य्येण इत्यादि मन्त्रस्य अन्यत्र विनियुक्तस्यापि हिरण्यदाश्वदानादि विधायकत्वं यथा मीमांसकै रङ्गीकृतं तथाऽत्रापीति न कोऽपि दोषः ।

तदुक्तं राणके । ये अन्नदाः सह ते सूर्य्येण इत्यादि मन्त्रलिङ्गाच्चिन्नान्नदान फलविधे रङ्गीकारादिति ।

यद्वा । धन्व त्रिव प्रपा मित्यादि मन्त्राणां तत्तत् कर्म्मणि विनियुक्तानामपि प्रपाप्रवर्त्तनादि विध्याक्षेपकत्वं स्मृत्यधिकरणे अङ्गीकृतम् ।

यथा वा—

आयाहीन्द्र पथिभिरीलितेभि र्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपाम् * इत्यादीनां ब्राह्मणेन तत्तत् कर्म्मणि विनियुक्तानामपि मातुलकन्याविवाहविध्याक्षेपकत्व मङ्गीकृतं माधवाचार्य्येण पाराशर स्मृतिटीकायाम् ।

यथा वा । देवांश्च याभि र्यजते ददाति च इति मन्त्रस्य याज्यात्वेन विनियुक्तस्यापि याभिरिति यागकरणत्वेनाभिधानाद्दानेच सामर्थ्येन कर्म्मकारकतया अन्वयाद् गोद्रव्यक यागदानविधायकत्व मविरुद्धमिति न्यायसुधायामुपपादितम् ।

यथा वा—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । उतत्वः पश्यन्नददर्श वाचं उतत्वः शृण्वन् न शृणोत्येनाम् । इत्यादि

* यथा मातुलस्य योषा दुहिता भागिनेयस्य भागः भजनीया भागिनेयेन परिणेतुं योग्या । यथा च पैतृष्वसेयी पोषस्य भागः । तथायं ते वपाख्यो भाग इत्यर्थः ।

मन्त्राणां मन्त्र कर्म्मसु विनियुक्तानामपि व्याकरणाध्ययन विधि-कल्पकत्वं भगवता पतञ्जलिना महाभाष्ये ऽभ्युपगतम्।

यथा वा—

विधिशक्तिर्न मन्त्रस्य नियोगेन ऽपनीयते। स्ततोविधास्यति श्लेष नियोगात् आरयिष्यति। इति तन्त्रवार्त्तिके भट्टाचार्य्येणापि विधायकत्व मङ्गीकृतम्। तथा ऽत्रापि पवित्रं ते इत्यादि श्रुतीनां विशिष्टफल प्रापकस्य तप्ताङ्क धारणस्य विकल्पकत्वे न किञ्चित् क्षुद्रोपद्रवशङ्का इत्युपरम्यते।

अथवायं मन्त्रार्थः। तत्र

सर्व्वेवेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।

इति कठश्रुत्या।

वेदैश्च सर्व्वैरह मेववेद्यः—

इत्यादि स्मृत्याच "तत्तु समन्वयात्" इति ब्रह्मसूत्रेण च सर्व्वेषां शब्दानां परब्रह्मभूते विष्णौ समन्वयकथनात् श्रुत्यादे-स्तस्य परत्व मभ्यर्हितम्। तदयं पवित्रं ते इति मन्त्रार्थः। हे ब्रह्मणस्पते वेदस्य चतुर्मुखस्य वा स्वामिन् विष्णो ते तव पवित्रं पवित्रयति भूतानीति पवित्रद् वज्रवत् त्रायते रक्षति सुजनमिति वा पवित्रं यच्चक्रं विततं तेजोभिर्व्याप्तं विस्तृतं वा वर्त्तते। तेन चक्रेण प्रभुः सर्वोत्तमस्त्वं गात्राणि अस्माकं शरीराणि पर्य्येषि पवित्रयसि। किं पञ्चगव्यादि प्राशनवत् कतिपयाङ्गानि पवित्री-करोषि नेत्याह विश्वत इति। विश्वतः सर्वतः सर्वाण्यङ्गानि पवित्रयसीत्यर्थः। परिपूर्व इण गताविति धातुः पावनार्थे वर्त्तते।

पवित्र शब्दस्य विष्णुचक्रवाचकत्वं तु काण्वशाखायां शतपथे सौत्रा-मणी प्रकरणे दृष्टम्।

यत्ते पवित्र मिति। तद्यथा विष्णोश्चक्रं तथा पवित्रमसीत्येवैतदाह।

अभिधानेच—

पवित्रं चरणं नेमि रथाङ्गं च सुदर्शनम्।

सहस्रारं शाङ्गतनं लोकद्वारं महौजसम्।

नामानि विष्णुचक्रस्य पर्य्यायेण निबोध मे॥

इति।

तथा—

पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम्।

पर्य्यायवाचकाह्येते चक्रस्य परमात्मनः॥

इति।

तथा—

सुदर्शनेच दर्भेच पवित्रं शस्त सूत्रके।

इति विश्वकोशेऽपि दृष्टम्।

एवं पूर्व्वार्द्धेन चक्रस्तुतिमुक्त्वा उत्तरार्द्धेन चक्रधारण रहितानां निन्दापूर्व्वकं तद्धारिणां श्रीविष्णुप्राप्तिरुच्यते।

अतप्ततनुरिति। अतप्ता श्रीविष्णुचक्रेण असंस्कृता तनुर्यस्य स पुमान् आमः शास्त्रोक्तचक्रसंस्काराभावादपरिपक्वः सन् तत् प्रसिद्धं विष्ण्वाख्यं ब्रह्म न अश्नुते न प्राप्नोति। अथ ये वहन्तः विष्णुचक्रं भक्त्या धारयन्तः शास्त्रोक्तविधिना ते शृतासइत्। श्रापाके इति धातोर्निष्ठान्तस्य रूप मेतत्। तथाच शास्त्रोक्त संस्कारेण परिपक्वाः

निर्म्मलान्तःकरणाः सन्त एव तत् विष्ण्वाख्यं परंब्रह्म समाश्रित प्राप्नु-वन्ति। तच्छब्दस्य भगवद्वाचकत्वं "तदिति वा एतस्य महतो भूतस्य नाम भवतीति। तत्त्वमसि श्वेतकेतो इति।

ॐ तत् सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः।

इत्यादि श्रुतिसिद्धम्।

महाभूतं तु भगवानेव। एकोविष्णुर्म्महद्भूतमितिवचन—

धर्म्मोक्तः। तपोः। यथार्थं ज्ञानवतः। तप आलोचने इति धातोरच्प्रत्ययान्तस्य रूपम्। यद्वा। तपोः भक्तसन्तापकस्य विष्णोः। तप सन्तापे इति धातोरूपं। यत् पवित्रं चक्रं दिवस्पदे क्रीडादि गुणविशिष्टे वैकुण्ठादिस्थाने विततं व्याप्तं वर्त्तते। अस्य चक्रस्य तन्त(यः)वः रश्मयः शोचन्तो दीप्यमाना व्यस्थिरम्। भक्तेषु विविध-फल दातृत्वेन तिष्ठन्तीत्यर्थः। तथा अस्य पवित्रस्य आशवः शीघ्रगामिनः व्यापिनो वा। अशूङ् व्याप्ताविति धातोरुप्रत्यया-न्तस्य रूपमेतत्। तन्तवो रश्मयः पवीतारं तापादि संस्कारेण आत्मानं पवित्रीकुर्व्वाणं सज्जनं वा अवन्ति रक्षन्ति। पवीतार-मिति पूञ् पवने इति धातोस्तृण प्रत्ययान्तस्य रूपं। न केवल अवन्ति किन्तु चेत (सा) सि सम्यग् ज्ञानदार्नेन दिव स्पष्टं वैकु-ण्ठादिस्थानं अधितिष्ठन्ति। पवीतारं वैकुण्ठादावधिष्ठापयन्ती-त्यर्थः। अधिशीङ् स्थासां कर्म्म इति सूत्रेण अत्र द्वितीया विभक्ति र्ज्ञेया।

चमूषदिति। चम्वां संसार सेनायां दुर्गमत्वेन सीदतीति चमूषत्। तथापि श्रेनः शंसनीयः उत्तमो जीवगणः गोविन्दः

गोविन्दस्य । ऋकारान्तत्वं छान्दसं । आयुधानि शङ्खचक्रादीनि विभृत्वा विभ्राणः द्रप्सः द्रवणशीलः ज्ञानेनार्द्र इत्यर्थः । अपामूर्म्मिं अप्शब्दः कर्म्मवाचो प्रसिद्धः आरब्ध कर्म्मणामुत्कटभोगं सचमानः सेवमानोऽपि महिषो महान् अव्यभिचरितभक्त्या महत्वं प्राप्तः सन् समुद्रं क्षीरसागर लक्षणं तुरीयं धाम चतुर्थं स्थानं विवक्ति सेवते । मुक्तो भवतीत्यर्थः । क्षीरसागरस्य चतुर्थस्थानत्वं मोक्षधर्म्मादौ स्पष्टम् ।

गत्वां चतुर्थीं गच्छन्ति नारायण परायणाः ।

इति श्वेतद्वीपमाहात्म्ये ।

येन देवा इति । हे पावमान्यः देवताविशेषाः । येन पवित्रेण चक्रेण देवा ब्रह्मादयः आत्मानं सदा पुनते पवित्रीकुर्व्वन्ति तेन पवित्रेण सहस्रसंख्यधारावता मां भवत्यः पुनन्तु इति वाक्यार्थः पवित्रेणेति । दीप्यत् देदीप्यमान हे देव अग्ने क्रतून् अनु । ज्योतिष्टोमादि क्रतुफल प्राप्त्यर्थं (र्थं) कृत्वा क्रतुना संकल्पित-फलदात्रा शुक्रेण शुद्धेन पवित्रेण मां पुनीहि ।

यत्त इति । हे अग्ने ते तव अर्च्चिषि ज्वाला (अन्तरा) मध्ये विततं यत् पवित्रं वर्त्तते । तेन पवित्रेण ब्रह्म वेदो भगवान् वा मां पुनातु ।

चरण मिति । पवित्रयतीति पवित्रं विततं विस्तृतं पुराणं पुरातनं यच्चरणं चक्रं वर्त्तते । येन च सज्जनो दुष्कृतानि तरति शुद्धेन तेन पवित्रेण अरातिं अनर्थकारित्वेन शत्रुभूतं पाप्मानं पापरूप मनादि अज्ञानं अतितरेम अतिक्रान्तावभूविम ।

चरणं पवित्रमिति । नाच पुनरुक्तिः । गोबलीवर्द न्यायात् । सङ्कोचकैर्मौक्तिकपूर्णरन्ध्रैरिति वत् । एव मन्या अपि श्रुतय उक्तार्थे प्रमाणत्वेनोह्याः । ग्रन्थगौरव भयान्नात्र उच्यन्ते । अत्र कश्चिद् यदाह । भवतु तप्तचक्रादिधारणं श्रुतिस्मृत्यादि प्रमाण सिद्धं । तथापि वेदभ्रष्ट विप्राधिकारिकम् ।

तथाच स्कान्दे यज्ञवैभवखण्डे द्वात्रिंशाध्याये गौतमशापं पुरस्कृत्य उक्तम् ।

पाञ्चरात्रे चक्रपाले तथा कालामुखेऽपिच ।
शाक्ते च दीक्षितायूयं भवेत ब्राह्मणाधमाः ।
बौधे चार्हन्मते चैव तथा पाशुपतेऽपिच ॥

तथा तत्रैव—

आयुधैः शङ्खचक्राद्यैस्तदीयै रङ्किताजनाः ।
अन्तितमे महामोहाद् भवेयु र्यांसयोर्द्वयोः ॥
इति ।

शाम्बपुराणेऽपि—

पञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापति रुक्तवान् ॥
इति ।

सूतसंहितायां च—

अत्यन्तस्खलितानां हि द्विजानां वेदमार्गतः ।
पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ॥

हेमाद्रौ प्रायश्चित्तकाण्डे पाद्मेऽपि—

शृणु राम महाबाहो लिङ्गचक्रादिधारणम् ।
शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः ॥
विप्रस्यैतद्विगर्ह्यत्वात् प्रायश्चित्त मुदीरितम् ।

इत्यादिबहुवचनदर्शनात् शङ्खचक्रादिधारणं वेदभ्रष्ट द्विजविषय मिति यत् केषाञ्चित् मतम् । तदत्यन्तग्रन्थानवलोकन जनिताज्ञान विजृम्भणमात्रम् । एषां वचनानां नारदीय पञ्चरात्रव्यतिरिक्तागम विषयत्वात् । तथाहि पाद्मे पातालखण्डे एकसप्तत्यध्याये गौतमशाप प्रस्तावे ।

गौतमेनाभिशप्तास्तु द्विजा उद्विग्नमानसाः ।
कश्चित् काल मतिक्रम्य तेषु केचित्त मन्ययुः ॥
भूयसा प्रणिपातेन गौतमं तेऽभ्यपूजयन् ।
शुश्रुषायां स्थिता विप्रामनोवाक् काय कर्मभिः ॥
गौतमं प्रीणयामासुः शापस्यान्तमभीप्सवः ।
अथ प्रीतमनास्तेषां गौतमो मुनिसत्तमः ॥
उवाच मुनयः किंवो ददामि मुनिपुङ्गवाः ।
मत्तोवर मभीप्सध्वम् युष्माकं यदभीप्सितम् ॥

मुनय ऊचुः—

नास्माक मभिवाञ्छास्ति वरेषु मुनिसत्तम ।
शापदग्धाः श्रुति भ्रष्टा स्तस्मात् शापं निवर्त्तय ॥

गौतम उवाच—

अनृतं नोक्तपूर्वं मे यूयं मद्भक्तिभाविताः ।

तन्त्रमार्गं प्रवेशेऽपि वेदमार्गं प्रवर्त्तकाः ॥
भविष्यथ यथापूर्व्वं मत्तः संशृणुत द्विजाः ।
वेदानां सारमुद्धृत्य यत्तन्त्रं हरिरुक्तवान् ॥
श्वेतद्वीपे नारदाय मोक्षकामाय धीमते ।
वेदाविरुद्धं तत्तन्त्रं सर्व्ववेदार्थ बृंहितम् ॥
तत्तन्त्रदीक्षां प्राप्तानां शङ्खचक्राङ्क धारिणाम् ।
युष्माकं वेदमार्गोऽपि न नश्यति ममाज्ञया ॥
वेदशास्त्रार्थ वेत्तापि यो ह्यनेन न संस्कृतः ।
न स वेदफलं धत्ते यथा गौर्भारवाहकः ॥
सर्व्ववेद मयं तन्त्रं नारदे पाञ्चरात्रकम् ।
अन्यानि यानि तन्त्राणि हरिणाच हरेण (वा)च ।
कृतानि ऋषिभिश्चापि मोहनानि न संशयः ॥
तत्र ये विहिता धर्म्मा विरुद्धा वेदवादिनाम् ।
अत स्तत्र न निष्ठास्तु युष्माकं मत् प्रसादतः ॥
इति ।

ब्रह्माण्डेऽपि षोड़शाध्याये—

नारायण प्रणीतं यत्तन्त्रं वेदोपबृंहितम् ।
तदेव वैदिकैर्ग्राह्यं नान्यद् गौतमशापतः ॥

भारतेऽपि नारदीये मोक्षधर्म्मे—

पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः परः ।
सर्व्वेषुच नृपश्रेष्ठ ज्ञानेष्वेतद्विशिष्यते ॥
यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः ।

न चैनं नैव जानन्ति तमोभूता विशांपते ॥

तथा—

वेद मेकं सांख्ययोगं योगारण्यक मेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते ॥
पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
एकान्तभावोपगता स्ते हरिं प्रविशन्ति ते ।
यशः कान्तिर्धनं धर्मो नारायण परात्मकः ॥
इति नारदीय पञ्चरात्रस्य वेदात्मकत्वमुक्तम् ।

पाद्मे माघ माहात्म्येऽपि
विप्राणामवैष्णवत्वे निन्दनमुक्तम्—
अवैष्णवोहतोविप्रो हतं श्राद्धमदक्षिणम् ।

तथा—

श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् ।
इति ।

शैवादेर्निन्दापि मिताक्षरायाम्—

शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिक नास्तिकान् ।
विकर्मस्थान् द्विजाञ्छूद्रान् सवासा जलमाविशेत् ॥

स्कान्दे—

हरे यथावयोर्भेदं न करोति महामतिः ।
शिवभक्तः स विज्ञेयो महापाशुपतश्च सः ॥

ब्रह्मवैवर्ते—

स्वधर्मसंत्यागिनं विप्रं ब्रह्माहमितिवादिनम् ।

कर्म्म ब्रह्मोभय भ्रष्टं विजानीयं तमेवरम् ॥

इत्यादिना।

वशिष्ठसंहितायामपि—

सर्गादौ ब्राह्मणाः सृष्टा वैष्णवत्वेन चोदिताः।
इतरेऽपि त्रयो वर्णा ब्रह्मणा विष्णुदेविना ॥
तस्माच्च वैष्णवाविप्राः प्रकृत्याद्विजसत्तमाः।
अवैष्णवत्वं विप्राणां महापातक सञ्चितम् ॥

इत्यादिना।

वैष्णवशब्दोऽत्र संस्कारविशिष्ट वाचकः। यूपाहवनी-
यादिशब्दवत्—

वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः।

इति कालनिर्णये माधवाचार्य्योक्तेः।

वैष्णवं द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
शङ्खचक्रादिभिर्बाह्य मान्तरं वीतरागता ॥

इति पाद्मोक्तेश्च।

तस्माच्छ्रुति स्मृत्यागमादि सर्व्वप्रमाण सिद्धत्वाद्ब्राह्मणैः
शङ्खचक्रादि धारणं सर्वथा कर्त्तव्यमिति सिद्धम् ॥

तत् प्रकारस्तु पाञ्चरात्रेऽभिहितः—

शयन्यां चैव बोधिन्यां दीक्षाकाले विशेषतः।
तप्तशङ्खादिकं धार्य्यं विधानेन समन्वितम् ॥
सुपुष्प शोभिते रम्ये वितानध्वजशोभिते।

मण्डपे स्थापयेद्देवं धूपे दीपैर्निवेदनैः ॥
आराधनं ततः कुर्य्याच्चक्रस्य परमात्मनः ।
स्वर्णेन कारयेच्चक्रं शङ्खं रौप्येण कारयेत् ॥
षट्कोणैश्च समायुक्तं षडक्षर समन्वितम् ।
मध्ये प्रणवसंयुक्तं बाह्ये वसुदलैर्युतम् ॥
मूलमन्त्रेण संयुक्तमेतच्चक्रमिहोच्यते ।
मध्ये तद्बीज संयुक्तं शङ्खं कुर्य्याद्विचक्षणः ॥
स्नाप्य * पञ्चामृतैः शुद्धे रथाग्र तत् पुरतोहरेः ।
ध्यात्वा सुदर्शनं तस्मिन् सहस्रारं महौजसम् ॥
कोटिसूर्य्यसमप्रख्यं तेजसा भुवनत्रये ।
षडक्षरेण मन्त्रेण † पूजयित्वाविधानतः ॥
जपं कुर्य्यात्ततः पश्चाच्छतसाहस्रसंख्यया ।
षट् सहस्रं तु वा जप्त्वा पश्चाद्धोमं समाचरेत् ॥
इषुमात्रं चतुर्दिक्षु गोमयेन सवारिणा ।
उपलिप्य स्थण्डिलं तु चतुरस्रं सुशोभनम् ॥
तन्मध्येऽग्निं प्रतिष्ठाप्य स्वगृह्योक्तविधानतः ।
आज्य संस्कारपूर्वं तु इध्माधानं समाचरेत् ॥
आघारा वाज्यभागौ तु हुत्वा होमं (समा) चरेत् सुधीः ।

* स्नाप्येति पाठः । समासं एव च्युपोविधानात् ।

† सुदर्शनायनम एवं रूपेण ।

अग्न आयूंषीति त्वचं * इन्द्रो ब्रह्मत्वचं † तथा ॥
प्रजापते नेति ‡ ऋचं विश्वे देवा स इत्यृचम् § ।
त्वया वयं सधन्येति ‖ जुहुयात् प्रत्यृचं तथा ॥

* अग्न आयूंषि पवस आसुवोर्जमिषं च न: ।
आरे बाधस्व दुच्छुनाम् । १८
पुनन्तु मा देवजना: पुनन्तु मनसा धिय: ।
पुनन्तु विश्वा भूतानि जातवेद: पुनीहि माम् ॥ १९
पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ।
अग्ने क्रत्वा क्रतूंरनु ॥ —इति ४०म. १९क. यजु: ।

† इन्द्रो ब्रह्मेन्द्र ऋषिरिन्द्र: पुरू पुरुहूत: ।
महान् महीभि: शचीभि: ॥ ७
स स्तव्य: स हव्य: सत्य: सत्वा तुविकूर्मि: ।
एकश्चित् सन्नभिभूति: ॥ ८
तमर्केभिस्तं सामभिस्तं गायत्रैश्चर्षणय: ।
इन्द्रं वर्धन्ति क्षितय: ॥ ९ऋक्. ८म. ८सू १६ ।

‡ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत् कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥
—इति १०म. १२१सू. १०ऋक् ।

§ विश्वे देवास आगत शृणुता म इमं हवम् ।
एदं बर्हिर्निषीदत ।
उपयाम गृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य: ।
एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य: ॥ ७क. १४म. यजु: ।

‖ त्वया वयं सधन्यस्त्वोता तव प्रणीत्यश्याम वाजान् ।
उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥
४म. ४सू. १४ऋक् ।

पश्चात्तु वैष्णवैः सूक्तमन्त्रैर्विष्णुप्रकाशकैः ।
पवित्रं त इति * ह्याभ्यामृग्भ्यां होमं समाचरेत् ॥
विष्णोरराटमसि † च ये देवा इति च त्रिभिः ‡ ।
एवमाज्येन होतव्यं मन्त्रैः प्रणवपूर्वकैः ॥
पश्चात् सुदर्शनं तस्मिन् शङ्खं चाग्नौ विनिक्षिपेत् ।
दक्षिणं च भुजं पूर्वं चक्रेण प्रतपेत्ततः ॥
वामं संप्रतपेत् पश्चाच्छङ्खेनैव द्विजोत्तमः ।
शीतोदके विनिक्षिप्य पूजयेत् सुसमाहितः ॥

---

* पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत् समाशत ॥
तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ॥
—इति ९म. ८३सू. २ऋक् ।

† विष्णोरराटमसि विष्णोः श्नप्त्रे स्थः ।
विष्णोः स्यूरसि । विष्णोर्ध्रुवोऽसि ।
वैष्णवमसि विष्णवे त्वा ॥ ५अ. २१म. यजुः ।

‡ ये देवा देवानां यज्ञिया यज्ञियानां संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन् स्वयं पिबन्तु मधुनो घृतस्य ॥ १३ ।
ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुर एतारो अस्य ।
येभ्यो न ऋते पवते धाम किंचन न ते दिवो न पृथिव्या अधिस्नुषु ॥ १४ ।
प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः ।
अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥
१५म १७अ. यजुः ।

ततः स्विष्टकृतं हुत्वा होम शेषं समापयेत् ।
एवं यो विदधयाद् भक्त्या मङ्गचक्रादि वैष्णव: ॥
संसाररोगात् सम्मुक्तो विष्णुलोकं स गच्छति ॥
इति ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
मङ्गचक्रादिधारणविधानं समाप्तम् ॥

---

अथ आषाढ़ शुक्लद्वादश्यां विशेषो भविष्ये—



आभा कासु सिते पक्षे मैत्रश्रवण रेवती ।
सङ्गमे नैव भोक्तव्यं द्वादश द्वादशीर्हरेत् ॥

अस्यार्थ: । आषाढ़ भाद्रपद कार्त्तिक द्वादशीषु अनुराधा श्रवणा रेवतीभि: क्रमेण योगे सति तत्र पारणं न कुर्य्यादिति ।

अत्रविशेषोविष्णुधर्म्मे—

मैत्राद्यपादे स्वपितीहविष्णु:
पौष्णान्त्यपादे प्रतिबोधमेति ।
श्रुतेश्च मध्ये परिवर्त्तमेति
सुप्ति प्रबोध परिवर्त्तनमेव वर्ज्यम् । इति ।

अत्रैव विष्णुशयनोत्सव उक्तो हेमाद्रौ ब्राह्मे—

एकादश्यां तु शुक्लाया माषाढ़े भगवान् हरिः ।
भुजङ्ग शयने शेते क्षीरार्णवजले सदा ॥

इति ।

स्कान्देतु द्वादश्यामुक्तः—

आभाकाद्येषु मासेषु मिथुने माधवस्यच ।
द्वादश्यां शुक्लपक्षेच प्रस्वापावर्त्तनोत्सवः ॥

तथा—

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
आभाका सितपक्षेषु शयनावर्त्तनादिकम् ॥

इति ।

वाराहेच—

द्वादशीति पारणाहोपलक्ष(णम्) कम् ।
पारणाहे पूर्व्वरात्रे घण्टादीन् वादयन् मुहुः ॥

इति विष्णुधर्म्मोक्तिः ।

अत्र एकादशीद्वादश्योर्देशभेदेन व्यवस्थाद्रष्टव्या ।
अयमुत्सवो मलमासे सति न कार्य्यः ।
ईशानस्य बलिं विष्णोः शयनं परिवर्ज्जयेत् ॥

इति कालादर्शोक्तिः ।

यत्तु—

एकादश्यां तु गृह्णीयात् संक्रान्तौ कर्कटस्य च ।
आषाढ्यां वा नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ॥

इति ब्रह्मवैवर्त्तवचनं चातुर्मास्य व्रतविधायकं। तत् मल-मासेऽपि द्रष्टव्यम्।

मिथुनस्थो यदाभानु रमावस्या द्वयं स्पृशेत्।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपितिकर्कटे॥

इति हेमाद्रौ मोक्षधृतोक्तेः।

अत्रैव चातुर्मास्यव्रतारम्भ उक्तोमहाभारते—

आषाढ़स्य सितेपक्षे एकादश्या मुपोषितः।
चातुर्मास्य व्रतं कुर्य्याद् यत् किञ्चिन्नियतोनरः॥

इति।

अस्यनित्यत्वमुक्तं तत्रैव—

वार्षिकांश्चतुरो मासान् वाहयेत् केनचिन्नरः।
व्रतेन नोचेदाप्नोति किल्बिषं वत्सरोद्भवम्।
असम्भवे तुलार्केऽपि कर्त्तव्यं तत् प्रयत्नतः॥

इति।

इदं शुक्रास्तादावपि आरब्धं पूर्व्वं चेत् कार्य्यम्।

न शैशवं न मौढ्यं च शुक्रगुर्व्वोर्नवा तिथेः।
खण्डत्वं चिन्तयेदादौ चातुर्मास्य विधौ नरः॥

इति वृद्धगार्ग्योक्तेः।

प्रथमारम्भस्तु न भवत्येव—

आरब्धे दूषणं नास्ति अनारब्धे तु दूषणम्।

इति विष्णुस्मृतेः।

अशौचेऽपि एवमेव—

अशुचिर्वा शुचिर्वापि यदि स्त्री यदि वा पुमान् ।
व्रतमेतन्नरः कृत्वा सर्वपापैः प्रमुच्यते ॥

इति स्कान्दोक्तेः । एतच्च प्रतिवत्सरं कार्य्यम् ।

प्रतिवर्षं च यः कुर्य्यादेवं वै संस्मरन् हरिम् ।
देहान्ते ऽतिप्रदीप्तेन विमानेनार्कवर्चसा ।
मोदते विष्णुलोकेऽसौ यावदाभूत संप्लवम् ॥

इति हेमाद्रौ भविष्योक्तेः ।

इदं विष्णुभक्तेतरैरपि कार्य्यम् । नित्यत्वात् ।

शिवे वा भक्तिसंयुक्तो भानौ वा गणनायके ।
कृत्वा व्रतमिदं ब्रह्मन् यथोक्तं फलभाग् भवेत् ॥

इति ब्रह्मवैवर्त्तवचनाच्च ।

## अथ हरिशयनोत्सवः ।

देवं संपूज्य विधि (ना) वद् यानमारोप्य भक्तितः ।
जलाशयं ततो नीत्वा कुर्य्याद्वै शयनं हरेः ॥
स्तुत्वा पुरुषसूक्तेन अभ्रश्यपार इत्यपि ।
शेष पर्य्यङ्कवर्य्येऽस्मिन् फणामणि विभूषिते ॥
श्वेतद्वीपान्तरे देव कुरु निद्रां जगत्पते ।
इति मन्त्रेण तं देवं स्नापयित्वा प्रपूजयच ।
श्वेतद्वीपे भोगिनाथे योगनाथे स्थिते त्वयि ॥
चातुर्मास्य व्रतेऽनुज्ञां देहि लक्ष्मीपते मम ।

तस्यानुज्ञां गृहीत्वा इमं मन्त्र मुदीरयेत् ॥

इति रामार्च्चन चन्द्रिकायाम्।

व्रतग्रहण प्रकारस्तु हेमाद्रौ भविष्ये—

महापूजां ततः कुर्य्याद्देवदेवस्य चक्रिणः।

जाती कुसुम मालाभि र्मन्त्रेणानेन पूजयेत् ॥

मन्त्रस्तु—

त्वयि सुप्ते जगन्नाथ जगत् सुप्तं भवेदिदम्।

विबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत ॥

एवं तां प्रतिमां विष्णोः पूजयित्वा स्वयं नरः।

प्रभाषेताग्रतोविष्णोः कृताञ्जलि पुट स्तथा ॥

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि।

इमं करिष्ये नियमं निर्विघ्नं कुरु केशव ॥

इदं व्रतं मया देव गृहीतं पुरतस्तव।

निर्विघ्नां सिद्धि माप्नोतु प्रसादात्तव केशव ॥

गृहीतेऽस्मिन् व्रते देव पञ्चत्वं यदि मे भवेत्।

तदेदं पूर्णतां यातु त्वत् प्रसादाद्रमापते ॥

गृहीतेऽस्मिन् व्रते देव यद्यपूर्णेऽप्यहं म्रिये।

तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्द्दन ॥

इति।

अथ व्रतविशेष उक्तो भार्गवार्च्चनचन्द्रिकायां भविष्ये—

श्रावणे वर्ज्जयेच्छाकं दधि भाद्र पदे तथा।

दुग्धमाश्वयुजि मासि कार्त्तिके द्विदलं त्यजेत् ॥ इति।

स्कान्देऽपि—

चत्वार्य्येतानि नित्यानि चतुराश्रमवर्त्ति (वर्णि) नाम् ।
प्रथमे मासि कर्त्तव्यं नित्यं शाकव्रतं नरैः ॥
द्वितीये मासि कर्त्तव्यं दधिव्रतमनुत्तमम् ।
पयोव्रतं तृतीयेतु चतुर्थेतु निशामय ॥
द्विदलं बहुवीजं च वृन्ताकं चैव वर्ज्जयेत् ।
नित्यान्येतानि विप्रेन्द्र व्रतान्याहु र्मनीषिणः ॥
जम्बीरं राजमाषांश्च मूलकं रक्तमूलकम् ।
कुष्माण्डमिक्षुदण्डं च चातुर्मास्ये त्यजेद्बुधः ॥
विशेषाद्बदरीं धात्रीं कुष्माण्डं तिन्ति (न्ती)डीं त्यजेत् ।
जीर्णं धात्रीफलं ग्राह्यं तत्रि कायस्य शोधनम् * ॥

तीर्थ सौख्येऽपि—

वार्षिकांश्चतुरोमासान् प्रसुप्ते वै जनार्द्दने ।
मञ्चखट्वादि शयनं वर्ज्जयेद् भक्तिमान्नरः ॥
अनृतौ वर्ज्जयेद् भार्य्यां मांसं मधु परौदनम् ।
पटोलं मूलकं चैव वृन्ताकं च न भक्षयेत् ॥
अभक्ष्यं वर्ज्जयेद्दूरान् मसूरं सितसर्षपम् ।
राजमाषान् कुलित्थांश्च शाकधान्यं च वर्ज्जयेत् ॥
शाकं दधि पयो माषान्क्षारलवणादिषु (वर्जयेत्) संत्यजेत् ।

अत्र शक्यते भक्षितु मनेनेति शाक इति व्युत्पत्तौ सूपादे-

* कथञ्चित् कायशोधनम् इति निर्णयसिन्धौ पाठः ।

रपि त्यागापत्ते र्योगरूढ़त्वेन * शाकस्य दशविधत्वं ज्ञेयम्।

तदाह कोशकार:—

मूलपत्र करीराग्र फलकाण्डाधिरूढ़का:।
त्वक् पुष्पं कवचं चेति शाकं दशविधं स्मृतम् † ॥
इति।

मूलं मार्द्रकादि। पत्रं प्रसिद्धं। करीरं वंशाङ्कुर:। अग्रं नवपल्लवरूपं। अधिरूढ़ मङ्कुररूपं। अन्यत् स्पष्टम्।

आचारदीपेऽपि—

वृन्ताकञ्च कलिङ्गं च बिल्वोदुम्बरभिस्सटा: ‡।
उदरे यस्य जीर्यन्ति तस्य दूरतरो हरि: ॥

अपरार्केदेवल:—

ब्रह्मचर्यं तथा शौचं सत्य मामिषवर्ज्जनम्।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चय: ॥

आमिषाणि पाद्मे—

प्राण्यङ्गचूर्णं चर्म्माम्बु जम्बीरं बीजपूरकम्।
अयज्ञशिष्टं माषादि यद्विष्णोरनिवेदितम्।
दग्ध मन्नं मसूरंच मांसं चेत्यष्टधाऽऽमिषम् ॥

---

* योगाद्रूढ़ं बलीयस्त्वादिति भाव:।

† वस्तुतस्तु तत्तत् कालीइवा: शाका वर्जनीया: प्रयत्नत:। इति वचनात् तत्तत् कालीनशाकानामेव निषेध:। अत तत्तत् कालीइव जातीयत्वं विवक्षित तेन श्रावणादिकालीनातिरिक्तानामपि निषेध इति कल्पतरु.।

‡ भिस्सटा दग्धमन्नम्।

अन्यत्रापि—

गोच्छागी महिषी क्षीरादन्य दुग्धादि चामिषम् ।
धान्ये मसूरिकाः प्रोक्ता अन्नं पर्य्युषितं तथा ॥
द्विजक्रीतारसाः सर्व्वे लवणं (भूमिजं) कृत्रिमं तथा ।
ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् ।
आत्मार्थं पाचितं चान्नं मामिषं तत् स्मृतं बुधैः ॥

विष्णुधर्म्मोत्तरेऽपि—

चतुर्ष्वपीह मासेषु हविष्याशी न दोषभाक् ।
कुन्ताकं सन्धितं चैव शुभे देवैविवर्ज्जयेत् ॥

सन्धितं वत्सान्तर प्रसुत गवादि दुग्धं । लवणं शाकं चेत्यन्ये ।

हविष्य मुक्तं भविष्ये ।

हैमन्तिकं सिताऽस्विन्नं धान्यं मुद्गास्तिलायवाः ।
कलाय कङ्गुनीवारा वास्तूकं हिलमोचिका ॥
षष्टिका कालशाकं च मूलकं केमुकेतरत् ।
कन्दं सैन्धव सामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृत सारं च पनसाम्र हरीतकी ।
पिप्पली जीरकं चैव नागरङ्गं च तिन्तिड़ी ॥
कदली लवली धात्री फलान्यगुड़ मैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥

अत्र अस्विन्नधान्य मित्यभिधानादन्यत्रस्विन्नधान्ये न दोषः

कृताकृताद्युक्तानि हेमाद्रौ भविष्ये—

स्त्री वा नरो वा मद्भक्तो धर्म्मार्थं सुदृढव्रतः ।

गृह्णीयान्नियमानेतान् दन्तधावनपूर्व्वकम् ॥
तेषां फलानि वक्ष्यामि तत् कर्तॄणां पृथक् पृथक्।
मधु (मिष्ट) स्वरो भवेद्राजन् पुरुषोगुड़वर्ज्जनात् ॥
तैलस्य वर्ज्जनं कृत्वा सुन्दराङ्गः प्रजायते।
योगाभ्यासी भवेद् यस्तु स ब्रह्मपदमाप्नुयात् ॥
ताम्बुल वर्ज्जनाद् भोगी रक्तकण्ठश्च जायते।
घृतत्यागेन लावण्यं सर्वस्निग्ध तनुर्भवेत् ॥
शाक पत्राशनाद् भोगी अपक्वादोऽमलो भवेत्।
भूमौ प्रस्तरशायोच विप्रोमुनिवरो भवेत् ॥
एकान्तरोपवासेन ब्रह्मलोके महीयते।
धारणान्नखरोम्णां च गङ्गास्नान फलं लभेत् ॥
मौनव्रती भवेद् यस्तु तस्याज्ञाऽस्खलिता भवेत्।
भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् ॥
प्रदक्षिण शतं यस्तु करोति स्तुति पाठकः।
हंसयुक्तविमानेन स हि विष्णु पदं व्रजेत् ॥
अयाचितेन प्राप्नोति पुत्रान् धर्म्मानशेषतः।
षष्ठान्नकाल भोक्ताच कल्पस्थायी भवेद्दिवि ॥
पर्णेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत्।
गुड़वर्ज्जीनरोदद्यात्तत् पूर्णं ताम्र भाजनम् ॥
सहिरण्यं नृपश्रेष्ठ लवणस्याप्ययं विधिः *।

---

* एषां व्रतानां समाप्तौ कार्त्तिक्यां दानानि एकभक्तव्रती दम्पती सम्पूज्य धेनुर्देया। नक्ते वस्त्रयुगम। एकान्तरोपवासि गौः। भूशयने शय्या।

सुरेदेवेषु यो विष्णोः शिवस्याङ्गन मर्चयेत् ॥
पद्मवर्णैस्तु योनित्यं स्वस्तिकैः पद्मकैस्तथा।
स याति रुद्रलोकं हि गाणपत्यमवाप्नुयात् ॥

भार्गवार्चनेतु—

शयनी बोधनीमध्ये शमी दूर्वापमार्गकैः।
भृङ्गराजेन देवां सु नार्चयेत कदाचन।
नखलोमादिकानां तु धारणं कर्मसाधनम् ॥

इति।

स्कान्दपुराणेऽपि—

एकान्तरं त्र्यन्तरं वा कुर्यान् मासोपवासकम्।
अनोदनं फलाहारं नक्तव्रत मथापिवा ॥

इति।

ब्रह्मवैवर्त्ते—

लवणं वर्ज्जयेद् यस्तु चातुर्मास्ये द्विजोत्तमः।
दत्त्वाऽनु दक्षिणां हेम लवणं च द्विजातये।

---

षष्ठकालभोजने गौः। व्रीहिगोधूमादि त्यागे हैमव्रीह्यादि। कृच्छ्रे गोयुगम्। शाकाशने गौः। पयोव्रते दधि मधु च। घृतव्रतेषु वासो गौश्च। ब्रह्मचर्ये स्वर्णमूर्त्तिः। ताम्बूलव्रते वस्त्रयुगम्। मौने घृतकुम्भोवस्त्रयुगं घण्टा च। देवाग्रे रङ्गमालिकाकरणे धेनु हैम पद्मं च। दीपिकाव्रते दीपिका वासोयुगंच। भूमिभोजने पर्णभोजनेच कांस्य पात्रं गौश्च। चतुष्पथदीपदाने गोवासे च गौर्द्वयी। प्रदक्षिणव्रते वस्त्रं। अनुक्तेषु स्वर्णं गौश्च इत्याद्योऽपि हेमाद्रौ द्रष्टव्यानि।

व्रतान्ते च प्रदातव्या यथाशक्तितया शुभा॥
यथाशक्तितया धेनुः। एवमन्यान्यपि व्रतानि यत्नतः कार्य्याणि।
व्रताधिकारिणो भविष्ये—

अनग्नयस्तु ये विप्रा स्तेषां श्रेयोविधीयते।
जपोपवासनियमै र्नानादानै स्तथा नृप॥

इति।

अनग्नि ग्रहणं तेषा मवश्य कर्त्तव्यता प्रतिपादनाय नत्वितर निरासाय।

आहिताग्निरनग्निर्वा यश्चदान व्रतादिकम्।
शूद्रोवर्णश्चतुर्थोऽपि वर्णत्वात् कर्त्तु मर्हति॥
वेद मन्त्र स्वधास्वाहा वषट् कारादिभिर्विना।
अत्र स्त्रीणामपि अधिकारः।

इति विष्णुधर्म्मे विशेषोक्तेः।

भार्य्या पत्युर्मतेनैव व्रतादीनाचरेत् सदा।

इति कात्यायन स्मृतेः।

यत्तु स्कान्दे—

नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम्।
भर्त्तृशुश्रूषयैवेह लोकानिष्टान् व्रजन्ति ताः॥

तद् भर्त्तननुज्ञाविषयमिति निबन्धकाराः।
नूतन व्रतारम्भ कालस्तु रत्नमालायामभिहितः।

सोमसौम्य गुरुशुक्रवासराः
सर्वकर्म्मसु (नितान्त) भवन्ति सिद्धिदाः॥

भानु भौम शनिवासरेषु न
प्रोक्तमेव खलु कर्म सिध्यति॥

विष्कुसंज्ञा इह ये च योगा स्तेषामनिष्टः खलु पाद आद्यः।
सवेष्टतिस्तु व्यतिपातनामा सर्व्वोऽप्यनिष्टः परिघस्य चार्द्धम्॥
तिस्रस्तु योगे प्रथमे सवज्रे व्याघात संज्ञे नव पञ्च शूले।
गण्डेऽतिगण्डेच षडेव नाड्यः शुभेषु कार्य्येषु विवर्ज्जनीयाः॥
न सिद्धि मायाति कृतं च विष्ट्यां विषारिघातादिकमत्रसिद्धम्।

व्यवहार समुच्चये पत्र विशेष उक्तः—

सर्पिणीतु सिते पक्षे कृष्णेचैव तु वृश्चिकी।
सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च॥

माधवीये तु—

विष्टि र्यदाह्नि तिथेरपरार्द्धजाता
पूर्व्वार्द्धजा निशि तदा शुभदा च पुच्छे॥

ब्रह्मयामलेऽपि—

दिनभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा।
न त्याज्या शुभकार्य्येषु प्राहुरेवं पुरातनाः॥

इति।

तिथि माह सत्यव्रतः—

उदयस्था तिथि र्या हि न भवेद्दिनमध्यभाक्।
सा खण्डा न व्रतानां स्यादारम्भश्च समापनम्॥

तथेति शेषः।

इति।

देवलः—

अभुक्त्वा प्रातराहारं स्नात्वाऽऽचम्य समाहितः ।
सूर्य्याय देवताभ्यश्च निवेद्य व्रतमाचरेत् ॥

व्रतान्ते कार्य्यमुक्तं माग्नेये—

स्नात्वा व्रतवता सर्वव्रतेषु व्रतमूर्त्तयः ।
पूज्याः सुवर्ण मय्याद्याः * शक्त्या वै भूमिशायिना ॥
जपोहोमश्च सामान्यं व्रतान्ते दानमेवच ।
चतुर्विं(श)शा द्वादश वा पञ्च वा त्रय एव वा ।
विप्राः पूज्या यथाशक्ति तेभ्यो दद्याच्च दक्षिणाम् ॥

इति ।

अत्र विप्रा इति पुंलिङ्गनिर्द्देशात् पुरुषा एव भोज्याः । न तु स्त्रियः । विरूपैकशेषस्य प्रमाणान्तरं विना अयुक्तत्वात् । एवं सहस्रभोजनादावपि ज्ञेयम् । एतेन एकस्य ब्राह्मणस्य आवृत्त्या भोजनमपि परास्तम् । बहुत्वस्य एकपदश्रुत्या ब्राह्मणान्वितत्वेन भोजनान्वयाभावादिति पार्थसारथि मिश्राः ।

भविष्ये—

अनुक्तद्रव्य तत् संख्या देवता प्रतिमा नृप ।
सौवर्णी राजती ताम्रा वृक्षजा मार्त्तिकी तथा ॥
चित्रजा पिष्टलेपोत्था निजवित्तानुरूपतः ।
आमाषात् पलपर्य्यन्तं कर्त्तव्या शक्तिवर्ज्जितैः ॥

* आद्यपदेन रौप्यमय्यादयो ग्राह्या ।

ग्निवर्जिते रग्नैरित्यर्थः ।

उद्यापनानुक्तौ नन्दिपुराणे विशेषोऽभिहितः ।

कुर्य्यादुद्यापनं तस्य समाप्तौ यदुदीरितम् ।
उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत् ।
यदि चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् ॥
वित्तानुसारतोदद्यादनुक्तोद्यापने व्रते ।
गांचैव काञ्चनं दद्याद्व्रतस्य परिपूर्त्तये ॥

अशक्तौ तु नारदीये—

सर्वेषा मप्यलाभेतु यथोक्तकरणं विना ।
विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्त्तये ॥
इथा विप्रवचो यस्तु गृह्णाति मनुजः (शुभं) प्रिये ।
अदत्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥

भारते—

व्रतोपनिषदे चैव सर्वकर्म्मसु दक्षिणा ।
सर्वत्र तु मयोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥
शिवनैवोद्यं यस्मात् सर्वत्र पितृवल्लभे ।
अमङ्गलं तद्यत्नेन देवकार्य्येषु वर्ज्जयेत् ॥

व्रतिना परान्नं वर्ज्यमित्युक्तं देवीपुराणे ।

व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः ।
परान्नभोजनाद्देवि यस्यान्नं तस्य तत् फलम् ॥

इदमपि यतिब्रह्मचारिव्यतिरिक्तेषु । तयोः पाकनिषेधात् ।

तदुक्तमाग्नेये—

नित्यस्नायी मिताहारो गुरुदेवद्विजार्च्चकः ।
क्षारं क्षौद्रं च लवणं मधुमांसानि वर्जयेत् ॥
तिलमुद्गादृते शैव्यं श (स) स्ये गोधूमकोद्रवौ ।
धान्यकं देवधान्यं च शमीधान्यं तथैवचम् ।
सिद्धधान्यं तथा पण्य मेव क्षारगणः स्मृतः ॥
इति ।

गृहीतव्रतत्यागे छागलेयः—

पूर्वं व्रतं गृहीत्वा यो नाचरेत् काम मोहितः ।
जीवन् भवति चण्डालो मृतः श्वाचाभिजायते ॥

तत् प्रायश्चित्तमुक्तं गारुड़े—

क्रोधाल्लोभात् प्रमादाद्वा व्रतभङ्गो भवेद् यदि ।
दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा ॥

इति प्रायश्चित्तोक्ते रतिक्रान्त व्रतानुष्ठानं कालान्तरे नास्तीति गम्यते । इदं प्रायश्चित्तं शक्तपरम् । अशक्तस्य तु हेमाद्रौ—

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनादि वा दद्याच्छक्तश्चेद्विगुणं तदा ॥
सहस्र सम्मितां देवीं जपेद्वा प्राणसंयमान् ।
कुर्य्याद्द्वादश संख्याकान् यथाशक्त्यातुरोनरः ॥

अपरार्के देवलः—

ब्रह्मचर्य्यं तथा शौचं सत्य मामिषवर्ज्जनम् ।

व्रतेष्वेतानि चत्वारि वरिष्ठानीतिनिश्चयः ॥

मात्स्ये—

तस्मात् व्रतोपवासेन स्नान मभ्यङ्ग पूर्वकम् ।
वर्ज्जनीयं प्रयत्नेन रूपघ्नं तत् परं नृप ॥

अन्येऽपि व्रतनियमास्तत्र तत्र वक्ष्यन्ते ।

स्त्रीव्रते विशेषो हेमाद्रौ—

गन्धालङ्कार ताम्बूलं पुष्पमालानुलेपनम् ।
उपवासे न दुष्येत दन्तधावन मञ्जनम् ।
विधवा पतिमार्गेण कुमारी वा यदृच्छया ॥

इति ।

विष्णुधर्म्मे—

समस्तेषूपवासेषु पुमान् वाथ सुवासिनी ।
धारयेद्रक्तवस्त्राणि कुसुमानि सितानिच ।
विधवा शुक्लवसन मेकमेवहि धारयेत् ॥

मनुरपि—

पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावन मञ्जनम् ॥ इति ।

यद्यपीदं सर्वोपवासविषयत्वेन प्रतीयते । तथापि सौभाग्यार्थक नवरात्राद्युपवासविषयम् । नत्वेकादश्याद्युपवास विषयम् ।

असकृज्जलपानाच्च सकृत्ताम्बूलभक्षणात् ।
उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥

इति देवलेन तन्निषेधात् ।

यत्तु हरिवंशे काम्य व्रतेऽपि तन्निषेध उक्तः—

अञ्जनं रोचनं चैव गन्धं सुमनस स्तथा।
व्रते चैवोपवासेच नित्य मेव विवर्ज्जयेत्॥

इति।

तत्तु तत्रोक्त पुण्यक व्रतमात्रविषयम्। न तु सर्वविषयम्। पूर्वोक्त वचनविरोधादिति मदनरत्ने उक्तम्।

शिवधर्म्मे—

दानव्रतानि नियमा स्नानं ध्यानं तपोजपः।
यत्नेनापि कृतं सर्वं क्रुद्धस्य तु वृथाभवेत्॥

अत्रविशेषो हेमाद्रौ पाद्मे—

गर्भिणी सूतिकादिश्च कुमारी वाथरोगिणी।
यदा शुद्धा तदान्येन कारयेत् प्रयता स्वयम्॥

इति।

पुंसोऽप्येवं। लिङ्गस्य अविवक्षितत्वात्। तेन यस्मिन् व्रते यत् पूजादि विहितं तदन्येन कारयेत्। शरीरमात्रसाध्यनियमांस्तु स्वयं कुर्य्यादिति। हेमाद्रिरेवं व्याख्यातवान्।

माधवाचार्य्यस्तु—

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके।
तत्र काम्यव्रतं कुर्य्याद्दानार्च्चन विवर्ज्जितम्॥

इत्युक्तवान्। एवं रजस्वलाया अपि।

प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्।

न तथापि व्रतस्य स्यादुपरोधः कदाचन ॥

इति सत्यव्रतोक्तेः ।

प्रतिनिधीनाह पैठीनसिः—

अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।

भार्य्या पत्युर्व्रतं कुर्य्याद् भार्य्यायाश्च पतिर्व्रतम् ।

असामर्थ्ये परस्ताभ्यां व्रतभङ्गो नजायते ॥

स्कान्देऽपि—

पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।

एषामभाव एवान्यं ब्राह्मणं वा नियोजयेत् ॥

कात्यायनः—

पितृ मातृ पति भ्रातृगुर्व्वर्थे च विशेषतः ।

उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥

प्रभासखण्डेऽपि—

भर्त्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापिवा ।

यात्रायां धर्म्मकार्य्येषु जायन्ते प्रतिहस्तकाः ।

एभिः कृतं महादेवि स्वयमेव कृतं भवेत् ॥

इदं सर्व्ववर्ण साधारणं । अविशेषात् ।

अत्रविशेष माह त्रिकाण्डमण्डनः—

काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिकेच सः ।

काम्ये चो(प्यु) पक्रमा दूर्द्ध्वं केचित् प्रतिनिधिं विदुः ॥

न स्यात् प्रतिनिधि र्मन्त्र स्वामि देवाग्नि कर्मसु ।

न देशकालयो र्नास्ति नारणे रग्निरेव सः ॥ इति ।

## अथ व्रतादि सन्निपाते निर्णयः—

तत्र तिथिद्वयसन्निपाते तत्तत्प्रोक्तं दानहोमादि क्रमेण अनुष्ठेयं । अविरोधात् ।

यत्र तु नक्तैक भक्तादौ विरोध व्रतादौ (त्वे) एकं स्वयं कृत्वा द्वितीयं भार्य्यादिना कारयेत् । इति माधवाचार्य्य आह ।

यत्र तु शिवरात्र्यादौ तिथिमध्ये पारणाय अन्नभोजनं विहितम् ।

भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वाच पर्वणि ।
एकादश्या महोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

इति भोजन निषेध प्राप्तः । तत्र पारणस्य वैधत्वाद्वैव भोजनं कार्य्यं निषेधस्य रागप्राप्त भोजनपरत्वात् । विधिप्राप्ते निषेधानवकाशात् । अग्नीषोमीयादिवत् ।

एवं मष्टम्यादिनक्तव्रते संक्रान्ति रविवारादि संपातेऽपि नक्त भोजन मेव स्यात् ।

यत्र पुनरष्टम्यादौ दिवा भुक्तिनिषेध स्तत्रैव संक्रान्त्यादौ सति रात्रि भुक्तिनिषेध इति निषेधद्वयं प्राप्तम् । तत्र उपवास एव स्यात् । तत्रापि पुत्रिणो गृहस्थस्य उपवासनिषेधात् किञ्चिद् भक्ष्यं भवति ।

उपवासनिषेधे तु किञ्चिद् भक्ष्यं प्रकल्पयेत् ।

इति स्मृतेः । तथा चान्द्रायण व्रतमध्ये एकादश्यादौ तु भुक्तिः कार्य्या । चान्द्रायणस्य काम्यत्वेन नित्यबाधकत्वात् ।

अथ केचित्। चान्द्रायणादि व्रतमध्ये एकादश्यादौ प्राप्ते उप-वास एव कार्य्यः। एकादशीदिन ग्रासास्तु द्वादश्यां ग्राह्याः।

यथा कथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम्।
मासेनैवोपभुञ्जीत चान्द्रायण मथापरम्॥

इति याज्ञवल्क्येन यथा कथञ्चिदित्युक्तत्वात्।

काम्येषूपक्रमादूर्द्धं केचित् प्रतिनिधिं विदुः।

इति त्रिकाण्डमण्डनवचनाच्च प्रतिनिदध्यादित्याहुः।

एव मेकादश्या मेकान्तरोपवासादि पारणायां प्राप्तायां जल पारणां कृत्वा उपवासः कार्य्यः। आपो वा अशित मनशितं च इति तैत्तिरीय श्रुतिः। एवं द्वादश्यां मासोपवासश्राद्धप्रदोषादिषु प्राप्तेषु एव मेव ज्ञेय मित्युपरम्यते।

आषाढ़ पौर्णमास्यां कोकिलाव्रतमुक्तं हेमाद्रौ भविष्ये—

आषाढ़ पौर्णमास्यां तु सन्ध्याकालेह्युपस्थिते।
सङ्कल्पयेन् मासमेकं श्रावणे प्रत्यहं त्वहम्॥
स्नानं करिष्ये नियता ब्रह्मचर्य्ये स्थिता सती।
भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम्॥

इत्यादि। एतस्य नक्तव्रतत्वात् सायाह्नव्यापिनी तिथि र्ग्राह्या। अत्रैव च व्यासपूजा विहिता। पौर्णमास्या द्वितयदिने त्रिमुहूर्त्त-व्यापित्वे परैव ग्राह्या अन्यथा पूर्व्वेति।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
आषाढ़मासविधानानि॥

---

## अथ श्रावणमासविधानानि ।

तत्र श्रावणशुक्लतृतीया मधुस्रवाख्या गुर्ज्जरदेशे प्रसिद्धा ।
सा च परा ग्राह्येति दिवोदासनिबन्धे ।
श्रावण शुक्लचतुर्थी तु गणेशव्रते पूर्व्वविद्धैव ग्राह्या ।
मातृविद्धो गणेश्वर इति स्मृतेः ।
श्रावण शुक्लपञ्चमी सर्पपूजादौ परैव ।

पञ्चमी नागपूजायां ग्राह्या षष्ठी समन्विता ।
तस्यां तु तोषिता नागा इतरा सचतुर्थिका ॥

इति स्कान्दोक्तेः ।

भविष्ये—

श्रावणेमासि पञ्चम्यां शुक्लपक्षेनराधिप ।
द्वारस्योभयतोलेख्यागोमयेन विषोल्वणाः ॥

मात्स्येऽपि—

नागायेव तु कर्त्तव्याः खड्गखेटकधारिणः ।
अर्द्धं सर्पाकृति रूपां नाभे रूर्द्धं तु पौरुषी ॥
फणाश्च मूर्द्ध्नि कर्त्तव्या द्विजिह्वावक्त्रवोऽसमाः ।
कृत्वा वा कौङ्कुमान्नागान् गोधूमैः पयसार्च्चयेत् ॥
पूजयेद्विधिवद्वीर दधिदूर्व्वाङ्कुरैः कुशैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥

ये तान् वै पूजयन्तीह नागान् भक्तिपुरःसराः ।
न तेषां सर्पतो वीर भयं भवति कुत्रचित् ॥

इति ।

श्रावण शुक्लद्वादश्यां हरेः पवित्रारोपण मुक्तं हेमाद्रौ विष्णुरहस्ये—

श्रावणस्य सितेपक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
द्वादश्यां श्रवणे वापि पञ्चम्यामथवा द्विजैः ।
आनुकूल्येषु कर्त्तव्यं पञ्चदश्यामथापि वा ॥

इति ।

हरस्य तु कालोत्तरे—

आषाढ़ान्ते चतुर्दश्यां नभस्यनभसोस्तथा ।
अष्टम्यां च चतुर्द्दश्यां पक्षयोरुभयोः समम् ॥

इति ।

तत् प्रकारस्तु दीपिकादौ—

गोदोहान्तरिते काले पूर्वेद्युर्वाधिवासनम् ।

इति ।

अत्र गौणकालो रामार्चन चन्द्रिकायाम्—

पवित्रारोपणं विघ्नाच्छ्रावणे न भवेद् यदि ।
कार्त्तिकावधिशुक्लासे कर्त्तव्य मिति नारदः ॥
हेम रौप्य ताम्रक्षौमैः सूत्रैः कौशेय पद्मजैः ।
कुशैः काशैश्च कार्पासे ब्राह्मण्याकर्त्तितैः शुभैः ॥

कृत्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् ।
ततोत्तमं पवित्रं तु षष्ट्या सहस्रैस्त्रिभिः ॥
सप्तत्यासहितं द्वाभ्यां शताभ्यां मध्यमं स्मृतम् ।
साशीतिना शतेनापि कनिष्ठं तत् समाचरेत् ॥
साधारण पवित्राणि त्रिभि सूत्रैः समाचरेत् ।
उत्तमं तु शतग्रन्थि पञ्चाशद् ग्रन्थि मध्यमम् ॥
कनिष्ठं तु पवित्रं स्यात् षट्त्रिंशद् ग्रन्थिशोभनम् ।
षट्त्रिंशच्च चतुर्विंशं द्वादशेति च केचन ।
चतुर्विंशं द्वादशाष्टाविवेके मुनयो विदुः ॥

विष्णुरहस्ये तु प्रकारान्तरमुक्तम्—

अष्टोत्तरशतं कुर्य्याच्चतुःपञ्चाशदेव वा ।
सप्तविंशति मे (रे) वाथ ज्येष्ठमध्यकनीयसम् ॥
अधमं नाभिमात्रं स्यादूरुमात्रं तु मध्यमम् ।
उत्तमं वै जानुमात्रं * प्रतिमायां निगद्यते ॥

शिवपवित्रं तु शैवागमे—

एकाशीत्याथवा सूत्रै स्त्रिंशताचाष्टयुक्तया ।
पञ्चाशता वा कर्त्तव्यं तुल्यग्रन्थ्यान्तरालकम् ।
द्वादशाङ्गुलमानानि व्यासादष्टाङ्गुलानि वा ॥
लिङ्गविस्तारमानानि चतुरङ्गुलकानि वा ।

अधिकारिणोऽपि तत्रैवोक्ताः—

ब्राह्मणः क्षत्रियो वैश्य स्तथा स्त्री शूद्र एवच ।

---

* प्रमाणतो जानुमात्रमिति निर्णयसिन्धुः ।

स्वधर्म्मावस्थिताः सर्वे भक्त्याकुर्य्युः पवित्रकम् ॥
अतो देवेति * मन्त्रेण द्विजो विष्णौ निवेदयेत् ।
शूद्रस्य मूलमन्त्रोवा येन वा पूजयेद्धरिम् ॥
इति ।

एतच्च नित्यम्—

न करोति विधानेन पवित्रारोपणं तु यः ।
तस्य वात्सरिकी पूजा निष्फला मुनिसत्तम ॥
तस्माद् भक्तिसमायुक्तै र्नरै र्विष्णुपरायणैः ।
वर्षे वर्षे प्रकर्त्तव्यं पवित्रारोपणं हरेः ॥
इति तत्रैवोक्तेः ।

देवताविशेषे तिथयोऽपि तत्रैव—

धनदश्च रमा गौरी गणेशः सोमराड् गुहः ।
भास्करश्चण्डिकाऽम्बाश्च वासुकिश्च तथर्षयः ॥
चक्रपाणिर्नान्ङ्गश्च शिवो ब्रह्मा तथैवच ।
प्रतिपत् प्रभृतिष्वेताः पूज्यास्तिथिषु देवताः ।
यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य च ॥
इति ।

उक्ततिथ्यसम्भवे हेमाद्रिः—

चतुर्दश्या मथाष्टम्यां सर्वसाधारणं (दिनम्) तु तत् ।
इति ।

---

* अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः ॥
१म. २२सू. १६ऋक् ।

तथा—

मासपक्षमहोरात्रं त्रिरात्रं धारयेत्तथा।
दैवतं सूत्रसन्दर्भं देशकालविवक्षया॥

इति।

एतदकरणे प्रायश्चित्तमप्युक्तम्—

पवित्रारोपणं काले न करोति कथञ्चन।
तदाऽयुतं जपेन् मन्त्रं स्तोत्रं वापि समाहितः॥

श्रावण शुक्लचतुर्दशी पूर्वविद्धा ग्राह्या।

श्रावण शुक्ल पञ्चदश्या मुपाकर्म्म कार्य्यम्।

पर्वण्यौदयिके कुर्य्युः श्राव(णे)णं तैत्तिरीयकाः।
बह्वृचाः श्रवणे कुर्य्युर्ग्रहसंक्रान्तिवर्ज्जिते॥

इति गार्ग्यः।

औदयिकेऽपि पर्व्वणि विशेषः पाराशर माधवीये—

श्रावणी पौर्णमासी तु सङ्गवात् परतो यदि।
तदैवौदयिकी ग्राह्या नान्यथौदयिकी भवेत्॥

इति।

कर्म्म पर्य्याप्तं चेत् परमेव पर्व इति सुदर्शन भाष्येऽपि। तैत्तिरीयव्यतिरिक्त यजुर्वेदिनां पूर्व्वैवेति हेमाद्रिर्मदनपारिजातश्च।

हेमाद्रौ गोभिलः—

अध्यायाना मुपाकर्म्म कुर्य्यात् कालेऽपराह्णिके।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः॥

इदं तु सामगविषयम्—

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ।

इति प्रचेतोवचना दन्येषां पूर्वाह्ण

एवेति कालनिर्णयदीपिकाकारः ।

पौर्णमास्या मसम्भवे पञ्चम्यादौ कार्य्यम् ।

अथातोऽध्यायोपाकर्म्म ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां पञ्चम्यां हस्तेन वा इति कात्यायनसूत्रात् ।

श्रवणस्य विहत्वे गार्ग्यः—

धनिष्ठासंयुते कुर्य्याच्छ्रावणं कर्म्म यद् भवेत् ।

तत् कर्म्म सफलं ज्ञेय मुपाकरण संज्ञितम् ॥

श्रवणे चैव यत् कर्म्म उत्तराषाढसंयुते ।

संवत्सर कृतोऽध्याय स्तत्क्षणादेव नश्यति ॥

इति ।

व्यासः—

उदयव्यापिनि त्वेव विष्णुभे घटिकाद्वयम् ।

तत् कर्म्म सफलं ज्ञेयं तस्य पुण्य मनन्तकम् ॥

इति ।

कात्यायनः—

अर्द्धरात्रादधस्ताच्चेत् संक्रान्ति र्ग्रहणं तदा ।

उपाकर्म्म न कुर्वीत परतश्चे न्न दोषकृत् ॥

इति ।

तथा—

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्य्या वाजसनेयिभिः ॥

यत्तु—

बौधायनसूत्रे श्रावण्यां पौर्णमास्यां मापाढ्यां वा उपाकर्म कर्त्तव्य मित्युक्तं । तत् प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्य्य मित्येवं परम् ।

वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके ॥
नर्म्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्य्यात्तु दक्षिणे ॥

इति बृहस्पतिः ।

इदं सामगविषयम्—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्यदि: * ।
छन्दोगा मिलिता: कुर्य्युरुत्सर्गं स्वस्वछन्दसाम् ।
शुक्लपक्षे तु हस्तेन उपाकर्म्मापराह्णिकम् ॥

इति गार्ग्योक्तिः ।

यमः—

यद्यप्योषधयस्तस्मिन् मासे तु न भवन्ति चेत् ।

---

* पूर्वाह्णे ऽविचरे यदि । अविचरे यदा दिष्टोपहीने । विचरेद्यदि रिति पाठस्तु अप्रामाणिक इति कमलाकरः ।

तदा भाद्रपदे मासि श्रवणेन तदिष्यते ॥

इति ।

इदं शुक्रास्तादावपि कार्य्यम्—

नित्यनैमित्तिके जाप्ये होमयज्ञक्रियासु च ।

उपाकर्म्मणि चोत्सर्गे ग्रहास्तदोषो न विद्यते ॥

इति संग्रहोक्तेः । प्रथमारम्भस्तु न भवति ।

गुरुभार्गवयो र्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा ।

तथाऽधिमास संसर्प मलमासादिषु द्विजे ।

प्रथमोपाकृति र्न स्यात् कृतं कर्म्म विनाशकृत् ॥

इति काश्यपोक्तेः ।

बालः शुक्रो दिवसदशकं पञ्चकं चैव वृद्धः,

पश्चादस्तं त्रितयमुदितः पञ्चमैन्द्र्यां क्रमेण ।

जीवो वृद्धः शिशुरपि तथा पक्षमान्ये शिशू तौ *।

वृद्धौ प्रोक्तौ दिवसदशकं चापरैः सप्तरात्रम् ॥

एतच्च मलमासे न कार्य्यम् ।

उपाकर्म्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।

मासवृद्धौ परे कार्य्या वर्ज्जयित्वा तु पैतृकम् ॥

इति ज्योतिः पराशरोक्तेः ।

एतच्च कर्म्म आर्तेऽग्नौ तदभावे लौकिकेऽग्नौ कार्य्यम् ।

अध्यायोपाकृतिं कुर्य्यात्सचौपासनवह्निना ।

---

* पक्ष मन्येन मतौ इति मुहूर्तचिन्तामणि ।

कर्मद्वयमिदं केचिन्नौकिकाग्नौ प्रकुर्वते ॥

इत्याश्वलायन कारिकोक्तेः ।

अग्निहोमोऽपि आचार्याग्नौ स्यात्—

न स्वेऽग्नावन्य होमः स्यान्मुक्त्वैकां समिदाहुतिम् ।

इति कात्यायनोक्तेः ।

एतच्च अध्यापनाग्निमत एव इति कर्काचार्यः । उत्सर्जन-स्यायं गौणकालः—

पुष्ये तूत्सर्जनं कुर्य्यादुपाकर्मदिनेऽथवा ।

इति खादिरगृह्योक्तेः ।

मुख्यकालस्तु—

पौषमासस्य रोहिण्यामष्टकायां मथापिवा ।

इति याज्ञवल्क्योक्तेः ।

पौष्यां माघ्यां वा पौर्णमास्यां मुत्सृजेदिति बौधायनः ।

अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते ।

इत्याश्वलायनकारिका ।

पौषमासस्य रोहिण्यामष्टकायां वा अध्यायानुत्सृजेरन्निति कात्यायनः ।

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णेऽविवरंवहिः ।

इति छन्दोगानां कालः । यदा तु पुष्यनक्षत्रं कर्कसंक्रान्तौ भवति तदा विशेषश्छन्दोगपरिशिष्टे—

मासे प्रोष्ठपदे हस्तात् पुष्यः पूर्वोभवेद् यदा ।

तदाच श्रावणे कुर्य्यादुत्सर्गं छन्दसां द्विजः ॥ इति ।

अत्र विशेषमाह कार्ष्णाजिनिः—

उपाकर्म्मणि चोत्सर्गे यथाकालं समेत्य च।
ऋषीन् दर्भमयान् कृत्वा पूजयेत्तर्पयेत्तथा॥
इति।

उपाकर्म्मणि उत्सर्गेच त्रिरात्र मनध्यायः।

अत्र समुद्रगाव्यतिरिक्तानामपि नदीनां रजोदोषो नास्ति।

उपाकर्म्मणि चोत्सर्गे रजोदोषो न विद्यते।

इति गार्ग्योक्तेः। उत्सर्ज्जनस्य उपाकर्म्मकालत्वे पूर्वं मुत्सर्ज्जनं कृत्वा पश्चादुपाकर्म्म कुर्य्यात्—

उपाकर्म्मापराह्णे स्यादुत्सर्गः प्रातरेवहि।

इति हेमाद्रौ गोभिलस्मृतेः।

अन्योऽत्रविशेषः संस्कार प्रकरणे द्रष्टव्यः।

अत्रैव रक्षाबन्धनमुक्तं हेमाद्रौ भविष्ये—

ततोऽपराह्णसमये रक्षा पोटलिकां शुभाम्।
कारयेदक्षतैः शस्तैः सिद्धार्थै र्हेमभूषितैः॥ इति।

इदं भद्रायां न कार्य्यम्—

भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा।
श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी॥
इति संग्रहोक्तेः।

तस्मात्तदन्ते कार्य्यमिति निर्णयामृते—

तत्र मन्त्रस्तु—

येन बद्धो बलीराजा दानवेन्द्रो महाबलः।

तेन त्वा मपि बध्नामि रक्षे माचल माचल ॥
ब्राह्मणैः क्षत्रियै र्वैश्यैः शूद्रै रन्यैश्च मानवैः ।
कर्त्तव्यो रक्षिताचारो द्विजान् सम्पूज्य शक्तितः ॥
इति ।

अत्रैवच श्रवणाकर्म्म उक्तमाश्वलायनेन —

अथातः श्रावणकर्म्म श्रावण्यां पौर्णमास्या मिति कात्यायन सूत्रात् ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
श्रावणमासविधानानि ॥

---

## अथ भाद्रमासविधानानि ।



अत्र गोप्रसवे नारदः ।

भानौ सिंहगते चैव यस्य गौः संप्रसूयते ।
मरणं तस्य निर्दिष्टं षड्भि र्मासै र्न संशयः ॥
अत शान्तिं प्रवक्ष्यामि येन संपद्यते शुभम् ।
प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् ॥
इत्यादि ।

भाद्रपद कृष्णचतुर्थी बहुलाख्या मध्यदेशे प्रसिद्धा। सा च सायाह्नव्यापिनी ग्राह्या। दिनद्वये तथात्वे पूर्व्वैव।

गौर्य्याश्चतुर्थी वटधेनुपूजा दुर्गार्च्चनं दुर्भरहोलिकैच।
वत्सस्य पूजा शिवरात्रि रेता: परान्विताश्चन्निनृपं सराहुम्।
इति दिवोदास निबन्धोक्तेः।

अत्र धेनुपूजाशब्देन बहुला ग्राह्येति तत्रैव व्याख्यातम्। भाद्र कृष्णाष्टमी जन्माष्टमी।

सा च द्वेधा। जन्माष्टमी जयन्तीच। तत्र आद्या केवलाष्टमी सैव रोहिणीयुक्ता जयन्तीसंज्ञा।

कृष्णाष्टम्यां भवेद् यत्र कलैका रोहिणीयदि।
जयन्ती नाम सा प्रोक्ता उपोष्या सा प्रयत्नत:॥
इति वह्निपुराणोक्तेः। केवलापि उपोष्यैव।
भाद्रे वै बहुले पक्षे कृष्णजन्माष्टमीव्रतम्।
न करोति नरो यस्तु स भवेत् क्रूरराक्षस:॥
इति भविष्योक्तेः।

यत्तु हरिवंशे—
अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्व्वरी।
मुहूर्त्तोविजयोनाम यत्र जातो जनार्द्दन:॥

इति वचनादभिजिन्नाम नक्षत्रं रोहिण्येव। सर्व्वपुराणानामेक वाक्यत्वात्। अभित: पापं जयतीति अभिजिदिति व्युत्पत्तेश्च।

इदं जन्माष्टमी व्रतं नित्यम्—

वर्षे वर्षे तु या नारी कृष्णजन्माष्टमी व्रतम् ।
न करोति महाप्राज्ञ व्याली भवति कानने ॥

इति वीप्साश्रुतेः । पूर्व्वोक्तनिन्दाश्रुतेश्च ।

जयन्ती व्रतं तु काम्यम्—

महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽनघ ।
धर्म्ममर्थं च कामं च मोक्षं च मुनिपुङ्गव ।
ददाति वाञ्छितानर्थान् येचान्येऽप्यतिदुर्लभाः ॥

इति फलश्रवणात् ।

शूद्रान्नेन तु यत् पापं शवहस्त(स्य)स्य भोजने ।
तत् पापं लभते कुन्ति जयन्तीविमुखो नरः ॥

इति निन्दाश्रवणाच्च । यदा अष्टम्यां रोहिणीयोग स्तदा जन्माष्टमी जयन्त्या मन्तर्भूता ज्ञेया । न तु सा पृथक् कार्य्या । न्यायपरासेनैव तत् सिद्धः ।

तदुक्तं माधवेन—

यस्मिन् वर्षे जयन्त्याख्य योगो जन्माष्टमी तदा ।
अन्तर्भूता जयन्त्यां स्यादृष्यायोग प्रशंसितः ॥

इति ।

किञ्च—

अत्र रोहिण्या अर्द्धरात्रयोगो ग्राह्यः ।

रोहिण्या मर्द्धरात्रे च यदा कृष्णाष्टमी भवेत् ।

तस्यामभ्यर्च्चनं शौरे र्हन्ति पापं त्रिजन्मजम् ॥

इति विष्णुधर्म्मवचनात् ।

समायोगे तु रोहिण्यां निशीथे राजसत्तम ।

समजायत गोविन्दो बालरूपी चतुर्भुजः ॥

तस्मात्तं पूजयेत्तत्र यथावित्तानुसारतः ।

इति वह्नि पुराणवचनादर्द्धरात्रस्य कर्म्मकालत्व मवगम्यते ।

अतः—

कर्म्मणो यस्य यः काल स्तत्कालव्यापिनीतिथिः ।

तया कर्म्माणि कुर्व्वीत ह्रास वृद्धी न कारणम् ॥

इति विष्णुधर्म्मवचनात् ।

सप्तमी सहिताष्टम्यां निशीथे रोहिणी यदि ।

तत्रोपवासं कुर्व्वीत तिथि भान्ते च पारणम् ॥

इति वह्निपुराण वचना च्च पूर्व्वत्रैव उपवासादि प्राप्तेः परदिने सतोऽपि रोहिणीयोगस्य न प्रयोजकत्वं । अन्यथा बुधवारादे-रपि प्रयोजकत्वापत्तेः ।

यत्तु—

रोहिणी संयुतोपोष्या सर्व्वाघौघ विनाशनी ।

अर्द्धरात्रा दधश्चोर्द्धं कलया वा यदा भवेत् ।

जयन्ती नाम सा प्रोक्ता सर्व्वपाप प्रणाशनी ॥

इत्यग्निपुराण वचनं । तत् कैमुतिकन्यायेन निशीथ योगस्यैव स्तुत्यर्थ मवगन्तव्यम् ।

यथापि स्कान्दे—

उदये चाष्टमी किञ्चिन्नवमी सकला यदि।

भवते बुधसंयुक्ता प्राजापत्यर्क्ष संयुता।

अपि वर्षशतेनापि लभ्यते वा(सा)ऽथवा न वा॥

इति।

तद्दानादिविषयम्।

उपवास मब्दाग्रवचादिति हेमाद्रि रूचे—

यथा।

उदये चन्द्रोदये। अतो न व्रतभेद इति साधुः पन्थाः। इदं व्रतं नित्यं काम्यं चेति बहवो निबन्धकारा आहुः। अथ अष्टम्या अपि निशीथवेधो ग्राह्यः।

रोहिण्या मर्द्धरात्रे च यदा कृष्णाष्टमी भवेत्।

इति वचनेन तस्यैव मुख्यकालतोक्तेः।

अष्टमी रोहिणीयुक्ता निश्यर्द्धे (निशीथे) दृश्यते यदि।

मुख्यकाल इतिख्यात स्तत्र जातो हरिः स्वयम्॥

इति वशिष्ठ संहितोक्तेश्च।

अष्टम्यत्र चतुर्धा भिद्यते।

तद्यथा।

पूर्वेद्युरेव निशीथयोगिनी।

परेद्युरेव निशीथयोगिनी।

उभयेद्युरेव निशीथयोगिनी। नोभयेद्यु र्निशीथयोगिनी।

तत्र आद्ययो र्न सन्देहः कर्म्मकालव्याप्तेः।

जन्माष्टमी रोहिणी च शिवरात्रि स्तथैवच ।
पूर्वविद्धा प्रकर्त्तव्या तिथिभान्ते च पारणम् ।
इति भृगूक्तेश्च ।

अन्ययोस्तु परैव ।

प्रातः सङ्कल्पकाल व्याप्तेराधिक्यात् ।
वर्ज्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।

इति ब्रह्मवैवर्त्ताच्च । एवमंशतः समव्याप्तावपि परैव । विषमव्याप्तौ तु आधिक्येन निर्णयः कार्य्यः ।

रोहिणी योगोऽपि एव मेव चतुष्प्रकारो ज्ञेयः ।
निम्बादित्यसम्प्रदायिनां तु उदयव्यापिन्येव ग्राह्या ॥
पूर्वविद्धाष्टमी या तु उदये नवमीदिने ।
मुहूर्त्त मपि संयुक्ता सम्पूर्णा साष्टमी भवेत् ॥
कलाकाष्ठा मुहूर्त्तापि यदा कृष्णाष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्यात् सप्तमी संयुता नहि ॥
इति पद्मपुराणोक्तेः ।
उदय व्यापिनी ग्राह्या कुले तिथिरुपोषणे ।
निम्बार्को भगवान् येषां वाञ्छितार्थ फलप्रदः * ॥
इति वचनाच्च ।

हेमाद्रिस्तु सर्वेषां पूर्वैव इत्याह । पूर्वविद्धा इत्यादि पाद्म-

---

* निम्बादित्योपासकानां हि जन्माष्टमी रामनवमी शिवरात्र्यादौ पूर्वेऽह्नि कर्मकालीनामपि तिथिं त्यक्त्वा द्वि त्रि मुहूर्त्तापि परैव तिथि र्ग्राह्या इति मन्तव्यं ।

वचनं तु पूर्व्वेऽह्नि निशीथे अष्टम्यभावे द्वितीयेऽह्नि उदये चन्द्रोदयसमये कलादिमात्राष्टम्यां व्रतं कर्त्तव्यमित्येतद्विषयम् । उदयव्यापिनीति वचनमपि निम्बसप्तमीव्रत परमिति न कोऽपि दोषः ।

अत्र कर्त्तव्य मुक्तं भविष्ये —

ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले ।
सुदेशे शोभनं कुर्य्याद्देवक्याः सूतिकागृहम् ॥
तन्मध्ये प्रतिमा स्थाप्या साचाप्येवंविधा स्मृता ।
काञ्चनी राजती ताम्री पैत्तली मृण्मयी तथा ॥
वार्क्षी मणिमयीचैव वर्णकैर्लिखिताथवा ।
सर्व्व लक्षण सम्पन्ना पर्य्यङ्केच पटावृते ॥
प्रसुप्तां च प्रसूतां च स्थापयेन् मञ्चकोपरि ।
मां तत्र बालकं सुप्तं पर्य्यङ्के स्तनपायिनम् * ॥
यशोदां तत्र चैकस्मिन् प्रदेशे सूतिकागृहे ।
तद्वच्च कल्पयेत् पार्थ प्रसूतवरकन्यकाम् ॥
कश्यपो वसुदेवोऽयं मदितिश्चैव देवकी ।
शेषोवै बलभद्रोऽयं यशोदा क्षितिरप्यभूत् ॥
नन्दः प्रजापतिर्दक्षो गर्गश्चापि चतुर्मुखः ।
गोर्धेनुः कुञ्जरश्चैव दानवाः शस्त्रपाणयः ॥

* अत पर

[illegible]

[illegible]

शेषस्तोयाच तत्रैव कालियो यमुनाह्रदे ।
इत्येवमादि यत् किञ्चिच्छ्रुयते चरितं मम ॥
लेखयित्वा प्रयत्नेन पूजयेद् भक्ति तत्परः ।
मन्त्रेणानेन * कौन्तेय देवकीं पूजयेन्नरः ॥
पङ्कजे पूजयेद्देवीं † नमो देव्यै श्रिया इति ।
ततोमन्त्रेण वै दद्याच्चन्द्रायार्घ्यं समाहितः ॥
क्षीरोदार्णवसम्भूत अत्रि ने (गो) त्र समुद्भव ।
गृहाणार्घ्यं मयाद्त्तं रोहिण्या सहितो मम ॥
ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषाम्पते ।
नमस्ते रोहिणीकान्त अर्घ्यं नः प्रतिगृह्यताम् ॥
प्रभाते ब्राह्मणाञ्छक्त्या भोजयेद् भक्तिमान्नरः ।
ॐ नमस्ते वासुदेवाय गोब्राह्मण हितायच ।
शान्तिरस्तु शिवं चास्तु इत्युक्त्वा तां विसर्ज्जयेत् ॥
इति ।

---

* गायद्भिः किन्नराद्यैः सतत परिवृता वेणु वीणानिनादैः ।
भृङ्गारादर्श कुम्भ प्रवर कृतकरैः किन्नरैः सेव्यमाना ।
पर्य्यङ्के स्वास्तृते या मुदिततर मुखी पुत्रिणी सम्यगास्ते,
सा देवी देव माता जयति सुतगया देवकी कान्तरूपा ॥
एवं रूपेण

† देवी श्रिय तन्मन्त्रौ यथा ।
पादौ सवाहयन्ती श्रीर्देवक्याश्चरणात्मके ।
निषण्णा पङ्कजे पूज्या नमो देव्यै श्रिया इति ।

तत्र हेमाद्रौ नारदः—

तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ।

तस्मात् प्रयत्नतः कुर्य्यात्तिथि भान्ते च पारणम् ॥

तिथ्यृक्षयोर्यदाच्छेदो नक्षत्रान्त मथापि वा ।

अर्द्धरात्रेऽथवा कुर्य्यात् पारणं त्वपरेऽहनि ॥

इति वचनाद् द्वयो रन्ते पारणं मुख्यम् ।

सर्वेष्वेवोपवासेषु दिवा पारण मिष्यते ।

इति ब्रह्मवैवर्त्तवचनं तु व्रतान्तरविषय मिति हेमाद्रिः ।

नात्र निशीथ भोजननिषेधः प्रवर्त्तते ।

अर्द्धरात्रे ऽथवा कुर्य्यात्

इत्यादिना विशिष्य तद्विधानात् ।

अत्राशक्तौ वह्नि पुराणम्—

भान्ते कुर्य्यात्तिथेर्वापि शस्तं भारत पारणम् ।

तिथ्यन्ते वोत्सवान्तेवा व्रती कुर्वीत पारणम् ॥

इति च गौणं पारणम् । उभयान्ते पारण मिति तिथिनक्षत्रयोः समयोगे द्रष्टव्यं । तिथेरेव प्राधान्यात् ।

सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियुज्यते ।

तत्रैव पारणं कुर्य्यादिति वेदविदो विदुः ॥

इति निर्णयामृताच्च ।

इति जन्माष्टमीव्रतविधानम् ।

भाद्रपदामावास्यायां

कुशग्रहण मुक्तं हेमाद्रौ हारीतेन—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥
इति ।

नभसि श्रावणे । तेन दर्शान्तमासपक्षत्वेन अस्मात्पश्चानन्तर दर्शो लभ्यते । तत्र दर्भ ग्रहणं कर्त्तव्य मिति केषाञ्चिन्मतम् ।

अन्ये तु—

मासे नभस्येऽमावास्या तस्यां दर्भोच्चयः स्मृतः ।

इति पाठं कल्पयित्वा नभस्ये भाद्रपदे इति व्याख्याय तत्र दर्भग्रहणं कर्त्तव्य मित्याहुः ।

अथ भाद्रपद शुक्लतृतीयायां

हरितालिकाव्रतमुक्तं स्कान्दे—

सा च परा ग्राह्या ।

मुहूर्त्तमात्र सत्त्वेऽपि दिने गौरी व्रतं परे ।
शुद्धाधिकाया मप्येवं गणयोग प्रशंसनात् ॥
इति माधवोक्तेः ।

चतुर्थी सहिता या तु सा तृतीया फलप्रदा ।
अवैधव्यकरा स्त्रीणां पुत्र पौत्र विवर्द्धिनी ॥
द्वितीया सहितां तां तु या करोति विमोहिता ।
सा वैधव्य मवाप्नोति दग्धदेहा च जायते ॥
इत्यापस्तम्बोक्तेश्च ।

आद्या मधुश्रावणिका कज्जली हरितालिका ।

चतुर्थी मिश्रिता स्त्रीभि र्दिवामग्ने विधीयते ॥
तृतीया नभसः शुक्ला मधुश्रावणिका स्मृता।
भाद्रस्य कज्जली कृष्णा शुक्ला च हरितालिका ॥
इति दिवोदासनिबन्धवचनाच्च।

भाद्रस्य कृष्णा चतुर्थी वरद विघ्नेश चतुर्थी। सा च मध्याह्नव्यापिनी ग्राह्या।

प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप।

इति हेमाद्रौ भविष्योक्तेः। परदिने मध्याह्नव्याप्त्यभावे तु पूर्वविद्धा ग्राह्या।

मातृविद्धो गणेश्वरः। इत्युक्तेः।

सा च वारविशेषे प्रशस्ता।

भाद्रशुक्लचतुर्थी या भौमेनार्केण वायुता।
महती साऽत्र विघ्नेश मर्चित्वेष्टफलं लभेत् ॥
इति निर्णयामृतोक्तेः। अत्र चन्द्रदर्शनं निषिद्धम्।

तथाच अपरार्के मार्कण्डेयः—

सिंहादित्ये शुक्लपक्षे * चतुर्थ्यां चन्द्रदर्शनम्।
मिथ्याभिदूषणं कुर्य्यात्तस्मात् पश्येन्न तं तदा ॥
तद्दोषशान्तये सिंहः प्रसेन मिति वै पठेत्।

---

* शुक्लपक्षे इत्युपलक्षणम्। पञ्चाननगते भानौ पक्षयोरुभयोरपि।
चतुर्थ्यां मुदितश्चन्द्रो नेक्षितव्यः कदाचन।
इति विशेष वचनात्। चतुर्थ्यां नेक्षितव्य
इति मुनिभि र्कथितः।

श्लोकस्तु विष्णुपुराणे—

सिंहः प्रसेनमवधीत् सिंहो जाम्बवताहतः ।
सुकुमारक मारोदी स्तवह्येषस्यमन्तकः ॥
इति ।

भाद्र शुक्लपञ्चमी ऋषिपञ्चमी ।

सा च हेमाद्रिमते परा ।

सिता परयुता ग्राह्या पञ्चमी । इति दीपिकोक्तेः ।

माधवमते पूर्वा । सर्वत्र पञ्चमी पूर्वा । इति तदुक्तेः ।

तत्र ऋषीन् पूजयित्वा अकृष्ट भूमिजातेन * वर्त्तेत ।

एवं सप्तवर्षाणि कृत्वा सप्तकुम्भेषु प्रतिमासु ऋषीन् संपूज्य परेऽह्नि तन्मन्त्रेण अष्टोत्तरशतं तिलैर्हुत्वा सप्त ब्राह्मणान् भोजयित्वा तेभ्यः कुम्भान्निवेदयेत् ।

इति निर्णयामृते ।

अथ भाद्र शुक्ल सप्तमी

अमुक्ताभरण सप्तमी ।

सा च पूर्वा ग्राह्या । तदलाभे उत्तरा ।

सप्तमी पूर्व्वविद्धैव व्रतेषु निखिलेष्वपि ।
अलाभे पूर्वविद्धायाः परविद्धापि गृह्यताम् ॥
इति माधवोक्तेः ।

तत्र व्रतं यावज्जीवं कर्त्तव्यमित्युक्तं मदनरत्ने—

* अकृष्ट भूमिजातेन इति निर्णय सिन्धौ पाठः ।

शुक्ले भाद्रपदेमासि सप्तम्यां हि जलाशये।
स्नात्वा शिवं मण्डलके लेखयित्वा तथाम्बिकाम्॥
भक्त्या संपूज्य समयं कुर्य्याद्दद्या करे गुणम्।
यावज्जीवं मयात्मा तु शिवाभ्यां संनिवेदितः॥

इत्यादि।

अथ भाद्रशुक्लाष्टमी दूर्वाष्टमी।

सा च पूर्व्वविद्धा ग्राह्या—

श्रावणी दुर्गं नवमी दूर्वा चैव हुताशनी।
पूर्वं विद्धा तु कर्त्तव्या शिवरात्रिर्वलेर्दिनम्॥

इति यमस्मृतेः।

शुक्लाष्टमीतिथि र्या तु मासि भाद्रपदे भवेत्।
दूर्वाष्टमी तु सा कार्य्या ज्येष्ठां मूलं च वर्ज्जयेत्॥

इति यत् परदिन विधायकं। तज्ज्येष्ठा मूलयोगे सति द्रष्टव्यम्।

दूर्वाष्टमी सदात्याज्या ज्येष्ठामूलर्क्ष संयुता।
ऐन्द्रर्क्षं पूजिता दूर्वा हन्त्यपत्यानि नान्यथा।
पत्युरायुर्हरामूले तस्मात्तां परिवर्ज्जयेत्।

इति हेमाद्री निषेधात्। इदं व्रत मगस्त्योदये कन्यार्के च न कार्य्यम्।

शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी।
सिंहार्क एव कर्त्तव्या न कन्यार्के कदाचन।

सिंहस्थे सोत्तमा सूर्य्ये ऽनुदिते मुनिसत्तमे * ॥

इति मदनरत्ने स्कान्दोक्तेः ।

भाद्र शुक्लाष्टम्या मगस्त्योदये भाविनि पूर्वं शुक्लाष्टम्या मेव कुर्य्यादिति हेमाद्रिश्च ।

इदं व्रतं स्त्रीणां नित्यम्—

या न पूजयते दूर्वां मोहादिहयथाविधि ।
त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः ॥
तस्मात् सम्पूजनीया सा प्रतिवर्षं (यथाविधि) वधूजनैः ।

इति पुराण समुच्चयात् ।

यदात्वष्टम्यां ज्येष्ठादेः सम्पूर्ण योग स्तदा—

कर्त्तव्या चैकभक्तेन ज्येष्ठामूलं यदा भवेत् ।
दूर्वा मभ्यर्चयेद् भक्त्या न वन्ध्यं दिवसं नयेत् ॥

इति गार्गोक्ते स्तत्रापि व्रतं कार्य्य मेव ।

विधिस्तु भविष्ये—

शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तमः ।
स्थाप्य लिङ्गं ततो गन्धैः पुष्पै र्धूपैः समर्चयेत् ॥
दध्यक्षतैर्द्विजश्रेष्ठ मर्घ्यं दद्यात्त्रिलोचने ।
दूर्वा शमीभ्यां विधिवत् पूजयेच्छ्रद्धयान्वितः ॥

मन्त्रस्तु—

त्वं दूर्व्वेऽमृतजन्मासि वन्दितासि सुरासुरैः ।
सौभाग्यं सन्ततिं देहि सर्व्वकार्य्यकरी भव ॥

---

* मुनिसत्तमे अगस्त्ये इत्यर्थः ।

यथा शाखा प्रशाखाभि र्विस्तृता त्वं महीतले।
तथा ममापि सन्तानं देहि त्वमजरामरम्॥
अनग्निपक्वमश्नीयाद्दधि दधि फलं तथा।
अक्षार लवणं प्रश्नवाश्नीयात् मधुना(समम्)न्वितम्॥

इति।

भाद्रे अधिमासे सति निर्णयदीपे स्कान्दे—

अधिमासे तु संप्राप्ते नभस्य उदये मुनेः।
अर्व्वाग् दूर्वाव्रतं कार्य्यं परतो नैव कुत्रचित्॥

इति।

अत्रैव ज्येष्ठापूजा उक्ता माधवीये स्कान्दे—

मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुते।
यस्मिन् कस्मिन् दिने कुर्य्यां ज्येष्ठायाः परिपूजनम्॥

इति।

दिनद्वये नक्षत्रयोगे सति परा ग्राह्या। पूर्वेऽह्नि रात्रियोगे पूर्वैव।

नवम्यासह्कार्य्यास्यादष्टमी नात्र संशयः।
मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्ष संयुता।
रात्रिर्यस्मिन् दिने कुर्य्यात्तत्र ज्येष्ठाप्रपूजनम्॥

इति तत्रैवोक्तेः। क्वचिदस्य अपवादः।

यस्मिन् दिने भवेज्ज्येष्ठा मध्याह्ना दूर्ध्व मप्यणुः।
तस्मिन् हविष्यं पूजाच न्यूनापेत् पूर्ववासरे॥

इति।

इदं केवल तिथौ नक्षत्रे चोक्तम् ।

तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षके ।

इति स्मृतेः ।

दाक्षिणात्यास्तु नक्षत्रे एव इदमाचरन्ति ।

तथाहि—

मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत् ।

मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तमम् ।

इति ।

नमस्कार मन्त्रस्तु—

ज्येष्ठायै ते नमो नित्यं श्रेष्ठायै ते नमो नमः ।

शर्वा (यै) ख्यै ते नमोनित्यं शाङ्कर्य्यै ते नमो नमः ॥

इति ।

अथ भाद्रशुक्ल द्वादश्यां श्रवणयोग रहितायां पारणं कुर्य्यात्—

आभाकासितपक्षेषु मैत्र श्रवण रेवति ।

सङ्गमे नहि भोक्तव्यं द्वादश द्वादशीर्हरेत् ॥

इति निषेधात् ।

अत्रापि विशेषो विष्णुधर्म्मे—

मैत्राद्यपादे स्वपितीह विष्णुः

पौष्णान्त्य पादे प्रतिबोधमेति ।

श्रुतेश्च मध्ये परिवर्त्तमेति

सुप्ति प्रबोध परिवर्त्तन मेव वर्ज्यम् ॥ इति ।

अत्रैव शक्रध्वजोत्थापनमुक्तमपरार्के ।

द्वादश्यां तु सिते पक्षे मासि भाद्रपदे तथा ।
शक्रमुत्थापयेद्राजा विष्णु श्रवण वासवे ॥

इति ।

इयमेव श्रवणद्वादशी । तत्र एकादश्यां द्वादशी श्रवणयोगे सैवोपोष्या ।

एकादशी द्वादशी च वैष्णव्यमपि तच्चेत् ।
तद्विष्णुशृङ्खलं नाम विष्णु सायुज्य कृद् भवेत् ॥

इति विष्णुधर्म्मोक्तेः ।

संस्पृश्यैकादशीं राजन् द्वादशीमपि संस्पृशेत् ।
श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति ॥

इति नारदीयोक्तेश्च । तत्र यदि कलामात्रं श्रवणर्क्षं भवति तदा पूर्व्वैव ।

तिथि नक्षत्रयोर्योगो योगश्चैव नराधिप ।
द्विकलो यदि लभ्येत सज्ञेयोह्यष्टयामिकः ।

इति नारदीयोक्तेः ।

दिवोदासीये तु अत्र विशेष उक्तः ।

रात्रेः प्रथम (पादे)यामेचेच्छ्रवणं हरिवासरे ।
तदा पूर्व्वामुपवसेत् प्रात र्भान्ते च पारणम् ॥

इति ।

द्विकलो यदि लभ्येत इति पूर्व्ववचनं तु कैमुतिकन्यायेन प्राशस्त्यपर मित्यवगन्तव्यम् ।

इयं बुधवारे अतिप्रशस्ता—

बुधश्रवण संयुक्ता सैव चेद्द्वादशी भवेत् ।
अत्यन्त महती साऽस्याद्दत्तं भवति चाक्षयम् ॥

इति स्कान्दोक्तेः । यदा तु एकादश्येव श्रवणयुता तदापि पूर्वैव ।

यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ।

इति नारदीयोक्तेः ।

यदा द्वादश्येव ऋक्षं युता * । तदा उपवासद्वयम् ।

एकादशी द्वादशी च विष्णु नक्षत्र संयुता ।
उपवास द्वयं कृत्वा त्रयोदश्यां तु पारयेत् ।

इति विष्णूक्तेः । ननु पारणेनैव व्रतसमाप्ते रेकादशीव्रतस्य असमाप्तावपि कथं व्रतान्तरस्य आरम्भः ।

असमाप्ते व्रते पूर्वे नैव कुर्य्याद्व्रतान्तरम् ।

इति निषेधादितिचेन्न । उभयोर्व्रतयो रेकदैवतत्वेन विहितत्वा निषेधाप्रवृत्तेः । निषेधस्य व्रतान्तर विषयत्वेन साव-काशत्वात् ।

एकादशी मुपोष्यैव द्वादशीं समुपोषयेत् ।
नचात्र विधिलोपः स्यादुभयोर्दैवतं हरिः ॥

इति हेमाद्रौ भविष्योक्तेश्च ।

* कोषभ स्थल श्रवणा नक्षत्र नाम्ना युता

शृणु राजन् परं काम्यं श्रवण द्वादशी व्रतम् ।

इति स्थूलशोर्षवचनादिदं व्रतं काम्यमेवेति गौड़ादय आहुः । दाक्षिणात्यास्तु ।

एकादश्यां नरोभुक्त्वा द्वादश्यां समुपोषयात् ।
व्रतद्वयकृतं पुण्यं सर्वं माप्नोत्यसंशयम् ।
उपवास मकृत्वा तु नरो नरक मृच्छति ॥

इति वामनपुराणोक्तेः श्रवणद्वादशीव्रतं नित्यमित्याहुः । अत्र अभुक्तेति पदच्छेदः ।

यद्वा भुक्तेति फलाहार परम् । नक्तपरम् ।

"अन्नाश्रितानि पापानि" इति एकादशी प्रकरणे अन्नस्यैव निषेधात् ।

उपवासद्वयं कर्त्तुं न शक्नोति नरो यदि ।
प्रथमेऽह्नि फलाहारी निराहारोऽपरेऽहनि ॥

इतिदिवोदासीय भविष्योक्तेश्च ।

उपवासद्वयाशक्तौ तु गृहीतैकादशीव्रतो यस्तं प्रत्युक्तं मात्स्ये ।

द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।
उपोष्यैकादशीं तत्र द्वादश्यां पूजये * हरिम् ।

पूजयेत् पारयेदिति हेमाद्रिः ।

अगृहीतैकादशीव्रतस्तु—

एव मेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् ।

---

* पूजयेत् उपवसेदिति कमलाकरः ।

पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयम् ॥

इति नारदीयोक्ते द्वादशीमेव उपवसेत् ।

पारणं तु उभयान्ते अन्यतरान्ते वा कुर्य्यात् ।

तिथि नक्षत्र संयोगे उपवासो यदा भवेत् ।

पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः ॥

विशेषेण महीपाल श्रवणं वर्द्धते यदि ।

तिथिक्षये न भोक्तव्यं द्वादशीं नैव लङ्घयेत् ॥

इति निर्णयामृते नारदोक्तेः ।

अस्यार्थः—

तिथि नक्षत्र संयोगनिमित्तकोपवासव्रते तिथ्यन्ते नक्षत्रान्ते वा पारयेत् । द्वयोः समकालव्याप्तत्वेतूभयान्ते । नक्षत्र वृद्धौ च त्रयोदश्या मिति ।

मदनरत्ने तु । द्वादशीवृद्धौ श्रवण वृद्धौ वा श्रवणान्त एव पारणं कुर्य्यात् ।

पारणं तिथि वृद्धौ तु द्वादश्यामुडुसंक्षयात् ।

वृद्धौ कुर्य्यात्त्रयोदश्यां तत्र दोषो न विद्यते ॥

इति वह्निपुराणादित्युक्तम् ।

वृद्धौ संपूर्ण द्वादशीव्याप्तौ त्रयोदश्यां पारयेदित्यर्थः ।

द्वादश्यां श्रवण नक्षत्रस्य मध्याह्न व्यापित्वे एव तत्रोपोष्य त्रयोदश्यां पारयेत् ।

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।

या मध्याह्नानुपोष्या सा त्रयोदश्यां तु पारणम्॥

इति विष्णुरहस्य वचनादिति केचिदाहुः।

वामनावतारनिमित्तोपवासस्तु (व्रत) हेमाद्रौ भविष्ये—

द्वादश्यां स्तेविधिः प्रोक्तः श्रवणेन युधिष्ठिर।

सर्वपापप्रशमनः सर्वसौख्य प्रदायकः॥

एकादशी यदा सा स्याच्छ्रवणेन समन्विता।

विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा॥

इत्युपक्रम्य—

अथ काले बहुतिथे गते सा गुर्व्विणी भवत्।

सुषुवे नवमे मासि पुत्रं सा वामनं हरिम्।

इत्याद्युक्ता—

एतत् सर्वं समभव देकादश्यां युधिष्ठिर।

तेनेष्टा देवदेवस्य सर्वथा विजया तिथिः॥

एषा व्युष्टिः समाख्याता एकादश्यां मया तव।

इत्युपसंहाराच्छ्रवणान्वितैकादश्या मेव भवति।

तद्विधिस्तु तत्रैवाग्निपुराणे—

नदीनां सङ्गमे स्नाया दर्शयेदत्र वामनम्।

सौवर्णं वस्त्रसंयुक्तं द्वादशाङ्गुल मुच्छ्रितम्॥

हिरण्मयेन पात्रेण दद्यादर्घ्यं प्रयत्नतः।

अर्घ्यदान मन्त्रस्तु—

नमस्ते पद्मनाभाय नमस्ते जलशायिने।

तुभ्य मर्घ्यं प्रयच्छामि बालवामन रूपिणे॥

एवं सम्पूज्य देवेशं प्रार्थयीत व्रती ततः ।
नमः वामन किञ्जल्क पीतनिर्म्मल वाससे ॥
महाहव रिपुस्कन्ध घृ(ष्ट)तचक्राय चक्रिणे ।
नमः शार्ङ्ग सीरवाण पाणये वामनाय च ॥
यज्ञभुक्फलपाले च वामनाय नमो नमः ।
देवेश्वराय देवाय देवसंभूति कारिणे ॥
प्रभवे सर्व देवानां वामनाय नमो नमः ।
एवं संपूजयित्वा तं द्वादश्या मुदये रवेः ॥
भृङ्गार सहितं तं तु ब्राह्मणाय निवेदयेत् ॥
वामनः प्रतिगृह्णाति वामनोऽहं ददामिते ।
वामनं सर्वतो भद्रं द्विजाय प्रतिपादये ॥

इति ।

एकादश्यां श्रवणयोगाभावे तु दशमीविद्धापि श्रवण युता ग्राह्या ।

दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः ।
श्रवणेन समायुक्ता सैवस्यात् सर्वकामदा ॥

इति वह्निपुराणादित्युक्तं मदनरत्ने ।

वामन पूजाच मध्याह्ने कार्य्या ।

मध्याह्ने वामनोरामरामौ—

इति पूर्वोक्त स्मृतेः । श्रवणद्वादश्यां तु जनार्दनपूजाविहिता ।

द्वादशी श्रवणोपेता तस्यां पूज्यो जनार्द्दनः ।
तस्मिन् संपूजिते देवे सर्वं वै पूजितं भवेत् ॥

इति वचनात् । जनार्द्दन पूजाविधि र्वामनपूजाविधिवज् ज्ञेयः ।

विध्यन्तरस्य अनुक्तत्वादितिनिर्णयामृते उक्तम् ।

अत्रैव द्वादश्यां विष्णु पञ्चकव्रतारम्भ उक्तः स्कान्दे ।

प्रौष्ठ पद्यां सिते पक्षे द्वादश्यां श्रवणं यदि ।
तदारभ्य व्रतं कुर्य्यात् मार्गशीर्षेऽथवा नृप ॥
मार्गशीर्षस्य शुक्लाया मेकादश्यां समारभेत् ।
एकादशी द्वयं तत्र अमावास्याच पूर्णिमा ॥
श्रवणं विष्णु नक्षत्र मुपोष्यं प्रतिमासकम् ।
एवं संवत्सरं यावत्तत उद्यापनं चरेत् ॥

अत्र तिथिवेधे तु—

उदयव्यापि दर्शः स्यात् पूर्णमासी तु यामगा ।
मध्याह्नव्यापि नक्षत्रा दूर्द्धं हरिदिन द्वयम् ।
दिनद्वये तथाव्याप्ता वुपोष्यं तूत्तरंदिनम् ॥

इति विष्णुरहस्ये । अत्रैव दुग्ध व्रतस्य संकल्पः कार्य्यः । अत्रेदं चिन्त्यते । दुग्धवत् पायसं वर्ज्यं भवेति । न वर्ज्य-मिति केचिदाहुः । नहि प्रकृति वर्ज्जने विकार वर्ज्जनं युक्तं । दधिघृतादीना मपि वर्ज्जनापत्तेः । न च यत्र प्रकृतिरसो-पलम्भ स्तत् पायसादि वर्ज्यं * ।

दध्यादेरतथात्वान्न तद् वर्ज्जन मिति वाच्यम् । शौद्रदध्यादे र्वर्ज्जनापत्तेः । शौद्र दध्यादौ तु दुग्धरसानुपलम्भात् । तस्मा

* [illegible]

दध्यादिवत् पायसादि भक्ष्य मिति। अत्रोच्यते। यत्र विकारे प्रकृतिरसोपलब्धि स्त(त्र)स्य विकारस्यापि निषेधः। मांसनिषेधे मांसविकारस्येव। अस्ति च मांसविकारे मांसरसोपलब्धि स्तत् प्रत्यभिज्ञाच। मांसत्वानपगमात्।

यत्तु। औष्ट्रदध्यादेरनिषेधापत्तिरिति। तन्न।

औष्ट्र मेक शफं स्त्रैण मारण्यकमथाविकम्।

इत्यत्र औष्ट्र मिति विकारार्थविहिततद्धितात् मज्जन् मूत्रादीना मपि निषेध इति विज्ञानेश्वरेण तद्विकारमात्रस्य निषेधात्। नन्वेवं

सन्धिन्यनिर्दशाऽवत्सा गोपयः परिवर्जयेत्।

अत्र सन्धिन्यादि क्षीरनिषेधेऽपि तद्दध्यादि (भक्षणं) निषेधः स्यात्। सत्यं। वचनान्तरेण तस्यापि निषेधात्। तथा चापरार्के यमः—

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः।

सप्तरात्रं व्रतं कुर्य्यात् प्रयत्नेन समाहितः॥

इति।

व्रतं गोमूत्र यावकं। तस्माद्दध्यादि यासं पायसादिवर्ज्य मिति सिद्धं। केचित्तु पायसं क्षीराद्द्रव्यान्तरं। विभिन्नरूपत्वात्। दध्यादिवत्। इतरथा घातञ्चनेन दधित्वापत्तेः।

तद्रस प्रत्यभिज्ञातु सेयं दीपकलिका इति वत् साहश्यादुपपन्ना। मांसविकारे तु मांसत्वानपगमादित्याहुः।

अपि नः सकुले भूयाद् योनो दद्यात्त्रयोदशीम्।

पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च ॥

इति भारत वचनस्य निरवकाशत्वाच्च ।

अन्ये तु पूर्वोक्त यज्ञवचनादध्यादि सर्वविकारनिषेध इत्याहुः । तत् सदाचारविरुद्धं ।

अथ भाद्रशुक्ल चतुर्द्दश्या मनन्तव्रतं विहितं ।

सा तु त्रिमुहूर्त्तापि औदयिकी ग्राह्या इति माधवः ।

उदये त्रिमुहूर्त्तापि ग्राह्यानन्तव्रते तिथिः ।

इति क्वचित् पाठः । "मध्याह्ने भोज्यवेलाया मिति कथायां श्रवणात् मध्याह्न व्यापिनी ग्राह्या । इति दिवोदासनिबन्धे । नैतद् युक्तियुक्तं । यत इदं परकृतिरूपमितिहास मात्रं । न विधायकं । विधिवाचकानां व्रतं कुर्य्यात् करोतु कर्त्तव्यं करोति इति लिङ्लोट् तव्य पञ्चमलकार प्रत्ययाना मभावात् ।

प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देव मर्चयेत् ।

इति गणेशव्रतादाविव अनन्तकथायां कालविधायकवचना-न्तराभावाच्च ।

अन्यथा—

सापि शीला व्रतं चक्रे करे बद्धासुडोरकम् ।

पाथेय शेषं विप्राय दत्त्वा भुक्त्वा तथैवच ॥

इति वचनादन्येषामपि व्रतानामारम्भोमध्याह्न एव प्रसज्येत । स च निषिद्धः । व्रतानां प्रातरेव आरभ्य (कार्य्यत्वात्) मायत्वात् ।

तदुक्तं हेमाद्रौ—

प्रातरारभ्य मतिमान् कुर्य्याच्छ्रुतव्रतादिकम् ।

नापराह्ने न मध्याह्ने पिपीलिकाली हि तौ स्मृतौ ॥

इति ।

अन्येऽत्राहुः । अनन्तव्रतस्य एकभक्तरूपत्वात् मध्याह्न-व्यापिन्या मेव कार्य्य मिति ।

तदपि न चतुरस्रं । अर्द्धं विप्राय दातव्यमर्द्धंमेकभक्तं कुर्य्यादित्येकभक्तव्रतस्य अविधानात् ।

किन्तु —

पक्वा प्रस्थं घृतेनैव गोधूमानां प्रयत्नतः ।

अर्द्धं विप्राय दातव्य मर्द्ध मात्मनि भोजनम् ॥

इत्यनन्तव्रताङ्गत्वेन भोजनविधानात् । अतोऽत्र अनन्तपूजनस्यैव प्राधान्यं गम्यते । तस्य दैविकत्वात् पूर्वाह्णो वै देवाना मिति श्रुतेः पूर्वाह्ण एव विधानं युक्तं । अन्यथा अन्यस्यापि मार्गस्थस्यैव पुंसः स्त्रियाश्च पत्यनतुज्ञाताया एव अत्राधिकारः । पाथेयशेषस्यैव देयत्वं प्रसज्जते । अतोऽत्युपप्लव आपद्यते । तस्मात् पूर्वाह्णो वै देवाना मिति श्रुतिमूलकात् ।

उदये त्रिमुहूर्त्तापि ग्राह्या नन्तव्रते तिथिः ।

इति माधववचनादुक्त एव कर्म्मणामिति सिद्धम् । ननु माधववचने अपि शब्द प्रयोगात् "शाठ्येनापि नमस्कारं कुर्वन् विष्णोः पदं व्रजेत्" इत्यादिवत् मध्याह्नस्यैव स्तुति र्न कालान्तर-विधाने तात्पर्य्य मितिचेन्न । दृष्टान्तासम्भवात् । दृष्टान्तेहि वचनान्तरेण भक्त्याद्युपेतस्य नमस्कारस्य सफलत्वसिद्ध स्तद्रहितस्य निषिद्धत्वेन नमस्कार स्तुतिमात्रे तात्पर्य्यम् । अत्र तु

कालान्तर विधायक विरुद्ध प्रमाणान्तराभाव निश्चयात् काल विशेष विधाने तात्पर्य्य मित्यस्ति महान् विशेष:।

किञ्च—

तथा भाद्रपदस्यान्ते चतुर्द्दश्यां द्विजोत्तम:।
पौर्णमास्या समायोगे व्रतं चानन्तकं चरेत्॥

तथा—

मुहूर्त्त मपि चेद्भाद्रे पूर्णिमायां चतुर्द्दशी।
सम्पूर्णां तां विदुस्तस्यां पूजयेद्विष्णु मव्ययम्॥

इति निर्णयामृते स्कान्दवचनसद्भावश्च।

उपवास व्रतादीनां घटिकैकापि या भवेत्।
उदये सा तिथि र्ज्ञेया विपरीतातु पैतृके॥

इत्यत्र मपि शब्दादेकभक्तनक्तादे: संग्रहा दुदयव्यापिन्येव तिथि र्ग्राह्या।

उदिते दैवतं भानौ पित्र्यं चास्तगते रवौ।
द्वि स्त्रि मुहूर्त्तमङ्गो या सातिथि र्हव्यकव्ययो:॥

इति सुमन्तु वचनाच्च चस्य कर्म्मणो दैविकत्वा दुदये द्वि मुहूर्त्तापि ग्राह्या इति सिद्धम्।

अत्र प्रसङ्गा दगस्त्यार्घ्यदानविधि रुच्यते।

तत्कालो व्रत हेमाद्रौ भविष्ये—

कन्याया मागते सूर्य्ये सर्वास्मे सप्तमेऽहनि।
कन्यायां समनुप्राप्तेऽप्यर्घ्यकालो निवर्त्तते॥

उदयोत्तर मपि सप्तदिनेषु भवत्येव।

घासप्तरात्रादुदयाद् यमस्य
दातव्य मेतत् सकलं नरेण ।
यावत् समाः सप्त दशाथवास्तु
रयोर्ष मप्यन्य वदन्ति केचित् ॥

यमस्य अगस्त्यस्येत्यर्थः । तदुदय कालो गर्गेणोक्तः ।

उदेति याम्यां हरिसंक्रमाद्रवे
रेकाधिके विंशतिमे ह्यगस्त्यः ।
स सप्तमे ऽस्तं वृषसंक्रमाच्च
प्रयाति गर्गादिभि रभ्यभाषि ॥

तद्विधिस्तु विष्णुरहस्ये—

काश पुष्पमयीं रम्यां कृत्वा मूर्त्तिं तु वारुणेः ।
प्रदोषे विन्यसेत्तां तु पूर्णकुम्भेष्वलङ्कृताम् ।
कुम्भस्थां पूजयेत्तां तु पुष्पधूपविलेपनैः ॥
दध्यक्षत बलिं दद्याद्रात्रौ कुर्य्यात् प्रजागरम् ।
प्रभाते तां समादाय यायात् पुण्य जलाशयम् ॥
निशावसाने तां पश्यन् जलान्ते प्रतिमां मुनेः ।
अर्घ्यं दद्यादगस्त्याय भक्त्या सम्यगुपोषितः * ॥

---

* मात्स्ये तु—

अङ्गुष्ठ मात्रं पुरुषं तथैव सौवर्ण मत्यायत बाहु दण्डम् ।
चतुर्भुजं कुम्भमुखे निधाय धान्यानि सप्ताङ्कुर संयुतानि ।
सकाञ्च पुष्पाक्षत शक्ति युक्त मर्घ्यं च दद्याद्द्विजपुङ्गवाय ।
धेनुं चतुःक्षीरवतीं च दद्यात् सवत्सवस्त्राभरणां द्विजाय । इति ॥

विरूढैः सप्तधान्यैश्च वंशपात्र निधापितैः ।
सौवर्ण रूप्य पात्रेण ताम्रवंशमयेन वा ।
मूर्ध्नि स्थितेन मन्त्रेण जानुभ्यां धरणीं गतः ॥

अर्घ्यदानमन्त्राः—

काशपुष्पप्रतीकाश वह्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥
विन्ध्य वृद्धिक्षयकर मेघतोय विषापह ।
रत्नवल्लभ देवेश लङ्कावास नमोऽस्तु ते ॥
वातापि भक्षितो येन समुद्रः शोषितः पुरा ।
लोपामुद्रा पतिः श्रीमान् योऽसौ तस्मै नमोनमः ॥
येनोदितेन पापानि विलयं यान्ति व्याधयः ।
तस्मै नमोऽस्त्वगस्त्याय सशिष्याय च पुत्रिणे ॥
अगस्त्यः खनमानेति विप्रोऽर्घ्यं विनिवेदयेत् ।
दत्त्वैव मर्घ्यं कौरव्य प्रणिपत्य विसर्जयेत् ॥
अर्चितस्त्वं यथा श(क्त्या)क्ति नमोऽगस्त्य महर्षये ।
ऐहिकामुष्मिकीं दत्त्वा कार्यसिद्धिं व्रजस्व मे ॥
विसर्जयित्वाऽगस्त्यं तं विप्राय प्रतिपादयेत् ।
अगस्त्यो मे मनस्थोऽस्तु अगस्त्योऽस्मिन् घटेस्थितः ॥
अगस्त्यो द्विजरूपेण प्रतिगृह्णातु सत्कृतः ।
अगस्त्यः सप्तजन्माद्यं नाशयत्वावयोरयम् ॥
अतुलं विमलं सौख्यं प्रयच्छ त्वं महामुने ।
त्यजेदगस्त्य मुद्दिश्य धान्यमेकपलं रसम् ॥

होमं कृत्वा ततः पश्चादर्च्चयेत् * मानवः फलम् ।
होमश्चाज्येन चार्घ्य मन्त्रेरेव कर्त्तव्यः ॥

दत्त्वाऽर्घ्यं सप्तवर्षाणि क्रमेणानेन पाण्डव ।
ब्राह्मणः स्याच्चतुर्वेदः क्षत्रियः पृथिवीपतिः ॥
वैश्यश्च धान्यसम्पन्नः शूद्रश्च धनवान् भवेत् ।
यावदायुश्च यः कुर्य्यात् स परंब्रह्म गच्छति ।

इति भविष्योक्तमगस्त्यार्घ्यदानविधानम् ॥

## अथ भाद्र पौर्णमास्यां प्रपितामहात् परां स्त्रीनुद्दिश्य श्राद्धं कार्य्यम् ।

तदुक्तं हेमाद्रौ—

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां तु कर्त्तव्यं वराह वचनं यथा ॥

इति मार्कण्डेये । ब्राह्मेऽपि ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयोह्यश्रुमुखाह्येते पितरः परिकीर्त्तिताः ॥
तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः ।
ते तु नान्दीमुखा नान्दी समृद्धि रिति कथ्यते ॥

एतच्च प्रत्यब्दमित्युक्तत्वात् प्रथ्म श्राद्धपक्षे सकृत् । महालय-श्राद्धपक्षे त्वावश्यकमिति प्रयोग पारिजाते उक्तम् ।

---

* यजयेदिति निबंधान्तरेषु ।

अत्र मातामहा अपि कार्य्याः—

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्या विशेषान्नरकं व्रजेत् ॥

इति धौम्योक्तेः । पितृशब्दस्य पितृभावापन्न पूर्व्वजपरत्वात् ।
वार्षिक श्राद्धे तु वचनाभिवृत्तिरिति केचित् ।

तन्न । यद्यपि

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्ध षोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडितिस्थितिः ॥

इति कात्यायनेन दर्शादौ षट्पिण्डा अभिहिताः । तथापि नात्र मातामहप्राप्तिः । पितृशब्दस्य जनकपोषकादौ रूढत्वेन प्रपितामहपित्रादा वहृत्तित्वात् । हृत्तित्वे वा तेषामपि अश्रुमुखत्वेन नान्दीमुखत्वाभावान्न देयतात्वसिद्धिः ।

पितृशब्दस्य सपिण्डीकरणादिना पितृभावापन्नपितृपरत्वेन तत् प्राप्तौ तु तीर्थादौ आचार्य्योद्देशेन क्रियमाण श्राद्धे तत् प्राप्तिः स्यादितिदिक् ।

॥ इति भाद्रपदमास विधानानि ॥

## अथाश्विनमासविधानानि ।

### तत्र महालया श्राद्धं ।

तत्र वृद्धमनुः—

आषाढी मवधिं कृत्वा पञ्चमं पक्ष माश्रिताः ।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं शुभम् ॥

तत्रापि कन्यासंक्रान्ति योगे अतिप्राशस्त्यमाह विष्णुः—

कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्य उच्यते ।

इति ।

पक्षविशेष माह हव मनुः—

मध्ये वा यदिवाप्यन्ते यत्र कन्यां व्रजेद्रविः ।

स पक्षः सकलः श्रेष्ठः श्राद्धषोड्शकं प्रति ॥

ब्रह्माण्ड पुराणेऽपि—

कन्यां गते सवितरि दिनानि दश पञ्च च ।

पार्वणेनेहविधिना श्राद्धं तत्र विधीयते ॥

तत्रैव—

कन्यां गते सवितरि यान्यहानि तु षोड्श ।

क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ॥

इति पञ्चदशदिनानि षोड्शदिनान्यप्युक्तानि ।

तत्र हेमाद्रिः षोड्शकं त्रिधा व्याचष्टे ।

तिथि हृद्ध्या पक्षस्य षोड्शदिनात्मकत्वे श्राद्धहृद्ध्यर्थ मेकः पक्षः । भाद्रपूर्णिमया सहेति द्वितीयः । आश्विन शुक्लप्रतिपदा सहेति तृतीयः । तत्र अन्त्यं (तृतीयं) पक्षं युक्त मुत्पश्यामः ।

अतः षोड्शकं यत्तु शुक्लप्रतिपदा सह ।

चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता ॥

इति देवलोक्तेः ।

पुनरत्र पक्ष पक्षा उक्ता हेमाद्रौ ब्राह्मे—

अश्वयुक् कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिनेदिने ।

त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्ध मेव वा ॥

पक्षार्थः । दिने दिने पक्षपर्य्यन्त मित्येक पक्षः । त्रिभागहीन मिति पञ्चम्यादि द्वितीय । अर्द्धमिति षष्टम्यादि स्तृतीयः । त्रिभागमिति दशम्यादिश्चतुर्थः । पितुः प्रत्यब्ददिनतिथौ तदसम्भवे अमावस्यादौ वा सकृत् महालयश्राद्ध मिति पञ्चमः पक्षः । स च

आश्विनस्यासिते पक्षे श्राद्धं कर्त्तुं न शक्यते ।
दिने दिने तदा कुर्य्यात् पितुः प्रत्याब्दिकेऽहनि ॥
—इति स्मृत्युक्तः ।

गौतमोऽप्याह—

अथापरपक्षे श्राद्धं पितृभ्यो दद्यात् । पञ्चम्यादि दर्शान्तं ।
अष्टम्यादि दशम्यादि सर्वस्मिंश्चेति ।
अत्र दर्शान्तमिति सर्वत्रानुषज्यते ।

तथा हेमाद्रौ नागरखण्डे—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे ।
तस्य संवत्सरं यावत् संतृप्ताः पितरो ध्रुवम् ॥
इत्येकः पक्षोऽप्युक्तः ।

सकृत् महालये च वर्ज्यतिथ्याद्युक्तं प्रयोग पारिजातादौ ।

वशिष्ठः—

नन्दायां भार्गवदिने चतुर्द्दश्यां त्रिजन्मसु ।

एषु श्राद्धं न कुर्व्वीत गृही पुत्रधनक्षयात् ॥

इति ।

जन्मनक्षत्रं तत् पूर्वं तदुत्तरं चेति त्रिजन्मानि ।

वृद्धगार्ग्यः—

प्राजापत्ये च पौष्णे च पित्रर्क्षे भार्गवे तथा ।

यस्तु श्राद्धं प्रकुर्व्वीत तस्य पुत्रो विनश्यति ॥

प्राजापत्यं रोहिणी । पौष्णं रेवती । पित्रर्क्षं मघा ।

संग्रहेऽपि—

नन्दाश्वकामरव्यार भृग्वग्निपितृ कालभे ।

गण्डे वैधृति पाते च पिण्डास्त्याज्याः सुतेप्सुभिः ॥

इति ।

अस्यार्थः । नन्दाः प्रतिपत् षष्ठ्येकादश्यः । अश्वः सप्तमी । काम स्त्रयोदशी । आरो भौमवारः । भृगुः शुक्रः । अग्निभं कृत्तिका । पितृभं मघा । कालभं भरणी । इदं सर्वं सकृन्महालयविषय मित्याह पृथ्वीचन्द्रोदये नारदः ।

सकृन् महालये काम्ये पुनः श्राद्धेऽखिलेषु च ।

अतीत विषये चैव सर्व मेतद् विचिन्तयेत् ॥

अत्रापि क्वचिदपवादो हेमाद्रा वुक्तः—

अमापाते भरण्यां च द्वादश्यां (मध्यपक्षके) पक्षमध्यके ।

श्राद्धे तिथिं च नक्षत्रं वारं च न विचारयेत् ॥

इति ।

पराशर माधवीयेऽपि एव मेवाभिहितम् ।

तथा पितृमृताह तिथौ सकृन् महालय करणेऽपि एतच्च निषिद्ध मित्याह निर्णयदीपे नागरखण्डे स्मृतिः।

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः॥
तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्।
तस्मात्तत्प्रकर्त्तव्यं श्राद्धं श्रद्धापरै र्नरैः॥

इति संग्रहः अत्र मृताहनीति विशेषोपादानात्तत्र नन्दा-भृग्वादि निषेधानवकाश इति तद् ग्रन्थकारः। श्राद्धकाशिकायां यदहः सम्पद्यते तदहरिति सूत्रमपि एवं व्याख्यातम्।

कात्यायनः—

या तिथि र्यस्य मासस्य मृताहे तु प्रवर्त्तते।
सा तिथिः पितृपक्षेऽपि पूजनीया प्रयत्नतः॥
तिथिच्छेदो न कर्त्तव्यो विनाऽशौचं यदृच्छया।
पिण्डश्राद्धं च कर्त्तव्यं विच्छित्तिं नैव कारयेत्॥
अशक्तः पक्षमध्ये तु करोत्येकदिने यदा।
निषिद्धेऽपि दिने कुर्य्यात् पिण्डदानं यथाविधि॥

इति।

तथा सम्पूर्ण पक्ष श्राद्ध करणेऽपि न नन्दादि निषेध इत्याह पराशर माधवीये कार्ष्णाजिनिः।

आश्विनस्यासिते*पक्षे श्राद्धं कार्य्यं दिने दिने।

---

*कृष्णपक्षे इति कमलाकर

नैव नन्दादि वर्ज्यं स्यान्नैव निन्द्या चतुर्दशी ॥

इति ।

अतः—

प्रतिपत् प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।

श्राद्धे प्रशस्तास्तिथयो यथैता न तथापराः ॥

इति मनुवचनं काम्यपञ्चम्यादि पक्ष विषय मिति द्रष्टव्यम् । मदनपारिजातेऽपि एव मुपसंहृतम् । अतो नन्दादौ सपिण्डक-श्राद्धे पुत्रवतोऽपि अधिकार इति ।

अत्रिरपि—

महालये क्षयाहेच दर्शे पुत्रस्य जन्मनि ।

तीर्थेऽपि निर्वपेत् पिण्डान् रविवारादिकेष्वपि ॥

इति।

ततश्च नन्दादिनिषेधो मृताहव्यतिरिक्त सकृत् महालय विषयः । पौर्णमासी मृतश्राद्धविषयश्चेति सिद्धम् ।

यत्तु स्मृत्यर्थ सारे—

विवाह व्रत चूडासु वर्ष मर्द्धं तदर्द्धकम् ।

पिण्डदानं मृदास्नानं न कुर्य्यात्तिल तर्पणम् ॥

इति ।

तदपि महालयव्यतिरिक्त काम्यश्राद्धविषयम् ।

तीर्थे संवत्सरे प्रेते पितृयोगे महालये ।

पिण्डदानं प्रकुर्व्वीत युगादि भरणी मघे ॥

इति वृद्धमनुक्तः ।

महालये गयाश्राद्धे मातापित्रोः(क्षये) मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्वपणं सदा ॥

इति यमोक्तेश्च । अयमभिप्रायः । षोड़शाद्यपि श्राद्धेषु पक्षे न पिण्डदान निषेधः । प्रत्यक्ष श्राद्ध भेदेऽपि व्यतिपातादौ सति न पिण्डनिषेधः । मृताहे सञ्जन् महालयेऽपि न पिण्ड निषेधः । मृताहव्यतिरिक्त सञ्जन् महालये तु निषेधः । इति ।

सन्यासिनां तु द्वादश्यां महालयः ।

यतीनां च वनस्थानां वैष्णवानां विशेषतः ।
द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषतः ॥

इति संग्रहोक्तेः । उक्तकाले श्राद्धाकरणे गौणकाल माह हेमाद्रौ यमः ।

हंसे कन्यास्थे वर्षास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे दद्या दुभयोरपि पक्षयोः ॥

आश्विन कृष्ण शुक्ल पञ्चम्योर्मध्ये इत्यर्थः ।

तत्राप्यसंभवे भविष्ये—

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्नचेद्दत्तं पितॄणां वै महालये ॥

तत्राप्यसंभवे भारते—

यावच्च कन्या तुलयोः क्रमादास्ते दिवाकरः ।
शून्यं प्रेतपुरं तावद्वृश्चिकं यावदागतः ॥

ब्राह्मे—

वृश्चिके समतिक्रान्ते पितरो दैवतैः सह ।

निघ्नस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम् ॥

यत्तु जातूकर्ण्येनोक्तम्।

आकाङ्क्षन्ति स्म पितरः पञ्चमं पक्षमाश्रिताः।
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ॥
इति।

तत् फलातिशयपरं न तु अन्यत्र निषेधकम्।
हंसे कन्यासु इति वचनस्य वैयर्थ्य प्रसङ्गादिति दिक्।

अन्यच्च पुराण समुच्चये—

पक्षश्राद्धे समारब्धे सूतकं निपतेद् यदि।
समाहूताहि पितरः सूतकान्ते विसर्जयेत् ॥
यदि नैव नरः कुर्य्यात् सूतकान्ते समापनम्।
प्राग् दत्तानि मनुष्येण श्राद्धान्यसुरसद्मये ॥ इति।

इदं श्राद्ध मवश्यमेव कार्य्यम्।

मृताहं च सपिण्डं च गयाश्राद्धं महालयम्।
आपन्नोऽपि न कुर्व्वीत श्राद्ध मासेन कर्हिचित् ॥
इति स्मृतिदर्पणे गालवोक्तेः।

अथात्र देवताः। तत्र विश्वेदेवाः।

विश्वे देवौ क्रतू दक्षौ सर्वास्विष्टिषु कीर्त्तितौ।
प्रेतश्राद्धे कालकामौ काम्ये च धुरिलोचनौ ॥
पुरूरवा द्रवौ चैव पार्वणे समुदाहृतौ।
इति श्राद्धेषु सर्वेषु देवौ सत्य वसू स्मृतौ ॥
इति हेमाद्रौ बृहस्पति स्मृतिः।

तथा—

तातात्वाविनयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्रीतनयादि तातजननी स्वभ्रातरः स्तत् स्त्रियः ॥

तातास्वात्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः ।
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥

इति प्रघट्टके संग्रहवचनम् ।

स्मृत्यर्थ सारेऽपि । महालये मातृश्राद्धं पृथक् प्रशस्त मिति ।

अत्र विशेषः स्मृतिदर्पणे गालवेनोक्तः—

अनेका मातरो यस्य श्राद्धे चापरपक्षिके ।
अर्घ्यदानं पृथक् कुर्य्यात् पिण्ड मेकं तु निर्वपेत् ॥

इति ।

शिष्टास्तु भस्य अशक्तविषयतां मत्वा पृथक् पिण्डं प्रयच्छन्ति ।
सापत्नमातु रेकोद्दिष्ट मेव ।

सपिण्डीकरणादूर्द्ध्वं पित्रोरेवहि पार्व्वणम् ।
पितृव्य भ्रातृ मातृणा मेकोद्दिष्टं सदैवहि ॥

इति जातूकर्ण्योक्तिः ।

जीवन्मातृकोऽपि सापत्नमातुरेकोद्दिष्टं कुर्य्यान्नतु पार्वणम् ।
पूर्व्वस्मृतेः । श्राद्धदीपकलिकायां तु पार्वण मुक्तम् ।

चान्वष्टक्यं च यन्मातु र्गयाश्राद्धं महालयम् ।
पितृपत्नीषु च श्राद्धं कार्य्यं पार्वणवद् भवेत् ॥

इति वृद्धमनूक्तिः ।

अत्र यद्यपि मातामहादीनां पृथक् श्राद्धं नोपलभ्यते। तथापि विभवे सति तत् कार्य्यम्।

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च।
श्रेयं द्वादश दैवत्यं तीर्थे प्रौष्ठे मघासु च॥

इति निगमोक्तेः।

कुर्य्याद्द्वादशदैवत्यं प्रेतपक्षे सदैव च।
तथा तीर्थे गयायां च एष धर्म्मः सनातनः॥

इति कात्यायनोक्तेश्च। हेमाद्रिस्तु नवदैवत्यमाह।

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च।
नवदैवत्य मत्रेष्टं शेषं षाट्पौरुषं विदुः॥

इति।

पार्वणैकोद्दिष्ट व्यवस्था चोक्ता तत्रैव।

उपाध्यायगुरुश्वश्रुपितृव्याचार्य्य मातुलाः॥
श्वशुरश्चातृ तत्पुत्र पुत्रलिक् शिष्य पोषकाः।
भगिनी स्वामि दुहितृ जामातृ भगिनीसुताः॥
पितरौ पितृ पत्नीनां पितु र्मातुश्च या स्वसा।
सखि द्रव्यदशिष्याद्यास्तीर्थे चैव महालये॥
एकोद्दिष्ट विधानेन पूजनीयाः प्रयत्नतः।
पितृ मातामहादीनां पार्वणं तु विधीयते॥

इति।

चतुर्विंशतिमतेऽपि —

आचार्य्य गुरुशिष्येभ्यः सखिज्ञातिभ्य एव च।

तत् पत्नीभ्यश्च सर्वाभ्यः सपत्नराख जलाञ्जलिम्॥
पिण्डं तेभ्यः सदा दद्यात् पृथग् भाद्रपदे नरः।
तीर्थेषु चैव सर्वेषु माघमासे मघासु च॥

इति।

अत्र क्रमाद्यलेऽपि आचाराद् व्यवस्था ज्ञेया।

अत्र विधवा कर्त्तृक श्राद्धे विशेषः स्मृति सङ्ग्रहे।

चत्वारः पार्वणाः प्रोक्ता विधवायाः सदैवहि।
स्वभर्त्तृ श्वशुरादीनां मातापित्रो स्तथैवच।
ततो मातामहानां च श्राद्धदान मुपक्रमेत्॥

तथा—

श्वश्रूणां च विशेषेण मातामह्या स्तथैवच।

इति षट्‌पार्वणपक्षोऽप्युक्तः। अग्रन्तौ तु।

स्वभर्त्तृप्रभृतिभ्यश्च स्वपितृभ्यस्तथैवच।
विधवा कारयेच्छ्राद्धं यथाकाल मतन्द्रिता॥

अस्यार्थः। विधवा स्वयं सङ्कल्पं कृत्वा अन्य ब्राह्मणद्वारा कारयेदित्युक्तं प्रयोगपारिजाते।

एतदपुत्रवतीविषयं। पुत्रवत्यास्त्वनधिकार एव।

पुलस्त्यः—

महालये गयाश्राद्धे मतासूनां क्षयेऽहनि।
तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्य्यात् पृथक् पृथक्॥
यद्येकत्र भवेयाता मेकोद्दिष्टं च पार्व्वणम्।
पार्वणं तत्र निर्वर्त्त्य एकोद्दिष्टं समापयेत्॥

अत्र शक्तेन एकोद्दिष्टेषु प्रत्येकं ब्राह्मणभोजनं कार्य्यं । अशक्तौ तु एकस्मिन्नपि ब्राह्मणे भोजिते सर्वैकोद्दिष्टानि (सम्पन्नानि) साङ्गानि भवन्ति । अतएव चतुर्विंशति मते "आचार्य्य गुरुशिष्येभ्यः" इत्युपक्रम्य—

तीर्थेषु चैव सर्वेषु अष्टकासु मघासु च ।
एकस्मिन् ब्राह्मणे सर्वानाचार्य्यादीन् प्रपूजयेत् ॥

इत्युक्तम् । अर्घ्यपिण्डदानं तु पृथगेव ।

प्राधान्यात्—

एकस्मिन् ब्राह्मणे सर्वानाचार्य्यादीन् प्रपूजयेत् ।
दश द्वादश वा पिण्डान् दद्यादकरणं न तु ।

इति यमोक्तेश्च ।

एकोद्दिष्ट स्वरूपमाह याज्ञवल्क्यः ।

एकोद्दिष्टं देवहीन मेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥

एकोद्दिष्टे सपत्नीकाय ससुताय अयं पिण्डः स्वधा न मम इति प्रयोगेन पिण्डदानं कार्य्यम् ।

मूलपुरुषे जीवति तत् पश्चादे र्न पिण्डदानम् ।

स्वगोत्रे परगोत्रे वा दम्पत्योः पिण्डदानतः ।
अपृथक् निष्फलं श्राद्धं पिण्डं चोदकतर्पणम् ।

इति वायुपुराणादित्याहुः ।

अत्र धुरिलोचनौ वैश्वदेवौ कार्य्यौ ।

अपि कन्यागते सूर्य्ये काम्ये च धुरिलोचनी ।

इति हेमाद्रावादित्यपुराणोक्तेः ।

अत्र प्रतिदिनं भिन्न प्रयोगे दक्षिणाभेदः ।

प्रयोगैक्ये तु अन्त एव एकैव दक्षिणा देया ॥

इति काल खण्डे हेमाद्रावुक्तम् ।

एतच्च संन्यस्तपितृकादिना जीवत्पितृकेणापि कार्य्यम् ।

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।

येभ्य एव पितादद्यात्तेभ्योदद्यात् स्वयं सुतः ॥

इति कात्यायनोक्तेः ।

यत्तु —

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।

न जीवत्पितृकः कुर्य्यात्तिलैः स्तर्पण मेव च ।

इति कौण्डिण्य वचनं । तत् संन्यस्तपितृकाद्यतिरिक्त विषयम् । काम्यश्राद्धविषयं वा ।

अत्र श्राद्धाङ्ग तर्पणं तु पक्ष श्राद्धे प्रतिदिनं श्राद्धोत्तरं कार्य्यं । मघास्वन्यत्र तु परेऽह्नि कार्य्यम् ।

तदुक्तं नारदेन—

पक्षश्राद्धं यदा कुर्य्यात्तर्पणं तु दिने दिने ।

मघान् महालये चैव परेऽहनि तिलोदकैः ॥

गर्गोऽपि—

पक्ष श्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ।

इति ।

तथा प्रयोग पारिजाते स एव ।

कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।
पितृणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ।
सप्तम् महालये ब्रः स्यादष्टकास्वन्त एवहि ॥ इति ।

तथा—

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम् ॥

इति स्मृतिरत्नावलीकारवचनाच्च निषिद्धाहेऽपि तर्पणं भवत्येव । इदं श्राद्धं मलमासे न कार्य्यम् ।

वृद्धि श्राद्धं तथा सोम मग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्य्याद् भानु लङ्घिते ॥

हेमाद्रौ नागरखण्डेऽपि—

नभो वाथ नभस्योवा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥

एतच्च पित्रोर्मरणे सति प्रथमाब्दे ज्ञाताज्ञातमिति विज्ञानेश्वरेतौ ।
इदं च नित्यं काम्यं च ।

पुत्रानायुस्तथारोग्य मैश्वर्य्य मतुलं तथा ।
प्राप्नोति पञ्चमे कृत्वा श्राद्धं कामांश्च पुष्कलान् ॥

इति जाबालोक्तेः ।

वृश्चिके समतिक्रान्ते पितरो दैवतैः सह ।
निःश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम् ॥

इति कार्ष्णाजिनि वचनाच्च ।

एतदतिक्रमे प्रायश्चित्तमुक्तं ऋग्विधाने—

दुरो अश्वस्य * मन्त्रं च दशमास द्विमासयोः ।
महालयं यदा न्यूनं तदा सम्पूर्ण मेति तत् ॥

इति ।

अत्र भरणी श्राद्ध मति प्रशस्तं । तदुक्तं मात्स्ये ।

भरणी पितृपक्षे तु महती परिकीर्त्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ।

इति ।

अत्र विशेष माह श्रीधरः—

नभस्यापरपक्षस्य द्वितीया यदि याम्यभे ।
तृतीयाचाग्नितारामिः सहिता प्रीतिदा पितुः ॥

याम्यभं भरणी अग्नितारा कृत्तिका ।

अत्र षष्ठ्यां विशेषो वाराहे—

नभस्य कृष्णपक्षे तु रोहिणी पातभूसुतैः ।
युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्त्तिता ॥
व्रतोपवासनियमै र्भास्करं तत्र पूजयेत् ।
कपिलां गां द्विजाग्र्याय दत्त्वा क्रतुफलं लभेत् ॥

पुराणसमुच्चये—

भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते ।

---

* दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः ।
शिक्षानरः प्रदिवो अकामकर्शनः सखा सखिभ्य स्तमिदं गृणीमसि ।

—इति १म. ५३सू. २ऋक् ॥

पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ॥

अथ दर्शान्त मासाश्रयणेन महालयो भाद्र कृष्णपक्षो प्रेय कृत्युक्तं निर्णयामृते ।

विश्वप्रकाशे चात्र विशेष उक्तः स्कान्दे—

कन्यागते सहस्रांशौ मासि भाद्रपदे मुने ।
कृष्णपक्षे तु या षष्ठी भौमवारेण संयुता ॥
रोहिणी ऋक्ष संयुक्ता व्यतीपातेन संयुता ।
यदि सा गरनागाख्यां करणाभ्यां युता भवेत् ॥
आग्नेयेन मुहूर्त्तेन षष्ठी युक्ता भवेद् यदा ।
तस्यां षष्ठ्यां सुपुण्यायां कपिलो भगवानभूत् ॥
दुर्लभेयं महाषष्ठी वर्षे षष्टितमे भवेत् ।
सर्वेषां चैव दानानां सत्पुण्यफलदायिनी ॥
स्नात्वा सम्यग् विधानेन यथाविध्युक्तमार्गतः ।
पितॄन् सन्तर्प्य देवांश्च सूर्य्यायार्घ्यं निवेदयेत् ॥
मन्त्रेणानेन देवाय गन्धपुष्पाक्षतैर्युतम् ।
पुराकृतं तु यत् पुण्यं तत् (पुण्यं) सर्वं चाक्षयं कुरु ॥
नमोमय नमस्तुभ्यं गृहाणार्घ्यं दिवाकर ।
एव मर्घ्यत्रयं दत्वा गृहे पद्मं समालिखेत् ॥
तत्र न्यसेत् प्रस्थमात्रं धान्यं तत्र घटं न्यसेत् ।
ताम्रपात्रे तु प्रतिमां तत्र न्यस्याथ पूजयेत् ॥
कपिलं वासवाख्यं देवहूतिं च कर्दमम् ।

पूजयित्वा सप्ततिमं घटं दद्याद्विजातये॥
गन्धपुष्पै रलङ्कृत्य दत्वा पापैः प्रमुच्यते।
अधोगतिं गतान् प्रेतान् समुद्दिश्य समर्पितः।
तिलपात्रादिदानेन तानुद्धरति सङ्कटात्॥
इति।

इयमेव चन्द्र षष्ठीत्युच्यते—
सा च चन्द्रोदय व्यापिनी ग्राह्या। उभयत्र तथात्वे पूर्व्वा।

तदुक्तं भविष्ये—
तद्वद् भाद्रपदे मासि षष्ठ्यां पक्षे सितेतरे।
चन्द्रषष्ठीव्रतं कुर्य्यात् पूर्वं वेधः प्रशस्यते॥
चन्द्रोदये यदा षष्ठी पूर्वाह्णे चापरेऽहनि।
चन्द्रषष्ठ्यासिते पक्षे सैवोपोष्या प्रयत्नतः॥

अत्र सप्तम्यां पूर्वेद्यु रष्टकाश्राद्धं कार्य्यम्।
अत्र अष्टम्या माश्वलायनेन माध्यावर्षं संज्ञं श्राद्धमुक्तम्।
इतेन माध्यावर्षं प्रोष्ठपद्या अपरपक्षे इति सिद्धम्।
इदं सप्तम्यादिषु त्रिषु अहःसु कार्य्यमिति नारायणवृत्तिकृत्।
प्रथमाष्टकापक्षः अष्टम्यामिति कात्यायनोऽपि।

पृथ्वीचन्द्रोदये ब्राह्मे—
भाद्राख्याः पञ्चमे पक्षे ग(म)यामध्याऽष्टमीभूता।
त्रयोदशी गजच्छाया गयातुल्या तु पैतृके॥
अतैव मघात्रयोदशीव्रत भुक्तम्।

पुराणसमुच्चये—

श्रियोऽर्चनं भाद्रपदे सिताष्टमी मारभ्य कन्यागत सूर्य्य एव * ।

समापयेत्तत्र तिथौ च यावत् सूर्य्यस्तु पूर्वार्द्धगतोयुवत्याः ।

इति ।

तथा—

कन्यागतेऽर्के प्रारभ्य कर्त्तव्यं न श्रियोऽर्चनम् ।

हस्तप्राप्तदलस्थेऽर्के तद्व्रतं न समापयेत् ॥

पूजनीया गृहस्थाना मष्टमी प्रावृषि श्रियः ।

दोषैश्चतुर्भिः सं(यु)त्यक्ता सर्वसम्पत्करी तिथिः ॥

तथा—

पुत्रसौभाग्य राज्यायुर्नाशनी सा प्रकीर्त्तिता ।

तस्मात् सर्वप्रयत्नेन त्याज्या कन्यागते रवौ ॥

विशेषेण परित्याज्या नवमी (दूषिता) संयुता यदि ॥

इति ।

दोषचतुष्टयमपि तत्रैवोक्तम्—

त्रिदिने चावमे चैव अष्टमीं नोपवासयेत् ।

पुत्रघ्ना नवमी विद्धा स्वघ्नी हस्तार्द्धगे रवौ ॥

इति ।

त्रिदिनावमलक्षण मुक्तं रत्नमालायाम्—

यत्रैकः स्पृशति तिथिद्वयावसानं

* कन्या मगतं च सूर्य्ये इति निर्णयसिन्धौ पाठः ।

वारश्चेदवमदिनं तदुक्तमार्य्यैः ।
यः सूर्य्याद् भवति तिथि त्रयस्य चाप्ता
विप्रुस्तक् कथित मिदं द्वयं च नेष्टम् ॥

एते दोषाः प्रथमारम्भविषयाः । अनन्तरं तु यथासम्भवं ज्ञेयाः । व्रतस्यैतस्य षोड़शवर्षं साध्यत्वेन मध्ये त्यागायोगात् । इयं चन्द्रोदय व्यापिनी ग्राह्या । तत्रैव पूजाद्युक्तेः । परदिने चन्द्रोदयादूर्द्ध्वं त्रिमुहूर्त्तव्यापित्वे परैव ग्राह्या ।

अन्यथा पूर्व्वैव—

पूर्व्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा ।
त्रिमुहूर्त्तापि सा पूज्या परतश्चोर्द्ध्वगामिनी ॥

इति निर्णयामृतोक्तेः ।

अर्द्धरात्र मतिक्रम्य वर्त्तते योत्तरा तिथिः ।
तदा तस्यां तिथौ कार्य्यं महालक्ष्मीव्रतं सदा ॥

इति मदनरत्नोक्तेश्च । इति दिक् ।

इति महालक्ष्मीव्रतनिर्णयः ।

## अथात्र नवम्यामन्वष्टकाश्राद्धं कार्य्यम् ।

कात्यायनः—

अन्वष्टकासु नवभिः पिण्डैः श्राद्ध मुदाहृतम् ।
पित्रादि मातृमध्यं च ततो मातामहान्तकम् ॥

ब्रह्माण्डेऽपि—

पितृणां प्रथमं दद्यात् मातृणां तदनन्तरम् ।

ततो मातामहानां च आन्वष्टक्ये क्रमः स्मृतः ॥

तदेतत् पृथ्व मासाद्य अन्वष्टकाश्राद्धविषयम् ।

तामिस्रपक्षे नवमी या च पुष्य नभस्यके ।
चत्वारः पार्वणाः कार्य्याः पितृमुख्या मनीषिभिः ॥
पितृमातृकुले नार्य्यो याः काश्चित्तु मृतिं गताः ।
आचार्य्या मातरो ज्ञेया स्तासां श्राद्धं प्रदापयेत् ॥

इति श्राद्धकाशिकायां पुराणसमुच्चयोक्तेः ।

श्राद्धहेमाद्रौ छागलेयः—

केवलास्तु क्षये कार्य्या वृद्धावादौ प्रकीर्त्तिताः ।
अन्वष्टकासु मध्यस्था नान्याः कार्य्यास्तु मातरः ॥

इति ।

दीपिकायां तु मातृश्राद्ध मन्वष्टकासु आदौ कार्य्य मित्युक्तम् । मातृयजनं तु अन्वष्टकासु आदित इति ।

तदेतत् येषां गृह्ये मातृपूर्व मन्वष्टकादि श्राद्ध मभिहितं तद्विषयं । न तु आश्वलायनकात्यायनादिविषयि मित्यवधेयम् ।

इदं च पितरि जीवत्यपि मृतमातृकेण कार्य्यम् ।

उक्तं हि मैत्रायणीयपरिशिष्टे—

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्य्यात् पितर्य्यपि च जीवति ॥

इति ।

यद्यपि जीवत् पितृकेण सर्वाष्टकाः कार्य्याः । तथापि प्रौष्ठपद्यष्टका अत्यावश्यकी ।

प्रौष्ठपद्यष्टका भूयः पितृलोके (भविष्यति) सुखावहा ।
सर्वासा मेव मातॄणां श्राद्धं कन्यागते रवौ ॥
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ।

इति हेमाद्रौ सूतवचनात् ।

अत्र सर्वासा मित्युक्तेः स्वमातरि जीवन्त्यामपि सपत्नमातृभ्यो दद्यात् । अत्र सर्वासां नामनिर्द्देशेन एको ब्राह्मणः अर्घ्यः पिण्डश्च कार्य्यः । नामैक्येतु द्विवचनादि प्रयोग इत्युक्तं नारायण वृत्तौ ।

अत्र भर्त्तृमरणोत्तरं पूर्व्वमृत मातृश्राद्धं न कार्य्य मिति केचिदाहुः । पठन्ति च—

श्राद्धं नवम्यां कुर्य्यात्तन् मृते भर्त्तरि लुप्यते ।

इति ।

तदेतत् सर्व्वनिबन्धविरुद्धत्वात् प्रतारणामात्रम् ।

जीवद्भर्त्ता * मृता या स्त्री सा संपूज्या प्रयत्नतः ।
भर्त्तर्य्यपि मृते तस्या चान्वष्टक्यं न लुप्यते ॥

इति सुमन्तूक्तेः ।

अत्र अन्यो विशेषः श्राद्धकलिकायां ब्राह्मे—

पितृमातृ कुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः ।
श्राद्धार्हा मातरोज्ञेया स्तासां तत्र प्रदीयते ॥

इति ।

---

* जीवद् भर्त्ता जीवद् भर्तृका ।
आर्षत्वात् समासान्तविधेरनित्यत्वाद्वा समासान्ताभावः ।

अत्र कुलाचारात् व्यवस्था । इदं च अनुपनीतेनापि कार्य्यम् ।

अमावास्याष्टका कृष्णपक्ष पञ्चदशीषु च ।

एतच्चानुपनीतोऽपि कुर्य्यात् सर्वेषु पर्वसु ।

इति मत्स्यपुराणोक्तेः ।

इदं श्राद्धं सपिण्डकं कार्य्यम् ।

अन्वष्टकासु च स्त्रीणां श्राद्धं कार्य्यं तथैवच ।

इत्युपक्रम्य—

पिण्डनिर्वपणं कार्य्यं तस्यां च नृपसत्तम ।

इति हेमाद्रौ विष्णुधर्म्मोत्तरोक्तेः ।

अत्र सुवासिनी भोजयितव्या । तदुक्तं मार्कण्डेये—

मातुः श्राद्धे तु सम्प्राप्ते ब्राह्मणैः सह भोजनम् ।

सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् ॥

भर्तुरग्रे मृता नारी सह दाहेन वा मृता ।

तस्याः श्राद्धे भोजयीत विप्रैः सह सुवासिनीः * ॥

तत्रैव च मदालसावाक्यम्—

स्त्री श्राद्धेषु प्रदेयाः स्यु रलङ्काराश्च योषिते ।

मञ्जीर मेखलादाम कर्णिका कङ्कणादयः ॥

इति ।

एतच्छ्राद्धाशक्तस्य अनुकल्प माह आश्वलायनः—

अनडुहो यवसमाहरेत् । अग्निना वा कक्ष मुपोषेत् ।

---

* तस्याः स्थाने नियुञ्जीत विप्रैः सह सुवासिनीम् ।

—इति निर्णयसिन्धौ पाठः ।

एषा मे अष्टकेति नत्वेवानष्टकः स्यादिति । एतदकरणे प्रायश्चित्तमुक्तं स्मृत्यन्तरे—

एभिर्द्युभि * र्जपेन्मन्त्रं शतवारं तु तद्दिने ।
मान्वष्टक्यं यदा शून्यं सम्पूर्णं याति सर्वथा ॥

अत्र द्वादश्यां विशेष उक्तः पूर्वम् ।

वायवीयेऽपि—

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्य्याद् यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं तु तत् ॥
इति ।

अत्र त्रयोदश्यां विशेषश्चन्द्रिकायामुक्तः—

त्रयोदशी भाद्रपदे कृष्णा मुख्या पितृप्रिया ।
तृप्यन्ति पितरस्तस्यां श्राद्धात् (स्वयं) पञ्चशतं समाः ॥
मघायुतायां तस्यां तु जलाद्यैरपि तोषिताः ।
तृप्यन्ति पितर स्तद्वर्षाणामयुतायुतम् ॥
इति ।

एतत् त्रयोदशी श्राद्धं नित्यम्—

प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी ।

इत्याद्युक्ता—

एतां तु श्राद्ध कालान् वै नित्यानाह प्रजापतिः ।

---

* एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना ।
इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥
—इति ऋ. १।५३. ४ऋक् ।

श्राद्ध मेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ।

इति हेमाद्रौ विष्णुधर्मोक्तेः ।

एतच्च अविभक्तैरपि भ्रातृभिः पृथक् कार्य्यम् ।

तथाच हेमाद्रौ देवलः—

विभक्ता अविभक्ता वा कुर्य्युः श्राद्धं पृथक् सुताः ।
मघासु च ततोऽन्यत्र नाधिकारः पृथक् पृथक् * ॥

इति ।

अपरार्केऽपि वायुपुराणे—

हंसे † हस्तस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथि र्वैवस्वती नाम सा च्छाया कुञ्जरस्य तु ॥

इदं श्राद्ध मपिण्डकं कार्य्यम्—

मघायुक्ता त्रयोदश्यां पिण्डनिर्वपणं द्विजः ।
ससन्तानोनैव कुर्य्यान्नित्यं ते कवयो विदुः ॥

इति वृहत् पराशरोक्तेः । इदं मलमासेऽपि कार्य्यम् ।

मघा त्रयोदशी श्राद्धं प्रत्युपस्थिति हेतुकम् ।
अनन्यगतिकत्वेन कर्त्तव्यं स्यान्मलिम्लुचे ॥

इति काठक गृह्योक्तेः ।

यानि तु—

त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः ।

---

* पृथक् विना इति निर्णयसिन्धौ पाठः
स च न समीचीनः विनाशब्दस्य आनर्थक्यात् ।

† हंसे सूर्य्ये हस्ती हस्तर्क्षे ।

पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम् ॥

इत्यङ्गिरोवचनं ।

तथा—

त्रयोदश्यां तु वै श्राद्धं न कुर्य्यात् पुत्रवान् गृही ।
यदि मोहेन कुर्व्वीत ज्येष्ठपुत्रो विनश्यति ॥

इति वामनपुराणवचनं ।

तानि सर्वाणि वचनानि पुत्रवद्विषयाणि । यद्वा महालयस्य भिन्न केवल त्रयोदशी श्राद्धविषयाणि । अथवा सपिण्डकश्राद्धविषयाणीति द्रष्टव्यानि ।

हेमाद्र्यादयस्तु एकवर्गमात्र श्राद्धविषयाणि ।

श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ॥
न तृप्तास्तत्र ये यस्य प्रजा हि सन्ति तस्य ते ॥

इति कार्ष्णाजिनिस्मृतेरित्याहुः * ।

अभियुक्तास्तु पुत्रवद्विषयाण्येवेति मेनिरे ।

असन्तानस्तु य स्तस्य श्राद्धे प्रोक्ता त्रयोदशी ।
सन्तानयुक्तो यः कुर्य्यात्तस्य वंशक्षयो भवेत् ॥

इति हेमाद्रौ नागरखण्डोक्तेः ।

पूर्ववाक्य मपि असन्तानस्यैव एकवर्ग निषेधक मिति ।

अत्र मघात्रयोदशी महालय युगादि श्राद्धानां संपाते तन्त्रेण

* यत्रापि पितरौ यत्र पूज्यन्ते तत्र मातामहा अपि ।
इति धौम्योक्तं कृत्स्नं पितृवर्गस्य प्राप्ति तथापि
श्राद्धोपादि प्राप्तिनिर्णयोऽस्य मिति केचिदिति कमलाकरः ।

प्रयोगः कार्यो न तु प्रसङ्ग विधिः । देश काल कर्त्तृकत्वात् । इत्यलं विस्तरेण ।

अथ चतुर्द्दश्यां विशेष माह प्रचेताः—

वृक्षारोहण लोहाद्यै र्विद्युज्जलविषाग्निभिः ।
नखिदंष्ट्रिविपन्ना(नां) ये तेषां शस्ता चतुर्द्दशी ॥

ब्राह्मे तु—

युवानः पितरोयस्य मृताः शस्त्रेण वा हताः ।
तेन कार्य्यं चतुर्द्दश्यां तेषां तृप्तिमभीप्सता ॥

नागरखण्डेऽपि—

अपमृत्यु र्भवेद् येषां शस्त्रमृत्यु रथापि वा ।
तेषां श्राद्धं प्रकर्त्तव्यं चतुर्द्दश्यां नराधिप ॥

इति ।

यदत्र—

जलाग्निभ्यां विपन्नानां सन्न्यासे वा गृहे पथि ।
श्राद्धं कुर्वीत तेषां वै वर्ज्जयित्वा चतुर्द्दशीम् ॥

इति शाकटायन वचनं जलाग्निमृतस्य श्राद्धं निषेधयति ।

तत्तु प्रायश्चित्तार्थं जलादिभिर्मृतश्राद्धविषयम्—

जलादिमरणं येषां विहितं शास्त्रमार्गतः ।
शुद्ध्यर्थं श्राद्ध मेतेषां चतुर्द्दश्यां न कारयेत् ॥

इति लोगाक्षिस्मृतेः ।

अतएव वैधत्वात् सहगमनेऽपि नेदं श्राद्धं कार्य्य मिति

हेमाद्रिराह।

इदं श्राद्धं दैवयुक्त मेकोद्दिष्टं कार्य्यम्।

तदुक्तं प्रयोग पारिजाते—

प्रेतपक्षे चतुर्द्दश्या मेकोद्दि(ष्टं)ष्ट विधानतः।

दैवयुक्तं तु तच्छ्राद्धं पितॄणा मक्षयं भवेत्॥

तच्छ्राद्धं दैवहीनं चेत् पुत्रदारधनक्षयः।

एकोद्दिष्टं दैवयुक्त मित्येवं मनु रब्रवीत्॥

इति।

अत्र शस्त्रहतस्यैव चतुर्द्दश्या मिति नियमः। न तु चतुर्द्दश्या मेव शस्त्रहतस्येति।

श्राद्धं शस्त्रहतस्यैव चतुर्द्दश्यां महालये।

इति कालादर्शोक्तेः। तेन महालये दिनान्तरेऽपि पार्वण विधिना एतत् कार्य्य मित्यवगम्यते।

अन्यथा वाचिकादेरपि लोपापत्तेः।

यदि पितामहोऽपि शस्त्रहत स्तदा एकोद्दिष्टद्वयं कार्य्यम्। एकस्मिन् द्वयो र्वैकोद्दिष्ट मिति हेमाद्रौ वसिष्ठोक्तेः। त्रिषु शस्त्रहतेषु पार्वणश्राद्धं कार्य्यं। यत्तु देवस्वामिना उक्तम्—

त्रिष्वपि शस्त्रहतेषु पृथगेकोद्दिष्ट त्रयं कार्य्यं न तु पार्वणं। बाहुल्यवचनाभावादिति। तदयुक्तम्।

पित्रादयस्त्रयो यस्य हताः शस्त्रैरनुक्रमात्।

संभूते पार्वणं कुर्य्यादाब्दिकानि पृथक् पृथक्॥

इति बृहत्पाराशरोक्तेः।

तथा—

एकस्मिन् वा द्वयोर्वापि विद्युच्छस्त्रेण वा हते ।
एकोद्दिष्टं सुतः कुर्य्यात्त्रयाणां दर्शवद् भवेत् ॥

इति हेमाद्रौ गालववचनसद्भावाच्च ।

यत्तु अत्रैव चतुर्द्दश्यां शस्त्रादिना हत स्तस्य वार्षिकं श्राद्धं पार्वणं वा एकोद्दिष्टं वा कार्य्यं । न तु श्राद्धद्वयं । प्रसङ्गसिद्धत्वा-दित्युक्तं पृथ्वीचन्द्रोदये निबन्धे ।

अत्र श्राद्धातिक्रमे अग्रिमपक्षे दिनान्तरे पार्वणविधिना एतत् कार्यमिति तत्रैवोक्तम् ।

इति चतुर्दशी ।

## अमावास्यायां विशेष माह अपरार्के यमः—

हंसे करस्थिते या तु अमावास्या करान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥

करान्विता हस्तमहानक्षत्रयुक्तेत्यर्थः ।

तथा—

वनस्पतिगते सोमे याच्छाया प्राङ्मुखी भवेत् ।
गजच्छायातु सा ज्ञेया तस्यां श्राद्धं प्रकल्पयेत् ॥

भारते—

अजेन सर्वलोहेन वर्षासु नियतव्रतः ।
हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितम् ॥

श्राद्धं कुर्य्यादिति शेषः । सर्वलोहेन समग्राङ्गेनोच्छिनवर्णेन ।

एवं गजच्छाया अनेकविधा ज्ञेया । एवं प्रतिपदादि तिथिषु श्राद्धं कार्यम् ।

यत्तु—

न पैतृयज्ञियो होमो लौकिकाग्नौ विधीयते ।
न दर्शेन विना श्राद्ध माहिताग्ने र्विधीयते ॥

इति मनुवचनं आहिताग्नेर्दर्शादन्यत्र श्राद्ध निषेधकमिव आभाति । नत्तु अन्यतिथौ सङ्कल्प विधिना श्राद्धं कर्त्तव्य माहिताग्निना । इति केचित् । अभियुक्तास्तु कृष्णापक्षश्राद्ध मन्यदिनेषु प्राप्त माहिताग्ने र्दर्शे नियम्यते इत्याहुः ।

अथ आश्विन शुक्लप्रतिपदि दौहित्रस्य मातामह श्राद्ध मुक्तं गर्गेण ।

जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले ।
कुर्य्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥

इति ।

इयं तिथिः सङ्गवव्यापिनी ग्राह्या

इति निर्णयदीपे उक्तम्—

प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राद्धं मातामहं कुर्य्यात् सपिता सङ्गवे सदा ॥

जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले ।
प्रातः सङ्गवयोर्मध्ये आर्यस्य प्रतिपद्भवेत् ॥

इति स्मृतेः । इदं च जीवत्पितृकेणैव कार्य्यमिति शिष्टाः

माहुः। इदं श्राद्धं सपिण्डकं कार्य्यं । दीहित्रस्यैवापार्वण मिति पूर्ववचनादिति केचिदाहुः।

अपिण्डकमेतदिति तु वयं वदामः। पार्वणशब्दस्य पिण्ड-रहित श्राद्धेऽपि प्रयोग सम्भवात्।

मुण्डनं पिण्डदानं च प्रेतकर्म्म च सर्वशः।
न जीवत्पितृकः कुर्य्याद् गुर्विणीपति रेवच॥

इति दर्शोऽत्रापि पिण्डनिषेधात्। मान्वष्टक्यादिवत् सपि-ण्डकं कार्यमितिविशेष वचनाभावाच।

॥ इति श्रीविधानपारिजाते महालयश्राद्धविधानम् ॥

---

## अथ आश्विन शुक्लप्रतिपदि नवरात्रारम्भः ।

तन्निर्णयश्च निरूप्यते—

तत्र देवीपुराणे, सुमेधा उवाच—

शृणु राजन् प्रवक्ष्यामि चण्डिकापूजनक्रमम् ।
आश्विनस्य सिते पक्षे प्रतिपच्छुभेदिने ॥

इत्युपक्रम्योक्तं—

शुद्धे तिथौ प्रकर्त्तव्यं प्रतिपच्चोर्द्धगामिनी ।
आद्यास्तु नाड़िका स्त्यक्त्वा षोड़श द्वादशापि वा ।
अपराह्णे च (प्र) कर्त्तव्यं शुभ सन्तति काङ्क्षिभिः ॥

इदं च अपराह्णयोग प्राशस्त्यं द्वितीयदिने प्रतिपदोऽभावे ज्ञेयम् ।

यतस्तत्रैव देवीपुराणे वचनान्तरे—

अमायुक्ता न कर्त्तव्या प्रतिपत् पूजने मम ।
मुहूर्त्तमात्रा कर्त्तव्या द्वितीयादि गुणान्विता ॥
आद्याः षोड़शनाड़ीस्तु लब्ध्वा यः कुरुते नरः ।
कलसस्थापनं तस्य ह्यनि(रि)ष्टं जायते ध्रुवम् ॥

इति ।

मार्कण्डेयेऽपि—

पूर्वविद्धा तु या शुक्ला भवेत् प्रतिपदाश्विनी ।
नवरात्रव्रतं तस्यां न कार्य्यं शुभमिच्छता ॥
देशभङ्गो भवेत्तत्र दुर्भिक्षं चोपजायते ।

नन्दायां दर्शं युक्तायां यदि स्यात् मम पूजनम् ॥

इति ।

स्कान्देऽपि—

विरुद्ध फलदा सा हि पुत्रदार भयावहा ।

इति ।

तथा देवीपुराणेऽपि—

यो मां पूजयतेनित्यं द्वितीयादि गुणान्विताम् ।

प्रतिपच्छारदीं स्नात्वा सोऽश्नुते सुखमव्ययम् ॥

यदि कुर्यादमायुक्तां प्रतिपत् स्थापने मम ।

तस्य शापायुतं दत्त्वा भस्मशेषं करोम्यहम् ॥

आग्रहात् कुरुते यस्तु कलसस्थापनं मम ।

तस्य सम्पद्विनाशः स्या ज्ज्येष्ठः पुत्रो विनश्यति ॥

अमायुक्ता न कर्त्तव्या प्रतिपचण्डिकार्चने ।

धनाभिर्भि द्विशेषेण वंशहानिश्च जायते ।

उदये त्रिमुहूर्त्तापि ग्राह्या सोदयदायिनी * ॥

गोविन्दार्णवे गर्गः—

या चाश्वयुजि मासे स्यात् प्रतिपद् भद्रयान्विता ।

कृत्वा ममार्चनं तस्यां शतयज्ञफलप्रदम् ।

इति ।

भद्रा द्वितीया—

---

* अस्य पूर्वार्द्धं । न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने ।
एवं निर्णयसिन्धौ दृश्यते ।

रुद्रयामले—

अमायुक्ता सदाचैव प्रतिपन्निन्दिता मता।

तत्र चेत् स्थापयेत् कुम्भं दुर्भिक्षं जायते ध्रुवम्।

प्रतिपत् सद्वितीया तु कुम्भस्थापन कर्म्मणि॥

निमित्ततन्त्रे—

प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत्।

प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्ज्जयेत्॥

कल्पतरौ—

कुहूकाष्टोपसंयुक्तां वर्ज्जयेत् प्रतिपत्तिथिम्।

राज्यनाशाय सा प्रोक्ता निन्दिता चाम्बपूजने॥

इत्यादि।

एषु वचनेषु कलसस्थापनोक्तेः तदेव प्रथमदिने निषिध्यते। न तु उपवासादि। तच्च पूर्वविद्धाया मेव कार्य्यम्।

प्रतिपदा ऽप्यमावास्या इति युग्मवाक्यात्।

युक्ता स्यात् प्रतिपत्तिथिः प्रथमतः।

इति दीपिकोक्तेः। शुक्लपक्षे दर्शविद्धा इति माधवोक्तेश्च। इति केचिदाहुः। वस्तुतस्तु। पूर्वोक्तवाक्येषु चण्डिकार्च्चन कलस स्थापन ग्रहणा दुपवासादेश्च तदङ्गत्वात् साङ्गं कर्म्म तत्रैव कार्य्यम्। युग्मवाक्यादेरन्योपवासविषयत्वेन वक्तुं शक्यत्वात्।

अतएव देवलः—

व्रतोपवासनियमे घटिकैका (यदा)पि या भवेत्।

सा तिथि स्तद्दिने पूज्या विपरीता तु पैतृके॥ इति।

यदा तु पूर्वदिने सम्पूर्णा शुद्धा भूत्वा परदिने वर्द्धते तदा सम्पूर्णत्वादमायोगाभावाच्च पूर्वैव ग्राह्या ।

यानि च द्वितीयायोग निषेधकानि वचनानि केचिन्निबन्धकाराः पठन्ति । तानि शुद्धाधिक निषेधपराणीति ज्ञेयम् ।

यदि परदिने प्रतिपत्तिथेरसत्त्वं तदा दर्शयुतापि ग्राह्या ।

तदाहल्लः:—

तिथिः शरीरं तिथिरेव कारणं
तिथिः प्रमाणं तिथिरेव साधनम् ॥

इति ।

यानि तु—

अमायुक्ताप्रकर्तव्या प्रतिपच्चण्डिकार्चने ।

इत्यादीनि नृसिंहप्रसाद निबन्ध वचनानि तानि समूलत्वे सति एतत्पराणीत्यवधेयम् ।

अत्र देवीपूजैव प्रधानम् । उपवासादि त्वङ्गम् ।

अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाश्विने मासि विशोको जायते नरः ॥

इति हेमाद्रौ भविष्यपुराणवचने तस्या एव फल सम्बन्धात् ।

नवमीतिथिपर्यन्तं हृद्धा पूजाजपादिकम् ।

इति देवीपुराणवचने तथात्वाच्च ।

अत्र उपवासादिक मुक्तं हेमाद्रौ भविष्ये—

एवं वै विन्ध्यवासिन्यां नवरात्रोपवासतः ।
एक भक्तेन नक्तेन तथैवायाचितेन च ॥

पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
गृहे गृहे भक्तिपरै * र्ग्रामे ग्रामे वने वने ॥
स्नातैः प्रमुदितैः हृष्टैः र्ब्राह्मणैः क्षत्रियै (र्नृपैः) स्तथा ।
वैश्यैः शूद्रै र्भक्तियुतै र्म्लेच्छै रन्यैश्च मानवैः ॥
इति ।

देवीपुराणेऽपि—

कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाचीत्यथवैकाशी नक्ताशी वाथवा व्रदः ॥
भूमौ शयीत चामन्त्र्य कुमारी र्भोजयेत् मुदा ।
वस्त्रालङ्कारदानैश्च सन्तोष्याः प्रतिवासरम् ॥
वलिं च प्रत्यहं दद्यादोदनं मांसमाषवत् ।
त्रिकालं पूजयेद्देवीं जप स्तोत्र परायणः ॥
इति ।

अष्टो विगतभोजनः । अत्र महापूजनं रात्रौ कार्य्यम् ।

आश्विने मासि मेषान्ते महिषासुरमर्द्दिनीम् ।
निशासु पूजयेद्भक्त्या सोपवासो यथाविधि † ॥
इति देवीपुराणात् ।

रात्रिव्रतमिदमित्यभिप्रेत्य माधवोऽप्याह । तच्च नक्तव्रतत्वा-
द्दिति । न तु रात्रि भोजना नक्तव्रतमिदं किन्तु रात्रौ पूजनात् ।

---

* भक्ति परैरिति निर्णयसिन्धौ पाठः स एव समीचीनः । अन्यथा भक्ति युतैः रित्यस्य पौनरुक्त्य प्रसङ्गात् ।

† सोपवासाष्टिक क्रमात् । इति निर्णयसिन्धौ पाठः

आश्विने मासि मेषान्ते प्रतिपद् या तिथि र्भवेत् ।
तस्यां नक्तं प्रकुर्व्वीत रात्रौ देवीं प्रपूजयेत् ।
इति संग्रहवचनात् ।

यत्तु—
मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः ।
संपूज्य नवदुर्गां च नक्तं कुर्य्यात् समाहितः ।
नवरात्राभिधं कर्म्म नक्तव्रत मिति स्मृतम् ॥

इति स्कान्दे नक्तभोजन कथनं । तत् पाक्षिक नक्तानुवादकं । इतरथा नवरात्रोपवासतः इत्यादेः अयाचीत्यथवा इत्यादेश्च पूर्वोक्त वचन व्यूहस्य वैयर्थ्य प्रसङ्गात् ।

तस्मात् पाक्षिकनक्तानुवाद एवायम् । ननु रात्रेः कर्म्मकालत्वे तद्व्यापिनी दर्शयुक्ता पूर्व्वैव प्रतिपत् प्राप्नुयात् । सा च न ग्राह्या इत्युक्त मिति चेत् । सत्यं ।

कर्म्मणो यस्य यः काल स्तत्कालव्यापिनीतिथिः ।

इति सामान्य वचन प्राप्तिः पूर्वोक्तविशेषवचनै र्बाध्यते । यथा निशीथे सतीमपि पूर्वां जन्माष्टमीं त्यक्ता रोहिणीगुण-युक्ता परा कार्य्या इत्युक्तम् माधवाचार्य्येण । तथा इयमपि द्वितीया गुणयुक्ता कार्य्या इति ।

अथ केचिन्नवरात्रशब्दो नवसंख्याहोरात्रपरः—
इष्टौ समाप्ति रष्टम्यां क्षासेऽमा प्रतिपच्छिशि ।
आरम्भो नवचक्रास्तु नवरात्र मतोऽर्थवत् ॥

इति वचनादित्याहुः । तन्न । प्रतिपक्षस्य ह्रासो न्यूनाधिक्यापत्तेः तेन तिथिमात्र वाची अयं नवरात्र शब्दः ।

तिथिवृद्धौ तिथिह्रासे नवरात्र मपार्थकम् ।
अष्टरात्रे न दोषोऽयं नवरात्र तिथिक्षये ॥

इति संग्रहोक्तेः । अयं नवरात्रशब्दः क्वचिल्लक्षणया कर्म्मवाची । यथा आरम्भो नवरात्रस्य इत्यत्र ।

पौर्णमास्यां पौर्णमास्या यजेत इत्यादाविव ।

देवीपुराणे—

त्वाष्ट्र वैधृतियुक्ता चेत् प्रतिपच्चण्डिकार्चने ।
तयोरन्ते विधातव्यं कलसारोपणं गृहे ॥

इति ।

त्वाष्ट्रं चित्रानक्षत्रं । द्वितीया युतापि चेच्चित्रा वैधृति युक्ता प्रतिपत् तदा दुर्गोत्सवे ।

भद्रान्विता चेत् प्रतिपत्तु लभ्यते
चित्राख्ययोगैरपि सङ्गतासती ।
सैवापराह्णे विबुधै र्विधेया
स्त्री पुत्र राज्यादि विवृद्धि हेतुः ॥

इति ।

भद्रा द्वितीया । विरुद्धे चित्रा वैधृती । यदा तु वैधृत्यादि परिहारेण प्रतिपन्न लभ्यते तदा कर्त्तव्य माह कात्यायनः ।

प्रतिपद्याश्विने मासि भावो वैधृति चित्रयोः ।

आश्वयपादौ परित्यज्य प्रारभे नवरात्रकम् ॥

इति ।

भविष्ये तु—

चित्रावैधृति सम्पूर्णा प्रतिपच्चेन्नवेनृप ।

त्याज्यावंशास्त्रयस्त्वाद्यास्तुरीयेऽंशे तु पूजनम् ॥

इति ।

रुद्रयामलेऽपि—

वैधृतौ पुत्रनाशः स्याच्चित्रायां धननाशनम् ।

तस्मान्न स्थापयेत् कुम्भं चित्रायां वैधृतौ तथा ॥

संपूर्णा प्रतिपद्येव चित्रायुक्ता यदा भवेत् ।

वैधृत्या वापि युक्ता स्यात्तदा मध्यन्दिने रवौ ।

अभिजित्तु मुहूर्त्तं यत्तत्र स्थापन मिष्यते ॥

इदं कलशस्थापनं रात्रौ न कार्य्यम् ।

न रात्रौ स्थापनं कार्य्यं न च कुम्भाभिषेचनम् ।

इति मात्स्योक्तेः ।

भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।

प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥

इति विष्णुधर्मोक्तेश्च ।

स्नानं माङ्गलिकं कृत्वा ततो देवीं प्रपूजयेत् ।

शुभाभि र्मृत्तिकाभिश्च पूर्वं कृत्वा तु वेदिकाम् ॥

यवान् वै वापयेत्तत्र गोधूमैश्चापि संयुतान् ।

तत्र संस्थापयेत् कुम्भं विधिना मन्त्रपूर्वकम् ॥
सौवर्णं राजतं वापि ताम्रं मृन्मय (जं तु) मेव वा।

देवी पुराणे—

कुर्य्याद्दिव्यास्तु मन्त्रेण पूजां क्षीरघृतादिभिः।
जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥
अनेनैव तु मन्त्रेण जपहोमौ तु कारयेत्।

यद्वा—

नवार्णकेन मन्त्रेण पूजाहोमादिकं भवेत्।
इति।

ॐ दुर्गे दुर्गे रक्षिणि स्वाहा इति नवार्णको (नवाक्षरो) मन्त्रः। तत्रायं प्रयोगः। प्रतिपदि अभ्यङ्गं कृत्वा शुभमृदा गृहपूर्वभागे वेदिकां विधाय कलसादि संभारान् समाहृत्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा मम इह जन्मनि जन्मान्तरे च दुर्गाप्रीतिद्वारा सर्वोपद्रवनाशपूर्वक दीर्घायु विपुलधनपुत्रपौत्राद्यनवच्छिन्न सन्तति वृद्धि स्थिरलक्ष्मी कीर्त्तिलाभ शत्रु पराजयाद्यभीष्ट सिद्ध्यर्थं शारदा नवरात्र प्रतिपदि विहित कलशस्थापन दुर्गापूजन कुमारी पूजादिकं करिष्ये इति सङ्कल्प्य मह्योद्यौ *

* मह्योद्यौ पृथिवी च न इमं यज्ञं मिमिक्षताम्।
पिपृतां नो भरीमभि।
—इति ८म ११म यजुः॥

रित्यादि मन्त्रेण कलशं वेद्यां संस्थाप्य वरुणेत्यावेद्य पूर्णादर्वीति * मन्त्रेण तत्र पूर्णपात्रं (संस्थाप्य) निधाय इमं मे वरुणेति † तत्र वरुणं संपूज्य जीर्णायां नूतनायां वा प्रतिमायां दुर्गामावाहयेत्।

तत्र मन्त्रः—

आगच्छ वरदे देवि दैत्यदर्पनिषूदनि।
पूजां गृहाण सुमु(खो)खि नमस्ते शङ्करप्रिये॥
सर्वतीर्थमयं वारि सर्वदेव समन्वितम्।
इमं घटं समागच्छ तिष्ठ देवगणैः सह॥
दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय।
बलिं पूजां गृहाण त्व मष्टाभिः सह शक्तिभिः॥

इत्यावाह्य पूर्वोक्तमूलमन्त्रेण षोडशोपचारैः पूजयित्वा माष-भक्तबलिं कुष्माण्डादिबलिं वा निवेदयेत्।

ततः कुमारीपूजा कार्या।

तदुक्तं हेमाद्रौ स्कान्दे—

एकैकां पूजयेत् कन्या मेकवृद्ध्या तथैव च।

---

* पूर्णा दर्वि परापत सुपूर्णा पुनरापत।
वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो।
—इति ३ अ ४९ म यजुः॥

† इमं मे वरुण श्रुधी हवमद्या च मृडय।
त्वामवस्युराचके।
इति २१ अ. १ म यजु॥

द्विगुणं त्रिगुणं वापि प्रत्यहं * नवकं तु वा ॥

तथा—

नवभि र्लभते भूमि मैश्वर्य्यं द्विगुणेन तु ।
एकाच्चया लभेत् क्षेम मेकैकेन श्रियं लभेत् ॥
एकवर्षा तु या कन्या पूजार्थे तां विवर्ज्जयेत् ।
गन्धपुष्पफलादीनां प्रीति स्तस्या न विद्यते ॥
तेन द्विवर्षामारभ्य दशवर्षान्त पूजनम् ।
तासां च नवनामानि तेन तेन समर्च्चयेत् ॥
कुमारिका त्रिमूर्त्तिश्च कल्याणी रोहिणी तथा ।
काली चण्डी शाम्भवी च दुर्गा चैव सुभद्रका ॥

इति ।

आसां प्रत्येकं पूजामन्त्रा अग्रे वक्ष्यन्ते । सामान्य
मन्त्रस्तु —

मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ॥

इति ।

एव मभ्यर्च्चनं कुर्य्यात् कुमाराणां प्रयत्नतः ।
कञ्चुकैश्च वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ॥
नानाविधै र्भक्ष्यभोज्यै र्भोजयेत् पायसादिभिः ।
प्रविस्फुरित मीशांशीं रक्त पुष्प व्रणाङ्किताम् ॥

---

* [illegible] पाठः

जात्यन्धां केकराक्षीं च * कुरूपां तनु रोमशाम्।
संत्यजेद्रोगिणी कन्यां दासीगर्भसमुद्भवाम्॥

तथा—

ब्राह्मणीं सर्वकार्य्येषु जयार्थे क्षत्रवंशजाम्॥
लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम्।
दारुणे चान्त्यजातीयां पूजयेद्विधिना नरः॥

इति।

अत्र जप उक्तो रुद्रयामले—

एकोत्तराभिवृद्धा तु नवमी यावदेव हि।
चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः॥

वराहतन्त्रेतु—

प्रणवं चादितो जप्त्वा स्तोत्रं वा संहितां पठेत्।
अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः॥
आधारे स्थापयित्वा तु पुस्तकं (पूजयेत्) प्रजपेत् सुधीः।
हस्तसंस्थापनादेव यतस्तद्विफलं भवेत्॥
स्वयं च लिखितं यच्च शूद्रेण लिखितं च यत्।
अब्राह्मणेन लिखितं तथापि विफलं भवेत्॥
सर्वत्र पाठ्ये विज्ञेय स्त्वन्यथा विफलं भवेत्।
ऋषिच्छन्दादिकं न्यस्य पठेत् स्तोत्रं विचक्षणः॥
स्तोत्रे न दृश्यते यत्र प्रणवं तत्र विन्यसेत्।

* केकरा काणी इति कमलाकरः।

सर्वत्र पाठ्ये विज्ञेय स्तन्यथा विफलं भवेत् ॥

अथ वेदपारायण मुक्तं रुद्रयामले—

एवं चतुर्वेदविदो विप्रान् सर्वान् प्रसादयेत् ।
तेषां च वरणं कार्य्यं वेदपारायणाय वै ॥
यद्दात्मश्रेयसे कार्य्यं वेदपारायणं द्विजैः ।
षडङ्गसहितां शाखां मन्त्र ब्राह्मण रूपिकाम् ॥
पारयेद्विधिवत् प्राज्ञो मन्त्रान् वा ब्राह्मणं तु वा ।
अयातयामवस्त्वाय पारयेन्नवरात्रकम् ॥

इति ।

तद्विधिश्चतुर्थस्तवके वक्ष्यते । देवीपुराणे—

यदाद्ये दिवसे कुर्य्याच्चण्डिका पूजनादिकम् ।
द्विगुणं तद्द्वितीयेऽह्नि त्रिगुणं तत् परेऽहनि ।
नवमीतिथि पर्य्यन्तं वृद्ध्या पूजाजपादिकम् ॥

इति ।

एतेनापि नवरात्रे पूजैव प्रधानमिति गम्यते । उपवासादि त्वङ्ग मेव । तेन तिथिह्रासे तिथिद्वयनिमित्तं पूजादि महालय श्राद्धवदेकदिने आवृत्त्या कार्य्यम् । इदं सर्वं स्वस्य असामर्थ्ये सति अन्येन कारयेत् ।

स्वयं वाप्यन्यतो वापि पूजयेत् पूजयेत वा ।

इति देवीपुराणोक्तेः ।

अन्यतः अन्येन पूजयेत पूजां कारयेदित्यर्थः ।

इदं च देवीपूजनं शुक्लाष्टम्यादावपि कार्य्यम् ।

नष्टे शुक्रे तथा जीवे सिंहस्थे च वृहस्पतौ ।
कार्य्या चैवं च देव्यर्चा * प्रत्यब्दं चाश्विनेऽपि च ॥
इति धर्म्मप्रदीपोक्तेः ।

मलमासे तु न भवत्येव । वचनाभावात् ।

अत्र विशेषो भविष्ये—

केशसंस्कारद्रव्याणि प्रदद्यात् प्रतिपद्दिने ।
पट्टतैलं † द्वितीयायां केश संस्कार ‡ हेतवे ॥
दर्पणं च तृतीयायां सिन्दूरालक्तकं तथा ।
मधुपर्कं चतुर्थ्यां तु तिलकं नेत्र (भाल) मण्डनम् ॥
पञ्चम्यां अङ्गरागं च शक्त्यालङ्करणानि च ।
षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत् ॥
सप्तम्यां प्रातरानीय गृहमध्ये प्रपूजयेत् ।
उपोषणं तथाष्टम्यामात्मशक्त्या तु पूजनम् ॥
नवम्यां सुपचण्डायाः पूजां कुर्य्याद्बलिं तथा ।
संपूज्य प्रेषणं कुर्य्याद्दशम्यां शारदोत्सवैः ॥
अनेन विधिना यस्तु देवीं प्रीणयते नरः ।

---

* कार्य्या चैव सदैव्यर्चा प्रत्यहं कुलधर्म्मतः ।
इति निर्णयसिन्धौपाठः ।

† पट्टडोरमिति क्वचित् पाठः ।
तथापाठे च संयमहेतवे इति पाठः साधु लक्ष्यते ।

‡ सत्कारैश्चैव सम्यगिति क्वचित् पाठः ।

स्कन्दवत् पालयेद्देवी तं पुत्र धन कीर्त्तिभिः ॥

इति ।

अत्र अशौचे विशेष उक्तो निर्णयामृते—

आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके ।

आशाशौचे समुत्पन्ने क्रिया कार्य्या कथं बुधैः ॥

सूतके वर्त्तमाने च तथोत्पन्ने सदा बुधैः ।

देवीपूजा प्रकर्त्तव्या यद्यत् यत्र विधानतः ॥

सूतके पूजनं प्रोक्तं दानं चैव विशेषतः ।

देवी मुद्दिश्य कर्त्तव्यं तत्र दोषो न विद्यते ॥

इति ।

गौड़ा अपि एवं मन्यन्ते । रजस्वला तु अन्येन कारयेत् । सूतकादिवद् विशेषवचनाभावात् ।

स्त्रीणां च नवरात्रव्रते ताम्बूलादिवर्जनं भवतीत्युक्तं व्रत-हेमाद्रौ गारुड़े—

गन्धालङ्कार ताम्बूल पुष्पमालानुलेपनम् ।

उपवासे न दुष्यन्ति दन्तधावन मञ्जनम् ॥

इत्यादि ।

एतत् सभर्त्तृकाविषयम् । विधवानां न भवतीत्युक्तं चातुर्मास्य व्रतप्रकरणे ।

अथ आश्विन शुक्लपञ्चम्या मुपाङ्ग ललिताव्रतमुक्तम् * ।

* व्रतमिदं महाराष्ट्रेषु प्रसिद्धम् ।

सा च पूर्वविद्धा ग्राह्या—

भुक्त्वा जागरणे नक्ते * चन्द्रार्घ्यव्रते तथा।
ताराव्रतेषु सर्वेषु रात्रियोगोविधिष्यते॥

इति हेमाद्रिवचनात्। युग्मवाक्यात्। रात्रौ जागरणं कुर्य्यादिति तद्व्रते रात्रिजागरणस्योक्तत्वाच्च।

आश्विन शुक्लपक्षे मूलनक्षत्रे सरस्वती स्थापनमुक्तं निर्णयामृते देवीपुराणे—

मूलेषु स्थापनं देव्याः पूर्वाषाढ़ासु पूजनम्।
उत्तरासु बलिं दद्याच्छ्रवणे(न)षु विसर्जयेत्॥

रुद्रयामले—

मूल ऋक्षे सुराधीश पूजनीया सरस्वती।
पूजयेत् प्रत्यहं देव यावद्वैष्णव मृक्षकम्॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन।
पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः॥

संग्रहेऽपि—

आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम्।
मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्।
मूलाद्य पादे चाह्वानं श्रवणान्ते विसर्जनम्॥

इति।

* भुक्त्वाजागरणं यच—

स्वीकं पदं नक्तिम् व्रते इत्यर्थः। अन्यथा भुक्तिव्यवस्था—
नुपपत्तेः। इति कमलाकरः।

ब्रह्माण्डेऽपि —

आदि भागो निशायां तु श्रवणस्य यदा भवेत् ।
सम्प्रेषणं तदा देव्या दशम्यामेव कारयेत् * ॥

इति ।

अथ षष्ठीकृत्यं देवीपुराणे —

ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् ।
सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ॥
पूर्वाषाढ़ा युताष्टम्यां पूजाहोमाद्युपोषणम् ।
उत्तरेण नवम्यां तु बलिभिः पूजयेच्छिवाम् ।
श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत् ॥

अत्र तिथिनक्षत्र योगो मुख्यः—

तिथिनक्षत्रयोगे तु द्वयोरेवानुपालनम् ।
योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि † ॥

इति देवलोक्तेः ।

तत् प्रकारस्तु । बिल्वतरुसमीपं गत्वा देवीं बिल्वं च सम्पूज्य प्रार्थयेत् ।

तत्र मन्त्राः—

रावणस्य वधार्थाय रामस्यानुग्रहाय च ।

---

* दशम्यां च महोत्सव इति निर्णयसिन्धौ पाठः ।

† तथा विद्यापतिः—

तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम् ।
तस्मात्तिथिं प्रशंसन्ति नक्षत्रं न तिथिं विना ॥ इति ।

अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥
अह मप्या (श्वितः) श्विने षष्ठ्यां सायाह्ने बोधयाम्यतः ।
श्रीशैलशिखरेजात श्रीफल श्रीनिकेतन ।
नेतव्योऽसि समागच्छ पूज्यो दुर्गास्वरूपतः ॥

एवं विल्वतरुं निमन्त्र्य द्वितीयदिने निमन्त्रित विल्वशाखा पत्रीप्रवेश पूजां कुर्य्यात् ।

मूलाभावे तु सप्तम्यां केवलायां प्रवेशयेत् ।
युग्माभ्यां नवविल्वस्य फलाभ्यां शाखिकां तथा ।
तथैव प्रतिमां देव्याः स्नात्वाऽभ्युक्ष्य प्रवेशयेत् ॥
इति लिङ्गपुराणोक्तेः ।

प्रतिपदादि नवतिथिषु उपवासादि कर्त्तव्य मित्युक्तं । तत्र असमर्थस्य सप्तम्यादि दिनत्रये कार्य्यमित्याह धौम्यः—

आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम् ।
प्रतिपदादि क्रमेणैव यावच्च नवमी भवेत् ।
त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम् ॥
इति ।

सङ्ग्रहे—

अथवा नवरात्रं च सप्तपञ्चत्रिकं दिवा ।
एकभक्तेन नक्तेनायाचितोपोषणैः क्रमात् ॥
इति ।

दिवेत्येकरात्रमुक्तं । उपवासे सप्तम्याः पूर्वोक्त एव निर्णयः ।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।

रवेरुदयमीक्षन्ते न तत्र तिथि युग्मता ॥
इति श्रुत्वापि चौदयिकी ।

दुर्गामूर्त्तिरुक्ता देवीपुराणे—

दुर्गागृहं प्रकर्त्तव्यं चतुरस्रं सुशोभनम् ।
तन्मध्ये वेदिकां कुर्य्याच्चतुर्हस्तां समां शुभाम् ॥
तस्यां सिंहासनं चौमं कम्बलाजिन संयुतम् ।
तत्र दुर्गां प्रतिष्ठाप्य सर्वलक्षण संयुताम् ॥
भुजैश्चतुर्भीरुचिरैर्दशभिर्वा विभूषिताम् ।
तप्तहाटकवर्णाभां त्रिनेत्रां शशिशेखराम् ॥
अनेककुसुमाकीर्णां कपर्द्देन सुशोभिताम् ।
नितम्वविम्वसम्बद्धकिङ्किणी क्वाण नादिनीम् ॥
शूलचक्रदण्ड शक्ति वज्रपाशासि * धारिणीम् ।
घण्टाक्षमालाकरक पानपात्र लसत्कराम् ॥
तदग्रे छिन्नशिरसं महिषं रुधिराप्लुतम् ।
निःसृतार्द्धतनुं कण्ठनाले चर्म्मासि धारिणम् ॥
देवीधृतकचग्रीवं शूलेनोरसि ताड़ितम् ।
नागपाशेन विक्षिप्तं हर्य्यक्षेणापि विद्रुतम् ॥
वमद्रुधिरवक्त्रेण धुन्वतोर्द्ध सटाम् तथा ।
सर्वतो मातृचक्रेण सेव्यमानां सुरैस्तथा ॥
एवं देवी प्रकर्त्तव्या हैमी वा राजती तथा ।

* पाशासिरित्यत्र चापासि इति कमलाकर ।

मृन्मयी लक्षणोपेता खड्गमूले ऽथवा यजेत् * ॥

वार्क्षी दारुमयी । तथा—

याम्यास्या शुभदा दुर्गा पूर्वास्या जयवर्द्धनी ।
पश्चिमाभिमुखी नित्यं न स्थाप्या सौम्य दिङ्मुखी ॥

तथा—

हैम राजत मृद्धातु शैलचित्रार्पितापि वा ।
खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा ॥
यद्यद् यस्यायुधं प्रोक्तं तस्मिं स्तां प्रतिपूजयेत् ।
देवी शस्त्रार्चिता पुंसां राज्यायुः सुत सौख्यदा ॥

तथा—

भगलिङ्गाभिधानैश्च भगलिङ्ग प्रगीतकैः ।
भगलिङ्गक्रियाभिश्च तोषयेद्वरचण्डिकाम् ॥
परैर्नाक्षिप्यते यस्तु यः परान्नाक्षिपत्यपि ।
तस्य क्रुद्धा भगवती शापं दद्यात् सुदारुणम् ॥

इति ।

सप्तम्यां देवीं संपूज्य बिल्वगुच्छं समर्पयेत् ।
अमृतोद्भवं श्रीवृक्षं शङ्करस्य सदाप्रियम् ।
तं ते दुर्गे प्रयच्छामि सर्वकामार्थ सिद्धये ॥ इति ।

अथ प्रार्थना—

महिषघ्नि महाभागे चामुण्डे मुण्डमालिनि ।

---

* खड्ग मूले च पूजयेत इति निर्णयसिन्धौ पाठ ।

आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥
कुङ्कुमेन समालब्धे चन्दनेन विलेपिते ।
बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः ॥
रूपं देहि यशो देहि भाग्यं भगवति देहि मे ।
पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ॥
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥

इति संप्रार्थ्य पत्रिकाः पूजयेत् । तत् प्रकारस्तु कदल्यां ब्रह्माणीं दाड़िमे रक्तदन्तिकां धान्ये लक्ष्मीं हरिद्रायां दुर्गां माने चामुण्डां कच्चौ कालिकां बिल्वे शिवां अशोके शोकरहितां जयन्त्यां कार्त्तिकीं चावाह्य संपूज्य दुर्गायै वलिं दद्यात् । ततः स्तुतिं पठेत् ।

दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् ।
सर्वलोकप्रणेत्रीं च प्रणमामि सदा शिवाम् ॥
मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् ।
विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् ॥

इत्यादि ।

## अथ अष्टमीकृत्यम् ।

सा च व्रतादौ परविद्धा ग्राह्या ।

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥

इति ब्रह्मवैवर्त्तोक्तेः ।

अतः महाष्टमी पूज्या नवमी संयुता सदा।
सप्तमी संयुता नित्यं शोकसन्तापकारिणी॥
सप्तमी शल्य संविद्धा वर्ज्जनीया सदाष्टमी।
स्तोकापि सा महापुण्या यस्यां सूर्य्योदयो भवेत्॥
इति स्मृति समुच्चयोक्तेश्च।

इय मेव मूलसंयुताचेन् महानवमीत्युच्यते।

आश्वयुक् शुक्लपक्षे याऽष्टमी मूलेन संयुता।
सा महानवमी प्रोक्ता त्रैलोक्येऽपि सुदुर्लभा॥

इति स्कान्दात्। सैव सप्तमीयुता चेत् त्याज्यैव।
तदुक्तं निर्णयामृते—

मूलेनापि हि संयुक्ता सदा त्याज्याष्टमी बुधैः।
लेशमात्रेण सप्तम्या अपि स्याद् यदि दूषिता॥
इति।

तस्मादत्र अष्टमी परा * ग्राह्या।

यत्तु—

सप्तम्या मुदिते सूर्य्ये परतो याष्टमी भवेत्।
तत्र दुर्गोत्सवं कुर्य्यान्न कुर्य्यादपरेऽहनि॥
इति विश्वरूपनिबन्ध वचनं।

तदाश्विनकृष्णाष्टमी विषयम्।

कन्यायां कृष्णपक्षे तु पूजयित्वाष्टमीदिने।

* परा परविद्धा नवमी विद्धेति यावत्।

नवम्यां बोधयेद्देवीं गीतवादित्र निस्वनैः॥

इति देवीपुराणे तथापि देवी पूजोक्तेरिति हेमाद्रौ निर्णयामृते चोक्तं।

यानि तु—

आश्विनस्य सिताष्टम्या मर्द्धरात्रे तु पार्वती।

भद्रकाली समुत्पन्ना पूर्वाषाढ़ा समायुता॥

इति मदनरत्ने।

महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी।

सप्तम्यापि युता कार्य्या मूलेन तु विशेषतः॥

इत्यादीनि वचनानि। तानि परदिने अष्टम्यभाव विषयाणीति मदनरत्ने निर्णीतम्।

यदा सूर्य्योदये न स्यान्नवमी चापरेऽहनि।

तदाष्टमीं प्रकुर्व्वीत सप्तम्या सहितां नृप॥

इति स्मृति सङ्ग्रहोक्तेः।

यत्तु—

अहं भद्रा च भद्राहं नावयोरन्तरं क्वचित्।

सर्वसिद्धिं प्रदास्यामि भद्राया मर्च्चिताप्यहम्॥

इति देवीपुराण वचनं। तद्विष्टिकरणमध्ये पूजाविधानार्थम्।

विष्टिं त्यक्त्वा महाष्टम्यां मम पूजां करोति यः।

तस्य पूजाफलं न स्यात्तेनाह मवमानिता॥

इति तत्रैवोक्तेः।

महाष्टम्या मुपवासश्च पुत्रवता न कार्य्यः—

उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ।
यथा तथा वा पूतात्मा व्रती देवीं प्रपूजयेत् ॥

इति देवी पुराणोक्तेः ।

अत्र विशेषो हेमाद्रौ भविष्ये ।

कन्यागते सवितरि शुक्लपक्षेऽष्टमी युता ।
मूल नक्षत्र संयुक्ता सा महानवमी स्मृता ॥
तस्यां सदा पूजनीया चामुण्डा मुण्डमालिनी ।
तस्यां ये ह्युपयुज्यन्ते प्राणिनो महिषादयः ॥
ते सर्वे स्वर्गतिं यान्ति घ्नतां पापं न विद्यते ।
यावन्न चालयेद् गात्रं पशुस्तावन्नहन्यते ॥
न तथा बलिदानेन पुष्पधूपविलेपनैः ।
यथा सन्तुष्यते मेषैर्महिषैर्विन्ध्यवासिनी ॥
एवं पूज्या नरै देवी ब्राह्मणैः क्षत्रियै(विशैः) नृपैः ।
स्त्रीभिश्च कुरुशार्दूल विधान मपरं शृणु ॥
जयाभिलाषी नृपतिः प्रतिपत् प्रभृति क्रमात् ।
लौहाभिसारिकं कर्म्म कारयेद् यावदष्टमि ॥

तद् यथा—

प्रागुदक् प्रवणे देशे पताकाभि रलङ्कृतं ।
मण्डपं कारयेद्दिव्यं नव सप्त करं परम् ॥

सिलिला षोडश हस्त प्रमाण मित्यर्थः ।

आग्नेय्यां कारयेत् कुण्डं हस्तमात्रं सुशोभनम् ।

मेखला त्रय संयुक्तं योन्याश्वत्थदलाभया ॥
राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ।
आनीय मण्डपे तानि सर्वाण्यत्राधिवासयेत् ॥
ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः ।
ॐ कार पूर्वकै र्मन्त्रै स्तल्लिङ्गै र्जुहुयाद् घृ(तैः)तम् ॥
शस्त्रास्त्र मन्त्रै र्होतव्यं पायसं घृतसंयुतम् ।
हुतशेषं तुरङ्गांश्च * राजानमुपचारयेत् ॥
लोहाभिसारिकं कर्म तेनैतद्विधिभिः स्मृतम् ।
धृतपल्ययनानश्वान् गजांश्च समलङ्कृतान् ॥
भ्रामयेन्नगरे नित्यं वन्दिघोषपुरःसरम् ।
प्रत्यहं नृपतिः स्नात्वा सम्पूज्य पितृदेवताः ॥
पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः ।
य(त)स्याभिसरणाद्राज्ञो विजयः समुदाहृतः ॥
पूजामन्त्रान् प्रवक्ष्यामि पुराणोक्तानहं तव ।
यैः पूजिताः प्रयच्छन्ति कीर्तिमायु र्यशो(धनम्) बलम् ॥

छत्रस्य —

यथाऽम्बुदश्छादयति शिवायेमां वसुन्धराम् ।
तथाच्छादय राजानं विजयारोग्यवृद्धये ॥

अथ चामरस्य —

शशाङ्कशर सहाश क्षीर डिण्डीर पाण्डुर ।

---

* तुरङ्गाश्चा चिति शिवंचरित्रौ पाठः ।

प्रोत्सारयाशु दुरितं चामरामरदुर्लभ ॥

अश्वानां हितार्थं मादौ रेवन्त पूजनं कार्य्यं ।

तन्मन्त्र स्तु—

सूर्य्यपुत्र महाबाहो छायाहृदयनन्दन ।

शान्तिं कुरु तुरङ्गाणां रेवन्ताय नमो नमः ॥

अथ अश्वस्य—

गन्धर्वकुलजातस्त्वं माभूयाः कुलदूषकः ।

ब्राह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥

प्रभावाच्च हुताशस्य वर्धय त्वं तुरङ्गमान् * ।

रिपून् विजित्य समरे सह (राज्ञा)भर्त्रा सुखी भव ॥

अथ ध्वजस्य—

शक्रकेतो महावीर्य्य श्यामवर्णार्चयाम्यहम् ।

---

* अतः परं—

तेजसा चैव सूर्य्यस्य मुनीनां तपसा तथा ।

रुद्रस्य ब्रह्मचर्य्येण पवनस्य बलेन च ॥

स्मर त्वं राजपुत्र त्वं कौस्तुभं च मणिं स्मर ।

यां गतिं ब्रह्महा गच्छेत् मातृहा पितृहा तथा ॥

भूमिहा ऽनृतवादी च क्षत्रियश्च पराङ्मुखः ।

सूर्याचन्द्रमसौ वायु र्यावत् पश्यन्ति दुष्कृतम् ॥

व्रजास्त्वं तां गतिं क्षिप्रं तच्च पापं भवेत्तव ।

निवृत्तो यदि गच्छेथा युद्धाध्वनि तुरङ्गम ॥

—इत्यधिकोऽत्र पाठो दृश्यते।

पक्षिराज नमस्तेऽस्तु तथा नारायणध्वज ॥
काश्यपेयाहवभ्रात नागारे विष्णुवाहन ।
अप्रमेय दुराधर्ष रणे देवारिसूदन ॥
गरुत्मान् मारुतगति स्त्वयि सन्निहितो यतः ।
सारवन्त्यायुधान्यत्र रक्ष त्वं च रिपून् दह ।

अथ पताकायाः—

हुतभुग् वसवो रुद्रा वायुः सोमो महर्षयः ।
नागकिन्नर गन्धर्व यक्ष भूतगण ग्रहाः ॥
प्रमथास्तु सहादित्यै भूतेशो मातृभिः सह ।
शक्रः सेनापतिः स्कन्दो वरुणश्चाश्रितास्त्वयि ॥
प्रदहन्तु रिपून् सर्वान् राजा विजयमृच्छतु ।
यानि प्रयुक्तान्यरिभि रायुधानि समन्ततः ॥
पतन्तूपरि शत्रूणां हतानि तव तेजसा ।
हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा ॥
कालनेमि वधे यद्वद् यद्वत्त्रिपुरघातने ।
शोभितासि तथैवाद्य शोभयास्मांश्च संगर ॥
नीलान् श्वेतानिमान् दृष्ट्वा नश्यन्त्वाशु नृपारयः ।
व्याधिभिर्विविधै र्घोरैः शस्त्रैश्च युधि निर्जिताः ॥
पूतना रेवतीनाम्ना कालरात्रिश्च या स्मृता ।
दह तांश्च रिपून् सर्वान् पताके त्वं मयार्चिता ॥

अथ गजस्य—

कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।

सुप्रतीकोऽञ्जनोनील एतेऽष्टौ देवयोनयः ॥
तेषां पुत्राश्च पौत्राश्च वनान्य (ष्टौ)न्ये समाश्रिताः ।
मन्द्रो भद्रो मृगश्चैव गजः सङ्कीर्ण एवच ॥
वने वने प्रसूतास्ते यूथानि सुमहान्ति च ।
पान्तु त्वां वसवोरुद्रा आदित्याः समरुद्गणाः ॥
भर्त्तारं रक्ष नागेन्द्र स्वामिवत् प्रतिपाल्यताम् ।
अवाप्नुहि जयं युद्धे गमने स्वस्तितोव्रज ॥
श्रीस्ते सोमाद्दलं विष्णो स्तेजः सूर्य्याज्जवोऽनिलात् ।
स्थैर्य्यं मेरो र्जयं रुद्राद् यशो देवात् पुरन्दरात् ॥
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ।
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतः सदा ॥

..ग्र खड्गस्य —

असि र्विशसनः खड्ग स्तीक्ष्णधारोदुरासदः ।
श्रीगर्भो विजयश्चैव धर्म्मधार स्तथैवच ॥
एतानि तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका ते तु गुरुर्देवो महेश्वरः ॥
रोहि (णी च) स्यञ्च शरीरं ते दैवतं च जनार्द्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥
नीलजीमूत सङ्काश तीक्ष्णदंष्ट्रः कृशोदरः ।
भाव (दुष्टो) शुद्धो ऽमर्षणश्च अतितेजास्तथैवच ॥
इयं येन धृता क्षौणी हतश्च महिषासुरः ।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥

अथ छुरिकायाः—

सर्वायुधानां प्रथमं निर्मितासि पिनाकिना ।
शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभे ॥
चण्डिकायाः प्रदत्तासि सर्वदुष्ट निवर्हणी ।
तया विस्तारिता चासि देवानां प्रतिपादिता ॥
सर्वसत्त्वाङ्गभूतासि सर्वाशुभनिवर्हणी ।
छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते ॥

अथ कट्टारकस्य—

रक्षाङ्गानि गजान् रक्ष रक्ष वाजि धनानि च ।
मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते ॥

अथ धनुषः—

सर्वायुधमहामात्र सर्वदेवारिसूदन ।
चाप मां समरे रक्ष साकं शरवरैरिह ॥
धृतं कृष्णेन रक्षार्थं संहाराय हरेण च ।
त्रयीमूर्त्तिगतं देवं धनुरस्त्रं नमाम्यहम् ॥

अथ कुन्तस्य—

प्रास पातय शत्रूं स्त्व मनया नाकमायया ।
गृहाण जीवनं तेषां मम सैन्यं च रक्ष माम् ॥

अथ चर्म्मणः—

शर्म्मप्रदस्त्वं समरे मम सैन्ये यशोधने ।
रक्ष मां रक्षणीयोऽहं तावनेय नमोऽस्तु ते ॥

अथ कनकदण्डस्य—

प्रोत्सारणाय दुष्टानां साधूनां रक्षणाय च ।
ब्रह्मणा निर्म्मितश्चासि व्यवहारप्रसिद्धये ॥
यशोदेहि सुखं देहि जयदो भव भूपतेः ।
ताड़यस्व रिपून् सर्वान् हेमदण्ड नमोऽस्तु ते ॥

अथ दुन्दुभेः—

दुन्दुभे त्वं सपत्नानां घोरोहृदय (मर्द्दनः) कम्पनः ।
भव भूमिप सैन्यानां तथा विजयवर्द्धनः ॥
यथा जीमूत शब्देन प्रहृष्यति शिखावलः ।
तथा ऽस्तु तव शब्देन हर्षोऽस्माकं मुदावहः ॥
यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ।
तथात्र तव शब्देन नश्यन्त्वस्मद्रिपोरवे ॥

अथ शङ्खस्य—

पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् ।
विष्णुना विधृतो नित्य मतः शान्तिप्रदो भव ॥

अथ सिंहासनस्य—

विजयो जयदो जेता रिपुघाती शुभङ्करः ।
दुःख(द्रा)हा धर्म्मदः शान्तः सर्वारिष्ट विनाशनः ॥
एते वै सन्निधौ यस्मात्तव सिंहा महाबलाः ।
तेन सिंहासनेति त्वं वेदमन्त्रैश्च गीयसे ॥
त्वयि स्थितः शिवः शान्तस्त्वयि शक्रः सुरेश्वरः ।
नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः ॥

त्रैलोक्य जयसर्वस्व सिंहासन नमोऽस्तु ते ।
एवं चिह्नानि सर्वाणि * स्थानि पूज्यानि शिल्पिभिः ॥
लौहाभिसारिकं कर्म्म कृत्वैवं मन्त्रपूर्वकम् ।
नियमं च तथाष्टम्यां पूर्वाह्ने स्नान माचरेत् ॥
कुङ्कुमचन्दनचम्पक चतुःसमैः (शैल)शालि पिष्टैश्च ।
चर्चितगात्रीं देवीं कु(ङ्कु)सुमै रभ्यर्चयेद्बहुभिः ॥
कुमुदैः सपद्मपुष्पैः सदीपधूपैः सनैवेद्यैः ।
मांसै र्वल्युपहारै र्मङ्गल शब्दैः समुच्छलितैः ॥
दुर्गा सा पूजनोया च तद्दिने द्रोणपुष्पकैः ।
ततः खड्गं नमस्कृत्य शत्रूणां वधसिद्धये ॥
इच्छेत विजयं राज्यं सुभिक्षं चात्मने नृपः ।
पुनः पुनः प्रणम्यार्य्यां संस्मरेद्धृदये शिवाम् ॥
सर्वं कृत्वेति कौरव्य चाष्टम्यां जागरेणिशि ।
नटनर्त्तकगीतैश्च कारयेच्च महोत्सवम् ॥
एवं हृष्टैर्निशां नीत्वा प्रभाते चारुणोदये ।
घातयेन् महिषान् मेषानयतोन्नतकन्धरान् ॥
शतमर्द्धशतं वापि तदर्द्धं वा यथेच्छया ।
सुरासवभृतैः कुम्भै स्तर्पयेत् परमेश्वरीम् ॥
कापालिकेभ्य स्तद्देयं व्यसनैर्दीपहस्तकैः † ।
कश्चिद्योपोषितोवीरविहृतोऽन्येन खड्गवान् ॥

---

* तत्रैव चर्म्मचिह्नानि इति निर्णयसिन्धौ पाठः ।

† दासो दासजनै तथा । इति निर्णयसिन्धौ पाठः ।

भूतेभ्यश्च बलिं दद्यादन्नेनानेन सामिषम् ।
सरक्तं सजलं चान्नं गन्धपुष्पाक्षतैर्युतम् ॥
त्रीं स्त्रीन् वारान् समूलेन दिग्विदिक्षु किरेद्बलिम् ।

मन्त्रस्तु—

बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा ।
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥
असुरा यातुधानाश्च पिशाचोरग राक्षसाः ।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ।
जगतां शान्तिकर्त्तारो ब्रह्माद्याश्च महर्षयः ॥
मा विघ्नं माच मे पापं मा सन्तु परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥

इति ।

इति महाष्टमी ।

## अथ महानवमी ।

सा च पूर्वविद्धा ग्राह्या ।

श्रावणी दुर्गनवमी दूर्वाचैव हुताशनी ।
पूर्वविद्धा प्रकर्त्तव्या शिवरात्रि र्बलेर्दिनम् ॥

इति हेमाद्रौ पाद्मोक्तेः ।

वेधश्चात्र मुहूर्त्तत्रयात्मकोज्ञेयः । यद्यपि हेमाद्रिमते मुहूर्त..........पि वेधोऽस्ति । तथापि सूर्योदये एव स ग्राह्यः ।

सायं तु मुहूर्त्तत्रयात्मक एव । तदुक्तं कालनिर्णयदीपिकायाम्—

त्रिमुहूर्त्तगा तु सकला सायमिति ।

माधवीयेऽपि—

सायं तृत्तरया तद्दन्यूनया तु न विध्यते ।

इति ।

तेन त्रिमुहूर्त्तयोगे पूर्वा ग्राह्या अन्यथा परेति विवेकः ।

यत्तु—

अश्वयुक् शुक्लनवमी मुहूर्त्तं वा कला यदि ।

सा तिथिः सकला ज्ञेया लक्ष्मी विद्या जयार्थिभिः ॥

इति सौरपुराणवचनम् ।

सूर्य्योदये परं रिक्ता पूर्णा स्यादपरा यदि ।

वलिदानं प्रकर्त्तव्यं तत्र (देशे) काले शुभावहम् ॥

इति देवीपुराण वचनं च परतिथिविधायकं ।

तत्तु नोपवासादौ किन्तु वलिदानादाविति मदनरत्ने निर्णीतम् ।

यत्त्वत्र—

नवम्यामपराह्णे(च)तु वलिदानं प्रशस्यते ।

दशमीं वर्ज्जयेत्तत्र नात्र कार्य्या विचारणा ॥

इति वलिदानेऽपि परतिथि निषेधनं दृश्यते ।

तदपि शुद्धाधिकनिषेधपरम् ।

नवम्यां वलिदानं तु कर्त्तव्यं वै यथाविधि ।

जपो होमश्च विधिवत् पूर्णायामेव नान्यथा ॥

इति कालिकापुराणोक्तेः।

केचित्त्वष्टम्यां होममिच्छन्ति।

अष्टम्यां वाथ दिलायां ततो होमं समाचरेत्।

इति देवीपुराणोक्तेः।

होमे विशेषो डामर तन्त्रे—

पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम्।

होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तम ॥

रुद्राध्याये यथा होमो मन्त्रैकैकेन साध्यते।

तथा स्तोत्रजपे होमं मन्त्रैकैकेन साधयेत्।

यद्वा सप्तशती जप्त्वा होममन्त्रो नवाक्षरः ॥

इति।

नवाक्षर मन्त्रस्तु पूर्वमुक्तः। ऐं ह्रीं क्लीं चामुण्डायै विच्चे इति नवाक्षर इति केचित्। पूर्वोक्त एव ग्राह्य इति तु युक्तम्।

रुद्रयामले तु—

प्रधानाद्रव्यमुद्दिष्टं पायसान्नं तिला स्तथा।

किंशुकैः सर्षपैः पुष्पैर्लाजै र्दूर्वाङ्कुरैरपि ॥

यवैर्वा श्रीफलै र्दिव्यै र्नानाविधफलै स्तथा।

रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः ॥

प्रतिश्लोकं च जुहुयात् सर्वद्रव्याणि(वा) च क्रमात्।

नमोऽन्तैरेव जुहुयान्नमो देव्या इतीति च ॥

## अथ बलिदानम् ।

देवीपुराणे—

कन्यासंस्थे रवौ यत्र शुक्लाष्टम्यां प्रपूज्य तु ।
द्रोण पुष्पैश्च बिल्वाद्यैः जातीपुन्नागचम्पकैः ॥
पश्चार्घ्यं लक्षणोपेतं गन्धपुष्पसमन्वितम् ।
विधिवत् कालि कालीति जप्त्वा खड्गेन घातयेत् ॥

मन्त्रस्तु—

ॐ कालि कालि वज्रेश्वरि लौहदण्डायै नमः ।

इति ।

तदुक्ता * रुधिरं मांसं गृहीत्वा पूतनादिषु † ।
नैऋतेभ्यः प्रदातव्यं महाकौशिकमन्त्रितम् ॥
तदग्रतो नृपः स्नायात् कृत्वा शत्रुं तु पैष्टकम् ।
खड्गेन घातयित्वा तु दद्यात् स्कन्द विशाखयोः ॥

छागाद्यलाभे प्रतिनिधिरूपश्च बलिप्रकारः ।

कालिकापुराणे—

कुष्माण्डमिक्षुदण्डं च भासं (मासं) सारस मेव वा ।
एते बलिसमाः प्रोक्ता तृप्तौ छागसमाः सदा ॥

रुद्रयामलेऽपि—

छागाभावे तु कुष्माण्डं श्रीफलं वा मनोहरम् ।

---

* तदुक्तञ्च । तदुक्तमिति, भिन्नपत्रस्थो पाठः ।

† आदि शब्दात् स्कन्दो विशाखो पापराक्षसो ग्रहाश्च इति क्रमाकरः ।

वस्त्रसंवेष्टितं कृत्वा छेदयेच्छुरिकादिना ॥
ब्राह्मणेन सदा देयं कुष्माण्डं बलि कर्म्मणि ।
श्रीफलं वा सुराधीश छेदं नैव तु कारयेत् ॥
उत्तराभिमुखोभूत्वा बलिं पूर्वमुखं तथा ।
निरीक्ष्य साधकः पश्चादिमं मन्त्र मुदीरयेत् ॥
पशुस्त्वं बलिरूपेण मम भाग्यादुपागतः ।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥
चण्डिकाप्रीतिदानेन दातु रापद्विनाशन ।
चामुण्डाबलिरूपाय बले तुभ्यं नमो नमः ॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
अतस्त्वां घात(यिष्यामि)याम्यद्य तस्माद् यज्ञे वधोऽवधः ॥
ॐ ह्रीं श्रीमिति मन्त्रेण बलिं तं मत्स्वरूपिणम् ।
चिन्तयित्वा न्यसेत् पुष्पं बलिमूर्द्धनि भैरव ॥
रसना त्वं चण्डिकायाः(वाढकायाः)सुरलोक प्रसा(र)धकः ।
ह्रीं ह्रीं खड्गेति मन्त्रेण ध्यात्वा खड्गं प्रपूजयेत् ॥
पूजयित्वा ततः खड्गं ॐ (भ्रां)ह्रूं फड़िति मन्त्र(तः)कैः ।
गृहीत्वा विमलं खड्गं छेदयेद्बलि मुत्तमम् ॥
ॐ ह्रीं ऐं ह्रीं कौशिकीति रुधिरैः प्यायतामिति ।
बलिदाने तु दुर्गायाः सर्वत्रायं विधिः स्मृतः ॥
अथात्र प्रसङ्गात् शतचण्डी विधान मुच्यते ।

रुद्रयामले—

शतचण्डीविधानं तु प्रोच्यमानं शृणुष्व तत् ।

सर्वोपद्रवनाशार्थं शतचण्डीं समारभेत् ॥
षोडश स्तम्भसंयुक्तं मण्डपं पल्लवोज्ज्वलम् ।
वसुकोण युतां वेदिं मध्ये कुर्य्यात्त्रिभागतः ॥
पक्केष्टकचितां रम्यां मुष्टायेकहस्तसम्मितम् ।
पञ्चवर्ण रजोभिश्च कुर्य्यात्क्षौमपटं * शुभम् ॥
पञ्चवर्णवितानं च किङ्किणी जालमण्डितम् ।
आचार्य्येण समं विप्रा(प्रा)न् वरयेद्दश सुव्रतान् ॥
ऐ(ई) शान्यां स्थापयेत् कुम्भं पूर्वोक्तविधिना हरे ।
वारुण्यां च प्रकर्त्तव्यं कुण्डं लक्षण लक्षितम् ॥
मूर्त्तिं देव्याः प्रकुर्वीत सुवर्णस्य पलेन वै ।
तदर्द्धेन तदर्द्धेन तदर्द्धेन महामते ॥
अष्टादश भुजां देवीं कुर्य्याद्वाष्टकरामपि ।
पट्टकूल युगच्छन्नां देवीं (वेदि)मध्ये निधापयेत् ॥
देवीं सम्पूज्य विधिवज्जपं कुर्य्युर्दश द्विजाः ।
शत मादौ शतं चान्ते जपेन्मन्त्रं नवार्णकम् ॥
चण्डीं सप्तशतीं मध्ये सम्पुटोऽय मुदाहृतः ।
एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम् ॥
रूपाणि क्रमश स्तद्वत् पूजनादिकमाचरेत् ।
पञ्चमेदिवसे प्रातर्होमंकुर्य्या(द्यांशतः) द्विधानतः ॥
गुडूचीं पायसं दूर्वां तिलान् शक्तान् यवानपि ।

* कुर्य्यात् सम्पुटकं शुभम् इति कमलाकर ।

चण्डीपाठस्य होमं तु प्रतिश्लोकं दशांशतः ॥
होमं कुर्य्याद् ग्रहादिभ्यः समिदाज्य चरून् क्रमात् ।
हुत्वा पूर्णाहुतिं दद्या द्विप्रेभ्यो दक्षिणां क्रमात् ॥
कपिलां गां नीलमणिं श्वेताश्वं छत्र चामरे ।
अभिषेकं ततः कुर्य्यु र्यजमानस्य ऋत्विजः ॥
एवं कृतेऽमरेशान सर्वसिद्धिः प्रजायते ।

इति रुद्रयामलोक्त शतचण्डीविधानम् ।

## अथ सहस्रचण्डी विधानम् ।

तत्रैव—

सहस्रचण्डीं विधिवच्छृणु विष्णो महामते ।
राज्यभ्रंशे महोत्पाते जनमारि महाभये ॥
गजमारेऽश्वमारे च परचक्रभये तथा ।
इत्यादि विविधे दुःखे क्षयरोगादिजे भये ॥
सहस्र चण्डिकापाठं कुर्य्याद्वा कारयेत्तथा ।
जापकास्तु शतं प्रोक्ता विंशद्धस्तश्च मण्डपः ॥
भोज्याः सहस्रं विप्रेन्द्रा गोशतं दक्षिणां दिशेत् ।
गुरवे द्विगुणं देयं सप्ताहानं तथैव च ॥
सप्तधान्यं च भूदानं श्वेताश्वं च मनोहरम् ।
पञ्चनिष्कमितामूर्त्तिः कार्य्या वार्द्धमानतः ॥
अष्टादश भुजां देवीं सर्वायुध विभूषिताम् ।
अवारितान्नं दातव्यं सहस्रं प्रत्यहं प्रभो ॥

व्रतं वा नियताहार: पय: पानेन वर्त्तयेत्।
एवं यच्चण्डिकापाठं सहस्रं वै समाचरेत्।
तस्य स्यात् कार्य्य सिद्धि तु नात्र कार्य्या विचारणा॥
इति।

एतद्द्वयं यद्यपि महा निबन्धेषु नास्ति तथापि प्रचररूपत्वा-दुक्तम्।

॥ इति रुद्रयामलोक्तं सहस्रचण्डिका विधानम्॥

## अथ नवरात्र पारणानिर्णय:।

सा च दशम्यां कार्य्या—

आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम्।
प्रतिपदादि क्रमेणैव यावच्च नवमी भवेत्।
त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि दिनत्रयम्॥
इति हेमाद्रौ धौम्योक्ते:।

नवमी तिथि पर्य्यन्तं हृद्धा पूजाजपादिकम्।

इत्यादि प्रागुक्तवचनैर्नवमीपर्य्यन्तं प्रधानभूत पूजायुक्ते उपवासादेव तदङ्गत्वेन तत्पर्य्यन्तानुष्ठेयत्वात्। आदिशब्देन उपवासोक्ते:। त्रिरात्रपक्षे नवम्या अपि अभिव्याप्तिदर्शनात्। न च पारणान्तत्वेन नवरात्रत्वं त्रिरात्रत्वं च वाच्यम्। विष्णु-त्रिरात्रादावपि तथात्वापत्ते:। न चात्रोपवासे मानाभाव इति वाच्यम्।

एवं च विन्ध्यवासिन्यां नवरात्रोपवासत:।

एकभक्तेन नक्तेन तथैवायाचितेन च ।
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ॥

इति हेमाद्रौ भविष्योक्तेः । नवरात्र समाख्यातो नवम्या अपि उपोष्यत्वाच्च । इति मदनरत्ने प्रतिपादितम् ।

ननु तिथिह्रासे अष्टावपि उपवासा भवन्तीति कथं नवरात्र समाख्या । तेन कर्मविशेषे एवायं नवरात्र शब्दोरूढः । इति चेत् सत्यं । तिथिह्रासेऽपि नवतिथीना मुपोष्यत्वान्नवरात्रत्वा-क्षतेः । यद्वाऽय मुत्सर्गः । बाधे सति अपोह्यते । एतेन रात्रीणां प्राधान्यात् ह्रासेऽपि अमावास्या मादाय नवत्वमिति मूर्खोक्ति-रपि परास्ता । पूर्वोक्त वचनैरमावास्याया अप्राप्तेः ।

यत्त्वत्र निर्णयदीपे उक्तम्—

आश्विने शुक्लपक्षेषु नवरात्रि मुपोषितः ।
नवम्यां पारणं कुर्याद्दशमी मिश्रिता भवेत् ॥
दशमी मिश्रिता यत्र पारणे नवमी भवेत् ।
दुःखदारिद्र्यदा ज्ञेया तथा व्रतविनाशनी ॥

इति ब्राह्मं वचनम् ।

तथा—

नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति ।
दशम्यां पारिता देवी कुलनाशं करोति वै ।
तस्मात्तु पारणं कुर्यान्नवम्यां विबुधाधिप ॥

इति रुद्रयामल वचनं च । एतानि यदि समूलानि तदैषां लोकाभिसार कर्मविषयत्वं वेदितव्यम् ।

जयाभिलाषी नृपतिः प्रतिपत् प्रभृति क्रमात् ।
लौहाभिसारिकं कर्म्म कारयेद् यावदष्ट(मि)मीम् ॥

इति तस्य षष्टमीपर्य्यन्तत्वोक्तेः । अन्यथा महाष्टम्यां पर विद्धायां पारणानुष्ठाने पूर्व्वनिबन्धे विरोधो दुर्व्वारः स्यात् । तस्मा-दुक्त मेव साधु । पारणाहे सूतकादि प्राप्तौ तत्रैव पारणं कुर्य्यात् ।

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्य्याद्दानार्च्चन विवर्ज्जितम् ॥

इति कूर्म्मपुराणोक्तेः ।

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इति विष्णु वचना च्च अशौच मध्येऽपि तत् कर्त्तव्यतावगतेः । पारणान्तत्वाद्व्रतस्य । केचिदशौचापगमे सति दानार्च्चनादि पूर्व्वकं पारणं कुर्य्यात् । दानार्च्चनविवर्जित मित्युक्ते रित्याहुः । रजः सूतकेऽप्येव मेव ।

नियमस्था यदानारी प्रपश्ये दन्तरा रजः ।
उपोष्यैव तु तारात्रौः स्नात्वा शेष व्रतं चरेत् ।

इत्यङ्गिरोवचनात् * ।

* कमलाकर स्तु रजोदर्शन मध्ये पारणं कर्त्तव्य मित्याह ।
प्रारब्धदीर्घ तपसां नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्या दुपरोधः कदाचन ।
संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशी व्रतम् ।
इत्यादि वचन प्रामाण्यात् ।

ततः प्रातः पूजयित्वा दशम्यां विधिपूर्वकम् ।
संप्रेषणं तु कर्त्तव्यं गीतवादित्र निःस्वनैः ॥
रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ॥
इति संप्रार्थ्य देवीं तु तत उत्थापयेद्बुधः ।
उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च ॥
कुरुष्व मम कल्याणं अष्टाभिः सह शक्तिभिः ।
गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके ॥
व्रज स्रोतोजलं वृद्ध्यै स्थीयतां च जले त्विह ।

इति जलं नीत्वा ।

दुर्गे देवि जगन्मातः स्वस्थानं गच्छ चण्डिके ।
संवत्सरे व्यतीते तु पुनरागमनाय च ॥
इमां पूजां मया देवि यथाशक्त्युपपादिताम् ।
रक्षार्थं त्वं समादाय व्रजस्व स्थानमुत्तमम् ॥

इति जले प्रवाहयेत् ।

इयमेव—

## विजयादशमी

इत्युच्यते । सा च द्वितीयदिने श्रवण योगाभावे पूर्वाग्राह्या ।
तदुक्तं हेमाद्रौ स्कान्दे—

दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता ।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः ॥

या पूर्व्वा नवमीयुक्ता तस्यां पूज्याऽपराजिता ।
क्षेमार्थं विजयार्थं च पूर्व्वोक्त विधिना नरैः ॥
नवमी शेषयुक्तायां दशम्या मपराजिता ।
ददाति विजयं देवी पूजिता जयवर्द्धनी ॥

तथा—

आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः ।
एकादश्यां न कुर्व्वीत पूजनं चापराजितम् ॥

इति ।

यदा तु पूर्व्वदिने श्रवणाभावः परदिने चास्तोऽपि तद्योग स्तदा परैव ।

तदुक्तं हेमाद्रौ व्रतकाण्डे कश्यपेन—

उदये दशमी किञ्चित् सम्पूर्णैकादशी यदि ।
श्रवणर्क्षं यदाकाले सा तिथि र्विजयाभिधा ॥
श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।
उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः ॥

इति ।

कालमाह नारदः—

ईषत् सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्न तारकः ।
विजयोनाम कालोऽयं सर्वकार्य्यार्थसिद्धिदः ॥

अत्रेतिकर्त्तव्यता भविष्ये—

शमीयुक्तं जगन्नाथं भक्तानामभयङ्करम् ।
अर्च्चयित्वा शमी हन्त मर्च्चयेच्च पुनः पुनः ॥

शमी प्रार्थना मन्त्रस्तु—

अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च।
दुःस्वप्न शमनीं धन्यां प्रपद्येऽहं शमीं शुभाम्॥

तथा भविष्ये—

शमी शमयते पापं शमी(शत्रुविनाशनी) लोहित कण्टका।
धारिण्यर्जुन वाणानां रामस्य प्रिय(वादिनी)कारिणी॥
करिष्यमाण यात्रायां यथाकालं सुखं मया।
तत्र निर्विघ्न कर्त्रीं त्वं भव श्रीराम पूजिते॥

इति।

तथा—

गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम्।
गीतवादित्र निर्घोषै रानयेत् स्वगृहं प्रति॥

वत्सरे तु—

सूर्योदये पुण्यरूपे वर्त्तते दशमी तिथिः।
आश्विने शुक्लपक्षे या सा भवेज्जयदा नृणाम्।
निषिद्ध मपि कर्त्तव्यं तैलाभ्यञ्जन मादरात्॥

निषिद्ध मेकादशी व्रताङ्गत्वेन।

अश्वानामपि कर्त्तव्यं तैलस्नानं नदीजले।
तूर्य्य घोष समायुक्तं पुरं प्रावेशयेद्धयान्॥
पुष्पमाला परीतां स्तां चामरै रुपशोभितान्।
राजद्वारि समाविष्टान् शोभि नीराजितानथ॥
संपूज्य विधिवद्राज्ञो भोजयेत्तुरगान्नृपः।

वाह्याधिकारिणः सर्व्वान् दानमानेन तोषयेत् ॥
तथैव वारणान् मुख्यान् पूजयेच्च क्रमेलकान्।
ततश्च पूजयेद्देवीं शमी मागत्य मन्त्रतः॥
आहूय ब्राह्मणान् प्राज्ञान् वाचयेत् स्वस्तिमङ्गलम्।
उद्धृत्य मृत्तिकां तत्र शमीं कुर्य्यात् प्रदक्षिणम्॥
पूर्व्वादिदिक्षु तल्लिङ्गै र्मन्त्रै रारोहयेत् क्रमात्।

इति।

नीराजन मुक्तं तथैव।

तत्र मन्त्रः:—

चतुरङ्गं बलं मह्यं निररिष्टं व्रजत्विह।
सर्व्वत्र विजयो मेऽस्तु त्वत् प्रसादा(द्रमापते)त् सुरेश्वरि॥

इति।

## अथाश्विन पौर्णमासी।

सा परा ग्राह्या—

सावित्रीव्रतमन्तरेण भवतोऽमापौर्णमास्यौ परे।

इति दीपिकोक्तः।

अत्रैव आश्वयुजीकर्म्म उक्तम्। आश्वयुज्या माश्वयुजी कर्म्मेति सूत्रकारैः।

तच्चेयं पूर्व्वाह्ण व्यापिनी ग्राह्या देवकर्म्मत्वात्तत्र—

आग्रयण मपि अत्र पर्व्वणिकार्य्यम्।

शरद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते।

इति शौनकोक्तेः।

किञ्चा दर्शेष्टेः परं पौर्णमासेष्टेश्च प्राग् भवति।

दर्शेष्ट्याः परमुक्त माग्रयणकं प्राक् पौर्णमासाच्च तत्॥

इति दीपिकोक्तेः।

तच्चाग्रयणं त्रेधा। व्रीह्याग्रयणं यवाग्रयणं श्यामाकाग्रयणं च। तेषां क्रमेण कालमाह आपस्तम्बः। वर्षासु श्यामाकैर्यजेत व्रीहियवाभ्यां शरद्वसन्तयोरिति। तत्रापि श्यामाकाग्रयणम् नित्यं। इतरे त्वनाहिताग्नेर्नित्ये। श्यामाकैः प्रस्तरं कुर्य्यान्नाग्रयणमिति नारायण वृत्ती व्याख्यातम्। इदं च पर्वणोऽन्यत्र क्रियते चेत्तदा शुक्लपक्षे देवनक्षत्रे कृत्तिकादि विशाखान्ते कार्य्य मिति कृत्यर्थसारेऽभिहितम्। किं च। यदात्वेतदाश्विनपौर्णमास्यां क्रियते तदा एककालत्वादाश्वयुजी कर्म्मणोऽस्य च समानतन्त्रता भवति। तदेतद्दर्शितञ्चता एकवर्हिरिध्माज्येति सूत्रे स्पष्ट मुक्तम्।

कात्यायनानां तु पर्वनियमो नास्ति।

अनाहिताग्ने र्नवप्राशन मिति कात्यायनसूत्रे कर्केण तथा व्याख्यातत्वात्।

एतदकरणे प्रायश्चित्त मुक्तं स्मृति चन्द्रिकायां कात्यायनेन।

नित्ययज्ञात्यये चैव वैश्वदेवद्वयस्य च।

अनिष्ट्वा नवयज्ञेन नवान्न प्राशने तथा।

भोजने पतितान्नस्य चरु र्वैश्वानरो भवेत्॥

कारिकापि—

अकृताग्रयणोऽश्नीयान्नवान्नं यदि वै नरः ।
वैश्वानराय कर्त्तव्यस्तः पूर्णाहुति स्तदा ॥

इति ।

ऋग्विधानेतु—

समिन्द्रराया मन्त्रं * च वर्षे वर्षे जपेच्छतम् ।
आग्रयणं यदान्यूनं तदा सम्पूर्ण मेति तत् ॥

इति ।

॥ इति आश्विनमास विधानानि ॥



* समिन्द्र राया समिषा रभेमहि संवाजेभिः पुरुश्चन्द्रै रभिद्युभिः ।
संदेव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥

—इति १म. ५३सू. ५मन्त्रः ।

## अथ कार्त्तिकमास विधानम्।

—✿—

तत्र तुलासंक्रमे पूर्वापरा दशघटिकाः पुण्याः। रात्री-
निशीथात् प्राक् परतश्च संक्रमे पूर्वोत्तरदिनार्द्धे पुण्ये।

निशीथे तु संक्रमे दिनद्वयं पुण्यमिति प्रागेवाभिहितम्।

पाद्मे—

तुला मकरमेषेषु प्रातः स्नानं विधीयते।
हविष्यं ब्रह्मचर्य्यं च महापातकनाशनम्॥
इति।

अत्र तुलेत्यादिना सौरमास आरम्भे उक्तः। प्राच्याश्चैतदेव
आद्रियन्ते।

दाक्षिणात्यास्तु—

आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत्।
कार्त्तिकस्य व्रतानीह तस्यां वै प्रारभेत् सुधीः॥
इति विष्णुरहस्योक्त रिदमेव आद्रियन्ते।

केचित्तु—

पूर्णं आश्वयुजे मासि पौर्णमास्यां समाहितः।

इत्युक्ता—

मासं समग्रं परया च भक्त्या समाप्यते कार्त्तिकपौर्णमास्याम्।

इति हेमाद्री आदि पुराणोक्तेराश्विन शुक्लपञ्चदश्या मारभ्य कार्त्तिक पौर्णमास्यां कार्त्तिकव्रतं समापयेदित्याहुः ।

अत्र देशाचारतो व्यवस्था द्रष्टव्या ।

अत्र तीर्थविशेषः पाद्मे—

कुरुक्षेत्रे कोटिगुणो गयायामपि तत् समः ।
ततोऽधिकः पुष्करे स्याद्दारवत्यां च भार्गव ॥
पुण्याः पुर्य्यश्च सप्तैव सुनयो मथुराऽधिका ।
दुर्लभः कार्त्तिको विप्रा मथुरायां नृणामिह ॥
यत्रार्च्चितः स्वकं रूपं भक्तेभ्यः स प्रयच्छति ।

इदं च स्नानं काशीपञ्चनदेऽपि अतिप्रशस्तम् ।

शतं समा स्तपस्तप्त्वा कृते यत् प्राप्यते फलम् ।
तत् कार्त्तिके पञ्चनदे सकृत् स्नानेन लभ्यते ॥

इति काशीखण्डोक्तेः ।

स्नान मन्त्रस्तु ।

पाद्मे—

कार्त्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्द्दन ।
प्रीत्यर्थं तव देवेश दामोदर मयासह ।
मया लक्ष्म्या सह सहितस्येत्यर्थः ॥

अर्घ्य मन्त्रोऽपि—

व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम ।
गृहाणार्घ्यं मया दत्तं राधया सहितोऽनघ ॥

नित्ये नैमित्तिके कृष्ण कार्त्तिके पापनाशने ।
गृहाणार्घ्यं मया दत्तं दनुजेन्द्रनिषूदन ॥
इमौ मन्त्रौ समुच्चार्य्य प्रात र्योऽर्घ्यं प्रयच्छति * ।
सुवर्णरत्न पुष्पाम्बु पूर्णशङ्खेन पुण्यवान् ।
सुवर्णपूर्णा पृथिवी तेन दत्ता न संशयः ॥

इति तत्फलम् । एवं सम्पूर्णे स्नानाशक्तौ त्र्यहं स्नायात् ।

वाराणस्यां पञ्चनदे त्र्यहं स्नानेन कार्त्तिके ।
धमी ते पुण्यवपुषो मुक्तिभाजो भवन्ति वै ॥

इति काशी खण्डोक्तेः ।

अथ मालाधारण मुक्तं स्कान्दे—

निवेद्य केशवे मालां तुलसी काष्ठ सम्भवाम् ।
वहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ॥
न जह्यात्तुलसीमालां धात्रीमालां विशेषतः ।
महापातकसंहन्त्रीं सर्वकामार्थदायिनीम् ॥

विष्णुधर्म्मेऽपि—

स्कृशेत्तु यानि रोमाणि धात्रीमाला कलौ नृणाम् ।
तावद्वर्षसहस्राणि वैकुण्ठे स वसेद् ध्रुवम् ॥
मालायुग्मं तु यो नित्यं धात्रीतुलसिसम्भवम् ।
वहते कण्ठदेशे तु कल्पकोटी र्वसेद्दिवि ॥

* योऽर्घ्यं मम प्रयच्छति ।

—इति निर्णयसिन्धौ पाठः ।

तुलसी काष्ठसंभूत माले कृष्ण (जनप्रिये)स्व वल्लभे ।
विभर्म्मि त्वा मह्यं कण्ठे कुरु मां कृष्णवल्लभम् ॥
एवं संप्रार्थ्य विधिवन्मालां कृष्णगलेऽर्पिताम् ।
धारयेत् कार्त्तिके यो वै स गच्छेद्वैष्णवं पदम् ॥
इति ।

तथा—

अगस्ति कुसुमैर्देवं योऽर्च्चयेद्वै जनार्दनम् ।
दर्शनात्तस्य देवर्षे नरकं नाप्नुते नरः ॥
विहाय सर्वपुष्पाणि मुनि पुष्पेण केशवम् ।
कार्त्तिके योऽर्च्चयेद् भक्त्या वाजपेय फलं लभेत् ॥

तथा पाद्मे—

कार्त्तिके नार्च्चितो यैस्तु कमलैः कमलेक्षणः ।
जन्मकोटिषु राजेन्द्र न तेषां कमला गृहे ॥
कार्त्तिके कमलैः पूजा येषां नाभ्या सुतैः कृता ।
ते निर्भत्स्य रवेः पुत्रं वसन्ति त्रिदिवे सदा ॥
तुलसीदल लक्षेण कार्त्तिके योऽर्च्चयेद्धरिम् ।
पत्रे पत्रे मुनिश्रेष्ठ मौक्तिकं लभते फलम् ॥
धात्रीच्छाये तु यः कुर्य्यात् पिण्डदानं महामुने ।
मुक्तिं प्रयान्ति पितरः प्रसादात् माधवस्य च ॥
धात्रीफल विलिप्ताङ्गो धात्रीफलविभूषितः ।
धात्रीफल कृताहारो नरो नारायणो भवेत् ॥
धात्रीच्छायां समाश्रित्य यो ऽर्च्चयेच्चक्रधारिणम्

पुष्ये पुष्येऽश्वमेधस्य फलं प्राप्नोति मानवः ॥
कार्त्तिके मासि विप्रेन्द्र धात्रीछायोपशोभिते ।
वने दामोदरं विष्णुं चित्रार्थैस्तोषयेद्विभुम् ॥
मूलेन पायसेनापि होमं कुर्य्याद्विचक्षणः ।
ब्राह्मणान् भोजयेच्छक्त्या स्वयं भुञ्जीत बन्धुभिः ॥

इति ।

तथा—

कार्त्तिके द्विदलं त्यजेदित्युक्तम् ।

पाद्मे—

राजिकां मादकं चैव नैवाद्यात् कार्त्तिके व्रती ।
द्विदलं तिलतैलं च तथान्यत् प्रतिदूषितम् ॥
कार्त्तिके वर्ज्जयेत्तद्वद्विदलं बहुबीजकम् ।
माष मुद्ग मसूरांश्च चणकांश्च कुलित्थकान् ॥
निष्पावा राजमाषाश्च आढक्या द्विदलं स्मृतम् ।
नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्ज्जयेत् ॥

अत्र केचित् । उत्पत्तिसमये दलद्वयं यस्य भवति तन्मूल-पूर्वंगत्या द्विदलमुच्यते । इत्याहुः । उदाहरन्ति च ।

बीजमेव समुद्भूतं द्विदलं चाङ्कुरंविना ।
दृश्यते यत्र शस्येषु द्विदलं तन्निगद्यते ।

इति ।

तथा पाद्मे—

कार्त्तिके वर्ज्जयेत्तैलं कार्त्तिके वर्जयेन्मधु ।

कार्त्तिके वर्ज्जयेत् कांस्यं कार्त्तिके युक्त सन्धितम् ॥

युक्तं पर्य्युषितं । सन्धितं लवणशाकमित्यर्थः ।

अन्येऽपि साधारण धर्म्मा: पूर्व्वमुक्ता: ।

माद्याख्युक्तानि स्कान्दे—

व्रीहयो यव गोधूमाः प्रियङ्गु तिल शालयः ।

एते हि सात्त्विका: प्रोक्ता: स्वर्ग मोक्षफलप्रदा: ॥

नोर्जो वर्ज्योविधातव्यो व्रतिना केनचित् क्वचित् ।

अव्रतेन क्षपेद् यस्तु मासं दामोदरप्रियम् ।

तिर्य्यग् योनि मवाप्नोति जन्म कोटिषु दुःखदम् ॥

अन्यान्यपि ताम्बूल तैल केशकर्त्तनादिवर्ज्जन सङ्कल्परूपाणि व्रतानि प्रागुक्तानि ज्ञेयानि ।

निर्णयामृते—

तुलायां तिलतैलेन सायंकाले समागते ।

आकाशदीपं यो दद्यात् मासमेकं हरिप्रियम् ॥

महतीं श्रियमाप्नोति रूप सौभाग्य सम्पदम् ।

तत् प्रकारश्चादित्य पुराणे—

दिवाकरेऽस्तायल मौलि (भूते) याते

गृहाददूरे पुरुषप्रमाणं ।

यूपाकृतिं यज्ञियवृक्षकाष्ठ

मारोप्य भूमावथ तस्य मूर्द्धि ॥

कृत्वा पताकोऽष्टदलाकृती तु

याभिर्भवेदष्टदिशानुसारी ।

तत् कर्णिकायां सु (तु) महाप्रकाशो
दीपः प्रदेयोदलगास्तथाष्टौ ॥
निवेद्य धर्माय हराय भूम्यै
दामोदरायाप्यथधर्म्म रा(ज्ञे)जे ।
प्रजापतिभ्यस्त्वथ सत् पितृभ्यः
प्रेतेभ्य एवाथ तमःस्थितेभ्यः ॥
इति ।

अत्र अयनस्य मन्त्रोऽपरार्के—
दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥
इति ।

कार्त्तिककृष्णचतुर्थी न(क)रक चतुर्थी । सा चन्द्रोदयव्यापिनी ग्राह्या । दिनद्वये तथात्वे पूर्वा । तत्रैव पूजाद्याम्नानात् । कार्त्तिक कृष्णद्वादशी गोवत्स संज्ञा । सा प्रदोषव्यापिनी ग्राह्या दिनद्वये तथात्वे पूर्वा । युग्मवाक्यात् ।
वत्स पूजा वट श्चैव कर्त्तव्या प्रथमेऽहनि ।
इति निर्णयामृतेऽभिधानाच्च ।

अत्र कर्त्तव्य मुक्तं भविष्ये—
सवत्सां तुल्यवर्णाञ्च शीलिनीं गां पयस्विनीम् ।
चन्दनादिभि रालिप्य पुष्पमालाभिरर्चयेत् ॥
अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः ।
पादमूले तु दद्या द्वै मन्त्रेणानेन पाण्डव ॥

क्षीरोदार्णवसंभूते सुरासुरनमस्कृते ।
सर्वदेवमये मातर्गृहाणार्घ्यं नमोऽस्तु ते ॥

ततो माषादि संसिद्धान् वटकान् निवेदयेत् ।

तत्र मन्त्रः—

सुरभि त्वं जगन्माता देवी विष्णुपदे स्थिता ।
सर्वदेवमये ग्रासं मया दत्त मिमं ग्रस ॥

ततः—

सर्वदेवमये देवि सर्वदेवैरलङ्कृते ।
मातर्ममाभिलषितं सफलं कुरु नन्दिनि ॥

इति प्रार्थयेत् ।

तथा—

तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर ।
गोक्षीरं गोघृतं चैव दधि तक्रं च वर्ज्जयेत् ॥

ज्योतिर्निबन्धे नारदः—

कार्त्तिके कृष्णपक्षे तु द्वादश्यादिषु पञ्चसु ।
तिथिपूक्तः पूर्वरात्रौ नृणां नीराजनाविधिः ॥

नीराजयेयु र्देवांश्च विप्रान् गाश्च तुरङ्गमान् ।
ज्येष्ठान् श्रेष्ठान् जघन्यांश्च मातृमुख्याश्च योषितः ॥

इति ।

निर्णयामृते स्कान्दे—

कार्त्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ।

यमदीपं बहिर्दद्यादपमृत्यु र्विनश्यति ॥

इति ।

मन्त्रस्तु—

मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह ।
त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतामिति * ॥

कार्त्तिक कृष्णचतुर्दशी नरकचतुर्दशी । तत्र प्रभाते चन्द्रो-
दये चाभ्यङ्गं कुर्य्यात् । नरक चतुर्दश्यां तैलाभ्यङ्गं कारयेदिति
पाद्मोक्तेः ।

हेमाद्रौ भविष्योत्तरे—

कार्त्तिके कृष्णपक्षे तु चतुर्दश्यां विधूदये ।
अवश्य मेव कर्त्तव्यं स्नानं नरकभीरुभिः ॥
पूर्वविद्धचतुर्दश्यां कार्त्तिकस्य सितेतरे ।
पक्षे प्रत्यूषसमये स्नानं तैलेन कारयेत् ॥

स्मृतिदर्पणेऽपि—

चतुर्दशी चाश्वयुजस्य कृष्णा
स्वात्यृक्ष युक्ता च भवेत् प्रभाते ।
स्नानं समभ्यज्य नरैस्तु कार्य्यं
सुगन्ध तैलेन विभूति कामैः ॥

इति ।

---

* सूर्यजः प्रीयतां मम
—इति निर्णयसिन्धौ पाठः ।

पृथ्वीचन्द्रोदये ब्राह्मे—

अश्वयुक् कृष्णपक्षस्य चतुर्दश्यां विधूदये ।
तिलतैलेन कर्त्तव्यं स्नानं नरकभीरुणा ॥

इति ।

अत्र अश्वयुगिति अमावस्यान्तं मास मभिप्रेत्य उक्त मित्य-वधेयम् ।

तथा—

तैले लक्ष्मी र्जले गङ्गा नरकस्य (दीपवत्याः) चतुर्दशीम् ।

प्राप्येतिशेषः—

प्रातः स्नान (मतः) न्तु यः कुर्याद्यमलोकं न पश्यति ।

दिनद्वये विधूदये चतुर्दशी सत्त्वे पूर्वदिने कार्य्य मिति निर्णय-दीपमतम् । परदिने कार्य्य मिति शिष्टा आहुः ।

तथा कृष्णचतुर्दश्या माश्विनेऽर्कोदयात् पुरा ।
यामिन्याः पश्चिमे यामे तैलाभ्यङ्गो विधीयते ॥

इति सर्वत्र नारायणोक्तः ।

दिनद्वयेऽप्यसत्त्वे तु पूर्वेऽह्नि त्रयोदश्या मभ्यङ्गं कुर्य्यादिति दिवोदासः—

त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी ।
रात्रि शेषे त्वमावास्या तदाऽभ्यङ्गं त्रयोदशी ॥

इति नारदस्मृतेः ।

केचित्तु दिनद्वयेऽप्यसत्त्वपक्षेऽपि चतुर्दश्या मेव अभ्यङ्गो न त्रयोदश्याम् ।

ऊर्जासित चतुर्दश्या मिन्दुक्षयतिथावपि ।
ऊर्जादौ स्वाति संयुक्ते तदा दीपावली भवेत् ॥
कुर्य्यात् संलग्न मेतच्च दीपोत्सव दिनत्रयम् ।

इति ज्योतिर्निबन्धे नारदोक्ते रित्याहुः । त्रयोदशी यदा प्रात रिति वचनं तु हेमाद्र्यादि महानिबन्धेषु अनुपलब्धा निर्मूलम् । समूलत्वेऽपि चतुर्द्दश्याः सूर्य्योदयद्वयासम्बन्धित्व रूपः क्षयोऽत्र न विवक्षितः * किन्त्व भ्यङ्ग कालात् प्राक् समाप्ति रूपः क्षयशब्देन विवक्षितः † स च सौरपक्षवदार्षपक्षेणापि यदा ह्रास स्तत्पर इति कथञ्चिद्बोध्य मिति । अत्र देशाचारतोऽव्यवस्था द्रष्टव्या ।

अत्र इतिकर्त्तव्यता उक्ता पाद्मे —

अपामार्ग मथो तुम्बीं प्रपुन्नाटमथापरम् ।
भ्रामयेत् स्नानमध्ये तु नरकस्य क्षयाय वै ॥

प्रपुन्नाट चक्रमर्द्दः ।

---

* अतः परं निर्णयसिन्धौ—

सूर्य्योदयात् प्राक् समाप्तौ चन्द्रोदय काल सत्त्वेऽपि तथैवाङ्गीकारात् ।

इत्यधिकोऽंशो दृश्यते ।

† स च चन्द्रोदयाच्चतुर्थ यामान्ता प्राक् यदाक्षय स्तत् परः ।
अतएव नारायणेन चतुर्थयामसमाप्ते स्नान मुक्तम् ॥

इति कमलाकरः ।

मन्त्रस्तु—

सी(सि)तालोष्ट * समायुक्त सकण्टकदलान्वित ।
हर पाप मपामार्ग भ्राम्यमाणः पुनः पुनः ॥

इति ।

चतुर्दश्या मेव प्रदोषे दीपा देया इत्युक्तं स्कान्दे ।

ततः प्रदोष समये दीपान् दद्यान् मनोरमान् ।
ब्रह्मविष्णु शिवादीनां भवनेषु मठेषु च ॥

इति ।

लिङ्गपुराणे—

माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः ।
प्रेताख्यायां चतुर्दश्यां सर्वपापैः प्रमुच्यते ॥

तथा—

ततश्च तर्पणं कार्य्यं धर्म्मराजस्य नामभिः ।
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ॥
वैवस्वताय कालाय सर्वभूतक्षयाय च ।
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ।
यज्ञोपवीतिना कार्य्यं प्राचीनावीतिनाऽथवा ॥

इति ।

* सीतलोष्ट इति कलिकाता पाठ. ।

† एव माधीयान ।

इदं च जीवत् पितृकेणापि कार्य्यम् ।

जीवन् पितापि कुर्वीत तर्पणं यमभीष्मयोः ॥

इति पाद्मोक्तेः ।

कार्त्तिकामावास्यायामभ्यङ्ग उक्तः कालादर्शे ।

प्रत्यूषे आश्वयुग्दर्शे कृताभ्यङ्गादि मङ्गलः ।

भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये ॥

अत्र आदिशब्देन पञ्चत्वगुदकस्नानादेः सङ्ग्रहः ।

तदुक्तं पुष्कर पुराणे—

स्वातौ स्थिते रवाविन्दुर्यदि स्वातिगतो भवेत् ।

पञ्चत्वगुदकस्नायी कृताभ्यङ्गविधिर्नरः ।

नीराजितो महालक्ष्मीमर्चयन् श्रियमश्नुते ॥

तथा—

इन्दुक्षयेऽपि संक्रान्तौ रवौ पाते दिनक्षये ।

तत्राभ्यङ्गो न दोषाय प्रातः पापापनुत्तये ॥

मात्स्ये—

कार्त्तिकस्य च मासस्य यामावास्या तिथिर्भवेत् ।

दीपैर्नीराजनादत्र सैषा दीपावली स्मृता ॥

अत्र विशेषो हेमाद्रौ भविष्ये—

दिवा तत्र न भोक्तव्यं ऋते बालातुरं जनम् ।

प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात् ।

दीपवृक्षाश्च दातव्या भक्त्या देवगृहेषु च ॥

अत्रैतत् सर्वमेवेह रात्रौ दैत्यपते र्बलेः।
पूजां कुर्य्यान्नृपः साक्षाद् भूमौ तु मण्डले शुभे॥
बलि मालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः।
गृहस्य मध्यशालायां विशालायां ततोऽर्चयेत्॥
लोकश्चापि गृहस्यान्तः शालायां शुक्ल तण्डुलैः।
संलिख्य बलिराजानं फलैः पुष्पैश्च पूजयेत्॥

मन्त्रस्तु—

बलिराज नमस्तुभ्यं दैत्यदानववन्दित।
इन्द्रशत्रो सुराराते विष्णुसान्निध्यदो भव॥

इति।

बलि मुद्दिश्य दीयन्ते दानानि कुरुनन्दन।
यानि तान्यक्षयाण्याहु र्नात्र कार्य्याविचारणा॥

इति।

इयं प्रतिपत् पूर्वविद्धा ग्राह्या—

पूर्वविद्धा प्रकर्त्तव्या शिवरात्रि र्बलेर्दिनम्।

इति पाद्मोक्तेः।

अत्र गोपूजाप्युक्ता—

या कुहुः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप।
पूजनात्तासु वर्द्धन्ते प्रजा गावो धनानि च॥

इति निर्णयामृते।

दिनद्वये सायाह्नव्यापित्वे परा ग्राह्या—

गवां क्रीड़ादिने यत्र रात्रौ दृश्येत चन्द्रमाः।

सोमोराजा पशून् हन्ति सुरभिः पूजकां स्तथा ॥

इतिपुराणसमुच्चयोक्तेः ।

अत्र द्यूतक्रीडा उक्ता हेमाद्रौ स्कान्दे—

तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ।

तस्मिन् द्यूते जयो यस्य तस्य संवत्सरं जयः ॥

पराजये विरुद्धञ्च लाभनाश करो भवेत् ।

दयिताभिश्च सहिते नेया सा च भवेन्निशा ॥

इति ।

अथ गोवर्द्धन पूजाप्युक्ता । हेमाद्रौ स्कान्दे—

प्रातर्गोवर्द्धनं पूज्य द्यूतं चापि समाचरेत् ।

भूषणीया स्तथा गावः पूज्याश्चावाहदोहनाः ॥

असन्निधाने गोवर्द्धनपर्वतो गोमयेन कार्य्यः ।

मन्त्रस्तु—

गोवर्द्धन धराधार गोकुलत्राणकारक ।

बहु बाहु कृतच्छाय गवां कोटि प्रदो भव ॥

गोमन्त्रस्तु—

या लक्ष्मी र्लोकपालानां धेनुरूपेण संस्थिता ।

घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ॥

इति ।

ततोऽपराह्न समये पूर्वस्यां दिशि भारत ।

मार्गपालीं प्रबध्नीयात्तुङ्ग स्त(स्त्ये)म्भे च पादपे ॥

कुशकाशमयीं दिव्यां लम्बकै र्बहुभि (र्वृताम्) र्नृप ।

शतहोमे द्विजेन्द्रेभ्यो बध्नीयान् मार्गपालिकाम्॥
नमस्कारं ततः कुर्य्यान् मन्त्रेणानेन सुव्रत।
मार्गपालि नमस्तुभ्यं सर्वलोक सुखप्रदे॥
विधेयैः पुत्रदाराद्यैः पुनरेहि व्रतस्य मे।
नीराजनं च तत्रैव कार्य्यं राष्ट्रजयप्रदम्॥
राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः।
मार्गपालीं समुल्लङ्घ्य नीरुजः स्युः सुखान्विताः॥

कार्त्तिक शुक्लद्वितीया यमद्वितीया। सा च पूर्वविद्धा ग्राह्या।

हेमाद्रौ स्कान्दे—

ऊर्ज्जे शुक्लद्वितीयाया मपराह्णे ऽर्च्चयेद् यमम्।
स्नानं कृत्वा सनन्दायां * यमलोकं न पश्यति॥
इति।

सनन्दा प्रतिपदित्यर्थः।

भविष्येऽपि—

कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्च्चितः॥
अतो यमद्वितीयेयं सर्वलोकेषु विश्रुता।
अस्यां निजगृहे विप्र न भोक्तव्यं ततो नरैः॥
स्नेहेन भगिनीहस्ताद् भोक्तव्यं पुष्टि वर्द्धनम्।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः॥ इति।

---

* सनन्दायामित्यत्र भानुजाया मिति निर्णयसिन्धौ पाठः।

ब्रह्माण्डेऽपि—

या तु भोजयते नारी भ्रातरं युग्मके तिथौ ।
अर्चयेच्चापि ताम्बूलै र्न सा वैधव्य माप्नुयात् ॥
भ्रातरायुः क्षयो राजन् न भवेत्तत्र कर्हिचित् ।

तथा—

यस्यां तिथौ यमुनया यमराजदेवः
संपूजितः प्रतिजगत् स्वस्त् सौहृदेन ।
तस्यां स्वसुः करतलादिह यो भुनक्ति
प्राप्नोति रत्न सुखधान्य मनुत्तमं सः ॥

निर्णय सागरेऽपि—

ततः प्रभाते विमले भगिनी भ्रातृ मन्दिरम् ।
गत्वा निमन्त्रयेद् भ्रातॄन् जनकं जननीं तथा ॥
आनीय सकलान् हृष्टान् शुभं स्वं मन्दिरं प्रति ।
अभ्यङ्गं कारयेत्तत्र अशुभे भोज्येश्च भोजयेत् ॥
पित्रादि सर्ववन्धुभ्यो दद्याद्वस्त्राणि भूरिशः ।
ते स्वस्रे च प्रदातव्यं वस्त्रालङ्कार भूषणम् ॥ इति * ।

---

* लिखितत्वे गच्छेष मन्त्रो दृश्यते ।

यथा—

भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्त मिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ॥

इति ।

कनिष्ठाचेदग्रजाताह मिति वदेत् ।

## कार्त्तिक शुक्लनवमी युगादिः ।

सा च पौर्वाह्णिकी ग्राह्या ।
शुक्ले पौर्वाह्णिके ग्राह्ये ।
इति वचनात् ।

## अत्र पिण्डरहितं श्राद्धं कार्य्यमित्युक्तं

वैशाखविधाने—
अत्र विष्णुत्रिरात्रं व्रतमुक्तं हेमाद्रौ पाद्मे—
कार्त्तिके शुक्ल नवमी मवाप्य विजितेन्द्रियः ।
हरिं विधाय सौवर्णं तुलस्या सहितं विभुम् ॥
पूजयेद्विधिवद् भक्त्या व्रती तत्र दिनत्रयम् ।
एवं यथोक्तविधिना कुर्य्याद्वैवाहिकं विधिम् ॥
इति ।

तुलस्या सह विष्णुविवाह विधि चतुर्थ स्तबके वक्ष्यते ।
अत्र च भीष्मपञ्चकव्रतमुक्तं नारदीये—
अतो नरैः प्रयत्नेन कर्त्तव्यं भीष्म पञ्चकम् ।
कार्त्तिकस्यामले पक्षे स्नात्वा सम्यग् यतव्रतः ।
एकादश्यां तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम् ॥
इति ।

तद्विधिस्तु—

मौनी पञ्चामृतैः पञ्चगव्यैश्च विष्णुं संस्नाप्य संपूज्य पायसं निवेद्य द्वादशाक्षर मन्त्र * मष्टोत्तर शतं जप्त्वा षडक्षरेण † मन्त्रेण घृताक्तान् यवान् व्रीहींश्च अष्टोत्तरशतं हुत्वा भूमौ स्वपेत् । एवं पञ्चदिनेषु कुर्य्यात् ।

विशेषस्तु आद्येऽह्नि हरेःपादौ कमलैः संपूज्य त्रिर्गोमयं प्राशनम् ।

द्वितीये विल्वपत्रै र्जानुनौ सम्पूज्य गोमूत्रं ।

तृतीये भृङ्गराजेन नाभिं सम्पूज्य क्षीरं ।

चतुर्थे करवीरैः स्कन्धं संपूज्य दधि ।

पञ्चमे पौर्णमास्यां होमान्ते लौहमयीं पापप्रतिमां खड्गचक्र-हस्तां कृष्णवस्त्रेण वेष्टितां तिलप्रस्थोपरि संस्थाप्य धर्मराजनामभिः करवीरैः संपूज्य—

अन्यस्मिन् जन्मनि तथा जन्मन्यस्मिन् मयाकृतम् ।
तत् सर्वं प्रशमं यातु पातकं तव पूजनात् ॥

इति मन्त्रेण पुष्पाञ्जलित्रयं दत्त्वा कृष्णप्रतिमां च संपूज्य विप्राय दत्त्वा विप्रान् भोजयेत् । अथ दक्षिणां दत्त्वा पञ्चगव्यं प्राश्य नक्तं भुञ्जीत ।

इति लघुनारदीये ।

पञ्चगव्य प्राशनं षडक्षरेण मन्त्रेण इति हेमाद्रिः ।
भविष्ये तु शाकैर्मुन्यन्नैर्वा पञ्चाहं वर्त्तनं मुक्तम् ॥

---

* ॐ नमो भगवते वासुदेवाय एव रूपम् ।

† ॐ नमो विष्णवे एव रूपेण ।

यद् भीष्मपञ्चकमिदं प्रथितं पृथिव्या
मेकादशी प्रभृति पञ्चदशी निबद्धम् ।
मुक्त्वान्न भोजनपरस्य नरस्य तस्मि
न्निष्टं फलं दिशति पाण्डव शार्ङ्गधन्वा ॥

इति च तत्रैव ।

तथा पाद्मे—

पञ्चाहं पञ्चगव्याशी भीष्मायार्घ्यं च पञ्चसु ।
अहःस्वपि तथा दद्यात् मन्त्रेणानेन सुव्रत ॥
सत्यव्रताय शुचये गाङ्गेयाय महात्मने ।
भीष्मायैतद्ददाम्यर्घ्य माजन्म ब्रह्मचारिणे ॥
वैयाघ्रपद्यगोत्राय सांकृति प्रवराय च ।
अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥
वसूना मवताराय शन्तनो रात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबाल्य ब्रह्मचारिणे ॥
सव्येनानेन मन्त्रेण तर्पणं सार्ववर्णिकम् ।

इति ।

कार्त्तिक शुक्लद्वादश्यां रेवती नक्षत्रयोगवर्ज्जितायां पारणं कार्य्यम् ।

तदुक्तं हेमाद्रौ—

आभाकार्त्तिक पक्षेषु मैत्र श्रवण रेवती ।
सङ्गमे नहि भोक्तव्यं द्वादश द्वादशी र्हरेत् ॥

इति ।

यदातु रेवती योगरहिता द्वादशी न लभ्यते तदा रेवत्याश्चतुर्थं पादं वर्ज्जयेत् ।

वचनं तु प्रागुक्तम् ।

अस्या मेव रात्रौ देवोत्थापनमुक्तं

रामार्चन चन्द्रिकायाम्—

पारणाहे पूर्वरात्रे घण्टादीन् वादयन् मुहुः ।

देवमुत्थापयेदत्र महापूजादि पूर्वकम् ॥

इति ।

महापूजा पञ्चामृत पूर्विका ।

तत् परिमाणमुक्तं पाद्मे—

पञ्चामृतानां कलसान् पूजयेत् स्थापयन् क्रमात् ।

ततः पञ्चामृतैर्गव्यैः स्नापये त्तत् प्रकाशकैः ॥

नार्त्तायाः न च गर्भिण्या नहृष्टायाः कदाचन ।

नावत्सायाः उपादेयं कृतेऽपि विफलं भवेत् ॥

सद्य स्तप्तं घृतं ग्राह्यं महोरात्रोषितं दधि ।

क्षीरं ग्राह्यमतप्तं च द्रोण मानोच्छितं शुभम् ॥

तावन्मानं घृतदधि तावदेव च माक्षिकम् ।

तावानिक्षुरसः प्रोक्तः स्तदलाभे तु शर्करा ।

अर्द्धं वा स्यादाढ़कं वा न्यूनं चेदासुरं भवेत् ॥

इति ।

ब्राह्मे—

एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम् ।

प्रसुप्तं बोधयेद्रात्रौ श्रद्धा भक्ति समन्वितः ॥

इति ।

भविष्येऽपि—

कार्त्तिके शुक्लपक्षे तु एकादश्यां युधिष्ठिर ।

मन्त्रेणानेन राजेन्द्र देवमुत्थापयेद्द्विजः ॥

अत्र देशाचारतोव्यवस्था द्रष्टव्या ।

तद्विधिस्तु—

अत्रैव देव देवस्य स्नानं पूर्वं महद् भवेत् ।

महापूजां ततः कृत्वा देवमुत्थापयेत् सुधीः ॥

मन्त्रास्तु वाराह पुराणे उक्ताः—

ॐ ब्रह्मेन्द्र रुद्राग्नि कुवेर सूर्य्य

सोमादिभि र्वन्दित वन्दनीय ।

बुध्यस्व देवेश जगन्निवास

मन्त्रप्रभावेण सुखेन देव ॥

इयं हि द्वादशी देव प्रवोधार्थं विनिर्म्मिता ।

त्वयैव सर्वलोकानां हितार्थं शेष शायिना ॥

उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।

त्वयि सुप्ते जगन्नाथ जगत् सुप्तं भवेदिदम् ॥

उत्थिते चेष्टते सर्वं उत्तिष्ठोत्तिष्ठ माधव ।

गता मेघा वियच्चैव निर्म्मलं निर्म्मलादिशः ॥

शारदानि च पुष्पाणि गृहाण जगदीश्वर ।

इदं विष्णुरिति * प्रोक्तो मन्त्रउत्थापने हरेः ॥
इति ।

एवं जला(दि)न्तसमये देवमुत्थाप्य तदग्रे
चातुर्मास्य व्रत समाप्तिं कुर्यात् ।

तदुक्तं महाभारते—

चतुर्धा गृह्य वै चीर्णं चातुर्मास्य व्रतं नरः ।
कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत् समापयेत् ॥
कार्त्तिके शुक्लपक्षे तु त्वत् प्रसादाज्जनार्दन ।
व्रतेनानेन चीर्णेन प्रीतो भव रमापते ॥
इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
न्यूनं सम्पूर्णतां यातु त्वत् प्रसादाज्जनार्दन ॥

तथा ब्राह्मे—

महातूर्य्यरवै रात्रौ भ्रामयेत् स्यन्दनस्थितम् ।
उत्थितं देवदेवेशं नगरे पार्थिवः स्वयम् ॥
रथस्य कर्षणं विष्णोर्देवदेवस्य यो नरः ।
करोति क्रतुमुख्यानि कर्म्माणीह न संशयः ॥
रथेन सह गच्छन्ति पुरतः पृष्ठतोऽपि (वा)ये ।
ते ब्राह्मणसमा ज्ञेयाः शूद्रा अपि न संशयः ॥
रथस्थितो नरैर्यस्तु पूजितः पुरुषोत्तमः ।

* इद विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढ़ मस्य पांसुले ।
—इति १म. २२सू १७ऋक् ।

ददाति वाञ्छितं तेषा मन्ते च परमां गतिम् ॥
दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम्।
रथस्थं वामनं दृष्ट्वा न पुनर्जन्मभाग् भवेत् ॥
रथस्थं त्रिर्भ्राम्यमाणं ये पश्यन्ति जनार्द्दनम्।
विप्रावेदविदस्तेऽपि विज्ञेयाः श्वपचाधमाः ॥
येषां गृहाग्रतो याति रथस्थः श्रीनृकेशरी।
पूजा तैस्तैः प्रकर्त्तव्या वित्तशाठ्यविवर्ज्जितैः ॥
अनर्च्चितो यदा याति प्रमादात् स्वगृहाद्धरिः।
पितरस्तस्य विमुखा यावत् संवत्सरं नृप ॥
गृहे समुपवेश्यैनं महानुग्रह मर्थयेत्।
सोऽसा वदभ्रकरुणो भगवान् प्रहृष्ट
प्रे(मा)मस्मितेन नयनाम्बुरुहं विजृम्भन्।
उत्थाय विश्वविजयाय च(म)नो विषादं
माध्व्या गिराऽपनयतात् पुरुषः पुराणः ॥
पलायध्वं पलायध्वं रेरे दितिजदानवाः।
संरक्षणाय लोकाना मुत्थितः पुरुषोत्तमः ॥
ये कुर्वन्त्युत्सवं विष्णो स्ते नरा मुक्तिभागिनः।
स्त्रियोऽपि मुक्तिमायान्ति रथोत्सव परायणाः ॥
रथोत्सवस्य माहात्म्यं कली वितनुते हि यः।
सशैल वनसंयुक्ता दत्ता तेन वसुन्धरा ॥

तथा—

चतुरो वार्षिकान् मासान् नियमो येन यः कृतः।

कथयित्वा द्विजेभ्यस्तद् दद्याद् भक्त्या सदक्षिणम् ॥

यस्य भक्ष्यस्य नियमनं कृतं तद्द्रव्यं ब्राह्मणेभ्यः सदक्षिणं दद्यादित्यर्थः । इदं शुक्लाष्टम्यादावपि कार्य्यम् । अशौचे सति अन्येन कारयेत् ।

वचन मुक्तं प्राक् ।

कार्त्तिकस्य द्वादशी पौर्णमासी च मन्वादिः—

ते पौर्वाह्णिक्यौ ग्राह्ये ।

शुक्लपक्षस्थत्वात् ।

कार्त्तिक शुक्ल चतुर्दशी वैकुण्ठ संज्ञा ।

सा च निशीथव्यापिनी ग्राह्या ।

दिनद्वये तथात्वे या प्रदोषव्यापिनी भूत्वा निशीथ व्यापिनी सैव ग्राह्या ।

कार्त्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप ।

सोपवासस्तु संपूज्य हरिं रात्रौ जितेन्द्रियः ॥

इति हेमाद्रौ भविष्योक्तेः ।

अत्रैव शिवप्रीत्यर्थं यद्युपवसेत्तदा अरुणोदयव्यापिनी ग्राह्या ।

वर्षे च हैमलम्बाख्ये तथा श्रीमति कार्त्तिके ।

शुक्लपक्षे चतुर्दश्यां अरुणाभ्युदयं प्रति ॥

महादेव तिथौ ब्राह्मे मुहूर्त्ते मणिकर्णिके ।

स्नात्वा विश्वेश्वरो देव्याविश्वेश्वरमपूजयत् ॥

इति शिवरात्री वेतौ सनत् कुमारोक्तेः ।

## अथ कार्त्तिकव्रतोद्यापनमुक्तं

पाद्मे कार्त्तिकमाहात्म्ये—

ऊर्जव्रतिनः सम्य गुद्यापनविधिं शृणु ।
ऊर्ज्जे शुक्लचतुर्द्दश्यां कुर्य्यादुद्यापनं व्रती ।
तुलस्या उपरिष्टात्तु कुर्य्यात् मण्डपिकां शुभाम् ॥
तुलसी मूलदेशेच सर्वतोभद्र मेवच ।
तस्योपरिष्टात् कलसं पञ्चरत्न समन्वितम् ॥
पूजयेत्तत्र देवेशं सौवर्णं गुर्वनुज्ञया ।
रात्रौ जागरणं कुर्य्याद् गीतवादित्र मङ्गलैः ॥
ततस्तु पौर्णमास्यां वै सपत्नीकान् द्विजोत्तमान् ।
त्रिंशन्मितानथैकं वा स्वशक्त्या वा निमन्त्रयेत् ॥
अतोदेवा इति द्वाभ्यां * जुहुयात्तिलपायसम् ।
ततो गां कपिलां दद्यात् पूजयेद्विधिवद् गुरुम् ॥
इति ।

अत्र पौर्णमासी परा ग्राह्या ।
अमापौर्णमास्यौ परे इति दीपिकोक्तेः ।

---

* अतोदेवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्तधामभिः ॥ १६ ॥
इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांशु(सु)रे ॥
—इति १म. २२सू. १७ऋक् ।

अत्र विशेषो हेमाद्रौ ब्राह्मे—

पुण्या महाकार्त्तिकी स्याज्जीवेन्द्वोः कृत्तिकासु च ।

जीवेन्द्वो र्गुरुसोमयो रित्यर्थः ।

तथा—

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां धराधिप ।
सा महाकार्त्तिकी ज्ञेया देवाना मपि दुर्लभा ॥
इति ।

प्राजापत्य मृक्षं रोहिणी ।

पाद्मे तु—

विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वति दुर्लभः ॥
पद्मकं पुष्करे प्राप्य कपिलां यः प्रयच्छति ।
स त्यक्त्वा सर्वपापानि लभते वैष्णवं पदम् ॥
इति ।

## अस्या मेव मत्स्यावतारोजात

इत्युक्तं पद्मपुराणे—

वरान् दत्त्वा यतोविष्णु र्मत्स्य रू(पो)प्यभवत्ततः ।
तस्यां दत्तं हुतं जप्तं तदक्षयफलं स्मृतम् ॥
इति ।

मत्स्योऽभूद्धुतभुग् दिने मधुसिते—

इत्यादि विरोधस्तु कल्पभेदेन कार्य्यभेदेन वा परिहरणीयः ।

अत्रैव त्रिपुरोत्सव उक्तो हेमाद्रौ—

पौर्णमास्यां तु सन्ध्यायां कर्त्तव्यस्त्रिपुरोत्सवः।
दद्यादनेन मन्त्रेण प्रदीपांश्च सुरालये॥

कीटाः पतङ्गा मशकाश्च वृक्षा
जले स्थले ये विचरन्ति जीवाः।
दृष्ट्वा प्रदीपं न च जन्मभागिनो
भवन्ति नित्यं श्वपचाहि विप्राः॥

इति।

## अत्र वृषोत्सर्गोऽति प्रशस्तः।

तदुक्तं मात्स्ये—

कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत्।
शैवं पद मवाप्नोति शिवरात्रिव्रतं यतः॥

इति।

अत्रैव स्वामिदर्शन मुक्तं स्कान्दे—

कार्त्तिक्यां कृत्तिकायोगे यः कुर्य्यात् स्वामिदर्शनम्।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः॥
यस्मिन् समर्पितं कर्म्म मोक्षैकफलदं स्मृतम्।
ज्ञानानन्दैकरूपं तमनन्तं समुपाश्रये॥

इति श्रीमदनभट्टविरचिते विधान पारिजाते
कार्त्तिकमास विधानानि।

———

## अथ मार्गशीर्ष मास विधानानि।

तत्र मार्गशीर्ष कृष्णाष्टमी कालाष्टमीत्युच्यते।

साच रात्रिव्यापिनीग्राह्या—

मार्गशीर्षेऽसिताष्टम्यां कालभैरव सन्निधौ।
उपोष्य जागरं कुर्व्वन् सर्वपापैः प्रमुच्यते॥

इति काशीखण्डादस्य रात्रिव्रतत्व मवगम्यते।

रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः।
इति ब्रह्मवैवर्त्ताच्च।

अत्र कर्त्तव्यमुक्तं शिवरहस्ये—

उपोषणस्याङ्गभूत मर्घ्यदान मिह स्मृतम्।
तथा जागरणं रात्रौ पूजा यामचतुष्टये॥

अर्घ्यमन्त्रस्तु—

कालनाथ नमस्तेऽस्तु काशीवास प्र(दे नमः)दो भव।
गृहाणार्घ्यं मया दत्तं दीनं मा मात्मसात् कुरु॥
इति।

कृत्वा च विविधां पूजां महाविभवविस्तरैः।
नरोमार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत्॥
तीर्थे कालोदके स्नात्वा कृत्वा तर्पण मत्वरः।

विलोक्य कालराजं च निरया दुद्धरेत् पितॄन् ॥

इति ।

इयं च कार्त्तिक्यनन्तरा गौण चान्द्राभिप्रायेण ।

अथ मार्गशीर्ष शुक्ल पञ्चम्यां

सर्पपूजा उक्ता

हेमाद्रौ स्कान्दे—

शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी ।

स्नानदानैर्बहुफला नागलोक प्रदायिनी ॥

इति ।

इयं नाग पूजायां परविद्धा ग्राह्या ।

पञ्चमी नागपूजायां (कार्य्या) ग्राह्या षष्ठी समन्विता ।

तस्यां तु तोषिता नागा इतरा सचतुर्थिका ॥

इति मदन रत्नोक्तेः ।

## अथ मार्गशीर्षशुक्लषष्ठी चम्पाषष्ठीति

महाराष्ट्रेषु प्रसिद्धा ।

सा परविद्धा ग्राह्या । षण्मुन्योरिति युग्मवाक्यात् ।

पूर्वाह्ने दैविकं कर्म्म कुर्य्यादिति वचनादस्य दैविक कर्म्मत्वाच्च ।

इय मेव योगविशेषेण चम्पत्युच्यते ।

तदुक्तं ब्रह्माण्डपुराणे मल्लारिमाहात्म्ये—

मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता ।

रविवारेण संयुक्ता चम्पेतीह प्रकीर्त्तिता * ।
तस्यां दत्तं हुतं स्नानं सर्वमक्षय्यतां व्रजेत् ॥

इति ।

मार्गशुक्लचतुर्द्दश्यां पिशाचविमोचनतीर्थे स्नानं श्राद्धं च त्रिस्थली सेतावुक्तम् ।

तस्य प्राप्तपैशाच्य स्वपित्राद्युद्देश्यकत्वे पार्वणत्वादियमपराह्णव्यापिनी ग्राह्या । अज्ञातनामपिशाचाद्युद्देश्यकत्वे तु एकोद्दिष्टत्वा-न्मध्याह्नव्यापिनी ग्राह्या । कुलधर्मव्रतादौ तु उत्तरैव ।

चैत्रनभोगतेतरसिता स्या दूर्ध्वम् ।

इति दीपिकोक्तेः ।

मार्गशीर्षपौर्णमास्यां दत्तात्रेयावतारः ।

तदुक्तं स्कान्दे सह्याद्रिखण्डे—

मार्गशीर्षे तथा मासि दशमेऽह्नि सुनिर्मले ।
मृगशीर्षयुते पौर्णमास्यां (शस्य च) यशस्य वासरे ॥
जनयामास देदीप्यमानं पुत्रं सती शुभम् ।
तं विष्णु मागतं ज्ञात्वा चत्रिर्नामाकरोत् स्वयम् ।
दत्तवान् स्वस्यपुत्रत्वाद्दत्तात्रेयस्ततोऽभ्वरः ॥ इति ।

इयं प्रदोषव्यापिनीति (शिष्टाः) ब्रुवाः ।

मार्गशीर्षे पौर्णमास्यनन्तराष्टमी अष्टका इत्युच्यते । एवं पौषादिमास त्रयेऽपि ।

---

* विशाखा भौमयोगेन सा चम्पतीह कीर्त्तिता ।
—इति मदन रत्ने पाठः ।

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणा मष्टमीषु अष्टका एकस्यां वा *
इत्याश्वलायनोक्तेः। तासां पूर्वेद्युः परेद्युश्च अन्वष्टका श्राद्ध
मुक्तं कालादर्शे।

मार्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुने।
कृष्णपक्षेषु पूर्वेद्यु रन्वष्टक्यं तथाष्टका॥

इति।

अर्द्धमाघ्रहायण्या स्तिस्रोऽष्टका इति कात्यायनसूत्रेऽपि।
अत्र अष्टमी अपराह्णव्यापिनी ग्राह्या।

यथाच्छादनपर्य्यन्तं श्राद्धं पार्वणवद्भवेत्।

इति आश्वलायन कारिकायां पार्वण धर्म्मातिदेशोक्ते रष्टकायाः।
पूर्वेद्युरन्वष्टका श्राद्धयो स्तु अष्टम्यनुरोधेन निर्णयः कार्य्यः।
वायुपुराणे—

आद्या पूपैः सदा कार्य्या मांसैरन्या सदा भवेत्।
शाकैः कार्य्या तृतीया स्या देष द्रव्यगतो विधिः॥

इति।

अथ कामकालौ विश्वेदेवौ—

वृद्धि श्राद्धे क्रतुदक्षा वष्टम्यां कामकालकौ।

इति शङ्खस्मृतेः।

अथ श्राद्धाकरणे प्रायश्चित्त मुक्तम्मृगविधाने—

एभिर्द्युभिर्जपेन् मन्त्रं शतवारं तु तद्दिने।

---

* एकस्यां वै इति हरदत्तः। क्वचित् पञ्चम्यप्युक्ता।
प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति इति पाठात्।

अन्वष्टक्यं यदाशून्यं सम्पूर्णं सर्वथा भवेत् ॥

इति ।

आश्वलायन सूत्रेऽपि—

अथ श्वोभूते अष्टकाः पशुना स्थालीपाकेन वाप्यनडुहोयवस माहरे दग्निना वा कच सुपोषेदेषा मेऽष्टकेति । नत्वेवानष्टकः स्यादिति ।

मार्गशीर्षादिषु मलमासे सति तत्र अष्टका न कार्य्या ।

चतुर्णा मिति ग्रहणादित्युक्तं नारायण वृत्तौ ।

काठकगृह्येऽपि—

महालयाष्टका श्राद्धोपाकर्म्माद्यपि कर्म्म यत् ।
अष्ट मासविशेषाख्या विहितं वर्ज्जयेन् मले ॥

इति ।

मार्गादि रविवारेषु काम्यव्रत मुक्तं हेमाद्रौ ।

तत्र भक्ष्याण्युक्तानि संग्रहे सौरधर्म्मे—

पत्रचित्लं तुलस्याश्चिफलमथघृतं मार्गशीर्षादि भक्ष्यं,
मुष्टीनां चिश्चिलानां त्रिपलदधि तथा दुग्धकं गोमयं च ।
त्रिलं तोयाञ्जलीनां त्रिमरिचकमथो चिःपलाः शक्तवःस्यु,
गोमूत्रं शर्करा सद्दवि रिति विधिना भानुवारक्रमेण ॥

इति ।

इति श्रीविधानपारिजाते मार्गशीर्षमास विधानानि ॥

---

# अथ पौषमासविधानानि ।



तत्र धनुःसंक्रमे पराः षोडश घटिकाः पुण्याः ।

अन्यत् प्राग्वत् ।

अत्र उत्सर्जननिर्णयो वक्तव्योऽपि उपाकर्म्मप्रसङ्गात् प्रागे-वोक्तः ।

तत्र अनुसन्धेयः —

पौषशुक्लैकादशी मन्वादिः । तन्निर्णयश्च प्रागुक्तः ।

पौषामावास्यायामर्द्धोदयो योगविशेषः ।

तदुक्तं महाभारते —

अमार्कपातश्रवणैर्युक्ता चेत् पुष्यमाघयोः * ।
अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः ॥

इति

पुष्यमाघयोर्मध्यवर्त्तिनो पौषी पौर्णमासी तदुत्तरा अमावास्या रवि-वारव्यतीपातश्रवणनक्षत्रैर्युक्ता चेत्तदा अर्द्धोदयो योग इत्यर्थः † ।

---

पौषमाघयोरिति तिथितत्त्वे पाठः ।

मदनरत्ने तु पुष्यस्य माघस्य च इत्यर्थ उक्तः ।

तच्च हेमाद्रिविरोधात् ॥

तत्र हि माघदर्श उक्तः । इति कमलाकरः ।

तथा —

दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ।

स्कान्दे —

माघादिन्दुक्षये प्राप्ते श्रवणार्कयुते दिने ।
योगो भवेद्व्यतीपातः सोऽर्धोदय इति स्मृतः ॥
अर्धोदये तु सम्प्राप्ते सर्वं गङ्गाजलं स्मृतम् * ।
सर्वं काशीसमं क्षेत्रं सर्वे ब्रह्मसमा द्विजाः ॥
यत्किञ्चिद्दीयते दानं तद्दानं मेरुसन्निभम् ।
कथयिष्यामि ते स्कन्द अर्धोदयव्रतं शुभम् ॥
चतुःषष्टिपलं सुक्ष्मममघं तत्र कारयेत् ।
तदर्धं मध्यमं प्रोक्तं तस्याप्यर्धमथाधमम् ।
एवंसुघटितं कार्यं शुभं कांस्यस्य भाजनम् ।
निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ॥
भूमौ तु तण्डुलैः शुद्धैः कृत्वाष्टदलमुत्तमम् ।
अव्रतं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम् ॥
तेषां पूजा ततः कार्या श्वेतमाल्यैस्तु शोभनैः ।
वस्त्रादिभिरलङ्कृत्य ब्राह्मणाय निवेदयेत् ॥

दानमन्त्रस्तु —

सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयम् ।
वा(वि)पत्तेस्तारकं यस्मात्तद्गृहाण द्विजोत्तम ॥

---

* सर्वं गङ्गासमं जलमिति रघुनन्दनाः ।

समुद्रमेखलां पृथ्वीं सम्यग् दातुश्च यत् फलम् ।
तत् फलं लभते मर्त्यः कृत्वेदं दानमुत्तमम् ॥

इति

तथा —

गोचर्ममात्रां भूमिं यो दद्यादर्कोदये तिथौ ।
सुवर्णं रजतं गांश्च दत्त्वानन्तफलं लभेत् ॥

इति श्रीविधानपारिजाते पौषमासविधानम् ।

---

## अथ माघमासविधानम् ।

---

तत्र विष्णुः —

तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् ।
हविष्यं ब्रह्मचर्य्यं च माघस्ना(नि)नं महाफलम् ॥

इति सौरमास उक्तः ।

ब्राह्मे तु सावन उक्तः ॥

तथाहि —

एकादश्यां शुक्लपक्षे पौषमासे समारभेत् ।

द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समाप(नम्)येत् ॥

इति

पाद्मेऽपि —

पुष्यस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः ।
माससात्रं निराहारस्त्रिकालं स्नानमाचरेत् ॥
त्रिकालमर्चयेद्विष्णुं त्यक्तभोगोजितेन्द्रियः ।
माघस्यैकादशीं शुक्लां यावद्विद्याधरोत्तम ॥

इति

अत्र त्रिकालस्नानं मासोपवासविषयं निराहार इत्युक्तेः ।

पुष्यीचन्द्रोदये तु अन्यथोक्तं विष्णुना —
दर्शं वा पौर्णमासीं वा आरभ्य स्नानमाचरेत् ।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे * ॥

इति

अत्र देशाचारतो व्यवस्था —

यदा तु माघो मलमासो भवति तदा माघस्नानस्य नित्यत्वात् मासद्वयेऽपि भवतीति हेमाद्रिराह ।

---

* अत्र अधिकारिणो भविष्ये —

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।
बालवृद्धयुवानश्च नर नारीनपुंसकाः ।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥

पाद्मे —

सर्वेऽधिकारिणोऽत्र विष्णुभक्तौ यथा नृप । इति

मकरस्नानमन्त्रः —

पाद्मे —

मकरस्थे रवौ माघे गोविन्दाच्युत माधव ।
स्नानेनानेन मे देव यथोक्तफलदो भव ॥
इमं मन्त्रं समुच्चार्य स्नायान्मौनसमन्वितः ॥

इति

अत्र प्रत्यहं सूर्य्याय अर्घ्यं दातव्यम् ।

तन्मन्त्रस्तु पाद्मे —

सवित्रे प्रसवित्रे च परं धाम जले मम ।
त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥

इति

स्नानकालस्तु माघे —

अरुणोदयमारभ्य प्रातःकालावधि प्रभो ।
माघस्नानवतां पुण्यं क्रमात्तत्रावधार(यम्)या ॥
उत्तमं तु सनक्षत्रं लुप्ततारं तु मध्यमम् ।
सवितर्य्युदिते भूप ततो हीनं प्रकीर्त्तितम् * ॥ इति

---

भविष्योत्तरे तु —

योमाघमासमुषसि सूर्य्ये करामि ताम्रं
स्नानं समाचरति चारुनदीप्रवाहे ॥
उद्धृत्य सप्त पुरुषान् पितृमातृवंश्यान्
स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ॥

स्नानफलं प्रभासखण्डे उक्तम्—

माघे मासि च यः स्नायात्तैरन्तर्य्येण(मानवः)भावतः ।
पौण्डरीकफलं तस्य दिवसे दिवसे भवेत् ॥

सम्पूर्णस्नानाशक्तौ त्र्यहं वा स्नायादित्युक्तं

पाद्मे—

अस्मिन् योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् ।
प्रयागे माघमासे तु त्र्यहं स्नातस्य यत् फलम् ॥
नाश्वमेधसहस्रेण तत् फलं लभते भुवि ॥

इति ।

माघनियमास्तु नारदीये—

न वह्निं सेवयेत् स्नातो ह्यस्नातोऽपि वरानने ।
होमार्थं सेवयेद्वह्निं शीतार्थं न कदाचन ॥
षडब्दानि पातव्यास्तिलाः शर्करयान्विताः ।
त्रिभागास्तु तिलानां स्युश्चतुर्थः शर्करात्मकः ॥
अनभ्यङ्गी वरारोहे सर्वं मासं नयेद्व्रती ।

तथा—

अप्रावृतशरीरस्तु यः कुर्यात् स्नानमाचरेत् ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥
तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी ।
तिलभुक् तिलदाता च षट्तिलाः पापनाशनाः * ॥

---

* षट्तिली नावसीदति इति तिथितत्त्वे पाठः ।

तथा —

दातव्यो दीपकोऽखण्डो देवमुद्दिश्य माधवम् ।
परश्राद्धं न सेवेत परिवादं च वर्ज्जयेत् ।

इत्यादि

माघान्ते विशेषमाह नारदः —

माघावसाने सुभगे षड्रसं भोजनं स्मृतम् ।
दम्पत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते ।
त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः ॥

इति

अत्र —

एकादशीविधानेन माघस्योद्यापनं स्मृतम् ।

इत्युक्तत्वात्तदुद्यापनं प्रयोगरूपेणोच्यते

माघशुक्लचतुर्दश्यामन्यस्मिन् वा दिने उपवासपूजनादिकं कृत्वा परेऽह्नि तिलचर्वाज्यैरष्टोत्तरशतं होमं कृत्वा सपत्नीकान् ब्राह्मणान् भोजयित्वा समाप्य च सूर्य्यं प्रार्थयेत् ।

तत्र मन्त्रः —

दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं कुरुष्वेदं माघस्नानमहर्पते ॥

इति उद्यापनविधिः ।

अत्र हेमाद्रौ घृतकम्बलाख्यं दानमुक्तम् —

माघशुक्लचतुर्दश्यामुपोष्य नियमस्थितः ।
शिवाय पौर्णमास्यां तु कुर्य्याद्वै घृतकम्बलम् ॥

आलिङ्गं वेदिपर्य्यन्तं यो दद्याद् घृतकम्बलम् ।
तस्यानन्तं भवेत् पुण्यं विष्णोर्देवस्य वा पुनः ॥

इति

तद्विधिस्तु चतुर्थस्तवके द्रष्टव्यः ।

मकरसंक्रान्तौ पराश्चत्वारिंशद् घटिकाः पुण्यकालः ।

त्रिंशत् कर्कटके नाड्यो मकरे तु दशाधिकाः ।

इति ब्रह्मवैवर्त्तमुदाजहार हेमाद्रिः

माधवस्तु —

त्रिंशत् कर्कटके पूर्वा मकरे विंशतिः परा ।

इति वशिष्ठस्मृतिमुदाजहार ।

यदा तु रात्रौ प्रदोषे निशीथे वा मकरसंक्रान्तिर्भवति तदा माधवमते द्वितीयं दिनं पुण्यम् ।

यद्यस्तमनवेलायां मकरं याति भास्करः ।
प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥

इति वृद्धगार्ग्यवचनादित्युदाहृतम् । दाक्षिणात्याश्च एतदेव आद्रियन्ते । हेमाद्रिमूर्यसंसारादौ तु निशीथात् पूर्वभाविनि संक्रमे निशीथात् परतोभाविनि च संक्रमे पूर्वापरदिनं पुण्यम् ।

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा ।
पूर्वापरविभागेन रात्रौ संक्रमणं यदा ॥
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः ।
उदयेऽपि तथा पञ्च दैवे पित्र्ये च कर्मणि ॥

इति स्कान्दवचनादित्युक्तम् ।

अपरार्केऽप्येवम्।

अस्तंगते यदा सूर्ये झषं याति दिवाकरः।
प्रदोषे वार्धरात्रे वा तदा पुण्यं दिनद्वयम्॥

इति बोधायनवचनादित्युक्तम्।

गुर्जरप्राच्योदीच्यास्तु इदमेव आद्रियन्ते।

मकरे कर्तव्यमुक्तं स्कान्दे –

धेनुं तिलमयीं राजन् दद्याद् यश्चोत्तरायणे।
सर्वान् कामानवाप्नोति विन्दते परमं सुखम्॥

विष्णुधर्मेऽपि —

उत्तरे त्वयने विप्रा वस्त्रदाने महत् फलम्।
तिलपूर्णमनड्वाहं दत्त्वा रोगैः प्रमुच्यते॥
तिलोद्वर्तं च कर्तव्यस्तिला देयाः प्रयत्नतः।
तिलतैलेन दीपाश्च देया विष्णुशिवादिषु।
तत्र श्राद्धं प्रकर्तव्यं पितॄणां तृप्तिकारणम्॥

इति

माघकृष्णचतुर्दश्यां यमतर्पणमुक्तं

हेमाद्रौ यमेन —

अनर्काभ्युदिते काले माघे कृष्णचतुर्दशीम्।
स्नातः संतर्प्य तु यमं सर्वपापैः प्रमुच्यते॥

इति

कृष्णचतुर्दशीं प्राप्येति शेषः।

माघामावास्यायामादित्यवारे व्यतीपातश्रवणयोगे षष्टौ दयाच्च

पुण्यकालो भवतीत्युक्तं पौषमासविधाने ।

माघशुक्लचतुर्थी तिलचतुर्थी ।

सा च प्रदोषव्यापिनी ग्राह्या ।

माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।
ये त्वां तुण्डे * ऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥

इति काशीखण्डोक्तेः ।

इयमेव कुन्दचतुर्थीत्याख्यायते यत्र कुन्दपुष्पैः शिवपूजन-मतिप्रशस्तम् —

माघशुक्लपञ्चमी श्रीपञ्चमी ।

सा च माधवमते पूर्वा हेमाद्रिमते परा ।

तत्र कर्त्तव्यमुक्तं वाराहे —

माघशुक्लचतुर्थ्यान्तु हर(वर)माराध्य च श्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजां कुर्य्यात् समृद्धये ॥

माघशुक्लसप्तमी रथसप्तमी ।

सा च अरुणोदयव्यापिनी ग्राह्या ।

सूर्य्यग्रहतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।

इतिविष्णुधर्मोत्तरोक्तेः ।

---

* तुण्डि विति गणेशस्य नामान्तरम् ।

अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
प्रयागे यदि लभ्येत कोटिसूर्य्यग्रहैः समा ॥

इतिपाद्मोक्तेश्च ।

अत्र कर्त्तव्यमुक्तं भविष्ये —

कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् ।
रात्र्यन्ते चालयेदर्क्कं कृत्वा शिरसि दीपकम् ॥

तथा जले प्रवाह्य स्कान्देऽपि —

न केन चाल्यते यावत्तावत् स्नानं समाचरेत् ।
सौवर्णे राजते पात्रे भक्त्याऽलाबुमये(तथा)ऽथवा ॥
तैलेन वर्त्तिर्दातव्या महारजनरञ्जिता ॥

महारजनं कुसुम्भम् ।

समाहितमना भूत्वा दत्त्वा शिरसि दीपकम् ।
भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् ॥
नमस्ते रुद्ररूपाय रसानां पतये नमः ।
वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते ।
जले परिहरेद्दीपं ध्यात्वा सन्तर्प्य देवताः ॥

इति

अर्घ्यमन्त्रस्तु —

यद् यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोकं* च शोकं च माकरी हन्तु सप्तमी ॥

---

* रोकं छिद्रमिति ख्यातः ।

एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् ।
मनोवाक्कायजं यच्च ज्ञाताज्ञातञ्च यत्पुनः ॥
इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके ।
सप्तव्याधिसमायुक्तं हर माकरि सप्तमि ॥
इतिमन्त्रत्रयं जप्त्वा स्नात्वा पादोदके नरः ।
केशवादित्यमालोक्य क्षणान्निष्कलुषो भवेत् ॥

इति स्कान्दे ।

इयं मन्वादिरपि ।

सा च शुक्लपक्षत्वात् पौर्वाह्णिकी ग्राह्या ।
यदा च माघो मलमासो भवति तदा मासद्वयेऽपि मन्वादिश्राद्धं कार्यम् ।

मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपिच ।

इति स्मृतिचन्द्रिकोक्तेः ।

माघशुक्लाष्टमी भीष्माष्टमी ।

तत्र कर्त्तव्यमुक्तं हेमाद्रौ पाद्मे —

माघमासे सिताष्टम्यां सतिलं भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्ते स्युः सन्ततिभागिनः ॥

भारतेऽपि —

शुक्लाष्टम्यां तु माघस्य दद्याद् भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

तन्मन्त्रस्तु —

वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च ।

अपुत्राय ददाम्येतज्जलं भीष्माय वर्म्मणे *॥

वसूनामवताराय शन्तनोरात्मजाय च ।

जलं(अर्घ्यं)ददामि भीष्माय आबाल्यब्रह्मचारिणे ॥

एतच्च जीवत्पितृकेणापि कार्य्यम् ।

जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः ॥

इति पाद्मोक्तेः ।

अत्र अपसव्यमिति दिवोदासः ।

भवलनिबन्धेऽपि —

अष्टम्यां तु सिते पक्षे भीष्माय तु तिलोदकम् ।

अन्नं च विधिवद् दद्युः सर्वे वर्णा द्विजातयः ॥

इति

सर्वे वर्णा इत्युक्ते द्विजातय इति सम्बोधनं वेदितव्यं । तेन शूद्रादीनामपि अत्र अधिकारः ।

अत्र श्राद्धं कार्य्यं तर्पणं तु नित्यम् ।

ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नोदकम् ।

संवत्सरकृतं तेषां पुण्यं नश्यति तत्क्षणात् ॥

इति मदनरत्नोक्तेः ।

---

* इतः पूर्वं—

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।

आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥

मन्त्रोऽयं बहुषु निबन्धेषु लभ्यते ।

माघशुक्लद्वादशी भी(म)मद्वादशी ।
त्वया कृतमिदं वीर तव नाम्ना भविष्यति ।
सा भी(म)मद्वादशी(शो)त्येषा सर्वपापहरा शुभा ॥
इति हेमाद्रौ पाद्मोक्तेः ।

इयं परविद्धा ग्राह्या * ।
माघी पौर्णमासी च परविद्धा ग्राह्या ।

अत्र योगविशेष उक्तो हेमाद्रौ ब्राह्मे—
माघी सोमबृहस्पत्यो † र्महामाघीति कथ्यते ।

तत्रैव ज्योतिषे —
मेषपृष्ठे यदा सौरिः सिंहे च गुरुचन्द्रमाः ।
भास्करः श्रवणर्क्षे च महामाघीति सा स्मृता ॥

भविष्येऽपि—
वैशाखी कार्त्तिकी माघी तिथयोऽतीव पूजिताः ।
स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन ।
तिलपात्राणि देयानि कञ्चुकाः कम्बलास्तथा ॥
इति

माघपूर्णिमानन्तराष्टमी माघी अष्टका ।

---

* इयं पूर्वविद्धा ग्राह्या इति निर्णयसिन्धौ पाठः ।
स एव समीचीनतया प्रतिभाति ।
"रुद्रेण द्वादशी युक्ता" इति युग्मवाक्यात् ।

† माघस्येयोस्य जीवेन्द्वोरिति कमलाकरः ।

तन्निर्णयो मार्गशीर्षमासविधाने प्रतिपादितः ।
पन्नष्टकाकरणायत्तो इयमावश्यकी ।

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीषु अष्टका एकस्यां वा इत्याश्वलायनोक्तेः एकस्यां माघ्यामष्टकायामित्यर्थः । तथा माघाष्टकां प्रक्रम्य तामेकाष्टकेत्याचक्षते इत्यापस्तम्बोक्तेश्च ।

इति श्रीविधानपारिजाते माघमासविधानानि ।

---

## अथ फाल्गुनमासविधानानि ।

---

कुम्भे षोडश घटिकाः पुण्याः ।
शेषं प्राग्वत् ।

फाल्गुनकृष्णाष्टम्यां सीतोत्पत्तिरुक्ता कल्पतरौ—

फाल्गुनस्य च मासस्य कृष्णाष्टम्यां महीपते ।

इत्युपक्रम्य—

जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी ।
उपोषितो रघुपतिः समुद्रस्य तटे तदा ॥
रामपत्नी च संपूज्या सीता जनकनन्दिनी ।

इति

## फाल्गुनकृष्णचतुर्दशी शिवरात्रिः ।

सा च केषुचिद्वचनेषु प्रदोषव्यापिनी ग्राह्येत्युच्यते ।
केषुचिन्निशीथव्यापिनीति च ।

तत्राद्या माधवीये —

त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ॥

स्मृत्यन्तरेऽपि —

प्रदोष * व्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

कामिकेऽपि —

आदित्यास्तमये काले अस्ति चेत् सा † चतुर्दशी ।
शिवरात्रिव्रती तत्रैवाश्वमेधफलं लभेत् ॥

द्वितीयापि नारदीये—

भवेद् यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ।
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा ॥

ईशानसंहितायामपि —

माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।

---

* प्रदोषो रात्रिः छत्रार्थे तथा हेतुलोकैः ।

† अस्तिचेत्सा चतुर्दशी ।

तद्रात्रिः शिवरात्रिः स्यात् सा भवेदुत्तमोत्तमा । इति निर्णयसिन्धौ पाठः ।

शिवलिङ्ग(भवो)तयोद्भूतः कोटिसूर्य्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः।

इत्यादि *।

एवं सति पूर्व्वेद्युरेव उभयकालव्याप्तौ पूर्व्वैव।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः।
जागरे शिवरात्रिः स्यान्निशि पूर्वा चतुर्द्दशी ॥

इति स्कान्दोक्तेः।

दिनभुक्तिरस्तमयः।

दिनद्वयेऽपि निशीथव्याप्तौ तु पूर्वा कार्य्येति हेमाद्रिः।

अर्द्धरात्रात् पुरस्ताच्चेज्जयायोगो यदा भवेत्।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥

इति गर्गोक्तेः।

मदनरत्नेऽपि एवमेव अभिहितम्।

माधवाचार्य्यस्तु परदिने प्रदोषनिशीथोभयव्याप्तिसद्भावात् परैवेत्याह। इदमेव (वचनं) युक्तमुत्पश्यामः।

---

* आदिना—

अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्द्दशी।
तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती ॥
नार्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्द्दशी।
नैव तत्र व्रतं कुर्य्यादायुरैश्वर्य्यहानितः ॥

इतिवचनद्वयं सङ्गृह्यते।

तथा पूर्वेद्युर्निशीथस्य परेद्युः प्रदोषस्येत्येकैकव्याप्तौ तु पूर्वैव । अर्द्धरात्रात् पुरस्ताच्चेदितिवचनेन जयायोगस्य प्राशस्त्यकथनात् ।

माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी ।
अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः ।

इति नागरखण्डोक्तेश्च ।

महतामपि पापानां दृष्टा वै निष्कृतिः पुरा ।
न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं शिवाम् ॥

इति स्कान्दे दर्शयोगस्य निषिद्धत्वाच्च ।

यदा चतुर्दशी पूर्वेद्युर्निशीथादूर्द्ध्वं प्रवृत्ता परेद्युश्च निशीथादर्वागेव समाप्ता तदा परेद्युरेकव्याप्तिसत्त्वात् परैव ॥

माघासिते भूतदिनं हि राजन्
उपैति योगं यदि पञ्चदश्या ।
जयाप्रयुक्तां न तु जातु कुर्यात्
शिवस्य रात्रिं प्रियकृच्छिवस्य ॥

इति गारुडोक्तेः ।

अथ दिनद्वये प्रदोषव्याप्त्यभावे निशीथव्याप्तिसत्त्वात् पूर्वैव । इयं च रविभौमसोमवारेषु शिवयोगे चातिप्रशस्ता ।

रविभौमेन्दुवारेषु शिवयोगे तथैव च ।
शिवरात्रिः शिवकरी महापातकनाशनी ॥

इति पाद्मोक्तेः ।

शिवरात्रिपारणे तु विरुद्धानि वाक्यानि दृश्यन्ते ।

तथाहि स्कान्दे—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द्दशी ।
एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥

तथा—

जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम् ॥

क्वचित्तु तिथिमध्येऽपि पारणमुक्तं स्कान्दे—

उपोषणं चतुर्द्दश्यां चतुर्द्दश्यां तु पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाथवा न वा ॥
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
संस्नातानि भवन्तीह भूतायां पारणे कृते ॥
तिथीनामेव सर्वासामुपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्य्याद्विना शिवचतुर्द्दशीम् ॥

इति ।

अत्र यामत्रयादर्वागेव चतुर्द्दशीसमाप्तौ तदन्ते तदूर्द्ध्वगामिन्यां तु प्रातस्तिथिमध्य एव पारणं कार्य्यम् ।

यामत्रयोर्द्ध्वगामिन्यां प्रातरेव हि पारणम् ।

इति स्मृतेरिति हेमाद्रिमाधवादयो व्यवस्थामाहुः ।

नवीनास्तु तिथिमध्य एव पारणमित्याहुः ।

तिथ्यन्ते पारणं भवेदित्यादिवचनं तु कृष्णाष्टम्यादिविषयम् ।

न तु शिवरात्रिविषयम् ।

शिवरात्रिव्रतस्य तन्मध्यपाठस्तु पूर्वयुतत्वमात्रकथनार्थः ।

विना शिवचतुर्दशीमिति पर्युद(स्ते)स्तायाः शिवरात्रेः सर्वप्रकारेषु तिथिसम्बन्ध एव पारणाप्रापकत्वात् * । तथा शिष्टाचाराच । इदं व्रतं संयोगपृथक्त्वन्यायेन नित्यं काम्यं च ।

तथाहि स्कान्दे—

परात्परतरं नास्ति शिवरात्रिः परात्परम् ।
न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ।
जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः ॥

इत्यकरणे प्रत्यवायश्रुतेः ।

वर्षे वर्षे महादेवि नरोनारी पतिव्रता ।
शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेत् ॥

इति वीप्साश्रुतेः ।

अर्णवो यदि वा शुष्येत् क्षीयते हिमवानपि ।
चलन्त्येते कदाचिद्धि निश्चलं हि शिवव्रतम् ॥

इतिवचनाच्च नित्यता ।

मम भक्तस्तु यो देवि शिवरात्रिमुपोषितः ।
गणत्वमक्षयं दिव्यमक्षयं शिवशासनम् ॥
सर्वान् भुक्त्वा महाभोगांस्ततो मोक्षमवाप्नुयात् ।

इति स्कान्दपुराणवचनात् ।

द्वादशाब्दिकमेतत् स्याच्चतुर्विंशाब्दिकं तु वा ।
इति ईशानसंहितावचनाच्च काम्यता चेति ॥

---

* पारणोचित्यादिति पाठं युक्तं मन्यामहे ।

माघेतर-प्रतिमास-शिवरात्रिव्रते तु नायं निर्णयः। किन्तु तत्र याम-चतुष्टय-पूजाविधानाद् यस्मिन् दिने अधिका रात्रि-व्याप्तिः सा ग्राह्या साम्ये तु पूर्वैव इति हेमाद्रिराह। वस्तुतस्तु प्रतिमासकृष्णचतुर्दश्यामपि।

सर्वकामप्रदं कृष्णचतुर्दश्यां शिवव्रतम्।

इत्युपक्रम्य—

चतुर्दश्याब्दं कर्त्तव्यं शिवरात्रि-व्रतं शुभम्।

इति कालोत्तरे शिवरात्रि-शब्द-प्रयोगात् कौण्डपायिना-मयनाग्निहोत्रे नैत्यकाग्निहोत्रधर्म्मा इव तद्धर्म्मप्राप्तिः स्यादेव। अतोऽत्रापि प्रदोषनिशीथोभयव्यापयादिनैव निर्णय इति वयं प्रतीमः।

अस्यारम्भो हेमाद्रौ स्कान्दे—

आदौ मार्गशिरे मासि दीपोत्सवदिनेऽथवा।

रटन्तीयाश्माघमासे वा द्वादशैवमुपोषयेत्॥ इत्यादि।

तदुत्तरा अमावास्या तु युगादिः।

"माघमासे त्वमावास्या" इति वचनात्। तत्-कर्त्तव्यं मल-मासे सत्यपि कार्य्यम्।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।

इति ऋष्यशृङ्गवचनात्।

अत्र योगविशेषो विष्णुपुराणे—

माघासिते पञ्चदशी कदाचिद्

उपैति योगं यदि वारुणेन।

यत्रैव काल: स पर: पितृणां
न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥

वाचस्पत्युक्तं मतभिन्नम्। इदं च कृष्णादित्वे श्रेयमिति हेमाद्रिः।

भारतेऽपि—

काले धनिष्ठा यदि नाम तस्मिन्
भवेत्तु भूपाल तदा पितृभ्य:।
दत्तं तिलान्नं प्रददाति तृप्तिं
वर्षायुतं तत्कुलजैर्मनुष्यै: ॥

इति।

## फाल्गुनपौर्णमासी होलिकेत्युच्यते।

सा च सायाह्नव्यापिनी ग्राह्या।

सायाह्ने होलिकां कुर्यात् पूर्वाह्णे क्रीडनं गवाम्।

इति स्कान्दोक्तेः।

तदसम्भवे प्रदोषव्यापिनी ग्राह्या।

तथाहि गोविन्दार्णवे नारदः—

प्रतिपद्-भूत-भद्रासु यार्चिता होलिकादिवा।
संवत्सरं च तद्राष्ट्रं पुरं दहति साद्भुतम् ॥
प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा।
तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ॥

इति।

तेनेयं पूर्वविद्धा ग्राह्या—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति ब्रह्मवैवर्त्तवचनात् ।

दिनद्वये प्रदोषव्याप्तौ परैव । पूर्वदिने भद्रासत्त्वात् । तत्र च निषेधात् ।

तथा हि निर्णयामृते—

भद्रायां दीपिता होली-राष्ट्रभङ्गं करोति वै ।
नगरस्य च नैवेष्टा तस्मात्तां तत्र वर्जयेत् ॥

तथा—

भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ॥

तथा—

दिनार्द्धात् परतोऽपि स्यात् फाल्गुनी पू(पौ)र्णिमा यदि ।
रात्रौ भद्रावसाने तु होलिका दीप्यते तदा ॥

यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने च पूर्णिमा ह्रासवशात् सायाह्नात् प्रागेव समाप्यते । तदा पूर्वदिने सम्पूर्णरात्रौ भद्रासत्त्वात् तत्र च तन्निषेधात् परेऽहनि प्रतिपद्येव कुर्यात् ।

सार्द्धयामत्रयं वा स्याद्द्वितीयदिवसे यदा ।
प्रतिपद्वर्द्धमाना तु तदा सा होलिका स्मृता ॥

इति भविष्य-वचनादिति निर्णयामृतकारः ।

गोविन्दार्णवादयस्तु—

प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ।
तस्यां भद्रामुखं त्यक्त्वा कार्य्या होला मनीषिभिः ॥
प्रदोषव्यापिनी चेत् स्याद् यदा पूर्वदिने तदा ।
भद्रामुखं वर्ज्जयित्वा होलिकायाः प्रदीपनम् ॥

इति नारदवचनाभ्याम् ।

यामत्रयोर्ध्वयुक्ता चेत् प्रतिपत्तु भवेत्तिथिः ।
भद्रामुखं परित्यज्य कार्य्या होला मनीषिभिः ॥

इति स्मृत्यन्तराच्च भद्रामुखं विहाय पूर्वदिने एव होलिका कार्य्या इत्याहुः ।

भद्रामुखप्रमाणं तु ।

माघस्तु पञ्चवदनं नवर्क्षं तु कण्ठ * —

इति रत्नमालोक्तं ज्ञेयम् ।

शिष्टाचारोऽपि एवमेवास्ति ।

अत्र कर्त्तव्यमुक्तं भविष्योत्तरे—

फाल्गुने मासि सम्प्राप्ते शुक्लपक्षे सुखास्पदे ।
पञ्चमीप्रमुखास्तत्र तिथयो दश शोभनाः ॥
तासु बालैश्च हृष्टैश्च काष्ठस्तेयं विधीयते ।
ग्रामायां पौर्णमास्यां तु कु (र्य्यात्) र्युः काष्ठप्रदीपनम् ।
ग्रामाद्बहिश्च मध्ये च तूर्य्यनादसमन्वितम् ॥

---

* नवकलकैका इति निर्णयसिन्धौ पाठः ।

तथाऽन्यत्तु—

दीपयामि महाघोरे होलिके राक्षसेश्वरि ।
हिताय सर्वजगतां प्रीतये पार्वतीपतेः ॥
ततोऽभ्युक्ष्य चितिं सर्वां साज्येन पयसा सुधीः ।
गन्धपुष्पैः समभ्यर्च्य कृत्वा चैव प्रदक्षिणम् ॥
गीतैर्वाद्यैस्तथा नृत्यैः सा रात्रिर्नीयते नरैः ।
भगलिङ्गादिशब्दैश्च क्रीडां कुर्य्युर्मिथोजनाः ॥
द्वितीयदिवसे प्राप्ते तद्भस्म परिवन्दयेत् ।
भस्मोद्धूलितसर्वाङ्गाः सिन्दूरोद्भर्त्सिताङ्गकाः ॥
पलाशकुसुमोद्भूतान् (?) शुभवारिप्रसेचनम् ।
कुर्य्युर्मिथो लोकमध्ये वसन्तप्रीतये ध्रुवम् ॥
द्वितीयादि समारभ्य यावद्वत्सरसेचनम् ।
जलेनाथ सुतैलेन दध्नाथ पयसापि वा ॥

इति ।

होलिका मलमासे न भवति । इयं मन्वादिरपि ।

सा तु पौर्वाह्णिकी ग्राह्या ।

मलमासे सति मासद्वयेऽपि श्राद्धं कार्य्यमित्युक्तं प्राक् ।

## अथ चैत्रकृष्णप्रतिपदि वसन्तोत्सवः कार्य्यः ।

सा च औदयिकी ग्राह्या ।

प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।

इति भविष्योक्तेः ।

दिनद्वये तथात्वे पूर्वा ग्राह्या ।

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्त्तव्या प्रतिपत् सर्वदा बुधैः ॥

इति वृद्धवसिष्ठोक्तेः ।

अत्र स्नानादिधर्मोऽभिहितः ।

तथा च हेमाद्रौ भविष्ये—

चैत्रे मासि महाबाहो पुण्ये तु प्रतिपद्दिने ।
यस्तत्र श्वपचं स्पृष्ट्वा स्नानं कुर्य्यान्नरोत्तमः ।
न तस्य दुष्कृतं किञ्चिन्नाधयो व्याधयस्तथा ॥

तथा—

प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।
कृत्वा चावश्यकार्य्याणि सन्तर्प्य पितृदेवताः ।
वन्दयेद्धोलिकाभूतिं सर्वदुःखोपशान्तये ॥

तन्मन्त्रस्तु—

वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च ।
अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव ॥

इति ।

अत्र चाम्रपुष्पप्राशनमुक्तं हेमाद्रौ—

वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च ।
संप्राश्य चूतकुसुमं सह चन्दनेन
सत्यं हि पार्थ पुरुषो नियतं सुखी स्यात् ॥

तन्मन्त्रस्तु—

चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव ।
सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये ॥

इति ।

अथ चैत्रामावास्या मन्वादि: ।

सा च अपराह्णव्यापिनी ग्राह्या । कव्यापवर्गत्वात् ।

इति फाल्गुनमासविधानानि ।

विधानपारिजातेऽस्मिन्ननन्तेन विनिर्मिते ।
प्रतिमासविधानानि कथितानि यथामति ।
हरे: प्रसादमाश्रित्य बहुग्रन्थानां निबन्धत: ।
संगृहीत: कालनयस्तेन मे स्तान्मुदे हरि: ।

इति श्रीविधानपारिजाते मासविधानानि समाप्तानि ।

---

## अथ तीर्थयात्राविधानम् ।

त्रिस्थलीसेतौ ब्रह्म:—

सर्वेषां सर्वतीर्थानि * पापघ्नानि सदा नृणाम् ।
परस्परानपेक्षाणि कथितानि मनीषिभि: ॥

परस्परानपेक्षाणि प्रत्येकमेव सर्वपापघ्नानीत्यर्थ: ।

तथा—

सर्वे प्रस्रवणा: पुण्या: सर्वे पुण्या: शिलोच्चया: ।

---

* सर्वं तीर्थानि पुण्यानि इति त्रिस्थलीसेतौ पाठ: ।

नद्यः पुण्याः सदा सर्वा जाह्नवी तु विशेषतः ॥

गारुडे—

पुत्रद्रव्यादि सन्त्यज्य तीर्थं व्रजति यो नरः ।

ब्रह्माद्या देवतास्तस्य तुष्टिं पुष्टिं ददन्ति(न्ति)च ॥

तथा—

कीर्तनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात् ।

धुनन्ति पापं तीर्थे ये ते प्रयान्ति सुखं परम् ॥

भारते एतदकरणे अनिष्टमुक्तम्—

अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।

अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥

एतेन त्रिरात्रोपवासादीनां चतुर्णां प्रत्येकं दारिद्र्याभावः फलमित्यर्थः ।

तथा—

याग्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ।

मनसा तानि गच्छेत सर्वतीर्थसमीक्षया ॥

एतत् फलमपि तत्रैवोक्तम्—

अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।

नासौ तत्फलमाप्नोति तीर्थाभिगमनेन यत् ॥

अज्ञानेनापि * यस्येह तीर्थयात्रादिकं भवेत् ।

---

* अज्ञानेनापि यस्येदमनुष्ठानमीदृशं फलमाप्यते ।
—इति ज्ञानाभावेऽपि । यात्रादिरित्यर्थः ।

सर्वकामसमृद्धः स स्वर्गलोके महीयते ॥
स्थानं च लभते नित्यं धनधान्यसमाकुलम्।
ऐश्वर्य्यज्ञानसम्पन्नः सदा भवति धर्म्मवान् ॥
पितरस्तारितास्तेन नरकाच्च पितामहाः ॥
इति।

तथा—

तीर्थान्यनुसरन् धीरः श्रद्दधानः समाहितः।
कृतपापोऽपि शुध्येत किं पुनः शुद्धकर्म्मकृत् ॥
तिर्य्यग्योनिं न गच्छेत्तु कुदेशे नैव जायते।
स्वर्गे वसति वै विप्रो मोक्षमार्गञ्च विन्दति ॥ इति।

अथ तीर्थस्वरूपम्।

गारुडे—

रजस्तमोविरहितैस्तपसा धूतकल्मषैः।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥

भारते—

लोकेऽस्मिन् द्विविधं तीर्थं स्वच्छन्दं देवनिर्म्मितम्।
स्वयं भूतं प्रभासाद्यं निर्मितं (निर्म्मितं) देवनिर्म्मितम् ॥

तत्पुनश्चतुर्विधम्—

चतुर्विधानि तीर्थानि स्वर्गे मर्त्ये रसातले।
दैवानि मुनिशार्दूल आसुराण्यार्षकाणि च ॥
मानुषाणि च लोकेषु विख्यातानि सुरादिभिः।
तत् पुनर्भौमान्तरिक्षत्रिलोकस्थभेदात्त्रिविधम्।

तदुक्तं भारते—

पृथिव्यां नैमिषं पुण्यमन्तरिक्षे च पुष्करम् ।
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ॥

काशीखण्डे—

शृणु देवि विशालाक्षि तीर्थं लिङ्गमुदाहृतम् ।
जलाशयेऽपि तीर्थाख्या जाता मूर्त्तिपरिग्रहात् ॥
मूर्त्तयो ब्रह्मविष्ण्वर्कशिवविघ्नेश्वरादिकाः ।
लिङ्गं शैवमिति ख्यातं यत्रैतत्तीर्थमेव तत् ॥

तथा—

न जलाप्लुतदेहस्य स्नानमित्यभिधीयते ।
स स्नातो योदमस्नातः शुचाशुचमनोमलः ॥
योऽशुचः पिशुनः क्रूरो दाम्भिकोविषयात्मकः ।
सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः ॥
दानमिज्या तपः शौचं तीर्थसेवा श्रुतं तथा ।
सर्वाण्येतानि तीर्थानि यदि भावो न निर्मलः ॥
निगृहीतेन्द्रियग्रामो यत्रैव वसते नरः ।
तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्करं तथा ॥
ध्यानपूते ज्ञानजले रागदोषमलापहे ।
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥
न शरीरमलत्यागी नरो भवति निर्मलः ।
मानसे तु मले * मुक्ते भवत्यन्तः सुनिर्मलः ॥

---

* विषयेष्वतिसंरागो मानसो मल उच्यते ।
तेष्वेव हि विरागोऽस्य नैर्मल्यं समुदाहृतम् ।

जायन्ते च म्रियन्ते च जलेष्वेव जलौकसः ।
न च गच्छन्ति ते स्वर्गमविशुद्धमनोमलाः ॥

अथ तत्राधिकारिणः—

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।
तीर्थयात्रां प्रकुर्वीत स्वर्गमोक्षफलाप्तये ॥

यत्तु ब्राह्मे—

यस्येष्टिधर्म्मेष्वधिकारितास्ति
वरं गृहं गृहधर्म्माश्च सर्वे ।
एवं गृहस्थाश्रमसंस्थितस्य
तीर्थे गतिः पूर्वतरैर्निषिद्धा ॥

इति ।

कौर्म्मेऽपि—

यः स्वधर्म्मान् परित्यज्य तीर्थसेवां करोति हि ।
न तस्य तीर्थं फलति इह लोके परत्र च ॥

इति च गृहस्थस्य तीर्थयात्रानिषेधवचनं । तदग्निहोत्राद्यनुष्ठानशक्तादरिद्रविषयम् । यस्येष्टिधर्म्मेष्वधिकारितास्ति इति पूर्वोक्तविशेषवचनात् । अशक्तदरिद्रादेस्तदसम्भवात् । यद्वा साग्निकस्य पत्नीसहितस्यैव गृहस्थस्य तीर्थयात्राधिकारः ।

सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः ।
सर्वपापविनिर्मुक्तो यथोक्तां गतिमाप्नुयात् ॥

इति कौर्म्मोक्तेः ।

प्रायश्चित्ती प्रजेत्तीर्थं पत्नीविरहितोऽपि वा ।
यज्ञेष्वनधिकारी वा यद्वा मन्त्रस्य साधकः * ॥
इति स्मरणाच्च ।

भारते—

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ।
न वियो (निं)गं † प्रजन्त्येते स्नातास्तीर्थे तथा स्त्रियः ॥
इति वचनात् क्षत्रियादेरप्यधिकारः ।

यत्तु—

तपोजपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनं चेति स्त्रीशूद्रपतनानि षट् ॥
इति ।

तथा—

विप्रसेवैव शूद्रस्य विशिष्टं धर्मलक्षणम् ।
यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥
इति मनुवचनं तदेषां स्वातन्त्र्यनिषेधपरम् ।
बाल्ययौवनवत्या वा ‡ वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्य्यं गृहेष्वपि ॥
इति तदुक्तेः ।

---

* यद्व वा मन्त्रसाधकः । रत्नाकरे पाठः ।

† वियोनिं विरुद्धां योनिं पश्चियोनिं वा ।
वियोगमिति पाठे बन्धुभिः सह विरहं न व्रजन्ति लभन्ते इत्यर्थः ।

‡ बालया वा युवत्या वा इति पाठं युक्तं मन्यामहे ।

अभर्तृकायास्तु भर्त्रा सहैव।

नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम्।
पतिं संसेवते या तु तेन स्वर्गे महीयते॥

इति मनूक्तेः।

शूद्रस्य तु विप्रसेवनाविरोधेन।

शूद्रस्तु द्विजशुश्रूषाविरुद्धं धर्ममाचरन्।
नरके पच्यते तद्वद्वेदश्रवणकीर्त्तनात्॥

इति भारतोक्तेः।

प्रायश्चित्तार्थं तु पत्न्यादिरहितस्याप्यधिकारः।

प्रायश्चित्ती व्रजेत्तीर्थं पत्नीविरहितोऽपि वा॥

इति पूर्वोक्तेः।

अथ तीर्थयात्राविधिः।

तत्रादौ तीर्थमाहात्म्यम् --

भगवो वसवो रुद्रा आदित्या मरुतोऽनलाः।
विश्वेदेवास्तुषाः साध्या नागा यक्षाश्च राक्षसाः॥
इत्याद्यनेकदेवाश्च तीर्थैः सिद्धिमवाप्नुवन्।
भार्गवाङ्गिरसागस्ति विश्वामित्रात्रिकश्यपाः॥
वशिष्ठाद्या महात्मान स्तीर्थे सामर्थ्यमाप्नुवन्।
विश्वामित्रः सपुत्रस्तु महापापमपोह्य वै॥
सुतीर्थतपसा ब्राह्म्यं प्राप्य वाशिष्ठशापतः।
त्रिशङ्कुमपि चाण्डालं विप्रं कृत्वा प्रभावतः॥

तं तु तेनैव देहेन स्वर्गलोकमवेशयत् ॥

ब्रह्मपुराणेऽपि —

पाण्डवा राज्यलाभाय दुरितोपशमाय च ।
मार्कण्डेय पुलस्त्याज सप्तर्षिप्रमुखैः सह ॥
द्वादशाब्दानि कृच्छ्राणि समादाय सिषेविरे ।
तीर्थानि तेन ते जाताः कृतकृत्या धनेश्वरः * ॥

इत्यादिभिर्वचनैस्तीर्थयात्रा अवश्यकर्त्तव्येति प्रतीयते ।

कौर्म्मे—

कथयिष्यामि ते वत्स तीर्थयात्राविधिं क्रमात् ।
आर्षेणैव विधानेन यथादृष्टं यथाश्रुतम् ॥
प्रयागतीर्थयात्रार्थी यः प्रयाति नरः क्वचित् ।
बलीवर्दं समारूढः शृणु तस्यापि यत् फलम् ॥
नरके वसते घोरे गवां क्रोधो हि दारुणः † ।
सलिलं न च गृह्णन्ति पितरस्तस्य देहिनः ॥
ऐश्वर्य्यगर्व्वान् मोहाद्वा गच्छेद् यानेन यो नरः ।
विफलं तस्य तत्तीर्थं तस्माद् यानेन न व्रजेत् ‡ ॥
गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम् ।

* राजानश्चाप्यनेनसः इति ग-पुस्तके पाठः ।

† गोक्रोधस्य दारुणत्वं दिलीपचरिते व्यक्तं । सुरभिर्हि दैवगवी मदर्चिताभिगमनेन भर्त्तृ कुपिता दिलीपं शशाप ।

‡ तस्माद् यानं परित्यजेत् इति ग पुस्तके पाठः ।

नरयाने तदर्द्धं स्यात् पद्भ्यां तच्च चतुर्गुणम् ॥

पद्भ्यामिति केवलाभ्यामित्यर्थः ।

तीर्थानुगमनं पद्भ्यां तपः परमिहोच्यते ।

तदेव कृत्वा यानेन स्नानमात्रफलं लभेत् ॥

इति विशेषोक्तेः ।

यानमर्द्धफलं हन्ति तदर्द्धं छत्रपादुके ।

वाणिज्यं त्रीं स्तथा भागान् सर्वं हन्ति प्रतिग्रहः ॥

तथा —

हिर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च ।

यानमर्द्धं चतुर्थांशं छत्रोपानहमेव च ॥

तस्मादेतैर्विहीनस्तु सर्वं तीर्थफलं लभेत् ।

इति जाबालिवचनात् सर्वमेव यानादिकं त्याज्यम् ॥

यत्तु —

नरयानं चाश्वतरी इत्यादिसहितोरथः ।

तीर्थयात्रादिकर्तॄणां यानदोषकरं न हि ॥

इति कूर्म्मपुराणवचनं तदशक्तविषयम् ।

असमर्थस्तु यानेन तीर्थयात्रां स(मुच)माचरन् ।

यथोक्तफलमाप्नोति स्वशक्त्या धर्म्ममाचरन् ॥

इति गोभिलोक्तेः

अथ तीर्थयात्रायाः प्रायश्चित्तार्थं

कृत्यचिन्तामण्युक्तमपि कारीलिख्यते ।

तत्र प्रायश्चित्तविधिना सङ्कल्पपूर्वकं पद्भ्यां षष्टियोजनगतस्य भागीरथ्यां स्नानं षडब्दकृच्छ्रसमम् ।

अथ एकैकस्य यात्रायोजनस्य वृद्धौ अर्धकृच्छ्रवृद्धिः परिकल्पनीया । षष्टियोजनगतस्य षडब्दविभागाद्दशयोजनगतस्य एकाब्दप्रायश्चित्तं भवति । एवंच तृतीयांशाधिकदेशादागतस्य भागीरथ्यां विधियुक्तस्नानेन एकः कृच्छ्रः सिध्यति । मध्ये चेत् पर्वतादिव्यवधानं । तदभावे सुगमत्वाद् योजनागतस्य अशक्तस्य गङ्गास्नानेन एकः कृच्छ्रः स्यात् । अशक्तस्य तु अर्धयोजनादागतस्य एकः कृच्छ्रः । अशक्तस्यापि मार्गस्य दुर्गमत्वे अर्धयोजनादागतस्य एवमेव कल्प्यम् । पूर्वं सप्तमातृका राक्षसत्रासभयात् नद्यो बभूवुः भये व्यपगते पुनर्देवता जाताः । ततो नद्यः शुष्काः । तेषु स्थलेषु भागीरथी सप्तवर्णा सप्तधा अवहत् । तासु विष्णुगङ्गादिसप्तमातृकासु सकृत्स्नानं षष्टियोजनागतस्य षडब्द(पाद) कृच्छ्रसमम् । प्रयागे वाराणस्यां गङ्गाद्वारे गङ्गासागरसङ्गमे च द्विगुणम् । यमुनायां विंशतियोजनागतस्य स्नानं द्व्यब्दकृच्छ्रसमम् * । मथुरायां द्विगुणम् । सरस्वत्यां चत्वारिंशद्योजनागतस्य चतुरब्दकृच्छ्रसमम् । प्रभासे द्वारवत्यां च द्विगुणम् । एतयोर्नद्योर्यात्रायोजनवृद्धौ पादकृच्छ्रवृद्धिः कल्प्या । क्रमस्तु पर्वताद्यभावात् पूर्वोक्तरीत्या कल्प्यः । दृषद्वती-शतद्रु-विपाशा-वितस्ता-इरावती-मरुद्वृधाऽसिक्नी मधुमती पयस्विनी घृतवत्यादिदेवनदीषु स्नानं त्रिंशत्कृच्छ्रसमम्

* द्व्यब्दकृच्छ्रसममित्यत्र द्व्यर्धकृच्छ्रसममित्याकरे पाठ. ।

पञ्चदशयोजनागतस्य । चन्द्रभागा-वेत्रवती-सरयू-गोमती-देविका-मन्दाकिनी-सप्तस्रवन्ती-गण्डक्यादिदेवनदीषु स्नानं षोडशकृच्छ्र-समम् द्वादशयोजनागतस्य ।

यासां परस्परसङ्गमे त्रिनदीफलम् । अन्यासु समुद्रगासु नदीषु षट्कृच्छ्रफलम् । महानदेषु महानद्यर्धफलम् । शोणमहानदे तु महार्धफलम् । नदेषु नद्यर्द्धफलम् । अत्रापि स्नानदिनसंख्या ज्ञेया ।

त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम् ॥

इति स्कन्दपुराणोक्तेः ।

एवमन्यत्रापि द्रष्टव्यम् । गोदावर्यां यात्रायोजनतश्चो पाद-कृच्छ्र वृद्धिः । सिंहगे गुरौ सर्वत्र जाह्नवीसमम् । कन्यास्थे गुरौ कृष्णवेण्यां(सर्वत्र)जाह्नव्यर्धम् । तुलास्थे कर्कटस्थे च रवौ तुङ्ग-भद्रायां जाह्नव्यर्धम् । कर्कटस्थे रवौ कृष्णवेण्यां मलयहारि-सङ्गमे प्रयागे त्रिंशद्योजनागतस्य त्रिंशत्कृच्छ्रसमम् । भागीरथ-सङ्गमे प्रयागे द्विगुणम् । तुङ्गभद्रासङ्गमे प्रयागे त्रिगुणम् । निवृत्ति सङ्गमे प्रयागे चतुर्गुणम् । मल्लेश्वरे पञ्चगुणम् । पातालगङ्गायां मल्लिकार्जुनदर्शनेच षड्गुणम् । ततः पूर्वं षष्टिकृच्छ्रसमम् । सिन्धुस्थे द्विगुणम् । समुद्रसङ्गमे चैवम् । कावेर्यां प्रतीचीमहानद्यां च पञ्चदशकृच्छ्रफलम् पञ्चदशयोजनागतस्य । ताम्रपर्णीकृतमाला-पयस्विनीषु च द्वादशकृच्छ्रफलं द्वादशयोजनागतस्य । सह्यपादोद्भवा-नद्यः स्वदेश्यानुसारेण एकादित्रिकृच्छ्रफलप्रदाः । सर्वत्र यात्रानुक्तौ

विन्ध्यशीर्षैकोद्भवाद्विगुणाः हिमोद्भवास्त्रिगुणाः । स्मृतिपुराणादिषु अनुक्तो कुल्यायोजनागतस्य चिरात्फलदाः । अल्पनद्यः समुद्रगाः कृच्छ्रफलाः । महानद्यः कृच्छ्रद्वयफलाः । एकादिषड्योजनं गताः कुल्याः । ततो द्वादशयोजनादर्वाक् अल्पनद्यः । ततश्चतुर्विंशतियोजनगा नद्यः ।। एतदधिकयोजनगाः समुद्रगाश्च महानद्यः । सोपवासं महानदीस्नानम् योजनादर्वागपि कृच्छ्रसमम् । शून्यादि कुत्सितनाम्न्यः पापनद्यश्च वर्ज्याः । समुद्रस्नानं दर्शे । अन्यत्र तन्निषेधात् * । देवतासमीपे सरोनदीसङ्गमेषु च सर्वदा कार्य्यं समुद्रस्नानम् । तत्र पञ्चदशयोजनागतस्य पञ्चदश कृच्छ्रसमम् । अतिप्रख्यातदेवतासमीपे तद् द्विगुणम । तत्रापि देश काल वयः शक्ति नियमानां विशेषेण विशेषो न्यूनेन न्यूनता च कल्प्या । तत्र स्नात्वा तद्देवदर्शने तत्त्रिगुणम् । स्नात्वा रामेश्वरदर्शने षष्टिकृच्छ्रसमम् । विन्ध्यदेशीयानां सेतुरामेश्वरदर्शने जाह्नव्यं त्रिगुणं फलम् । जाह्नवी — केदारयोस्तथैव । दक्षिणदेशीयानां जाह्नव्यं षड्गुणम् । गङ्गादेशीयानां सेतुरामेश्वरदर्शने षड्गुणम् । स्कन्ददर्शने त्रिंशत्कृच्छ्रसमं त्रिंशद्योजनागतस्य । यत्र गङ्गासंज्ञास्ति तत्र चैवम् । सर्वत्र भाषाभेदपर्वतादिना यात्राङ्गासो भवत्येव ।

* अन्यत्र वारिधौ सेव्यो न स्प्रष्टव्यो कदाचन ।
अन्यत्र मन्दवारे तु वारिधिं पर्वणि स्पृशेत् ॥
इतिवचनाद्दर्शे एव समुद्रस्नानविधानात् ।

श्रीरङ्ग-पद्मनाभ-पुरुषोत्तम-चक्रकोट-महालक्ष्मीदर्शने स्व-स्थानावस्थाने च त्रिंशद्योजनागतस्य त्रिंशत्-कृच्छ्रसमम् । केदारे त्रिगुणम् । सर्ववैष्णव-माहेश्वर-सौर-शाक्तेय-ज्येष्ठादि-पीठदर्शने पञ्चदशकृच्छ्रसमम् । प्रयागे द्विगुणम् । गङ्गो-वलेऽपि तथैव । श्रीशैलपददर्शनं षष्टिकृच्छ्रसमम् । श्रीशैले एकैकद्वारदर्शनं द्वादशकृच्छ्रसमम् । अन्यप्रख्यातदेवतादर्शनेषु षट्कृच्छ्रफलम् । सिद्धक्षेत्रे स्वयम्भूदर्शने च तथैव । अन्यक्षेत्रे स्वयम्भूदर्शने च त्रिकृच्छ्रसमं त्रियोजनागतस्य । सर्वत्रापि देशकालविशेषेण फलविशेषोऽस्त्येव । सर्वत्र उक्तदशांश-फलं नीरस्थस्य योजनादर्वाग् भवति । तत्रापि क्रोशसंख्यया तार-तम्यमस्तीति याथाहत्तो फलतारतम्यं कल्प्यम् । तीर्थतीरे स्थितस्यापि विधिवत् स्नात्वा धौतं वासः परिधाय केशेषु शुष्केषु पुनः स्नातव्यम् । एवं द्वादशस्नानैर्योजनाभावेऽपि कृच्छ्रो भवति । तीर्थयात्रायामेकभक्ताधःशयने अनृतौ ब्रह्मचर्यमित्यादि नियमाः कार्य्याः ।

अथ कृच्छ्रो नाम—

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ।
यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ॥

इति याज्ञवल्क्योक्तो ग्राह्यः । एवं द्वादशाब्दसाध्यस्य एते प्रत्याम्नाया ज्ञेयाः ।

योजनपरिमाणं तु —

तिर्य्यग् यवोदराण्यष्टौ ऊर्द्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत् सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् * ॥

इत्युक्तलक्षणमवधेयम् ।

एवं स्थिते यथा मनःपूतं भवति तथा कार्य्यम् । परार्थेन गतः षोड़शांशं लभते । प्रसङ्गेन चार्द्धफलम् । अनुषङ्गेण तीर्थं प्राप्य स्नाने स्नानफलमेव न यात्राफलम् । पितृपितृव्यपितामह-प्रपितामह-भ्रातृ-मातामह-मातुल-श्वशुर-पोषकार्थद-गुर्वाचार्य्योपाध्यायार्थं तेषां पत्न्यर्थं मातृष्वसृ पितृष्वस्रर्थंच गत्वा स्वयमष्टमांशं लभते । साक्षात्पित्रोस्तु पुत्रश्चतुर्थांशं लभते ।

दम्पती च सपत्न्यश्च लभन्तेऽर्द्धं मिथः फलम् ।
अर्थिनां न फले ह्रासः शुश्रूषाफलमीदृशम् ॥

कर्कटादौ मासद्वये निरन्तरं रजस्वला महानद्यः समुद्रगाः ।

---

* अन्यत्रापि प्रकारान्तरम् —

वितस्तिद्विगुणोऽरत्निस्ततः किष्कुस्ततो धनुः ।
धनुःसहस्रे द्वे क्रोशश्चतुःक्रोशं तु योजनम् ॥
सार्द्धगव्यूतिदैर्घ्यं च योजनं परिचक्षते ।
गव्यूतिं पञ्चशाखचतुर्भिः प्रतिमां विदुः ॥

तास्वपि भागीरथी गौतमी चन्द्रभागा सरस्वती सिन्धुर्मेघा-
नदी सरयूश्च त्रिरात्रं रजस्वलाः ।

शुष्यन्ति याः कुसरितो ग्रीष्मकाले नवोदकैः ।
पूर्य्यन्ते चैव वर्षासु दशाहं ता रजस्वलाः ॥

अतस्तत्र तत्र स्नानतर्पणादिकमप्रशस्तत्वान्न कार्य्यम् । तीर-
वासिनां तु न निषेधः ।

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥

इति तीर्थप्रत्याम्नायः ।

अथ यात्राकालः ।

षष्ठ्यष्टमीद्वादशीषु न गच्छेत्त्रिदिनस्पृशि ।
पूर्णिमाप्रतिपद्दर्शरिक्तावमदिनेषु च ॥

नक्षत्राणि रत्नमालायाम्—

हस्तेन्दुमैत्रश्रवणाश्विपौष्ण-
पुष्यश्रविष्ठाश्च पुनर्वसुश्च ।
श्रेष्ठानि धिष्ण्यानि नवप्रयाणे
त्यक्ता त्रिपञ्चादिमसप्ततारा: ॥
चित्राविशाखानलसर्पयाम्य-
वायव्यपित्र्याम्बरदैवतानि ।
यात्रास्वनिष्टान्यपराणि भानि
स्मृतानि नेष्टानि न निन्दितानि ॥

इन्दुर्मृगशिरा मैत्रमनुराधा पौष्णं रेवती त्रिपञ्चादिमसप्त-

तारा: त्रिजन्मप्रत्यरिजन्मवधाख्या: । अनल: . कृत्तिका सर्पो-ऽश्लेषा याम्यं भरणी वायव्यं स्वाती पित्र्यं मघा। अन्यत् सुगमम्।

वारस्तुवार-करसूर्यसुतावनीज-
तीक्ष्णत्रिधामशुभद: कथित: प्रयाणे।
अन्यत्र ये शुभफला: कथिता: प्रयाणे
सोमोऽपि चात्र गदित: शुभद: क्वचित्तु।

तथा —

व्यतीपात: परिघार्द्धं वैधृतियोगश्च विष्टिकरणं च।
क्रान्तिसमत्वं कुलिका यमघण्टान्तानि न शुभदानि॥

तत्र:—

नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा
संन्यासो देवयात्रा व्रतनियमविधि: कर्णवेधस्तु दीक्षा।
मौञ्जीबन्धोऽथ चूडा परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्या: सद्भि: प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च॥

तथा —

रविक्षेत्रं गते जीवे जीवक्षेत्रं गते रवौ।
वर्ज्जयेत् सर्वकर्म्माणि व्रतस्वस्त्ययनानि च॥

तथा —

गुर्वादित्ये गुरौ सिंहे शुक्रे चास्तमुपागते।
त्यजेद् यानं * महादानं व्रतं देवविलोकनम्॥

* यानमित्यत्र दानमिति (ग) पुस्तके पाठ:,
स एव समीचीनतया प्रतिभाति।

तथा —

वापीकूपतडागयागगमन-क्षौर-प्रतिष्ठा-व्रतं
विद्यामन्दिरकर्णवेधनमहादानं च गोसेवनम् ।
तीर्थस्नानविवाह-देवभवनं मन्त्रादि-देवेक्षणं
दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे ॥

तथा —

गुर्व्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे ।
याम्यायने हरौ सुप्ते सर्वकर्म्माणि वर्ज्जयेत् ॥
सिंहस्थितं मघासंस्थं गुरुं यत्नेन वर्ज्जयेत् ।
अन्यत्र सिंहभागेषु विवाहादि विधीयते ॥

इदमपूर्वविषयम् —

अपूर्वदेवतां दृष्टा गुरुः स्युर्नष्टभार्गवे ।
मलमासेऽप्यनावृत्ततीर्थयात्रां परित्यजेत् ॥

इति गार्ग्योक्ते ।

अनावृत्ततीर्थयात्रामपूर्वतीर्थयात्रामित्यर्थः ।

तथा —

अतिचारगतोजीवस्तं राशिं नैति चेत् पुनः ।
लुप्तः संवत्सरो ज्ञेयः सर्वकर्म्मसु गर्हितः ॥

क्वचिदस्यापवादः —

वृषे मेषे झषे कुम्भे यद्यतीचारगो गुरुः ।
न तत्र कार्य्यलोपः स्यादित्याहुर्गालवादयः ॥

क्वचित्तु गुर्व्वादित्योर्न्न दोषाभाव उक्तः ।

यथा —

गोदावर्य्यां गयायां च श्रीशैले सह्यपर्वते ।
सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥

वायुपुराणेऽपि —

गयायां सर्वकालेषु पिण्डं दद्याद्विधानतः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ।
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥

अत्र श्राद्धस्य यात्रापूर्वकत्वाद् यात्रापि न निषिद्धेति केचित्। अत्र अन्ये लग्नलग्नांशचन्द्रताराशुद्ध्यादयो ज्योतिर्विद्भ्योऽवगन्तव्याः ।

इति यात्राकालः ।

## अथ गमनविधानम् ।

काशीखण्डे —

तीर्थयात्रां चिकीर्षुः प्राग् विधायोपोषणं गृहे ।
गणेशं च पितॄन् विप्रान् साधून् श(भ)क्त्या प्रपूज्य च ॥
कृतपारणको हृष्टो गच्छेन्नियमकृत् पुनः ।
आगत्याभ्यर्च्य च पितॄन् यथोक्तफलभाग् भवेत् ॥

आगत्येति। तीर्थयात्रां कृत्वा गृहमागत्य पुनः श्राद्धादिकं कार्य्यमित्यर्थः ।

यो यः कश्चित्तीर्थयात्रां तु गच्छेत्
सुसंयतः स च पूर्वं गृहे स्वे ।
कृतोपवासः शुचिरप्रमत्तः
संपूजयेद् भक्तिनम्रो गणेशम् ।

देवान् पितॄन् ब्राह्मणांश्चैव साधून्
धीमान् विप्रोवित्तयतया प्रयत्नात् ॥
प्रत्यागतश्चापि पुनस्तथैव
देवान् पितॄन् ब्राह्मणान् पूजयेच्च ।
एवं कुर्वंस्तस्य तीर्थाद् यदुक्तं
फलं तत्स्यादात्र सन्दिग्धमस्ति ॥

इति ब्रह्मपुराणवचनात् ।

अत्रायं क्रमः । पूर्वदिने उपोष्य परदिने गणेशादीन् सम्पूज्य-श्राद्धं कृत्वा साधून् विप्रांश्च वित्तादिना सन्तोष्य कार्पटिकवेशं कृत्वा तीर्थं गच्छेत् ।

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ॥
विधाय कार्पटीवेशं ग्रामं कृत्वा प्रदक्षिणम् ।
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम ।
ततः(कृत्वा)प्रतिदिनं गच्छेत् प्रतिग्रहविवर्ज्जितः ॥

इति वायुपुराणोक्तेः ।

केचित्तु गयायात्रायामेवकार्पटिकवेशः । गया-यात्रा-मुपक्रम्य तद्विधानात् । न तु तीर्थान्तरयात्राया मित्याहुः ।

केचिदत्र उपवासदिने श्राद्धात् पूर्वं मुण्डनमप्याहुः ।
प्रयागे तीर्थयात्रायां मातापितृवियोगतः ।
कचानां वपनं कार्य्यं वृथा न विकचो भवेत् ॥

इति विष्णूक्तेः ।

इदं च वपनं प्रायश्चित्तार्थं तीर्थयात्रायामेव इत्यन्ये ।

कैशग्रहणमुनखादीनां वपनं न च शस्यते ।
अतो न कार्य्यं वपनं गयाश्राद्धार्थिना सदा ॥
ये भारतेऽस्मिन् पितृकर्म्मतत्पराः
सम्प्रार्थ्य केशाननिभक्तिभाविताः ।
ऋणत्रयार्थं पितृतीर्थमागता
स्तेषामृणं संक्षयमेष्यति ध्रुवम् ॥

इति वपननिषेधात् ।

यत्तु —

गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम् ।

इति

तदनुपलक्षणपरम् ।

काशीखण्डे —

तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा ।

तथा —

यदह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे ।
उपवासः प्रकर्त्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ।

मुण्डने तु देवलः —

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।
वर्ज्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥

अत्र विशेषः स्मृत्यन्तरे —

अर्द्धमब्दाद्विमासोनात् पुनस्तीर्थं व्रजेद् यदि ।

तदा तद्वपनं शस्तं प्रायश्चित्तकृते द्विज ।

प्रयागे प्रतियाग्यं तु योजनत्रय इष्यते ।

क्षौरं कृत्वा तु विधिवत् ततः स्नायात् सितासिते ।

तथाच बृहस्पतिः —

क्षौरं नैमित्तिकं कार्य्यं निषेधे सत्यपि ध्रुवम् ।

पित्रादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके ।

अपरार्के स्कान्दे —

उदङ्मुखः प्राङ्मुखोवा वपनं कारयेत् सुधीः ।

केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ।

इदं प्रयागे सधवानामपि समूलं भवतीति केचित् ।

सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलद्वयम् ।

एवमेव हि नारीणां शस्यते वपनक्रिया ॥

इतिवचनाद् द्व्यङ्गुलच्छेदएव युक्त इत्यन्ये । एतत् प्रयागे नित्यं नान्यत्र । इदं जीवत्पितृकेणापि तीर्थे कार्य्यम् ।

न च मुण्डनं पिण्डदानं च इति दक्षवचनविरोधः ।

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।

यो वापयति लोमानि स पुत्रः पितृघातकः ॥

इति स्मृत्या तत् सद्भावात् । एतत् प्रयागे प्रतियाग्यं तीर्थान्तरे चाद्ययात्रायामेव इति शिष्टाः ।

श्राद्धं चात्र षड्दैवतं नवदैवतं द्वादशदैवतं वा देशाचारेण पार्वणवत् कार्य्यम् । इदं घृतश्राद्धमित्युच्यते । घृतप्रधानत्वात् ।

गच्छेद्देशान्तरं यस्तु श्राद्धं कुर्य्यात् स सर्पिषा।
यात्रार्थमिति तत् प्रोक्तं प्रवेशे न च संशयः॥

इति विष्णुपुराणोक्तेः।

द्रव्यान्तराश्रवणाद् घृतमात्रद्रव्यकमिदमिति केचित्। तदसाम्प्रतम्। घृतमात्रस्य स्वतन्त्रभक्ष्यत्वाभावेन श्राद्धद्रव्यत्वासम्भवात्। सर्पिषेति तृतीयायाः प्रतिसर्द्धिप्रधानभूतद्रव्यान्तरानुपेक्षार्थकत्वाच्च। एवं चात्र —

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम्॥

इति मनुवचनस्थतिलैरित्यादिवत्तृतीया। निबन्धकारैरपि एवमेव व्याख्यातम्। इदं च दर्शश्राद्धधर्मकम्। विशेषानुक्तेः। अत्र ग्रामान्तरं क्रोशाभ्यन्तरस्थं ग्राह्यम्। अध्वनि च क्रोशपूरणे" इत्यादिना श्राद्धानन्तरं क्रोशगमननिषेधात्।

अत्र उपवासासमर्थस्य विधिः—

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यम्।
यत् पञ्चगव्यं यदि वाथ वायुः
प्रशस्तमत्रोत्तरमुत्तरं च॥

इत्युक्तरूपोक्तेः।

अत्र कार्पटिकवेशो गमनकालएव। न तु स्नानादिकाले। नग्नः काषायवाससा इति तन्निषेधादिति केचिदाहुः।

अन्ये तु उपक्रमादारभ्य यात्रासमाप्तिपर्यन्तं प्रतिग्रहादि निवृत्तिवत् सदा कार्पटिकवेशधारणमित्याहुः। तत्र देशाचारतो व्यवस्था कल्प्या।

## अथ तीर्थयात्राया नियमाः।

व्यासः—

काम क्रोधं च लोभं च यो जित्वा तीर्थमाविशेत्।
न तेन किञ्चिदप्राप्यं तीर्थाभिगमनाद् भवेत्॥

शङ्खः—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते॥
प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित्।
अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते॥
अकल्ककोनिरारम्भो लघ्वाहारो जितेन्द्रियः।
विमुक्तो दुष्टसंसर्गैः स तीर्थफलमश्नुते॥

इति

मात्स्येऽपि—

अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते॥

इति

यस्य हस्तौ च पादौ च इत्यादेरयमर्थः । हस्तसंयमः परताडनपरस्वादिग्रहणनिवृत्त्या । पादसंयमः पादताडनागम्यदेशगतिनिवृत्त्या । मनःसंयमोऽनिष्टचिन्तनादिनिवृत्त्या * । विद्या तीर्थमहिमज्ञानम् । तप उपवासैकभक्तादि । कीर्त्तिः सच्चरित्रत्वेन प्रसिद्धिः ।

प्रतिग्रहनिवृत्तिर्यात्रोपक्रमादनन्तरं यतिब्रह्मचार्य्यादीन् वर्ज्जयित्वा तेषां द्रव्यसंग्रहनिषेधात् । प्रतिग्रहं विना यात्राया अनिर्वाहाच्च । येन केनचित् सन्तुष्टोमिष्टभक्षणादावलोलुपः अकल्कको निर्दम्भः । निरारम्भः द्रव्यार्थ–क्रयविक्रयादिव्यापारशून्यः । लघ्वाहारः स्वल्पभोजी । जितेन्द्रियः इन्द्रियाणां स्वविषयासक्तिशून्यः । अत्र ब्रह्मचर्य्यरूपेन्द्रियजय ऋतुकालं विना ।

तीर्थानि गच्छता नित्यमृतौ ब्रह्मचारिणा ।

इति स्मृतेः ।

तथा —

चित्तमन्तर्गतं दुष्टं तीर्थस्नाने न शुध्यति ।
शतशो जलधौतं तु सुराभाण्डमिवाशुचि ।

---

* परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।
इति त्रिविधपापनिवृत्तिर्मनःसंयम इति नारायणभट्टः ।

ब्रह्मपुराणे—

गङ्गादितीर्थेषु वसन्ति मत्स्या
देवालये पक्षिसंघाश्च राजन् ।
भावोज्झितास्ते न फलं लभन्ते
तीर्थाच्च देवायतनाच्च तस्मात् ॥
भावं ततो हृत्कमले निधाय
तीर्थानि सेवेत समाहितात्मा ।

अन्यत्रापि —

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥

तेन भक्तिभावं मनसि निधाय तीर्थं कुर्य्यादिति भावः। एते च हस्तसंयमादयो नियमास्तीर्थयात्रा तीर्थस्नानादिसकलकर्माङ्गभूताः स तीर्थफलमश्नुते इतिसामान्योक्तेः । अन्यथा दोष उक्तः ।

कौर्म्मे —

तीर्थयात्रां प्रकुर्वन्ति दम्भेन कपटेन(वा)पि । •
तीर्थे मृता न सिध्यन्ति ते नरा वरवर्णिनि ॥
संप्रस्थितस्तीर्थयात्रां ब्राह्मणान्नमश्नुते ।
मासो प्रतिनिवर्त्तेत तदन्नं तस्य जीवितम् ॥
तीर्थं गच्छन् द्विजः सन्ध्याग्निश्च एकत्र ना(वा)चरेत् ।

दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ।

इति स्मृतेः ।

गत्यन्तरासम्भवे पूर्ववद् ज्ञेयम् ।

एवं तीर्थं गच्छतो यदि मध्ये तीर्थान्तरमापतति तदा तत्र स्नानश्राद्धादि प्रवश्यं कर्त्तव्यम् । प्रासङ्गिकत्वात् ।

पादं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ।

इति स्मृतेः ।

तत्रापि उपवासक्षौरे स्यातामिति केचित् ।

यात्रायां यदा कर्मनाशाकरतोयादिनिषिद्धनदी आपतति तदा यथा जलस्पर्शादि न भवति तथातरितव्यम् ।

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात् पुनः संस्कारमर्हति ।

इति स्मृतेः ।

एवमन्येऽपि शिष्टाचारप्राप्तधर्माः कर्त्तव्याः ।

यदा तु तीर्थं प्रति चलितस्तीर्थमप्राप्यैव मृत स्तत्र विशेषो गारुडे—

यस्तीर्थसम्मुखोभूत्वा व्रजन्नगने कृते ।
चेन्म्रियेदन्तराले तु स्तीर्थानां मण्डलं व्रजेत् ॥

चनगने मासोपवासादिरूपव्रते च कृते इति चकारोऽध्याहार्यः ।

द्विविधस्यापि पथ्यन्तराले मृतस्य ऋषिलोकप्राप्तिर्भवतीत्यर्थः ।

इति तीर्थयात्रागमनविधानम् ।

---

## अथ तीर्थप्राप्तिदिनकृत्यम् ।

तत्र यदि यानारूढ़ः सोपानत्को वा गच्छेत् तदा तीर्थं प्राप्त-दिने यावान् मार्गः पादचारेण गन्तुं शक्यस्तावन्तं मार्गं यानादि-परिहारेण गत्वा तीर्थं दृष्टिपथावतीर्णे साष्टाङ्गं प्रणम्य शिरोवेष्टनकञ्चुकादि परित्यज्य तीर्थं गच्छेत् ।

यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः ।
लुठित्वा लोठनीं तत्र तीर्थं गच्छेत्ततो बुधः ॥

इति स्मृतिः ।

लोठनी अष्टाङ्गप्रणामः * । ततः फलपुष्पादि तीर्थे समर्पयेत् ।

---

* पद्भ्यां कराभ्यां जानुभ्यां शिरसा वक्षसा तथा ।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः ।

ततः —

प्रथमं चालभेत्तीर्थं प्रणवेन जलं शुचि ।

अवगाह्य ततः स्नायाद् यथावन्मन्त्रयोगतः ॥

प्रणवेन तीर्थं स्पृष्ट्वा शुचि जलमवगाहेत् । ततः अवगाहन-मन्त्रैः सचेलस्नानं कर्तव्यम् ।

मन्त्राश्च प्रभासखण्डे —

ॐ नमो(नमोऽस्तु) देवदेवाय शितिकण्ठाग्रदण्डिने ।

रुद्राय चापहस्ताय चक्रिणे वेधसे नमः ॥

सरस्वती च सावित्री वेदमाता गरीयसी ।

सन्निधात्री भवत्वत्र तीर्थपापप्रणाशिनी ॥

सर्वेषा मेव तीर्थानां मन्त्रएष उदाहृतः ।

यथा —

सागरस्वरनिर्घोष दण्डहस्तासुरान्तक ।

जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां जनार्दन ॥

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।

भैरवाय नमस्तुभ्यमनुज्ञां(देहि मे प्रभो) दातुमर्हसि ।

एतान् मन्त्रान् समुच्चार्य तीर्थे स्नानं समाचरेत् ।

अन्यथा तत्फलस्यार्द्धं तीर्थेभ्यो हरति ध्रुवम् ॥

इति

ततः सङ्कल्पपूर्वकं स्नात्वा वपनं कुर्य्यात् ।
पूर्वमावाहनं तीर्थे मुण्डनं तदनन्तरम् ।
ततः स्नानादिकं कुर्य्यात् पश्चाच्छ्राद्धं समाचरेत् ।

इति स्मृतेः ।

अत्र स्नानादिकमित्यत्र आदिशब्दादुपवासो ग्राह्यः ।

उपवासं ततः कुर्य्यात्तस्मिन्नहनि सुव्रतः ।
तीर्थोपवासाद्देवेशि अधिकं नास्ति किञ्चन ॥

इति स्मृतेः ।

यत्तत्र काशीखण्डे —

यदह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्व्ववासरे ।
उपवासः प्रकर्त्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ॥

इति वचनं तीर्थप्राप्तेः पूर्व्वदिने उपवासविधायकम् । तत्तु काशीप्रकरणस्थत्वात् काशीमात्रपरमिति केचित् । काशीप्रकरणस्थत्वेऽपि सकलतीर्थसाधारणविध्युपक्रमात् पूर्ववदनेन सह अस्य विकल्प इत्यपरे । ततश्च तीर्थप्राप्तेः पूर्वदिने तद्दिने वा तीर्थोपवासः कर्त्तव्य इति सिध्यति । तत्र ।

तीर्थमासाद्य कुर्वीत नरः शुचिरुपोषणम् ।
उपवासविशुद्धात्मा कर्त्तव्यं कर्त्तुमर्हति ।

इतिस्मृतौ तीर्थप्राप्तेरेव उपवासनिमित्तत्वदर्शनात् ।

## अथ तीर्थे मुण्डनविधानम् ।

त्रिस्थलीसेतौ देवलः —

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् * ॥

विरजमुत्कलदेशे प्रसिद्धं † दक्षिणदेशस्थलोणक्षेत्रमपि विरजम् । तथाप्रसिद्धेर्विशालं बदरीक्षेत्रमिति केचित् । तन्न । तन्माहात्म्ये वपनविधानात् ।

अत्र केचिदाहुः । सर्वाणि तीर्थानि सन्ति यस्मिन्निति-बहुव्रीहिणा सर्वतीर्थशब्दस्य प्रयागमात्रपरत्वात्तत्रैव उपवासवपने भवतो नान्यत्र इत्याहुः । तन्न । एकवचनेन विग्रहे अन्यप-दार्थस्य प्रयागस्य प्रकृतस्यार्थस्य एकत्वात् सर्वतीर्थेष्विति बहुवचन प्रयोगासङ्गतेः ।

---

* यत्र धर्मराजेन गयासुरमौलौ विरजाद्रिः स्थापितः ।
तदुक्तं वायवीये —
नाभ्यां धर्मं ... विरजादिना ।
नाभिकूपसमीपे तु देवी तु विरजा स्थिता
† क्वचित्तु नैमिषं पुष्करं गयामिति पाठः ।

प्रयागे वपनं कुर्य्याद्गयायाञ्च पिण्डपातनम्।
दानं दद्यात् कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत्।

एतदपि पातकक्षयलाभपरं न तु तीर्थान्तरे तन्निषेधपरम्।

गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि।
आधाने यज्ञकाले च वापः सप्तसु विधीयते।

इति

काशीखण्डे —

सर्व्वतीर्थयात्राविधिमुपक्रम्य

तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा।
शिरोगतानि पापानि यान्ति मुण्डनतो यतः॥

इति च सामान्येन वपनविधानात्।

प्रभासखण्डेऽपि —

तस्मात् सर्व्वप्रयत्नेन केशांस्तेषु परित्यजेत्।
अश्वमेधसहस्रस्य सम्यक् स्नानमाचरेत्।
नासौ तत् फलमाप्नोति वपनाद् यच्च लभ्यते।
क्षुरकर्म्म न शस्तं स्याद् योषितां तु वरानने।
सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व तत्॥
सर्व्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम्।

इत्यादीनां तत्र तत्र वपनविधायकबहुवचनानां दर्शनात्।

वर्ज्जयित्वा कुरुक्षेत्रमिति निषेधानुपपत्तेश्च।

तस्मात् कुरुक्षेत्रादिव्यतिरिक्तमहातीर्थेषु वपनं भवतीति सिद्धम्।

## अथ प्रसङ्गात् क्षौरकालः कथ्यते ।

त्रिस्थलीसेतौ भरद्वाजः —

रव्यारसौरिवारेषु रात्रौ पाते व्रताहनि ।
श्राद्धाहप्रतिपद्रिक्ताभद्राः क्षौरेषु वर्जयेत् ॥

आरो मङ्गलः । सौरिः शनिवासरः । व्रताहमेकादश्यादि । रिक्ताश्चतुर्थीनवमीचतुर्दश्यः । भद्रा द्वितीयासप्तमीद्वादश्यः । शेषं स्पष्टम् ।

तथा —

षष्ठ्यमापूर्णिमा पातश्चतुर्दश्यष्टमी तथा ।
आसु सन्निहितं पापं त्रिषु तैले भगे क्षुरे ॥

अत्र अमापूर्णिमानिषेधस्त्वनाहिताग्निपरः । आहिताग्नेस्तत्र स्यादेव ।

कात्यायनादिश्रौतसूत्रे तस्य वपननिषेधात् —

मासि मासि गृहस्थस्य पक्षे पक्षे च यज्वनः ।
इति स्मृतेश्च ।

तथा—

नक्षत्रे तु न कर्त्तव्यं * यस्मिन् जातो भवेन्नरः ।

---

* कर्त्तव्यमित्यत्र कुर्वीतेति क्वचित् पाठः ।

न प्रोष्ठपदयोः कार्य्यं न चाग्नेये तु भारत ।
दारुणेषु तु सर्व्वेषु दुष्टतारां च * वर्ज्जयेत् ॥

आग्नेयं कृत्तिका । दारुणानि आर्द्राऽश्लेषा ज्येष्ठामूलानि । जन्मर्क्षात् पञ्चमं चतुर्दशं त्रयोविंशं च दुष्टतारा ।

तथा—

कुम्भे कर्कटके चैव कन्यायां कार्म्मुके रवौ ।
रोमखण्डं (खण्डे) गृहस्थस्य पितॄन् प्राशयते यमः ॥

तथा—

विवाहमौञ्जीचूडासु वर्षमर्द्धं तदर्द्धकम् ।
अन्तर्वत्न्यां च जायायां नेष्यते केशवापनम् ॥

ज्योतिःशास्त्रेऽपि —

नाभ्यक्तभुक्तरणकालनिराशनानां
नाम्रातसुप्तगमनोत्सुकभूषितानाम् ।
सन्ध्यानिशार्ककुजसौरिदिने नराणां
क्षौरं हितं भवति चाह्नि न चापि विष्ट्याम् ॥

इति

---

* प्रमादी च इति क्वचित् पाठः ।

तथाच सर्वत्र अपवादस्तीर्थप्राप्तौ —

क्षौरं नैमित्तिकं कार्य्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके ॥

इति स्मृतेः ।

नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे ।
उद्वाहेऽखिलवारर्क्षे तिथिषु क्षौरमिष्टदम् ।

इतिनारदवचने निमित्तपरिगणनस्य उपलक्षणत्वाच्च ।

इदं च मुण्डनोपवासादि दशमासानन्तरं पुनस्तीर्थप्राप्तौ कार्य्यम् ।

संवत्सरे द्विमासोने पुनस्तीर्थं व्रजेद् यदि ।
मुण्डनं चोपवासादि त(तो) दा यत्नेन कारयेत् ॥

इति स्मरणात् ।

अन्तरागमने तु फलेच्छया भवति न तु नियम इति यत्नेन इत्यस्यार्थः ।

वपने सङ्कल्पस्तु करिष्ये कारयिष्येइत्युभयथापि भवति । वपनं कारयिष्यामि । वपाम्यहमितिचोभयविधवचनसद्भावात् । करिष्ये इत्येव सङ्कल्प इत्यपरे । प्रयागे वपनं कुर्य्यादित्यादिविधिभिस्तीर्थप्राप्तिनिमित्तकवपनस्य विहितत्वप्रतीतेः । वपनस्य च निमित्तरहितेनैव नापितेन क्रियमाणत्वात् नैमित्तिकविध्ययोगात् ।

कारयिष्यामीतिवाक्यं तु स्वार्थे णिच्प्रत्ययान्तत्वेनापि संभवति । इदं च वपनं श्मश्रुपूर्वकं कार्य्यम् ।

तथा च आपस्तम्बश्रुतौ —

देवा वै यद् यज्ञेऽकुर्वत तदसुरा अकुर्वत तेऽसुरा ऊर्ध्वं पृष्ठे(ष्टे)भ्यो नापश्यन् ते केशानग्रेऽवपन्त अथ श्मश्रूणि अथोपपक्षौ ततस्तेऽवाञ्च आयन् पराभवन् ।

यस्यैवं वपति अवाङ्ङेति अथो परैव भवति ।

अथ देवा ऊर्ध्वं पृष्ठेभ्योऽपश्यन् त उपपक्षावग्रेऽवपन्त । अथ श्मश्रूणि अथ केशान् ततस्तेऽभवन् सुवर्गंलोकमायन् यस्यैवं वपत्यात्मना अथो सुवर्गंलोकमेति । अथैतन्मनुर्वप्ने मिथुनदिवामपश्यत् स श्मश्रूण्यग्रेऽवपत अथोपपक्षौ अथ केशान् ।

ततो वै स प्राजायत प्रजया पशुभिः । यस्यैवं वपन्ति प्रजया पशुभिर्मिथुनैर्जायत इति । एवं च श्मश्रुकूर्च्चयोरादौ वपनेऽपवाद् श्मश्रुवेशकता लोकविद्विष्टतापि न भवतीत्ययं बहुसम्मतः पक्षः ।

वपनप्रकारश्चापरार्के —

उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत् सुधीः ।<br>
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥<br>
दक्षिणं कर्णमारभ्य धर्मार्थं पापसंक्षये ।

शिखाद्यं नवसंस्कारे * शिखाद्यन्तं शिरो वपेत्॥

धर्मार्थतीर्थादिवपने दक्षिणकर्णं उदक्संस्थं (कृत्वा) वापयेत्। पापक्षये पित्रादिमृतौ वा दक्षिणसंस्थं कृत्वा अथवा वामश्मश्रुवपनमाद्याविति।

इदं च वपनं यत्यादिभिः शिखामरक्षित्वैव कार्य्यम्—

यतिः शूद्रश्च विधवा सशिखं वपनं चरेत्।

इति स्मृतेः।

तीर्थेऽपि यतिभिः—

कक्षोपस्थशिखावर्जं ऋतुसन्धिषु वापयेत्।

इति ऋतुसन्धिष्वेवेति परिसंख्यानादृतुसन्धिष्वेव कार्य्यम्। शिष्टयत्याचारोऽपि एवमेव।

जीवत्पितृकेणापि तीर्थमुण्डनं कार्य्यम्।

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना।
यो वापयति लोमानि स पुत्रः पितृघातकः॥

इति बृहस्पतिस्मृतिः।

अत्र पुत्रपदग्रहणाज्जीवत्पितृकविषयता। इतरथा स पितृघातक इत्येव चाख्यत्।

---

* नवसंस्कारे चूड़ाकरणे दक्षिणकर्णात् शिखान्तं शिखामारभ्य वामकर्णान्तं च वपेदित्यर्थः। इति नारायणभट्टः।

इदं प्रयागमात्रविषयम्।

राजा कुमारी नारी च जीवतश्च पितुः सुतः।
मुण्डनं सर्वतीर्थेषु न कुर्य्याद् गुर्व्विणीपतिः॥
इति प्रयागप्रकरणोक्तेः।

मुण्डनं पिण्डदानं च प्रेतकर्म्म च सर्वशः।
न जीवत्पितृकः कुर्य्याद् गुर्व्विणीपतिरेव च॥

इति दक्षस्मृतिमुदाहृत्य विधिप्राप्तमुण्डननिषेधाच्च।
तीर्थे वपनमाद्ययात्रायामेव। प्रयागे तु प्रतियात्रमिति केचित्।
तीर्थप्राप्तिदिने वपनादिकं न भवति चेत्' तदा दिनान्तरे
तत् कार्य्यम्।

तथाहि काशीखण्डम्—
अकालेऽप्यथवा काले तीर्थे श्राद्धं च तर्पणम्।
अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत्॥
इति

यद्वा एतस्यायमर्थः। अकाले * अकालयात्रादौ कृतभोजनादि-
नापि। काले अपराह्णादौ अकृतभोजनेन। प्राप्ततीर्थस्यैव
अधिकारिविशेषणत्वात् यज्ञादिवत् सर्वाङ्गवत्त्वात्तु श्राद्धं भव-
तीत्याशयः।

भुक्तोवाप्यथवाऽभुक्तो रात्रावहनि केचर।

* अकाले गयादौ इति नागवधभट्टः।

न कालनियमो स्त्रस्ति गङ्गां प्राप्य सरिद्वराम् ॥

इति भारतोक्तेः ।

अत्र —

केशानां याव(ता)ती संख्या छिन्नानां जाह्नवीजले ।

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इति वचनात् स्वलोपविष्टस्तथा वापयेत् । यथा छिन्नाः केशा वायुनुन्ना गङ्गादौ पतन्तीति केचिदाहुः * ।

अन्ये तु मूत्रकेशपुरीष-भस्मास्थि श्लेष-नख-लोमानि नाप्सु क्षिपेदिति गद्यरूपगृह्यवचनान्न जले क्षेपः । किन्तु तीरे गर्त्तं कृत्वा तन्मध्ये केशनखादीनि क्षिपेदित्याहुः ।

अत्र देशाचारतो व्यवस्थेयम् ।

इति तीर्थमुण्डनविधानम् ।

---

## अथ तीर्थस्नानविधानम् ।

नास्तिकोऽनास्तिकात्मा च नाष्टचित्तश्च तस्करः ।

स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ।

---

* प्रमाणान्तरमपि यथा —

वापन्ति नखलोमानि वायुना प्रेरितानि वै ।

पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम् ।

इत्यादि

कौर्मे —

पृथिव्यां सर्वतीर्थेषु स्नात्वा पुण्येषु च द्विजः ।
मुच्यते पातकैः सर्वैः समस्तैरपि पूरुषः ॥
तत्र स्नानं जपो होमः श्राद्धदानादिकं कृतम् ।
एकैकशो मुनिश्रेष्ठाः पुनात्यासप्तमं कुलम् ॥

इदं च यत्र स्नानविधेये विपरीतप्रवाहादि भवति । तत्र न कार्यम् ।

प्रत्याहृत्तोदके स्नानं वर्ज्यं नद्यां द्विजातिभिः ।
नद्यां रजकतीर्थे(च)तु दग्धहस्तेन वर्जयेत् ॥

तथा —

अपामन्त्रस्वागता ह्यापो नद्याः प्रथमवेगजाः ।
प्रत्योभिताश्च येनापि तथा तीर्थादिनिर्गताः ॥

इति

सर्वमेतच्च गङ्गायामपवादः —

प्रतिस्रोतोरजोयोगो रथ्याजलनिवेशनम् ।
गङ्गायां न प्रदुष्यन्ति सा हि धर्मद्रवः स्वयम् ॥

इति स्मृतेः ।

निषेधान्तरमपि —

शाल्मली-तिन्तिडी-निम्बकरञ्जाश्च हरीतकी ।
कोविदार-कपित्थार्क-वटश्लेष्मातक-शिग्रवः ।
श्लेष्म खदिरयेषां स्नानं छायासु वर्जयेत् ।

इत्यादि । बदरी च विभीतकी इति क्वचित् पाठः ।

यच्च रात्रिसन्ध्यादिषु स्नाननिषेधः सोऽपि आकस्मिक-तीर्थप्राप्तौ न प्रवर्त्तते । नैमित्तिकत्वात् ।

अतएव शातातपः —

रात्रौ स्नानं न कुर्वीत होमं दानं च रात्रिषु ।
नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिषु ॥

याज्ञवल्क्योऽपि —

ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

एतच्च रात्रौ तीर्थस्नानम् आद्यन्तप्रहरद्वयविषयम् ।

महानिशा तु विज्ञेया मध्यस्थप्रहरद्वयम् ।
प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत् ॥

इति पराशरोक्तेरिति केचित् ।

इदं तीर्थस्नानादिकम् * आशौचेऽपि आकस्मिक-तीर्थप्राप्तौ कार्य्यम् ।

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्म्मणि † ।
न तत्र सूतकं तद्वत् कर्म्मयज्ञादि कारयेत् ।

इति पैठीनसिस्मृतेः ।

सूतकं मृतकस्यापि उपलक्षणम् ।

---

* अत्र आदिना तर्पणश्राद्धयोर्ग्रहणम् ।

† स्नानतर्पणश्राद्धादौ ।

परार्थस्नाने विशेष उक्तो मार्कण्डेयपुराणे —

मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।

यमुद्दिश्य निमज्जेत अष्टमांशं लभेत सः * ।

तत्र विशेषमाह पैठीनसिः —

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।

मज्जयेच्च यमुद्दिश्य सोऽष्टभागफलं लभेत् ॥

तत्र मन्त्रः —

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्म्मितः स्वयम् ।

त्वयि स्नाते स च स्नातो यस्येदं ग्रन्थिबन्धनम् ।

इति

कुशप्रतिकृतिः कुशपत्तिमेव कार्य्या इति केचित् ।
अन्ये तु ग्रन्थिबन्धनमितिमन्त्रलिङ्गात् तथाच ग्रन्थिबन्धनमात्रं प्रतिकृतिरित्याहुः ।

इदं तीर्थस्नानं प्रतिकृतिस्नापनं च जीवताम् अजीवतां च उद्देशेन कार्य्यम् । सामान्येन विधानादिति केचित् । अन्ये तु मृतानां तर्पणश्राद्धादिफलभोक्तृत्वेन जीवतामेव फलोद्देशो-चित्यादित्याहुः ।

---

* स्मृतिदर्पणे तु दशमांशं लभेत स इति पाठः । ब्रह्मवैवर्त्ते तु —
पितामहभ्रातृमातामहमातुलश्वशुरार्थं दयितकान्ताचार्यगुरूपाध्यायानां पिता च पक्षके
भ्रातृश्वश्रू-पितृष्वसृणां च स्नात्वा चाष्टमांशं लभेत । मातापित्रोः कुर्वन् पुण्यम् ।
परस्य पत्नी दम्पती चार्द्धं लभेत ।

प्रासङ्गिकतीर्थस्नाने फलमाह मनुः —

तीर्थं प्राप्यानुषङ्गेण * स्नानं तीर्थे समाचरन् ।
स्नानजं फलमाप्नोति तीर्थयात्रा(फलं)कृतं न तु ॥

इति

मार्गमध्ये नदीप्राप्तौ विशेषमाह स एव—

मार्गान्तरा नदीप्राप्तौ स्नानादि परपारतः ।
अर्वाक्तीरे सरस्वत्या एष मार्गगतो विधिः ॥

इति

इदमपि पूर्वपारे तीर्थदेवाद्यभावे द्रष्टव्यम् ।

तत्सद्भावे तु तत्रैव भवति ।

तथा —

प्रवाहाभिमुखो मज्जेद् यत्रापः प्रवहन्ति वै ।
स्थावरेषु च सर्वेषु आदित्याभिमुखस्तथा ।

इति तीर्थस्नानविधानम् ।

---

* अनुषङ्गेण वाणिज्यराजसेवादिप्रसङ्गेन ।

## अथ तर्पणविधानम्।

तत्रादौ स्वशाखानुसारेण स्नानाङ्ग (तर्पणं) कृत्वा पश्चात् देवर्षितर्पणं कृत्वा पितृंस्तर्पयेत्।

प्रातरेव हि कर्त्तव्यं पितृणां चैव तर्पणम्।

इति देवीपुराणोक्तेः।

प्राप्तेः तीर्थमितिशेषः।

तथा—

यस्तु तीर्थं नरः स्नात्वा न कुर्य्यात् पितृतर्पणम्।

पिबन्ति देहनिःस्रावं पितरोऽस्य जलार्थिनः॥

इति योगियाज्ञवल्क्योक्तेश्च तर्पणानन्तरं वक्ष्यमाणमन्त्रैः शेषाञ्जलिं * दद्यात्।

तदुक्तं विष्णुपुराणे —

देवासुरास्तथा नागा यक्षगन्धर्वराक्षसाः।

पिशाचा गुह्यकाः सिद्धाः कुष्माण्डास्तरवः खगाः॥

जलेचरा भूमिलया वाय्वाधाराश्च जन्तवः।

तृप्तिमेतेन यान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः॥

नरकेषु समस्तेषु यातनासु च ये स्थिताः।

तेषामाप्यायनायैतद्दीयते सलिलं मया॥

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।

---

* एवं तिलाञ्जलिमिति विष्णुधर्मोत्तरे पाठः।

ते तृप्तिमखिला यान्तु येऽस्मत्तोयादिकाङ्क्षिणः * ।
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम् ।

इति

अत्र केचित् प्रतिमन्त्रमञ्जलिचतुष्टयमिच्छन्ति ।

वायवीयेऽपि —

आब्रह्मस्तम्बपर्यन्तमित्यादि इदमस्तु तिलोदकमित्यन्तं पूर्व-श्लिष्टत्वेन अभिहितम् † ।

एतत्फलमपि विष्णुपुराणे उक्तम्—

कामोदकप्रदानं ते मयैतत् कथितं नृप ।
यद्दत्त्वा प्रीणयत्येतन्मनुष्यः सकलं जगत् ॥
जगदाप्यायनोद्भूतं पुण्यमाप्नोति चानघ ।
दत्त्वा कामोदकं सम्यगेतेभ्यः श्रद्धयान्वितः ।

इति

---

* ये चास्मत्तोऽभिकाङ्क्षिणः ।
रत्नाकरे पाठः ।

† तद्यथा—
आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ।
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ।

इति

तथा च अगदाख्यायनोद्भूतपुष्करनामः कामोदकप्रदान-मह करिष्ये इति सङ्कल्पप्रयोगः सिध्यति ।

यत्तत ।

पञ्चश्राद्धे हिरण्येनाप्यनुज्ञाप्य तिलोदकम् इति सुमन्तुवच-नात्तीर्थे हैमश्राद्धपक्षे श्राद्धीयब्राह्मणविसर्जनानन्तरं तीर्थ-निमित्ततर्पणमाचरन्ति केचित्तु पूर्व्वम् । तदयुक्तम् । बहुभि र्वचनैस्तीर्थस्नानानन्तरमेव तद्विधानात् ।

तानि वचनानि तु —

स्नात्वाथ तर्पणं कुर्य्यादिति गयामाहात्म्ये ।

स्नात्वाथ तर्पयेद्देवांस्तीर्थे चैव विशेषतः ।

इति वाराहे ।

स्नानं कृत्वा तर्पणं तु कुर्य्याद् भक्तिसमन्वितः ।

इति च ब्रह्माण्डे ।

सुमन्तुवचनं तु येषां शाखिनां श्राद्धाङ्गभूतं तर्पणं विहि-तमस्ति । तेषां हिरण्यश्राद्धे तत् पश्चाद् विधत्ते । अतएव प्रयोग-पारिजाते श्राद्धाङ्गतर्पणं प्रकृत्य इदमुक्तम् । तत्रतीर्थसम्ब-न्धितर्पणं स्नानान्तेएव कार्य्यमिति सिद्धम् ।

अत्र पञ्चोविशेषोनिबन्धान्तराज्ज्ञातव्यः । विस्तरभीत्या नेह प्रपञ्च्यते ।

## अथ तर्प्यक्रमः ।

आदौ पिता ततो माता सपत्नजननी ततः ।
मातामहाः सपत्नीका आत्मपत्न्यस्ततः परम् ॥
सुतभ्रातृपितृव्याश्च मातुलाश्च सपत्निकाः ।
दुहिता च स्वसा प्रोक्ता दौहित्रो भागिनेयकः ॥
पितृष्वसा मातृष्वसा श्वशुरो गुरुरिक्थदौ ।
एते स्युः पितरस्तीर्थे तर्पणे च महालये ॥

रिक्थं धनम् पिता पित्रादित्रयमित्यर्थः ।

एवं मातेत्यत्रापि ।

अन्यत्रापि,—

तातांबात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्रीतनयादि तातजननी स्वभ्रातरस्तत्स्त्रियः ।
तातस्वात्मभगिन्यपत्यधवयुग् जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥

अत्र त्रितयशब्दस्य तातांबाभ्यां प्रत्येकं सम्बन्धः । सस्त्रीति मातामहादित्रयस्य विशेषणं । अन्ये तु मातामह्यादीनां पृथक् तर्पणमिच्छन्ति श्राद्धवत् । स्त्रीतनयादीनि तर्पयित्रपेक्षया । तातजननीस्वभ्रातर इति । तातभ्रातरः पितृव्याः । मातृभ्रातरो मातुलाः । स्वभ्रातरस्तर्पणकर्तृभ्रा-

नरः। तत्स्त्रियः पितृव्यमातुलभ्रातृस्त्रियः। सस्त्रिय इति वा पाठः। तदा तातभ्रात्रादयः सपत्नीका इत्यर्थः। तातेति। पितृष्वसृमातृष्वसृस्वसारः सापत्नभर्तृकाः। तत्र पितृष्वस्रे यथायोग्यं सभर्त्तृकायै सापत्नायै इत्येवंरूपं प्रयोगवाक्यमनुसन्धेयम्। जायापिता श्वशुरः। अन्यत् स्पष्टम्।

पूर्वोक्तविस्तृततर्पणाशक्तौ संक्षिप्ततर्पणमुक्तं वैष्णवे —

आब्रह्मस्तम्बपर्य्यन्तं जगत् स्थावरजङ्गमम्।
मया दत्तेन तोयेन तृप्तं यातु पराङ्गतिम्॥

इति।

तर्पणे प्रत्यञ्जलि मन्त्रावृत्तिः कार्य्या।

ननु मन्त्रस्य तर्पणकर्मणि करणत्वात् सन्ध्याञ्जलिदानस्य च एककर्मत्वात् "एकद्रव्ये मन्त्रावृत्तौ सकृन्मन्त्रकरणमिति कात्यायनसूत्राच्च सकृदेव मन्त्रपाठ इति चेत्। नैवं" प्रत्यञ्जलि हि अन्यदन्यज्जलं दीयते। ततश्च यत्र मन्त्रः प्रयुक्तः तदर्थएव स स्यात्। न सर्वार्थं इति विशेषणश्रवणात् संस्कारासिद्धेस्तृप्तिसिद्धये निर्वपणावघातादिवत् द्रव्यान्तरत्वेन प्रत्यञ्जलि मन्त्रावृत्तिः स्यादेव।'

कर्मावृत्तौ मन्त्रावृत्तिरिति कात्यायनोक्तेश्च। इत्यलं प्रपञ्चेन। अवघातप्रोक्षणादौ तएव व्रीहयः पुनरवहन्यन्ते सैव वेदिः पुनः प्रोक्ष्यते इति द्रव्यैकत्वेन संस्कारलाभान्न मन्त्रावृत्तिः। तस्मात् सन्ध्यार्घ्यदानवत् प्रत्यञ्जलि मन्त्रावृत्तिरिति सिद्धम्।

इदं तीर्थतर्पणं सतिलं कार्य्यम् । यच्च गार्ग्यः—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणम् ॥

मरीचिः —

सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥

स्मृत्यर्थसारे —

विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्द्धं तदर्द्धं च न कुर्य्या*त्तिलतर्पणम् ॥

इत्यादिना तिलतर्पणनिषेधः । सोऽत्र न प्रवर्त्तते ।

तीर्थे तिथिविशेषे च † गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम् ॥

इति जाबालोक्तेः ।

तीर्थे तीर्थविशेषे च कार्य्यं प्रेतेच सर्वदा ।

इति स्मृत्यर्थसारोक्तेश्च ।

जीवत्पितृकेणापि चात्र तर्पणं कार्य्यम् ।
जीवत्पितृकोऽप्यत्वादितिकात्यायनोक्तेः ।

---

* न कुर्य्यादित्यत्र नैत्यके इति क्वचित् पाठो दृश्यते ।

† तिथितीर्थविशेषेषु इति क्वचित् पाठः ।

तथा विधवयापि —

तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः।

तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्।

इति काशीखण्डे तर्पणस्य प्रत्यहं विधानात् तीर्थे नैमित्तिकतया सुतरां तदधिकारात्।

इदं च पुत्रपौत्राभावविषयम्।

मदनपारिजातेऽपि एवमेव।

सन्न्यासिना तु तर्पणं न कार्य्यम्—

न कुर्य्यात् सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम्।

इति स्मृतेः।

इति तीर्थतर्पणविधानम्॥

———

अथ तीर्थस्नानतर्पणप्रसङ्गात्

## नदीनां रजोदोषः

कथ्यते।

तत्र देवलः —

नभोनभस्ययोर्मध्ये सर्वानद्योरजस्वलाः।

तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणम्।

अत्रिः —

सिंहकर्कटयोर्मध्ये सर्वानद्योरजस्वलाः ।

न स्नानादीनि कर्माणि तासु कुर्वीत मानवः ॥

इदं च महानद्यतिरिक्तविषयम् ।

सिंहकर्कटयोर्मध्ये सर्वानद्योरजस्वलाः ।

तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

इति व्याघ्रपादोक्तेः ।

महानदीषु विशेषान्तरं भविष्योत्तरे —

आदौ तु कर्कटे देवि महानद्यो रजस्वलाः ।

त्रिदिनं तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी यथा ।

इति

महानद्यश्च ब्रह्मपुराणे —

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।

तापी पयोष्णी * विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः ॥

इति

भागीरथी नर्म्मदा च यमुना च सरस्वती ।

विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ।

द्वादशैता महानद्यो देवर्षिक्षेत्रसम्भवाः ॥

इति

अन्यनदीषु तु अगस्त्योदयावधि रजस्वलात्वमुक्तं ।

---

* पयोष्णी इत्यत्र पयोष्णी इति पाठोऽशुद्धः ।

मात्स्ये—

यावन्नोदेति भगवान् दक्षिणाशाविभूषणम् ।
तावद्रजोवहानद्यः करतोयाः प्रकीर्त्तिताः ॥

इति

करतोयाः स्वल्पजलाः ।

अन्योऽपि विशेषः कात्यायनेनोक्तः ।

याः शोषमुपगच्छन्ति ग्रीष्मे कुसरितो भुवि ।
तासु प्रावृषि न स्नायाद्‌पूर्णे दशवासरे ।

गङ्गादिविषये तु देवलः—

गङ्गा च यमुना चैव प्लक्षजाता सरस्वती ।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञिताः ॥

कुरुक्षेत्रे या सरस्वती सा प्लक्षजाता ।

शोणसिन्धुहिरण्याख्याः कोकलौहित्यघर्घराः ।
शतद्रुश्च नदाः सप्त पावनाः परिकीर्त्तिताः ॥

निगमः—

गङ्गा धर्मद्रवः पुण्या यमुना च सरस्वती ।
अन्तर्गतरजोदोषाः सर्वावस्थासु चामलाः ॥
कर्कटादौ रजोदुष्टा गौतमी वासरत्रयम् ।

इत्यादि

अयं च नदीनां रजोदोषो न तत्तीरवासिनाम् ।

अतएव निगमे न तत्तीरवासिनामित्युक्तम् ।

रजोदुष्टमपि जलं गङ्गादिजलसंयुतं स्वयमदुष्टं भवति ।

न च गङ्गादिजलं दूषयति ।

तदुक्तं मात्स्ये —

पुण्याम्भसा समायोगाद्दुष्टमप्यम्बु पावनम् ।

इति

भारतेऽपि —

अपवित्रमपि प्राप्य गङ्गां याति पवित्रताम् ।

इति

स्मृतिसङ्ग्रहे —

काले नभस्यपूर्वं स्यान्निराबं तु नवोदकम् ।

अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम् ॥

अन्योऽपि विशेषो भविष्योत्तरे —

महदम्बुसमं वापि यदि तिष्ठेत् पुरातनम् ।

नवाम्बुमिश्रितं तेन न दुष्टमिति सूरयः ॥

योगियाज्ञवल्क्यः —

अजा गौर्महिषी चैव ब्राह्मणी च प्रसूतिका ।

भूमिर्नवोदकं चैव दशरात्रेण शुध्यति ॥

नूतनखानितकूपाद्युदकं नवोदकम् ।

अत्रैवविशेषेषु रजोदोषाभावः ॥

तदाह वसिष्ठः —

उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥

इति नदीरजोदोषनिर्णयविधानम् ।

---

## अथ तीर्थश्राद्धविधानम् ।

तीर्थायतनगोष्ठेषु द्वीपोद्यानगृहेषु च ।
ऋषिजुष्टेषु सर्वेषु श्राद्धं देयं विजानता ॥

कौर्म्मे —

तीर्थं पुष्करं नाम इत्यादिना तीर्थानि उपक्रम्य उक्तम् ।
एषु तीर्थेषु यच्छ्राद्धं तत् कोटिगुणमिष्यते ।
यस्मात्तस्मात् प्रयत्नेन तीर्थे श्राद्धं समाचरेत् ।
देशानां तु विशेषेण भवेत् पुण्यमनन्तकम् ।

वायुमात्स्ययोः —

गयायामक्षयं श्राद्धं प्रयागेऽमरकण्टके ।
वराहपर्वते चैव गङ्गायां च विशेषतः ॥
वाराणस्यां विशेषेण यत्र देवः स्वयं हरः ।
गङ्गाद्वारे प्रभासे च बिल्वके नीलपर्वते ॥
कुरुक्षेत्रे च कुब्जाम्रे भृगुतुङ्गे हिमा(लये) तथा ।
केदारे फल्गुतीर्थे च नैमिषारण्य एव च ।
सरस्वत्यां विशेषेण पुष्करे(षु) च विशेषतः ॥

नर्मदायां कुशावर्त्ते श्रीशैले भद्रकर्णके ।
वेत्रवत्यां विशेषेण गोदावर्य्यां विशेषतः ॥
एवमादिषु चान्येषु तीर्थेषु पुलिनेषु च ।
नदीनां चैव तीरेषु श्राद्धं कोटिगुणं स्मृतम् ॥

इति *

विष्णुधर्म्मोत्तरेऽपि —

दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्य्यात् प्रयत्नतः ।

यतः —

परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जड़ः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् † ।
अग्रभागं ततस्तेभ्यो दद्यादन्नं च जीवताम् ॥

इति

तीर्थे तु स्वामी नास्त्येव—

वनानि गिरयो नद्यस्तीर्थान्यायतनानि च ।

---

* अत्र सामान्यतस्तीर्थश्राद्धविधायकवचनबलादेव सर्वत्र श्राद्धप्राप्तौ तत्रापि विशिष्यकीर्त्तनं गुणफलसम्बन्धविधानार्थं ।
दध्ना इन्द्रियकामस्येत्यादिवत् । न तु विशिष्टश्राद्धान्तरविधिर्गौरवापत्तेः ।

† तद्भूमिस्वामिपितृभिः श्राद्धं तत्र विहन्यते ।
रत्नाकरे पाठः ।

देवखाताश्च गर्त्ताश्च * तेषु स्वामी न विद्यते ॥

इति स्मरणात् ।

देवीपुराणे तीर्थश्राद्धधर्म्मा उक्ताः ।

तथाहि—

श्राद्धं तीर्थेषु कर्त्तव्यमर्घ्यावाहनवर्ज्जितम् ।
श्व-ध्वाङ्क्षगृध्रकाकानां नैव दृष्टिहतं च तत् ।
श्राद्धं तत्तैर्थिकं प्रोक्तं पितॄणां तृप्तिकारकम् ।
काले वाप्यथवाऽकाले तीर्थश्राद्धं तथा नरैः ।
प्राप्तैरेव प्रकर्त्तव्यं पितॄणां चैव तर्पणम् ॥
पिण्डदानं च तच्छस्तं पितॄणां चातिवल्लभम् ।
विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् ।

इति

प्राप्तैरेवेति । चावश्यकस्नानतर्पणाद्यनन्तरमेव ।
तावतो विलम्बस्य स्नानतर्पणादिविध्यभ्यनुज्ञातत्वात् ।
तीर्थश्राद्धे निषिद्धकालवर्ज्जनमपि नास्ति ।

इत्युक्तं मत्स्येन —

तीर्थद्रव्योपपत्तौ च न कालमवधीरयेत् ।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं समाचरेत् ॥

इति

* गर्त्ता जलपिण्डाः देवविशेषाश्रयणोत्यादयः ।

यदा तु तीर्थप्राप्तिदिने दैवाद्यनुपपत्त्या प्रतिबन्धात्
श्राद्धं न कृतं तदा दिनान्तरे तत् कार्य्यम् ।

तथा —

नन्दाभकामरेव्यारक्षभिपितृकालभे ।
गण्डे वैधृतिपाते च पिण्डदानाद्याः सुतैश्रुभिः ।

नन्दा प्रतिपत्षष्ठ्येकादश्यः । भद्रः सप्तमी । काम त्रयोदशी । आरोभौमः । भृगुः शुक्रः ।

अग्निपितृकालभानि कृत्तिकामघाभरण्यः ।
गण्डो वैधृतिश्च योगौ । पातो व्यतीपातः ।

इति तीर्थश्राद्धविधानम् ।

---

## अथ तीर्थे श्राद्धीयब्राह्मणविवेकः ।

---

तत्र देवीपुराणम् —

तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन ।
अन्नार्थिनमनुप्राप्तं(भोज्यं तं ) भोजयेन् मनुरब्रवीत् ॥

पाद्मेऽपि —

ब्राह्मणं न परीक्षेत तीर्थे कालं न चिन्तयेत् ।
प्राप्ततीर्थो यदा विद्वांस्तदैव स्नानमाचरेत् ॥

एतत् आचार्यब्राह्मणाभावे अन्याभ्यनुज्ञानार्थम् ।

स्वयं अर्घ्यं तथा तीर्थे सत्पात्रे दत्तमक्षयम् ।
न परीक्षेद्द्विजांस्तीर्थे ब्राह्मणाँ भोज्य एव(च)तु ॥

इति विशेषस्मरणात् ।

## अथ तीर्थश्राद्धे निषिद्धानि ।

श्राद्धं च तत्र कर्त्तव्यमर्घ्यावाहनवर्जितम् ।

तथा —

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥

तथा —

नावाहनं न दिग्बन्धो न दोषोऽदृष्टिसम्भवः ।
सकारुण्यं च कर्त्तव्यं तीर्थे श्राद्धं विचक्षणैः ॥

भविष्ये —

देवाश्च पितरो यस्माद् गङ्गायां तु सदा स्थिताः ।
आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ॥

देवलः —

न तत्र श्वानगृध्रादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तत्र समायान्तीति वैदिकम् ॥

अग्नौकरणमपि तीर्थश्राद्धे नेति * स्मृतिरत्रावस्थां निषेधा-भावादग्नौकरणं जलादौ भवतीत्यन्ये। अयं चावाहननिषेध-स्तीर्थप्राप्तिनिमित्तकश्राद्धे। न तु तीर्थाधिकरणकश्राद्धमात्रे।

तेन तीर्थे क्षयाहादिश्राद्धं प्राप्तं चेत्।

अर्घ्यावाहनादिसहितमेव तत् कार्यम्।

मासिकं च क्षयाहं च दार्शिकं च महालयम्।
पिण्डनिर्वापसहितं कार्यं सर्वत्र सर्वदा॥

इति यमोक्तेः।

तीर्थेऽपि संक्रान्त्यादिनिमित्तकश्राद्धे पिण्डनिर्वापो न कर्तव्यः।

अयनद्वितये श्राद्धं विषुवद्वितये तथा।
संक्रान्तिषु च कर्तव्यं पिण्डनिर्वपणादृते॥

इति विश्वेशोक्तेः।

## अथ तीर्थश्राद्धे अधिकारिणः कथ्यन्ते।

तथाहि वैष्णवे —

पितुः पुत्रेण कर्तव्या पिण्डदानादिका क्रिया।
तदभावे तु पत्नी स्यात्तदभावे तु सोदरः॥

---

* अग्नौकरणं च न इति निषेधस्मृतिरग्नौकरणनिषेधो दृश्यते। तत् अधमम् निषेधाभावादित्युक्तमिति यत् न सङ्गच्छते।

तस्य पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वापि श्राद्धार्हो नृप जायते ॥
उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे ।
तीर्थब्राह्मण आयाते षडेते जीवतः पितुः ॥

उद्वाहोऽत्र द्वितीयादिः । प्रथमे पितुरेव अधिकारात् । पुत्रजनने जातकर्मणि । इदमपत्यसंस्कारमात्रोपलक्षणम् । पित्रेष्ट्यां चातुर्मास्यान्तर्गतायां । सौमिके मखे । तार्त्तीयसवनिकैः पुरोडाशशकलैः स्वधनसाधनत्वात् पिण्डदाने । ब्राह्मण आयाते । त्रिमधुत्रिसुपर्णकइत्यादिगुणयुतविप्रसंपदि । जीवतः पितुः पुत्रस्य एते श्राद्धकालाः षडित्यर्थः ।

ननु प्राप्तिरेव कर्त्तव्यमित्यनेन प्राप्त्यनन्तरकालएव यस्मात् कर्त्तव्यतोक्तेर्दिनान्तरे तदभावादमायां सूतकादिविघ्ने सति श्राद्धलोपवद्द्वापि लोपएव स्यात् । यथाहादेस्तु सूतकाद्यनन्तरमपि अनुष्ठानं युक्तम् ।

तदश्नीत प्रदुष्येत केनचित् सूतकादिना ।
सूतकानन्तरं कुर्य्यात् पुनस्तदहरेव वा ।

इत्यादिवचनात् । इह तु वचनाभावाल्लोप एव युक्तः । एवं रात्रौ सन्ध्यायां वा तीर्थप्राप्तौ लोपोऽस्तु । रात्रिसन्ध्ययोः श्राद्धनिषेधात् । उत्तरदिने च प्राप्त्यनन्तरकालाभावात् । सत्यमेवं भवेत् । यदि अमावस्यादिवत् कालविधानं स्यात् । इह तु तीर्थ-

प्राप्तेर्निमित्ततामात्रमुच्यते। तथाच निमित्ते सति नैमित्तिका-
नुष्ठानमनन्तरकाल एव असति प्रतिबन्धे। इति न्यायवत्त्वाभ्य:-
आत:। तेन सति प्रतिबन्धे जातेष्टिवत् कालान्तरेऽपि अनु-
ष्ठानमविरुद्धम्। यथा वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे
जाते इति विहिता जातेष्टिर्जातकर्मण: पूर्वं क्रिय(माणा) ते।
जातकर्मण: प्राक् स्तनपाननिषेधात्। इष्टिजातकर्मादिव्यवधाने
पुत्रविपत्त्यापत्तेरुपजीव्यविरोधापत्तेश्च अनन्तरकाल एव नकार्यं
किन्तु जातकर्मेव जन्मेमिति चतुर्थे सिद्धान्तिते जात-
कर्मानन्तरं सूतकेन अशुचित्वात् निमित्ताव्यवहितानन्तर्यस्य च
बाधितत्वात् निमित्तस्य जातत्वादत्यन्तलोपायोगात् शुचरनुरोधेन
सूतकानन्तरे पर्वणि अनुष्ठेयेति तदुत्तराधिकरणे साधितम्।
तद्वदत्रापि कालान्तरानुष्ठानमविरुद्धम्। इयांस्तु विशेष:।
तत्र आवश्यको(नियतो) मध्ये सूतकरूप:। इह तु कादाचित्-
क इति। यदा तु प्रतिबन्धादसमाप्त एव तीर्थाद्बहिर्याति
तदा तीर्थरूपदेशाभावात्तीर्थप्राप्तिनिमित्तकं श्राद्धं लुप्यतएव।
देशस्य सम्पादयितुमशक्यत्वेन मुख्यत्वात्। मृते पुत्रे(पूतत्वादि)
फलाधिकरणाभावाज्जाते(ष्ट्यभाववत् ) ष्टिवत्।

तथापि जानन् अज्ञानाद्वाप्येव यदि बहिर्गच्छेत्।
तदा प्रत्यवैति * पुरुषापराधात्।
अज्ञात्वा बहिर्गमने न प्रत्यवाय इति ध्येयम्।

* प्रत्यवैति प्रत्यवायी भवतीत्यर्थ:।

यच्च —

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ।

इत्यादिश्राद्धनिषेधः ।

सोऽत्र न प्रवर्त्तते ।

न वारं न च नक्षत्रं न कालस्तत्र कारणम् ।
यदेव दृश्यते तीर्थं तदेव श्राद्धमिष्यते * ।

इति प्रभासखण्डोक्तेः ।

तथा मलमासेऽपि तीर्थश्राद्धं भवत्येव —

नित्यं नैमित्तिकं चैव श्राद्धं कुर्यान्-मलिम्लुचे ।

इति जावालिस्मृतेः ।

नित्यं नैमित्तिकं कुर्यात् प्रयतः सन् मलिम्लुचे ।
तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च ।

इति बृहस्पतिस्मृतेश्च ।

इदं च कृतभोजनादेः सन्ध्यायां रात्रौ मलमासे चाशौचेन च युतेन स्नानश्राद्धादिविधानम् आकस्मिकतीर्थप्राप्तिविषयम् । न तु बुद्धिपूर्वविषयम् । तीर्थप्राप्तिरूपनिमित्तस्य पुरुष-प्रयत्न-साध्यतया ग्रहणादिवैलक्षण्यात् । ततश्च अनिषिद्धकाल एव बुद्धिमां-स्तीर्थप्राप्तिं कुर्यात् । प्रतिबन्धादिना आकस्मिकतीर्थप्राप्तौ तु निषिद्धकालेऽपि ग्रहणपुत्रजन्मादाविव स्नानश्राद्धादि कुर्या-

---

* तदा पर्वशतसममिति निर्णयसिन्धौ पाठः ।

दिति तात्पर्य्यम्। प्राप्तिदिने श्राद्धविधायकवचनं तु हेमश्राद्धविषयम्। तावतैव पूर्वोक्तवचनचारितार्थ्यात्। अन्नश्राद्धं तु रात्रिसन्ध्ययोर्भुक्तवतश्च तीर्थप्राप्तौ द्वितीयदिने एव भवति। आशौचे तु तीर्थप्राप्तौ आशौचापगमे। तीर्थसम्बन्धस्य तदानीमपि सत्त्वेन ग्रहणादिवैलक्षण्यात्।

मलमासेऽपि तदानीमेव श्राद्धं कार्य्यम्। विलम्बनिषेधात्। मलमासात् परं तीर्थसम्बन्धसत्त्वे तु शुद्धमासेऽपि कार्य्यम्।

यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम्।
मन्वादिकं तैर्थिकं च कुर्य्यान्मासद्वयेऽपि च॥

इति स्मृतिचन्द्रिकोक्तेः।

अत्र अपरपक्षिकं नाम प्रतिमासं कृष्णपक्षश्राद्धं न तु महालयश्राद्धं।

तस्य मलमासे निषेधात्।

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः॥

इति मैत्रायणीयपरिशिष्टवचनं जीवत्पितृकस्य श्राद्धं विधत्ते श्राद्धे उद्देश्यानाह कार्ष्णाजिनिः —

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः॥

इति

तथापि गयाश्राद्धं निषेधति लोगाक्षिः —

दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम्।
न जीवत्पितृकः कुर्य्यात्तिलैः कृष्णैश्च तर्पणम्॥

इति मैत्रायणीयपरिशिष्टेऽपि—

महानदीषु सर्वासु तीर्थेषु च गयामृते।
जीवत्पितापि कुर्व्वीत श्राद्धं पार्व्वणधर्म्मवत्॥

मृतमातृकस्य तु प्रासङ्गिकगयाप्राप्तौ मातृश्राद्धे परिशिष्ट एव प्रतिप्रसवः श्रूयते।

तथाच तत्प्रमाणम् —

मान्वष्टक्यं गयाप्राप्तौ सत्यां यत्र मृतेऽहनि।
मातृश्राद्धं सुतः कुर्य्यात् पितर्य्यपि च जीवति॥

इति

प्रासङ्गिकप्राप्तावित्युक्तेस्तदुद्देशेन गयायात्रा न कार्य्या इति सिध्यति *।

मतमिदं कालादर्शस्मृतिदर्पणकारादयो बहवो मेनिरे।

अपरे तु जीवत्पितृकश्राद्धविधायकवाक्यानां साधारण्याद् गयायामपि जीवत्पितृकेण पितृपित्रादिभ्यः श्राद्धं कार्य्यम्।

तस्मिंश्च श्राद्धे मृतमातृकस्य पितृपत्नीत्वेन मातृश्राद्धसिद्धावपि

---

* तथाच वृद्धमनुः —
गयां प्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेत्।

स्वान्वष्टक्यमित्यादिवचनं माहात्म्यादिरूपेण पृथक् पार्वणप्राप्त्यर्थम्। यानि तु गयाश्राद्धनिषेधवचनानि। तानि मृतमातृकेणापि तच्छ्राद्धोद्देशेन गत्वा श्राद्धं न कार्यम्। किन्तु प्रासङ्गिकगयागमन एव इत्येवंपराणि। इति वचनानां व्यवस्थामाहुः। एवमुभयथा वचनव्यवस्थायां सत्यां देशाचाराद् व्यवस्था वेदितव्या।

उभयथापि जीवत्पितृकस्य तीर्थश्राद्धे अधिकारसिद्धिः।

सपितुः पितृकृत्येषु अधिकारो न विद्यते।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतेः॥

इति कात्यायनवचनम्।

यत्तु —

पिण्डं जीवत्पितुर्नास्तीति नियमवचः।
तद्विहितकालषट्कातिरिक्तविषयमिति ज्ञेयम्।

ननु यदि जीवत्पितृकस्यापि तीर्थश्राद्धे अधिकारस्तदा पितरि तीर्थवासिनि देशान्तरागतेन पुत्रेण श्राद्धं कर्तव्यं स्यात्। निमित्तस्य सत्त्वात्। कर्तव्यमेवेति वदामो बाधकाभावात्। तर्हि पित्रा सहागतेनापि कुतो न क्रियते।

उच्यते। वचनात् प्राप्नोत्येव। लोकविद्विष्टत्वान्न तदनुष्ठानम्। तदुक्तम् —

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न हि।

इति

न च पितृगतेन प्रसङ्गसिद्धेरनुष्ठानं कुतो नेति वाच्यम्।

भिन्नकर्तृके प्रसङ्गाभावात्।

तत् विद्यं जीवत्पितृकस्यापि अधिकारित्वम्।

जीवत्पितरोऽपि पित्रा सह तीर्थं गताश्चेत् पृथक् पृथक् श्राद्धं कुर्य्युः। भ्रातरस्तु यदि विभक्ता युगपदयुगपद् वा तीर्थं गतास्तदा प्रत्येकं पृथक्श्राद्धं कुर्य्युः। अविभक्तेषु तु य एव गतस्तेन कार्य्यं। तेषां सर्वेषामेकदैव गमने तु प्रश्वादिवत्-कुलेषु ज्येष्ठेनैव कार्य्यम्। न तु सर्वैः।

भ्रातृणामविभक्तानामेकोधर्म्मः प्रवर्त्तते।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक्॥
इति स्मृतेः।

विधवा तु यदि पुत्रवती तीर्थं गता। तदा पुत्रः श्राद्धं कुर्य्यात्।
स्वयं न कुर्य्यात् अपुत्रा चेत् स्वयमेव कुर्य्यात्।

अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्त्तरि।
पिण्डं दद्यात्तथैव अलमाचं तु दुःखिनी॥
इति वचनात्।

केचित्तु पुत्रवत्पत्नी इति पठित्वा पुत्रवत्यापि पुत्रा-सन्निधाने ब्राह्मणादिद्वारा श्राद्धं कारयितव्यमित्याहुः।

अनुपनीतोऽपि तीर्थे श्राद्धं कुर्य्यात्।
तदुक्तं पाद्मे सृष्टिखण्डे श्राद्धं प्रक्रम्य —

एतच्चानुपनीतोऽपि कुर्य्यात् सर्वेषु पर्वसु।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम्॥

भार्य्याविरहितोवापि प्रवासस्थोऽपि भक्तिमान् ।
शूद्रोऽप्यमन्त्रकं कुर्य्यादनेन विधिना नृप ॥

इति

तत्र स्त्रिया अनुपनीतेन च यथादेशाचारं ब्राह्मणादिद्वारा कारणीयम् ।

स्वयं वा अमन्त्रकं कार्य्यम् ।

तदुक्तं स्मृत्यर्थसारे —

अनुपनीताः स्त्रियः शूद्राश्च श्राद्धमृत्विजा कारयेयुः ।
स्वयं वा अमन्त्रकं नामगोत्राभ्यां कुर्य्युः ।
देवेभ्यो नमः पितृभ्यः स्वधा नम इति मन्त्राभ्यां वा ।
क्षेत्रजादीनां तु यो विशेषः सोऽत्र नोच्यते ।
दत्तौरसेतरेषां तु पुत्रत्वे न परिग्रहः ।
इति तेषां कलौ पुत्रत्वनिषेधेन अनुपयोगात् ।

अन्यत्रापि—

स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासुतस्य च ।
प्राग् द्विजाश्च व्रतादेशाच्छ्राद्धं कुर्य्युस्तथैव च ॥

इति

वाराहेऽपि —

अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्ज्जितः ।
अमन्त्रस्य तु शूद्रस्य विप्रोमन्त्रेण गृह्यते ॥
मन्त्रेण पौराणेन । गृह्यते सम्बध्यते । तेन शूद्रस्य श्राम-

दानादौ विप्रेण पुराणमन्त्रो वक्तव्य इति तात्पर्य्यार्थः ।

## अथास्य विश्वेदेवाः ।

तीर्थश्राद्धस्य पार्वणप्रकृतिकतया —

पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।

इति बृहस्पत्युक्त्या पुरूरवार्द्रवौ यद्यपि विश्वदेवत्वेन प्राप्तौ । तथापि तस्य संयोगपृथक्त्वन्यायेन काम्यत्वस्यापि सत्त्वात् गोदोहनन्यायेन च काम्यस्य नित्य(त्व) बाधकत्वात् नैमित्तिकस्यापि चावश्यकतया नित्यत्वात् काम्ये च धुरिलोचनौ इति वचनात् पुरूरवार्द्रवौ बाधित्वा धुरिलोचनौ भवतः ? यदा तु कामाभावे केवलनित्यतया करोति तदा पुरूरवार्द्रवावेव भवतः ।

तथा —

यो यस्य स्त्रियं धनं वा अपहरेत् ।
स तस्य श्राद्धं कुर्य्यादित्युक्तं कार्ष्णाजिनिना ।
स्त्रीहारी धनहारी च कुर्य्यात् पिण्डोदकक्रियाम् ।

इति

एवमन्येऽपि अधिकारिणो ग्रन्थान्तरतोऽज्ञेयाः ।

## अथ अधिकारापवादः ।

तत्र यतिना श्राद्धं न कार्य्यम् ।

न कुर्य्यात् सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाः।
त्यक्तसंन्यासयोगेन गृहधर्म्मादिकं व्रतम्।
गोत्रादिवरणं सर्वं पितृमातृकुलं धनम्।

इति स्मृतेः।

पतितोऽपि न कुर्य्यात्। द्विजातिकर्म्मभ्यो हानिः पतनमिति निषेधात्। उपपातक्यादिना तु कार्य्यमेव। तस्य नित्यनैमित्तिककर्म्मणो निषेधाभावात्।

इति तीर्थश्राद्धाधिकारिविधानम्।

---

## अथ अन्नामहेमश्राद्धविधानम्।

गारुडे —

तीर्थं गत्वा तु यः श्राद्धं आमान्नं भोजनं द्विजे।
यद्वा हेम्ना प्रकुर्व्वीत नाश्राद्धः स्यात् कदाचन॥

कात्यायनोऽपि एतां व्यवस्थामाह—

आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि।
आमश्राद्धं प्रकुर्व्वीत भार्य्यारजसि संक्रमे।

सुमन्तुः —

पात्राभावेऽधिकारः स्याद्विप्रादीनां नराधिप।

अपत्नीको महायात्रो विदेशगमनादिभिः ।
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ।
आत्मनो देशकालाभ्यां विप्लवे समुपस्थिते ।
चन्द्रसूर्य्यग्रहे चैव दद्यादामं विशेषतः ॥

तथा —

तीर्थे श्राद्धं प्रकुर्व्वीत पक्वेनैव विशेषतः ।
आमान्नेन हिरण्येन कन्दमूलफलैरपि ॥
एषामभावे कुर्व्वीत अथवापि जलेन वा ।

तथा —

कृच्छ्राभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्व्वीत यस्य भार्य्या रजस्वला ॥

इति

एवं चात्र पाकश्राद्धं मुख्यम् । पाकासम्भवे ब्राह्मणासम्भवे च आमश्राद्धम् । तस्याप्यसम्भवे हेमश्राद्धं कर्त्तव्यमिति मदनपारिजातदिवोदासादयः ।

प्राच्या अपि एवमेव आचरन्ति । अतएव ओंकुर्दीवो दातुरभ्युदय इति मन्त्र-श्राद्धं प्रकृत्य मिताक्षरायामुक्तम् । स्मृतिरत्नावलीकारादयस्तु मघे तीर्थादौ च आमश्राद्धं हेमश्राद्धं वा मुख्यम्, पाकश्राद्धं तु न भवत्येव इत्याहुः ।

इदमेव युक्तमुत्पश्यामः ।

तीर्थे जलसमीपे चामेन हेम्ना वा श्राद्धं कार्य्यम् ।

तदैव हि जलान्तेषु आमश्राद्धं प्रशस्यते ।
गयाद्यग्रगुणं पुण्यं समीतीर्थे निवापजम् ।

इति वचनात् ।

गयादावन्नेनैव ।

दाक्षिणात्यास्तु उभयं कुर्व्वन्ति ।
तीर्थे श्राद्धं प्रकुर्व्वीत पक्वान्नेन विशेषतः ।

इति वचनात् ।

अत्र देशाचारतोव्यवस्थेयम् ।

शूद्रेण तु सर्वदा आमेनैव कार्य्यम् ।

सदा चैवं तु शूद्राणामामश्राद्धं (विधीयते)विदुर्बुधाः ।
न पक्वं भोजयेद्विप्रान् श्राद्धे शूद्रः * कदाचन ।
भोजयन् प्रत्यवायी स्यान्न च तस्य फलं लभेत् ॥

इति सुमन्तुवचनात् ।

आमश्राद्धे विशेषमाह व्यासः ।

आमं दद्यात्तु कौन्तेय दद्या(दामं)दन्नंचतुर्गुणम् ।
त्रिगुणं द्विगुणं वापि न त्वेकगुणमर्पयेत् ॥
ब्राह्मणाय † प्रदातव्यं सर्वोपस्करसंयुतम् ॥

इति

सर्वथा असमर्थत्वे तु एकगुणमपि दद्यादिति शिष्टसम्मतिः ।

---

* श्राद्धे शूद्र इत्यत्र सच्छूद्रोऽपि इत्याकरे पाठः ।

† अत्र उत्तरोत्तरपक्षस्य प्राशस्त्यमिति भावः ।

वैगुण्यादिकं पुत्रवान्तरापेक्षया ।

द्रव्यं त्वष्टगुणितं त्रिगुणं द्विगुणं तु वा ।
चतुर्गुणं तु वा दद्यादामश्राद्धविधौ द्विजः ॥

इति

उशनाः —

आमश्राद्धं यदा कुर्य्याद्विधि(त:)ज्ञः श्राद्धदस्तदा ।
तत्तेऽग्नौकरणं कुर्य्यात्पाकस्य वि(शेषत:)धानतः ।
द्विजाभावे तु विधिर्यःस्यादामश्राद्धेऽप्यसौ(स्मृत:)विधिः ।
आवाहनादि सर्वं स्यात् पिण्डदानं च भारत ।
दद्याद् यच्च द्विजातिभ्यः शृतं वाऽन्नमेव वा ।
तेनाग्नौकरणं कुर्य्यात् पिण्डांस्तेनैव निर्वपेत् ।

इति

अत्र आवाहनादिकथनं ग्रहणादिनिमित्तामश्राद्ध एव न तु तीर्थश्राद्धे तत्र तन्निषेधस्य उक्तत्वात् ।

तथा षट्त्रिंशन्मते —

आमश्राद्धं यदा कुर्य्यात् पिण्डदानं कथं भवेत् ।
गृहपाकात् समुद्धृत्य स(स)क्तुभिः पायसेन वा ।
पिण्डदानं प्रकर्त्तव्यं यथालाभं द्विजोत्तमैः ।

इति

आमगृहपाकसक्तुपायसेषु यथालाभं व्यवस्था ।

यत्तु—

आमेन पिण्डं दद्याच्चेद्विप्रान् पक्वेन भोजयेत् ।
पक्वेन कुरुते पिण्डमामान्नं यः प्रयच्छति ।
तावुभावपि राजेन्द्र नरकार्हौ न संशयः ।

इति विष्णुवचनम् ।

तदमावास्यादिश्राद्धविषयम् ।

आमश्राद्धे भोजनसम्बद्धा आपोशानादयो लुप्तप्रयोजना निवर्त्तन्ते ।

कृष्णाले अवघ्रातवत् ।

अग्निप्रश्नोऽवगाहश्च तृप्तप्रश्नोयथासुखम् ।
आमश्राद्धे भवेन्नैतदापोशानं च पञ्चमम् ॥

इति

अवगाहः अङ्गुष्ठनिवेशनं ।

ततश्च आमश्राद्धपक्षे एते न भवन्ति । आवाहनादयश्च ।
तीर्थश्राद्धत्वात् ।

पाकश्राद्धे तु आवाहनादयएव न भवन्तीतिविवेकः ।
हेमश्राद्धपक्षे पिण्डनिवृत्तिरपि ।

इति दिवोदासः ।

स्मृत्यर्थसारे तु विकल्पः ।

तथा—

आमश्राद्धे केषांचित् मन्त्राद्यामूहोऽपि भवति ।

यथाह मरीचिः —

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्ज्जने।

अन्यकर्म्मस्वनूह्याः स्युरामश्राद्धविधिः स्मृतः॥

इति

यथा आवाहने पितॄन् हविषे अत्तवे —

इत्यत्र अत्तव इति पदस्थाने (स्वीकर्त्तव्य इति पदोह)स्वीकर्त्तवे इति पदोहः। स्वधाकारे तु नमोवः पितरो रसाय इति मन्त्रे रसायेति पदस्थाने आमायेत्यूहः *।

विसर्ज्जनेऽपि वाजे वाजे इति मन्त्रे —

अमा यात पथिभि र्देवयानैरित्यत्र अमा इति स्थानत्रयस्थाने तृप्यत इति लोट्प्रयोगोहः कार्य्यः। एवमिदमन्न-मित्यादौ [इदमाममित्याद्यूहः कार्य्यः। अन्यकर्म्मणि विष्णो ह(व्य) र्थं रक्षस्व इत्यादौ] नोह इति मरीचिवचनार्थः।

वस्त्रदक्षिणादि यथाशक्ति आमहेमश्राद्धयोरपि देयमेव।

सिद्धान्ने तु विधिर्यः स्यादामश्राद्धे स एव हि।

इति सुमन्तूक्तेः।

यदा तु —

ब्राह्मणा बहवोन सन्ति। तदा एकेनापि श्राद्धं कार्य्यम्।

अन्नाभावे द्विजाभावे, तीर्थेऽपि महालये।

---

* नमोवः पितर इष इति मन्त्रे इष इति पदे आमायेत्यूहः।

इति विश्वनाथीती पाठः।

एकस्मिन् दीयते चान्नमर्घ्यान् पिण्डान् पृथक् पृथक् ।

इति स्मृतेः ।

यद्वा तु —

एकोऽपि न लभ्यते तदा दर्भवटोरुपरि श्राद्धं कार्य्यम् ।
अन्नं चाग्न्यादौ क्षिपेत् ।

पात्राभावेऽखिलं कृत्वा विप्रभ्यन्नविधिं नरः ।
निधाय वा दर्भवटूनासने सुसमाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ।
सर्वाभावे क्षिपेदग्नौ गवे दद्यादथाप्सु वा ।
नैव श्राद्धस्य लोपोऽस्ति पैतृकस्य विशेषतः ।

इति देवलोक्तेः ।

प्रैषानुप्रैषसंयुक्तमिति श्राद्धं सम्पन्नं सुसम्पन्नमित्यादि प्रश्न-प्रतिवचने स्वयमेव वदेदित्यर्थः । इदं च पक्वान्नपक्षे । आम-हेमश्राद्धपक्षयोस्तु सर्वश्राद्धं निवर्त्त्य तद्द्रव्यं कालान्तरे ब्राह्मणाय दद्यादित्युक्तम् ।

इदं चामश्राद्धं सति सम्भवे पूर्वाह्णे तीर्थप्राप्तिं सम्भाव्य तदैव कर्त्तव्यमित्युक्तं प्राक् । †

---

यथा —

† आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ।

इति

यदा तु तीर्थे केनापि प्रकारेण श्राद्धे अशक्तिस्तदा प्र (ख) आदि-नापि पिण्डदानमपि अवश्यं कार्य्यम्। अतएव देवीपुराणे श्राद्धोक्त्यैव पिण्डदानप्राप्तौ "पिण्डदानं तु तत्रस्थं पितॄणां चैव वल्लभम्"।

इति पुनः पिण्डदानं पृथगुक्तम्।

देवलोऽपि —

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः।
श्राद्धाहनि तु सम्प्राप्ते भवेन्निरग्निकोऽपि वा॥

इति

——

## अथ पिण्डद्रव्याणि।

देवीपुराणे —

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा।
कर्त्तव्यमृषिभिः प्रोक्तं पिण्याकेनेङ्गुदेन वा *।
गुडेन वा इति च पाठः।

वायुपुराणेऽपि —

पायसेनाथ चरुणा सक्तुना पिष्टकेन वा।

---

* संयावो गोधूमविकारः।
पिण्याकस्तिलकल्कः।
इङ्गुदं तापसतरुफलम्।

तण्डुलैः फलमूलाद्यैः पिण्डदानं विधीयते ॥

इति

अत्र पूर्व्वपूर्व्वासम्भवे उत्तरोत्तरं ग्राह्यम् ।

सत्यव्रतः —

शाकमूलफलाद्यैस्तु वासोगोभूमिकाञ्चनैः ।

अद्भिर्वा विप्रसंवादात् पितॄणां प्रीतिमावहेत् ।

विप्रसंवादः विप्रं ब्रूयात् मया अद्य श्राद्धं कृतमस्तु अस्त्वित्येवं विप्रोब्रूयादित्येवंरूपः ।

पिण्डपरिमाणमाह अङ्गिराः ।

कपित्थबिल्वमात्रान् वा पिण्डान् दद्याद्विधानतः ।

कुक्कुटाण्डप्रमाणान् वा केचिदामलकैः समान् ।

बदर्या समान् वापि दद्याच्छ्रद्धासमन्वितः ॥

इति

अत्र परिमाणतारतम्यं शक्ताशक्तविषयं ज्ञेयम् । अत्राप्य-शक्तेन एतदपेक्षया सूक्ष्मप्रमाणा अपि देयाः ।

शमीपत्रप्रमाणेन पिण्डं दद्याद् गयाशिरे ।

इति मत्स्यलिङ्गात् ।

अन्यच्च —

तिलमन्नं च पानीयं धूपं दीपं पयस्तथा ।

मधु सर्पिः खण्डयुतं पिण्डमष्टाङ्गमुच्यते ॥

अवनेजनं पिण्डदानं पुनः प्रत्यवनेजनम्।
दक्षिणा चात्रसंकल्पस्तीर्थश्राद्धेष्वयं क्रमः॥

तथा —

तीर्थश्राद्धपिण्डान् तीर्थे एव प्रक्षिपेत्।
तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः।
दक्षिणाभिमुखोभूत्वा पित्र्या दिक् सा प्रकीर्त्तिता॥

इति वचनात्

जले एव पिण्डक्षेपः कार्य्यः न तु गवादौ।

यदा तु पिण्डदानेऽप्यशक्तिस्तदा तर्पणमात्रमपि अवश्यं कार्य्यम्।

तिलैः सप्ताष्टभिर्वापि समवेतं जलाञ्जलिम्।
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति।
यतः कुतश्चित् संप्राप्य गोभ्यो वापि गवाह्निकम्॥

इत्यत्र अपिशब्दश्रवणात्।

तथा च यत्नेन तर्पणश्राद्धपिण्डदानानि त्रीण्यपि कार्य्याणि। ततोऽयत्नेन तर्पणपिण्डदाने कार्य्ये। अयत्नतरेण तु तर्पणमात्रं कार्य्यमिति विवेकः।

यत्र च काश्यादावेकस्मिन् महातीर्थे अवान्तराणि अनेकतीर्थानि गम्यन्ते। दिनं चैकं। तत्र अवान्तरतीर्थनिमित्तकश्राद्धावृत्तिः कार्य्या। निमित्तभेदात्। दर्शे उपरागश्राद्धवत्।

यत्तु —

नैकः श्राद्धद्वयं कुर्य्यात् समानेऽहनि कुत्रचित्।

इति एकदिने श्राद्धद्वयनिषेधकं प्रचेतसोवचनं

तत् समाननिमित्तकश्राद्धविषयम्।

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने।

नैमित्तिके तु कर्त्तव्यं निमित्तानुक्रमे(मेणच) मोदये।

इति जाबालिना विशेषोक्तेः।

द्विवह्ननि निमित्तानि जायेरन्नेकवासरे।

नैमित्तिकानि कार्य्याणि निमित्तोत्पत्त्यनुक्रमात्॥

इति कात्यायनोक्तेश्च।

उपवासमुण्डने तु सकृदेव। प्रयागकाश्यादिव्यापकतीर्थो-पाध्यवच्छेदेन तद्विधानात्। फलसंस्कारकत्वाच्च। फलव्याति-प्रसङ्गेन।

---

## अथ श्राद्धान्तरसन्निपाते निर्णयविधानम्।

तत्र यदि तीर्थप्राप्तिदिने वार्षिकश्राद्धं प्राप्नुयात् तदा तत् पृथगेव कार्य्यम्।

उक्तं हि कालादर्शे —

प्रत्याब्दिकेषु चालभ्ययोगेषु निश्चितस्य च।

संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत्॥

तत्रापि आदौ तीर्थश्राद्धं ततो वार्षिकश्राद्धं कार्य्यम् । तीर्थश्राद्धस्य तीर्थप्राप्त्यनन्तरमेव कर्त्तव्यत्वेन विलम्बायोगात् । दार्शिक-व्यतीपात युगादि-मन्वादि-संक्रान्त्यादि-निमित्तकानि तु यदि आमेन हेम्ना वा तीर्थश्राद्धं क्रियते तदा पृथगेव कार्य्याणि । तेषां पक्वान्नसाध्यत्वेन द्रव्यभेदेन प्रसङ्गायोगात् । यदा तु तीर्थश्राद्धमपि पाकेन क्रियते तदा द्रव्यभेदाभावात् सर्वासांच तद्देवतानां तीर्थश्राद्ध एव इष्टत्वात् प्रसङ्गात्तीर्थश्राद्धेनैव इतरसिद्धिः ।

दार्शिकस्य * युगादेश्च दार्शिकाब्द्ययोगयोः ।
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ॥

इति कालादर्शोक्तिः ।

यदा तु केनचिन्निमित्तेन सर्वाणि दार्शिकादीनि आमेन हेम्ना वा चिकीर्षति तदा आमेन हेम्ना वा अनुष्ठितेन तीर्थश्राद्धे-

---

* अत्र दार्शिकशब्दस्तत्समानन्यायानां सर्वेषामुपलक्षकः ।
नित्यश्राद्धमपि यदि आमेन हेम्ना वा क्रियते तदा तैर्थिकं पृथक् ।
यत्तु नान्दीमुखतीर्थश्राद्धेषु नित्यश्राद्धदेवतानामिष्टत्वात् प्रसङ्गसिद्धतया नित्यश्राद्धं पृथङ् न कर्त्तव्यमिति हेमाद्रिणोक्तम् । तत्तीर्थश्राद्धस्य पाकेन करणे द्रष्टव्यम् ।
तदुक्तं नागरखण्डे ।

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद् यत्र सिध्यति ।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात् तत्र चापयेत् ।

इति

मेव तेषां विधिरित्यादयोनिर्णयाः स्वयमूह्याः ।

इदं तीर्थश्राद्धं दशमासानन्तरं तीर्थप्राप्तौ नियमेन कार्य्यम् । अन्तरा तु फलेच्छया कृताकृतम् ।

इति तीर्थश्राद्धविधानम् ।

---

## अथ तीर्थश्राद्धे(देवताविचार:)सम्प्रदाननिर्णय: ।

सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ।
पार्वणं तत्र कर्त्तव्यमेकोद्दिष्टं न कर्हिचित् ।
पित्रादीनां त्रयाणां तत्तीर्थे कार्य्यं तु पार्वणम् ॥

इति वचनात् पित्रादित्रयाणां तावत् पार्वणं कार्य्यम् ।

एवं मातामहादित्रयाणामपि पार्वणमेव ।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

इति गौतमोक्तेः ।

कर्षूसमन्वितं मुक्त्वा तथाद्यश्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ।

इति कात्यायनोक्तेश्च ।

एवं गयातिरिक्ततीर्थेषु श्राद्धं षड्दैवत्यमिति स्मृतिरत्नावली-कारादयो मेनिरे । अन्ये तु तीर्थादिसामान्यश्राद्धमुपक्रम्य

हविःशेषाक्ततोऽनुष्टिमादायैवैकमाहृतः।
प्रथमः पितृपत्नीनां पिण्डनिर्वपणं चरेत्।
इति देवलस्मृतेर्मातॄणामपि तीर्थे पार्वणं मन्यन्ते।
स्मृत्यर्थसारे तु विशेष उक्तः।
गयायां मात्रादिपार्वणमावश्यकमुक्तं गयामाहात्म्ये।
अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि।
मातृश्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह॥
इति
एतच्च मातृपार्वणं पित्रादिपिण्डानां पश्चिमभागे कार्य्य-मिति शाट्यायनः। एवं नवदैवत्यं भवति।
अन्ये तु मातामह्यादिपार्वणमपि पृथक् भवतीत्याहुः।
केचिदिच्छन्ति नारीणां पृथक् श्राद्धं महर्षयः।
इति चतुर्विंशतिमते, नारीणामिति सामान्योक्तेः।
पित्रादिनवदैवत्यं तथा द्वादशदैवतम्।
इति अग्निपुराणोक्तेश्च।
अत्र देशाचारात् शिष्टाचाराच्च व्यवस्था द्रष्टव्या। एवं सति यदा षड्दैवत्यं श्राद्धं क्रियते तदा मातृमातामह्यादीनां पितृ-मातामहादिषु सपत्नीकत्वेन निगमेषु निर्देशः कार्य्यः।
स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम्।
पितामही च स्वेनैव स्वेनैव प्रपितामही॥
इति बृहस्पतिना मात्रादीनां पित्रादिभिः सहभावेन देवता-

त्वोक्तेः।

अन्वष्टकां तथा मातृश्राद्धं चैव मृतेऽहनि।

एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत् पृथक् भवेत्।

इति शङ्खेन पृथक् श्राद्धं निषेधता अपृथक् भवेदित्यभ्यनुज्ञानाच्च।

मात्रादीनां पृथक् श्राद्धपक्षेऽपि यदि ताः कृतसहगमनास्तदा भर्त्तारं तां च उद्दिश्य सहैव अयुग्मब्राह्मणभोजनं कार्य्यम्। पिण्डोऽपि उभयोर्द्देशेन एक एव देयः।

मृताहनि समासेन पिण्डनिर्वपणं पृथक्।

नवश्राद्धं तु दम्पत्योरन्वारोहणएव तु॥

इति लौगाक्षिस्मृतेः।

अस्यार्थः। दम्पत्योरन्वारोहणेन निमित्तेन मृततिथ्येकत्वे

पिण्डनिर्वपणं श्राद्धं च उक्तप्रकारेण

द्विपितृकश्राद्धवत् समासेन स्यात्।

नवश्राद्धं तु प्राक् सपिण्डीकरणात् पृथगेव।

न तु समासेन।

अत्र मृताहनि इति विशेषोपादानात्। मृततिथिभेदे तु न समासः। किन्तु पृथगेव।

अत्र नवश्राद्धे एव पृथक्त्वविधानाद्दर्शसांवत्सरिकतीर्थश्राद्धादिषु परिसंख्यया समास एव अवगम्यते।

एवमनेकासामन्वारोहणेऽपि विज्ञेयम्।

यच्च स्मृत्यन्तरे —

एकचित्यां समारूढौ दम्पती निधनं गतौ ।

पृथक् श्राद्धं तयोः कुर्य्यादोदनं च पृथक् पृथक् ।

इति पृथक् श्राद्धविधानं तत्रवश्राद्धविषयम् । एवं मदन-पारिजातकाराद्यामेनिरे । हेमाद्रिस्तु मृताहनि इत्यस्य परि-संख्यापरिहाराय मृताहनीति यथाश्रुता(र्थ) पुरोधेन सांवत्-सरिकश्राद्धमात्रविषयमेतदित्याह । तेन तीर्थादौ पृथक् एवेद-मिति प्रतीयते ।

अत्र यथाचारं व्यवस्था द्रष्टव्या । तदेतत् समासेन पिण्ड-दानमात्रविषयम् ।

तदाहाग्निः स्मृतिरूपेण —

एकचित्यां समारूढ़ मृतयोरेकवर्हिषि ।

पित्रोः पिण्डान् पृथग् दद्यात् पिण्डं वापत्य तत्सुतः ॥

इति

एककाले गतासूनां बहूनामथवा द्वयोः ।

तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्य्यात् पृथक् पृथक् ॥

इति स्मृतेः ।

तथा —

सपत्नमातृसपत्नप्रपितामहीभ्योऽपि तीर्थे दद्यात् ।

पितृपत्न्यः सर्वा मातर इति सुमन्तुना सर्वासां तासां मातृत्वाति-देशात् । तत्रापि जनन्यादिसामीप्याभावे तत्पिण्डे च

तासामपि उद्देशोऽस्तु पृथक् ।

अनेका मातरो यस्य तीर्थे चापरपक्षिके ।
अर्घ्यदानं पृथक् कुर्य्यात् पिण्डमेकं तु निर्वपेत् ॥

इति गालवोक्तेः ।

शिष्टास्तु एतस्य अपुत्रविषयतां मत्वा पृथगेव श्राद्धं पिण्डं च कुर्वन्ति ।

तथा —

सपत्नमातामहेभ्योऽपि श्राद्धं कार्य्यम् । मातृसपत्नीनां सुमन्तुना मातृत्वे अतिदिष्टे तत्पितॄणामपि गौणमातामहत्वसिद्धेः ।

तदेतत् सर्वमुक्तं श्राद्धकल्पे हेमाद्रिणा ।

यदा तु नानापितृतृप्तिकामनया विशिष्टे महालयादिकाले गयादितीर्थविशेषे वा श्राद्धं कुर्य्यात् । तदा पुत्रवतीनामपुत्राणां वा मातृसपत्नीनां श्राद्धं कुर्य्यात् । पुत्रवतीनामपि तासां श्राद्धे कृपया स्नेहेन वा सपत्नीपुत्रत्वेन पार्वणाधिकारवत्त्वात् । एतेन पितृजननीव्यतिरिक्ताः पितामहपत्न्यः पितामहजननीव्यतिरिक्ताः प्रपितामहपत्न्योऽपि व्याख्याताः * ।

पितृव्यस्तनयोरपि(श्राद्धं) कार्य्यम् । आचार्य्यादीनां च ।

---

* जननीसपत्नीनां गौणमातृत्वनिरूपणेन तज्जनकानामपि गौणमेव मातामहश्राद्धे दैवतत्वमित्यपि निरूपितं भवतीतिभावः । यदा तु विशिष्टतीर्थकालादौ नानापितॄणां तृप्तिकामनया श्राद्धं कर्तुमिच्छेत्तदा पार्वणैकाधिकारेण तेषामपि कुर्यादिति तात्पर्यम् ।

रुपनारायणः।

आचार्य्यगुरुमित्रेभ्यः सखिज्ञातिभ्य एव च।
तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च अनामयीन्॥
पिण्डांस्तेभ्यः सदा दद्यात् पृथग् भाद्रपदे नरः।
तीर्थेषु चैव सर्वेषु माघमासे मघासु च॥

इति चतुर्विंशतिमतात्।

ज्ञातयः पितृव्यसुतमातुलाद्याः।

प्रचेतसोऽपि विशेषः—

दौहित्रपुत्रदाराश्च ये कनिष्ठाःसहोदराः।
निःसन्ताना मृता ये च तेभ्योऽप्यत्र प्रदीयते॥

वृद्धयातातपोऽपि —

प्रीत्या श्राद्धं तु कर्त्तव्यं सर्वेषां वर्णलिङ्गिनाम्।
एवं कुर्वन्नरः सम्यक् महतीं श्रियमाप्नुयात्॥

वर्णलिङ्गिनो ब्रह्मचारियत्यादयः। अत्र सामान्योक्तावपि सज्ञातय एव ते ग्राह्याः।

अत्र पितृव्यादिपत्नीभ्यः पृथगेव देयम्। तत्पत्नीभ्यश्चेति पूर्वोक्तवचनात्। एतेषां सर्वेषामेकोद्दिष्टमेव भवति।

सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्व्वणम्।
पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव हि॥

इति जातुकर्णोक्तेः।

सपिण्डीकरणादूर्द्ध्वं यच यत्र प्रदीयते।

भार्ये भगिन्यै पुत्राय स्वामिने मातुलाय च ।
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ॥
इति सुमन्तूक्तेश्च ।

अत्र मातृपदं सपत्नमातृपरम् मुख्यमातुः पार्वणविधानात् । पितृव्यादिसमभिव्याहाराच्च इति हेमाद्रिराह ।

यत्तु—

पितृव्यभ्रातृमातृणामपुत्राणां तथैव च ।
मातामहस्याप्युत्रस्य श्राद्धादि पितृवद् भवेत् ॥

इति वचनं । तदावश्यकतया तुल्यत्वज्ञापनार्थं न तु पार्वणविधानेन तुल्यत्वज्ञापनार्थम् ।

अत्र मातामहः सापत्नो ज्ञेयः मुख्यस्य पार्वणविधानात् ।

---

## अथ पार्वणोद्देश्यानां निवेशक्रमः ।

तत्र शातातपः —

पितॄणां प्रथमं दानं मातॄणां तदनन्तरम् ।
ततो मातामहानां च पितृव्यस्य सुतस्य च ॥

छागलेयः—

वयाहि मैथुनाः कार्या इत्यादौ प्रकीर्तिताः ।
सर्वेषेव हि मध्यस्था मान्याः कार्यास्तु मातरः ॥

यत्तु—

पितृमातामहश्राद्धादौ मातरस्तदनन्तरम् ।
तर्पयेऽन्वष्टकाश्राद्धे तीर्थे चार्थे क्रमः स्मृतः ॥

इति स्मृतिरत्नावलीकारेणोद्धृतं वचनम् ।

तत् तेनैव निर्मूलत्वोक्तेरुपेक्ष्यम् । अतएव अन्तनिवेशं निषेधति उशनाः —

अन्तर्मातामहान् कृत्वा मातृणां यः प्रयच्छति ।
स मूढो नरकं याति यावदाभूतसंप्लवम् ॥

जाबालोऽपि—

अन्ते निवेशयेद् यस्तु मातुः श्राद्धेषु मानवः ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥

तस्मात्तीर्थादौ पितृपार्व्वणानन्तरमेव मातृपार्व्वणं कार्य्यम् । अनेनैव न्यायेन मातामहपार्व्वणानन्तरमेव मातामहीपार्व्वणम् । पत्न्यादीनां तु तर्पणोक्त एव क्रमो ग्राह्यः ।

अत्र पितृमातामहपार्व्वणे नित्ये । अन्यानि तु पार्व्वणैकोद्दिष्टानि काम्यानि यथाशक्ति कार्य्याणि न तु आवश्यकानि । एवं पार्व्वणैकोद्दिष्टानामनेकेषां युगपत् प्राप्तौ तन्त्रेण श्राद्धं कुर्य्यात् ।

बहूनामथवा द्वाभ्यां श्राद्धं चेत् स्यात् समीक्षणे ।
तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्य्यात् पृथक् पृथक् ॥

इति पुलस्त्योक्तेः

पार्वणानि निर्वर्त्य पश्चादेकोद्दिष्टानि कार्याणि ।

यद्येकत्र भवेत् प्राप्त * मेकोद्दिष्टं च पार्वणम् ।
पार्वणं तत्र निर्वर्त्य एकोद्दिष्टं समा(चरेत्) पयेत् ॥

इति मरीच्युक्तेः ।

एतच्च शक्तौ सत्याम् । अशक्तौ तु पार्वणैकोद्दिष्टानि तन्त्रेण कुर्यात् ।

एकोद्दिष्टेषु शक्तौ प्रत्येकं ब्राह्मणभोजनम् । अशक्तौ तु एकस्मिन्नपि ब्राह्मणे सम्पूज्य भोजयित्वा अर्घ्यपिण्डान् पृथक् पृथग् दद्यात् † ।

तथाच चतुर्विंशतिमतम् —

आचार्यगुरुशिष्येभ्य इत्युपक्रम्य ।

तीर्थेषु चैव सर्वेषु माघमासे मघासु च ।
एकस्मिन् ब्राह्मणे सर्वानाचार्यादीन् प्रपूजयेत् ॥

इति

अर्घ्याणि चैव पिण्डांश्च सदा दद्यात् पृथक् पृथक् ।

इति च

एवं शक्तौ सत्यां वैश्वदेवमपि प्रतिपार्वणं पृथक् कार्यम् । अशक्तौ तु तन्त्रेण कार्यम् ।

कालभेदे न तन्त्रं स्याद्देशभेदे न चैव हि ।

---

* भवेत् प्राप्तमित्यत्र भवेयातामित्याकरे पाठः ।

† अशक्तौ तु एकस्मिन्नपि ब्राह्मणे सर्वाण्येकोद्दिष्टानि इत्याकरे पाठः ।

तथात्वविधानात्तु यौगपद्यं प्रतीयते ॥

इति संग्रहे देयकालैक्ये दैवतत्वाभिधानात् ।

मातामहीनामप्येवं तन्त्रं वा वैश्वदेविकम् ।

इति कात्यायनसूत्रोक्तेश्च ।

यदा तु अन्यप्रेरितस्तीर्थं गच्छति द्रव्यलिप्सया । सोऽपि तत्पित्रादिभ्यः पूर्वं श्राद्धं कृत्वा पश्चात् स्वपितृभ्यः कुर्यात् । उपपादितं चैतत् हेमाद्रिणा श्राद्धकल्पे ।

अतएव वायुपुराणे —

स्वधनदानेन प्रेतप्रेरितस्य कस्यचिद्वणिजो गयां गतस्य आदौ प्रेताय पिण्डदानं ततः स्वपितृभ्य इत्युक्तम् ।

आदौ गत्वा गयाशीर्षे प्रेतराजाय पिण्डकम् ।
समदाद्बन्धुभिः सार्द्धं स्वपितृभ्यस्ततो ददौ ॥

इति

वामनपुराणेऽपि तदेव प्रक्रम्य—

पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्वशः ।
चकार च सदायादान् पितॄंश्चक्रे त्वनन्त(रान्) रम् ॥

इति

विधवा तु भर्तृपार्वणं स्वपितृपार्वणं च कुर्यात् ।

स्वभर्तृप्रभृतिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ।

इति स्मृतिदर्पणोक्तेः ।

तथैव मिथ्य एव ।

यथाकालं यत्र तीर्थमहालयादौ अनेकदैवत्यं विहितं तत्रे-त्यर्थः ।

अत्र पितृश्राद्धं पितुः पुत्रपौत्राभावविषयम् । इति दिवो-दासः ।

अन्ये तु—

पुत्रादिमतोऽपि भवति । अपुत्रा पुत्रवत्पत्नी इति वच-नस्थवतिप्रत्ययेन प्रकरणानुरोधात् श्राद्धक्रियातुल्यत्वाभिधानात् पुत्रस्य च स्वपितृमातामहपार्वणयोरधिकारात् अपुत्रां प्रति च तत्पित्रादीनां भर्त्रादिरूपत्वात् तन्मातामहादीनां च पित्रा-दिरूपत्वात् पुत्रवतामपुत्राणां वा स्वपित्रादीनां तीर्थश्राद्धादौ पुत्रवदेव विधवाया अपि अधिकारावगमात् । अपुत्राणामेव इति विशेषकस्याभावाच्च । इत्याहुः ।

ननु एवं पुत्रस्य मातामहत्वादिरूपेण तच्छ्राद्धे अधिकारा-देतस्या अपि तत्त्वेनैव स्यात्तु पितृत्वादिना । नैवम् । एकस्यापि सम्बन्धिभेदेन परिधिवत् सम्बन्धितावच्छेदकरूपभेदात् । यं प्रति येन रूपेण सम्बन्धिता तं प्रति तेनैव उद्देश्यत्वात् । तावतापि वस्तुतः श्राद्धक्रियातुल्यतानिर्वाहात् । ततश्च यथा पुत्रं प्रति पितृत्वादिना

* यद्यपि साधिकारिकत्वात् स्वपितृश्राद्धमन्तरेणतया श्राद्धे प्रसज्यते तथापि उद्देश्यत्वाभावात् भार्यायाः पत्नीत्वेन तद्वचनस्यानुपपत्त्यभावाच्च स्वपितृश्राद्धं पत्न्यापीति भावः ।

उद्देश्यानामपि एतां प्रति भर्तृत्वादिना उद्देश्यत्वं । तथा माता-महत्वादिना उद्देश्यानामपि पितृत्वादिना भविष्यति । एतद्रूपोद्दे-श्यतार्थमेव हि स्वभर्तृप्रभृतीति वचनं । तथाविधवाया भर्तृपार्वणं पितृपार्वणं च आवश्यकम् । आवश्यकत्वार्थैव चतस्त्रृतीत्युक्तम् । यत्तु—

भर्तृश्राद्धं तु या नारी मोहात् पार्वणमाचरेत् ।
न तेन तृप्यते भर्ता हत्वा तु नरकं व्रजेत् ॥

इति वचनं ।

तत् श्वशुरे एकोद्दिष्टपक्षप्रशंसार्थम् । न तु सर्वथा पार्वण-निषेधार्थम् । अन्यथा स्वभर्तृप्रभृतिभ्य इति वचनं निर्वि-षयं स्यात् । यस्यास्तु श्वशुरो जीवति सा भर्तृतत्पितामहप्रपि-तामहेभ्यः कुर्यात् ।

श्वशुर-तत्पित्रोर्जीवतोर्भर्तृ-तत्प्रपितामहवृद्धप्रपितामहेभ्यो-दद्यात् । एवं श्वशुरश्वश्र्वादिः श्वश्र्वादिपार्वणमपि कृताकृतम् । एवं च नवदैवत्यं भवति । केचित्तु मातामहायाः स्वमातृ-पार्वणमपि भवति इति द्वादशदैवत्यमाहुः ।

अपरे स्वमातामहपार्वणेन सह पञ्चदशदैवत्यमाहुः ।

अन्ये स्वमातामहीपार्वणेन सह अष्टादशदैवत्यं मन्यन्ते ।

एतत्पक्षत्रयमपुत्रविषयमिति युक्तं प्रतिभाति ।

तथापि भार्याजीवने दारलोपाल्लोपश्च ।

भर्तृमातामहादीनां तु श्राद्धप्रसङ्ग एव नास्ति ।

श्वश्र्वादिमातामहादिपार्वणयोरकरणे भर्तृपितृपार्वणयोरेव यथायथं सपत्नीकानामिति भर्त्रादीनां विशेषणं प्रयोज्यम् ।

अन्येषां तु एकोद्दिष्टान्येव ।

अत्र यथादेशाचारं व्यवस्थेयम् ।

तथाच संग्रहे —

चत्वारः पार्वणाः कार्य्या विधवायाः सदैव हि ।
स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्वश्रूणां च विशेषतः ।
मातामहीनामप्येवं कुलधर्मानुसारतः ॥

इति

जीवत्पितृकेणापि तीर्थे स्वपितृपित्रादिभ्यः श्राद्धं कर्त्तव्यमित्युक्तं मनुना ।

म्रियमाणे(ऽपि) तु पितरि पूर्व्वेषामेव निर्वपेत् ।

इति

स्मृत्यन्तरे—

उद्वाहे तीर्थे च संन्यस्ते पतिते तु विशेषतः * ।
येभ्यएव पिता दद्यात्तेभ्योदद्यात् स्वयं सुतः ।
स्वयमिति स्वाधिकारिता उच्यते ।

भविष्यपुराणे तु ।

जीवत्पितृकः पितामहप्रपितामहयोरेव दद्यादित्युक्तम् ।

---

* जाते च पतिते सति इत्याकरे पाठः ।

जीवमाने न देयं स्यात् यस्मात् भरतसत्तम ।
तस्माज्जीवत्पिता कुर्य्याद्द्वाभ्यामेव न संशयः ।

इति

विष्णुरत्र विशेषमाह —

पितरि जीवति यः श्राद्धं कुर्य्यात् । पिता येषां कुर्य्यात् स तेषां कुर्य्यात् । पितरि पितामहे च जीवति येषां पितामहः कुर्य्यात् स तेषां कुर्य्यात् । त्रिषु जीवत्सु नैव कुर्य्यात् । यस्य पिता प्रेतः स्यात् । पितामहे प्रपितामहे च जीवति पित्रे पिण्डं निधाय प्रपितामहात् पराभ्यां दद्यात् । यस्य पिता पितामहश्च प्रेतौ स्याताम् । स ताभ्यां पिण्डौ दत्त्वा पितामहात् पराभ्यां द्वाभ्यां दद्यात् ।

मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः ।
मन्त्रोहेण यथान्यायं शेषाणां मन्त्रवर्जितम् ॥

एवमिति । पितरि जीवति यः श्राद्धं कुर्य्यादित्यस्य अतिदेशः । तथाच मातामहे जीवति येषां मातामहः कुर्य्यात्तेषां कुर्य्यादित्यादि योज्यम् । मातृजीवनेऽपि एवमेव । न्यायसाम्यात् ।

ततश्च जीवत्पितृकः पितृपित्रादिभ्यस्त्रिभ्यो दत्त्वा यदि मृतमातृकस्तदा स्वमात्रादिभ्यो दद्यात् । मातृसत्त्वे पितामह्यादिभ्यस्तिसृभ्यो दत्त्वा स्वमातामह्यादिभ्यो दद्यात् । मातामहसत्त्वे मातृपितामहादिभ्यस्त्रिभ्यो दद्यादिति फलितार्थः ।

न च येभ्य एव पिता दद्यादिति वचनविरोधः।

मातृमातामहशब्दयोः सम्बन्धिशब्दत्वात् पुत्रसम्बन्धानामेव मात्रादीनां मातामहादीनां च यत्तच्छब्दवाच्यत्वेन ऐक्यात् तच्छ्राद्धे दैवतात्वमिति व्याख्यानात्। ततश्च जीवत्पितृकस्य स्वसम्बन्धि-मातृमातामहादीनामेव श्राद्धमिति।

तदप्ययुक्तम्—

यच्छब्दवाच्येभ्यस्तच्छब्दवाच्येभ्य इति व्याख्याने यत्तच्छब्दयो-र्वैयर्थ्यापत्तेः। पितृपित्रादि-विषये मुख्यार्थ-सम्भवेन युगपद्वृत्ति-द्वयकल्पनाप्रसङ्गाच्च।

किंच—

अत्र यत्तच्छब्दाभ्यामेव वाक्ये निर्देशः।

सोऽपि येभ्यः पितेति पितृप्रतियोगिकत्वेन। न तु स्वप्रति-योगिकत्वेन। तथाच स्वसम्बन्धिशब्दबलात् पुत्रसम्बन्धिमात्रादि-प्राप्तिः। तस्मात् मृतमातृकस्यापि जीवत्पितृकस्य तीर्थश्राद्धे पितृसम्बन्धा मात्रादयस्तत्सम्बन्धा एव मातामहादयश्च श्राद्ध-देवता न तु स्वसम्बन्धा इति निष्कर्षः।

स्वमातुश्च पितृपत्नीत्वेन एकोद्दिष्टम्। एवं स्वमातामहस्यापि पितृश्वशुरत्वेन एकोद्दिष्टमेव।

इति सर्वं समञ्जसम्।

अत्र जीवत्पितृकोऽपि साग्निरेव तीर्थे श्राद्धं कुर्यात्। न तु निरग्निः।

यदा तु मृतपितृकोऽपि जीवन्मातृकस्तदा मातृपार्वण-लोपएव। किन्तु तत्र यथायोग्यं सपत्नीकानामिति पित्रादि-विशेषणं योज्यम्। एवं च नोक्तदोषावकाशः। एवं मातामह-जीवने मातामहीजीवनेऽपि ज्ञेयम्।

पितृवर्गे मातृवर्गे तथा मातामहस्य च।
जीवेच्चेद् यदि वर्गाद्यस्तद्वर्गं तु परित्यजेत्॥

इति गालवोक्तेः।

पितृवर्गं इत्येतदमावस्यादिविषयम्। जीवत्पितृकस्य तीर्थादौ श्राद्धाधिकाराभिधानात् *। एवं मातृवर्गेऽपि।

एवं पार्वणैकोद्दिष्टोद्देश्येभ्यः पिण्डान् दत्त्वा पश्चात् सामान्य-पिण्डो देयः।

तदाह देवलः—

ततः पिण्डमुपादाय संस्कृतासंस्कृतस्य(च)वा।
ज्ञातिवर्गस्य जन्तस्य सामान्यमिति निर्वपेत्॥

इतीति।

वक्ष्यमाणमन्त्रेण। स च मन्त्रः—

पितृवंशे मृता ये च इत्यादिः।
तेषां पिण्डो मया दत्तोह्यक्षय्यमुपतिष्ठताम्।

---

* तीर्थे चेतिवचनाज्जीवत्पितृकस्यापि पितृपित्रादिपार्वणश्राद्धमित्या-दित्याकरे पाठः।

इत्यन्तः *। अत्र श्लोकद्वयस्य एकार्थत्वादेकमन्त्रत्वम्।
तावतैव वाक्यार्थपरिसमाप्तेः।

तथा —

आ ब्रह्मणो ये पितृवंशजाता
मातुस्तथा वंशभवा मदीयाः।
कुलद्वये ये मम दासभूता
भृत्यास्तथैवाश्रितसेवकाश्च॥
मित्राणि सख्यः पशवश्च वृक्षाः
स्पृष्टाश्च दृष्टाश्च कृतोपकाराः।
जन्मान्तरे ये मम सङ्गताश्च
तेभ्यः स्वधापिण्डमहं ददामि।

इत्यनेन मन्त्रान्तरेणापि पिण्डान्तरं देयम्।
अत्रापि श्लोकद्वयस्य एकार्थत्वादेकमन्त्रत्वं ज्ञेयम्।

---

* यथा —

पितृवंशे मृता ये च मातृवंशे च ये मृताः।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः।
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः।
क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा।
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम्॥

एवं पिण्डदानं कृत्वा ब्राह्मणानुज्ञयनान्तं श्राद्धं स्वसूत्रोक्त-विधिना समापयेत्।

यस्य एवं विस्तृतश्राद्धे अशक्तिः।

तावतः कालस्य अभावोवा स एवं संक्षिप्तश्राद्धं कुर्यात्।

तद् यथा।

अशक्त्या संक्षिप्तश्राद्धमहं करिष्ये।

इति संकल्प्य—

ॐ पिता पितामहश्चैव तथैव प्रपितामहः।
माता पितामही चैव तथैव प्रपितामही।
मातामहस्तत्पिता च प्रमातामहकादयः।
मातामही च तच्छ्वश्रूस्तच्छ्वश्र्वादिस्तथैव च।
तेषां पिण्डं मयादत्तमक्षय्यमुपतिष्ठताम्॥

इति मन्त्रेण एकं पिण्डं दद्यात्॥

इति श्रीमदनन्तभट्ट-विरचिते विधानपारिजाते तीर्थश्राद्धदेव-ताविधानम्।

## अथ प्रसङ्गादस्थिक्षेपविधानम् ।

---

तत्र कालमाह गौतमः —

अब्दं गतं गुरौ सिंहे तथा माघे मलिम्लुचे ।
गङ्गायामस्थिनिक्षेपं न कुर्यान्मनुरब्रवीत् ॥

तथा—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमाब्दे न कुर्वीत यदि न स्यात् सपिण्डनम् ।

कृतेऽपि तु सपिण्डने ।

इति क्वचित् पाठः ।

तथा—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमाब्देऽपि कुर्वीत यदि स्याद्भक्तिमान् सुतः ॥

कृतं यच्चौर्ध्वदैहिकमिति चतुर्थपादं केचित् पठन्ति ।

एवं विरुद्धवचनानां यथाम्नायं व्यवस्था वेदितव्या ।

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ।

इति स्मृतेः ।

अथ अन्योऽपि विशेषः स्कान्दे—

मातुः कुलं पितृकुलं वर्जयित्वा नराधमः ।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत् ॥

इति

निषेधोऽयं द्रव्यादिलोभविषयः ।

अस्थीनि मातापितृवंशजानि नयन्ति गङ्गामपि ये कदाचित् ।
सहान्धवस्यापि दयाभिभूता स्तेषां च तीर्थानि फलप्रदानि ।

इति

अन्यस्यापि नरस्यास्थि गङ्गायां न्यस्य पूरुषः ।
दयया चाश्वमेधस्य फलमाप्नोत्यसंशयः ॥

इति च विशेषोक्तेः ।

अत्र यद्यपि अस्थिक्षेपस्य सामान्यतः स्वर्गप्राप्तिः फलं तथापि तीर्थतारतम्यात्तत्र तद्वैजात्यं ज्ञेयम् ।

गङ्गायां तु विशेषो ब्राह्मे —

यस्मिन् काले नृणामस्थि गङ्गायां क्षिप्यते नरैः ।
तं कालमादितः कृत्वा ब्रह्मलोके महीयते * ॥

---

* स्वर्गलोके भवेत् स्थितिरिति चिह्नितोऽधिको पाठः ।

अथ उत्तरावधेरनुक्तेः कल्पान्त एवावधिः प्रतीयते ।

योग्यत्वात् ।

गङ्गातीर्थेषु यस्यास्थि प्लवते पुण्यकर्मणः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् सनातनात् ।

इति वचनात् ।

विधिरपि तत्रैव —

स्नात्वा ततः पञ्चग(व्ये)वेन सिक्ता
हिरण्यमध्वाज्यतिलेन योज्य।
ततस्तु शुक्तिपक्षपुटे निधाय
पश्येद्धियं प्रेतगणोपगूढाम् * ॥
नमोऽस्तु धर्माय वदन् प्रविश्य
तीर्थे स मे प्रीत इति क्षिपेच्च।
स्नात्वा तथोत्तीर्य्य दिवाकरं च
दृष्ट्वा प्रदद्यादथ दक्षिणां तु ॥
एवं कृते प्रेतपुरे स्थितस्य
स्वर्गे गतिस्तस्य महेन्द्रतुल्या।

पञ्चगवं पञ्चगव्यम्।

अत्र महेन्द्रतुल्या स्वर्गे गतिरिति यदुक्तं तद् गङ्गाव्यतिरिक्त-तीर्थविषयम्।

तत्र (गङ्गायां) ब्रह्मलोकप्राप्तेरुक्तत्वात्।

इदं कर्म्म तीर्थविधेः पुरतः कार्य्यमिति दिवोदासः।

यदा कदाचित् कार्य्यमित्यन्ये।

यस्तु तीर्थफलोद्देशेन तीर्थं गच्छन् अनुषङ्गेण अस्थीनि नयति।
स सकलतीर्थकृत्यसमापनानन्तरमस्थिक्षेपं कुर्य्यात्।

---

* दक्षिणां द्विजनिवहः।

यस्तु मृतस्य स्वर्गादिकामनया अस्थीनि नयति स पूर्वमेव अस्थिक्षेपं कृत्वा तीर्थनिमित्तककर्माणि कुर्य्यादित्यपरे।

अत्र यथाम्नायं व्यवस्थेयम्।

---

## अथ प्रसङ्गादस्थ्यानयनादिप्रकारो लिख्यते।

---

शौनकीये —

शौनकोऽहं प्रवक्ष्यामि अस्थिशुद्धिविधिं क्रमात्।
ग्रामाद्बहिस्ततो गत्वा स्नानं कुर्य्यात् सचेलकम्।
प्रोक्षयेत् पञ्चगव्येन तत्तन्मन्त्रैर्विचक्षणः।

अस्थिनिखननभूमिं * पञ्चगव्येन तत्तत्प्रकाशकमन्त्रैः प्रोक्षेदित्यर्थः।

---

* यत्र अस्थीनि निखातानि सन्ति तां भूमिमित्यर्थः।

उपसर्पादिभिर्मन्त्रैः * प्रार्थनं खननं तथा ।
मृत्तिकोद्धरणं चास्थ्नां प्रक्षेपं च यथाक्रमम् ॥

उपसर्पादीनां चतसृणां (ऋचां) सङ्कुसुकर्षिस्त्रिष्टुप्छन्दः पितरो देवता भूप्रार्थनखननमृत्तिकोद्धरणास्थिप्रक्षेपेषु विनियोगः । एवमस्थीनि गृहीत्वा —

ततो जलाशयं गत्वा स्नानं कुर्याद् यथाविधि ।
अस्थिशुद्धिं ततः कुर्यादेतोन्विन्द्रेतिमन्त्रतः ॥
स्पृष्ट्वा स्पृष्ट्वा ततः स्नानं पञ्चगव्येन शुध्यति ।
दश स्नानानि कुर्वीत तत्तन्मन्त्रैर्विचक्षणः ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
भस्म-मृत्-मध्ववादीनि मन्त्रस्नानानि वै दश ॥

---

* चतुर्भिरित्यर्थः ।

प्रयोगे तथैव वक्ष्यमाणत्वात् ।

ते च यथा —

उपसर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् । १०
उच्छ्वञ्चस्व पृथिवि मा निबाधथाः सूपायनास्मै भव सूपवञ्चना ।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि । ११
उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणाः सन्त्वत्र । १२
उत्ते स्तभ्नामि पृथिवीं त्वत् परीमं लोगं निदधन्मो अहं रिषम् ।
एतां स्थूणां पितरो धारयन्तु तेऽत्रा यमः सादना ते मिनोतु । १३

— ऋ० १० सू० १८ ।

कुशैः सम्मार्जयेदस्थीन्यतोदेवेति * मन्त्रतः।
एतोन्विन्द्र शुचीवेति नतमंह इति त्र्यृच।
पावमानी समाम्ने च रुद्रसूक्तं † यथाक्रमम्।
एतत् सूक्तं पठेद्विद्वान् शुद्धिर्भवति नान्यथा॥

अत्रायं प्रयोगः—

नित्यकर्म निर्वर्त्य अस्थिनिखननभूमिं गत्वा सचेलं स्नात्वा तां भूमिं पञ्चगव्येन मन्त्रैः संप्रोक्ष्य उपसर्पेत्यादिमन्त्रचतुष्टयेन क्रमेण भूप्रार्थनखननमृत्तिकोद्धरणास्थिग्रहणानि कृत्वा पुनर्जलाशयं गत्वा तत्र अस्थिसहितः स्नात्वा पञ्चगव्येन अस्थीनि एतोन्विन्द्र इति सूक्तेन प्रक्षाल्य शुद्धोदकेन पुनः स्नापयेत्।

ततः सास्थिदर्भस्नानानि कुर्यात्। तद् यथा

---

* अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे।
पृथिव्याः सप्त धामभिः।
—— १ मं० २२ सू० १६ ऋक्।

† कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे।
वोचेम शंतमं हृदे।
इत्यादिकमेकोनचत्वारिंशत्संख्यकऋगात्मकम् ऋग्वेदे द्रष्टव्यम्।

गायत्र्या * गोमूत्रेण † । गन्धद्वारामिति गोमयेन । ‡ आप्याय-
पयसा । दधिक्राव्ण § इति दध्ना । घृतं मिमिक्षे ¶ इति स्वेति
घृतेन । देवस्य त्वेति || कुशोदकेन । मा नः स्तोक इति **

---

* ओं भूर्भुवः स्वः तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ।

† गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।

‡ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ।
— अ० १२ म० ११२ ।

आप्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।
भवा नः सप्रथस्तमः सखा वृधे ।
— अ० १२ म० ११४ ।

अनयोरेकतरं स्वशाखानुसारेण पाठ्यम् ।

§ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखाकरत् प्र ण आयूंषि तारिषत् ।
— म० ४ सू० ३९ ऋ० ६ ।

¶ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ।
— म० २ सू० ३ ऋ० ११ ।

|| देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ।

** मा नः तोके तनये मा न आयुषि (आयौ) मा नो गोषु मा नो अश्वेषु रीरिषः ।
मा नो वीरान् रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।
— अ० १६ म० १६ ।

भस्मना । अश्वक्रान्ते * इत्यादिभिर्मृदा । मधु वाता इति † मधुना । आपोहिष्ठेति ‡ कुशोदकेन । एवं दश स्नानानि विधाय शुद्धभूमावस्थीनि संस्थाप्य कुशपिञ्जूलैर्मार्जयेत् ।

तत्र मन्त्राः —

एतोन्विन्द्रमिति सूक्तम् § शुचि वो हव्या इति सूक्तम् ¶ ।

---

* अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
आरुह्य मम गात्राणि सर्वं पापं प्रमोचय ॥

† मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः । २७
मधुनक्तमुतोषसो मधुमत् पार्थिवं रजः ।
मधुद्यौरस्तु नः पिता । २८
मधुमान्नो वनस्पतिर्मधुमाँ२ अस्तु सूर्यो ।
माध्वीर्गावो भवन्तु नः । २९
१३ अ २७ म ।

‡ आपोहिष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे । ५०
यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः । ५१
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।

§ एतोन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
५१ म ११ अ यजुः ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान्ममत्तु ।
८ म ९५ सू ७ ऋक ।

¶ शुचिर्वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः ।

नतमंह इति सूत्रम् * । इतिवा इति मे मन इति सूत्रम् † ।

---

ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ।

— म० ७ सू० ४६ म० १२ ।

* न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः ।
न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः ।
विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ।
एतयोरेकतरं समाश्रित्य वेदितव्यम् ।

† इतिवा इतिमे मनो गामश्वं सनुयामिति ।

कुवित्सोमस्यापामिति । १

प्र वाता इव दोधत उन्मा पीता अयं सत ।

कुवित् — । २

उन्मा पीता अयंसत रथमश्वा इवाशवः ।

कुवित् — ३

उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियम् ।

कुवित् — ४

अहं तष्टेव वन्धुरं पर्यचामि हृदा मतिम् ।

कुवित् — ५

नहि मे अक्षिपच्चनाच्छान्त्सुः पञ्च कृष्टयः ।

कुवित् — ६

नहि मे रोदसी उभे अन्यं पक्षं चन प्रति ।

कुवित् — ७

अभि द्यां महिना भुव अभीमां पृथिवीं महीम् ।

कुवित् — ८

हन्ताहं पृथिवीमिमां निदधानीह वेह वा ।

कुवित् — ९

यदन्ति यच्च दूरक * इत्याद्याः पावमान्यः ॥

---

ओषमित् पृथिवीमहं जंघनानीह वेहवा ।

कुवित् — १०

दिवि मे अन्यः पक्षोऽधो अन्यमचीकृषम् ।

कुवित् — ११

अहमस्मि महामहोऽभिनभ्यमुदीषितः ।

कुवित् — १२

गृहो याम्यरं कृतो देवेभ्यो हव्यवाहनः ।

कुवित् सोमस्यापामिति । १३ ऋच

१० म ११८ सू

* यदन्ति यच्च दूरके भयं विन्दति मामिह ।

पवमान वितज्जहि ।

— ९१ सू ६७ ।

पवमानः सो अद्य नः पवित्रेण विचर्षणिः ।

यः पोता स पुनातु नः ।

यत्ते पवित्र मर्चिष्यग्ने विततमन्तरा ।

ब्रह्म तेन पुनीहि नः ।

यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः ।

ब्रह्मसवैः पुनीहि नः ।

उभाभ्यां देव सवितः पवित्रेण सवेन च ।

मां पुनीहि विश्वतः ।

त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोमधामभिः ।

अग्ने दक्षैः पुनीहि नः ।

पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।

विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ।

समाप्ते वर्षे इत्येका स्रक् *।

रुद्रसूक्तं च।

एवं मार्ज्जनं कृत्वा हिरण्यश्राद्धं कृत-सपिण्डीकरणस्य त्रि-दैवत्यम् अकृतसपिण्डीकरणस्य एकोद्दिष्टं कुर्य्यात्।

इदं च यदीयमस्थि संस्क्रियते तद्दैवत्यम्।

ततस्तथैव स (अ) नुपिण्डान् दत्त्वा तथैव तिलतर्पणादिकं च कृत्वा यक्षकर्दमादिना लिप्त्वा पुष्पैः प्रपूज्य अजिनादि-पूर्वोक्तपञ्चचतुष्टयमध्ये केनचित् पत्रेण वेष्टयित्वा सुवर्णमौक्ति-करूप्यप्रवालनीलमणीनस्थिषु प्रक्षिपेत्।

---

आप्यायस्व प्रमदस्व सोम विश्वेभिरंशुभिः।
देवेभ्य उत्तमं हविः।
उप प्रिय पनिप्नत युवानमाहुती वृधम्।
अगन्म बिभ्रतो नमः।
अलाय्यस्य परशुर्ननाश तमापवस्व देव सोम।
आखुं चिदेव देव सोम।
यः पावमानीरध्येति ऋषिभिः सम्भृतं रसम्।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना।
पावमानीर्यो अध्येति ऋषिभिः सम्भृतं रसम्।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम्। १९
म ९ म ६० ।

* समाप्ते वर्षे. त्रिदैवत्यम् वा एकोद्दिष्टं पूर्वम्।

* अत्र समन्ता प्रदिक्षणतलस्थमध्यस्थ पूतना अर्थम्।

तत उदीरता * मितिसूक्तेन अष्टोत्तरशतं तिलाज्यं जुहुयात् ।

ततस्ताम्रपुटे अस्थीनि निधाय अज्ञातचण्डालपतितादि-स्पर्शः शुचिस्तीर्थं गच्छेत् । ततस्तीर्थे स्नात्वा पलाशपत्र-पुटे अस्थीनि निधाय अमुकगोत्रस्य अमुकदेवशर्म्मणोऽपुन-रावृत्तिकब्रह्मलोकावाप्तये अमुकतीर्थे अस्थिप्रक्षेपमहं करिष्यामीति संकल्प्य अस्थीनि पञ्चगव्येन प्रक्षाल्य हिरण्यादिमिश्रितानि कृत्वा मृत्पिण्डे निधाय दक्षिणतोऽवेक्षमाणो नाभिमात्रे जले स्थित्वा " नमोऽस्तु धर्म्मायेति " मन्त्रेण तीर्थे प्रक्षिप्य स्नात्वा जला-द्बहिरागत्य सूर्य्यं नत्वा हरिं स्मृत्वा अमुकदेवशर्म्मणः कृतैतद-स्थिप्रक्षेपकर्म्मणः साङ्गुण्यार्थम् इदं रजतं चन्द्रदैवत्यं ब्राह्मणाय सम्प्रददे इति पितृदैवत्यत्वाद्रजतं दक्षिणां दद्यात् ।

तदुक्तं शौनकीये —

हेमश्राद्धं ततः कुर्य्यात् पितॄनुद्दिश्य यत्नतः ।
पिण्डदानं विधायाथ प्रकुर्य्यात्तिलतर्पणम् † ॥

---

* उदीरतां सूनृताउत्पुरन्धी रुदग्नयः शुशुचानासो अस्थुः ।
स्पार्हावसूनि तमसापगूढा विष्कृण्वन्त्युषसो विभातीः ।
उदीरतामवर उत् परास उन्मध्यमाः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ।
अनयोरेकतरेण —

† पिण्डदानं प्रकुर्वीत ततश्च तिलतर्पणं ।
इत्याकरे पाठः ।

अजिनं कम्बला दर्भा गोकेशा: शानमेव च ।
भूर्जपत्रं ताड़पत्रं सप्तधा वेष्टनं स्मृतम् ॥

क्वचित्तु गोकेशा भूर्जपत्रकम् । ताड़पत्रञ्च नैतं चेत्सप्तां वेष्टन सप्तकमिति पाठ: ।

हेमं च मौक्तिकं रूप्यं प्रवालं नीलकं तथा ।
निक्षिपेदस्थिमध्ये तु शुचिर्भवति नान्यथा ॥
ततो होमं प्रकुर्व्वीत तिलाज्येन विचक्षण: ।
उदीरतेति सूक्तेन जुहेदष्टोत्तरं शतम् ।
तत: क्षिपेत् सुतीर्थेषु सर्व्वदोषो न विद्यते । .
मूत्रे पुरीषे चाचामं * कुर्य्यात्चास्थीनि धारयन् ॥
अस्पृष्टहीनजातिस्तु शुचि:स्यात् स्वच्छलेपय: ।
इदं कर्म्मापसव्येन कार्य्यमित्याह शौनक: ॥

काशीखण्डेऽपि —

धनञ्जयोऽपि धर्म्मात्मा मातृभक्तिपरायण: ।
आदायास्थीन्ययो मातुर्गङ्गां गन्तुं प्रचक्रमे ।
पञ्चगव्येन संस्नाप्य तत: पञ्चामृतेन च ।
यक्षकर्द्दमलेपेन लिप्ता पुष्पै: प्रपूज्य च ।
आवेष्ट्य नेत्रवस्त्रेण तत: पट्टाम्बरेण च ।
ततश्च सुरवस्त्रेण ततो माञ्जिष्ठवाससा ।

सुरवस्त्रं श्वेतचीनांशुकम् ।

* मूत्रपुरीषाचमनं । इति वस्तु लिखन्तेषु पाठ: ।

नेपालकम्बलेनाथ मृदा चाथ विशुद्धया ।
ताम्रसंपुटके कृत्वा मातुर (श्रा) त्योर्थयो वणिक् ।
असृष्टहीनजातिः स शुचिमान् स्थण्डिलेशयः ।

व्यासः —

पट्टवस्त्रं च कौशेयं माञ्जिष्ठं श्वेतवस्त्रकम् ।
कम्बलं शाणपट्टी च अजिनं च तथोत्तरम् ।

इति

तेषां वेष्टनसाधनानां वेष्टनक्रमाणां च विकल्पः ।

इति विधानपारिजाते अस्थिक्षेपविधानम् ॥

---

## अथ प्रकीर्णकास्तीर्थधर्म्माः ।



तत्र देवलः —

तर्पणं पितृदेवानां श्राद्धदानं सदक्षिणम् ।
तीर्थे तीर्थे च गोदानं नियतः प्राक्तनो विधिः ॥
विशिष्टख्यातलिङ्गेषु द्रव्यदानं विधीयते ।
स्नानं विलेपनं पूजां देवतानां समाचरेत् ॥

ब्राह्मणेभ्यो * भूमिदानं देवपूजाकराय वा ।
सर्वत्र देवयात्रायां विधिरेव प्रवर्त्तते ॥
तथा पञ्चामृतस्नानं नमस्कारं प्रदक्षिणम् ।
कुर्य्यात् सर्वेषु देवेषु यात्रायाः फललिप्सया ॥

तथा —

देवानां दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ।
स्पर्शनाद्दर्शनं श्रेष्ठं घृतस्नानमतःपरम् ।
अष्टकलोमन्त्रजपैः सुप्रभूतसुगन्धिभिः ।
प्राहुर्गङ्गाजलैः स्नानं घृतस्नानं समं बुधाः ॥

भानौ तु विशेषः —

अर्घद्रव्यविशेषेण गङ्गातोयेन यः सकृत् ।
मागधप्रस्थमात्रेण ताम्रपात्रस्थितेन च ॥
भानवेऽर्घं प्रदद्यात्तु स्वकीयपितृभिः सह ।
पुत्रपौत्रैश्च संयुक्तः स्वर्गलोके महीयते ॥
अर्घश्चात्र अष्टाङ्गाद्यः ।

तल्लक्षणं स्कान्दे —

आपः क्षीरं कुशाग्राणि घृतं मधु गवां दधि ।
रक्तानि करवीराणि रक्तचन्दनमित्यपि ॥
अष्टाङ्गार्घोऽयमुद्दिष्टस्त्वतीव रवितोषणः ।

---

* ब्राह्मणानामिति तीर्थमतो पाठः ।

तत्र प्रदक्षिणायां विशेषः संग्रहे —

एकां चण्ड्यां रवौ सप्त तिस्रो दद्याद्विनायके ।
चतस्रो विष्णवे देयाः शिवस्यार्द्धं प्रदक्षिणाम् * ।

तथा —

शिवप्रदक्षिणं कुर्वन् सोमसूत्रं न लङ्घयेत् ।
वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् ।
चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ॥

गच्छेदिति विशेषः ।

नमस्कारेऽपि विशेषः —

अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ।
जपहोमनमस्कारान्न कुर्याद्देवतालये ॥
अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः ।
वामभागे भवेन्नाशो दक्षिणे सर्वकामदः ॥

देवीपुराणे —

देवस्नापनयनं † देवागारसमूहनम् ।
स्नापनं सर्वदेवानां गोप्रदानफलं स्मृतम् ॥
समूहनं सम्मार्जनादि पतितस्रोत्थापनं च ।

---

* एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद्विनायके ।
चत्वारि विष्णवे कुर्यात् शिवस्यार्द्धं प्रदक्षिणमितिबहुषु निबन्धेषु पाठः ।

† देवमाल्यापनयनमिति तीर्थसेतौ पाठः ।

पाद्मे —

द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशेत् क्वचित्।
लङ्घयेन्नैव निर्माल्यं कूपे सर्वं विनिक्षिपेत्॥
मक्षिकापादमात्रं यः शिवस्वमुपजीवति।
लोभान्मोहात् स पच्येत कल्पा (ल्पो) न्तं नरके नरः॥

स्कान्देऽपि —

नन्धाद्यन्नं विप्रेभ्यो नैवेद्यं च प्रदापयेत्।
चण्डाद्यन्नमग्नौ च दहेत् सर्वं च तत्क्षणात्।
अन्येषामथ देवानां यत्तद्दीनेषु निक्षिपेत्॥

इति

विप्रेभ्यस्त्वथ तद्देयं माहाभ्यो यन्निवेदितम्।
वाड़वेभ्यस्तु तद्देयं गणेशादिनिवेदितम्॥

विघ्नेश्वरे तु नायं नियमः —

एवं संपूज्य विधिवद्विघ्नेशमघपनोदकम्।
त्रिः पिबेत्त्रिविधं पापं तत्क्षणादेव विनश्यति।

इति स्कान्दे विशेषोक्तेः।

शिवे तु षण्डेऽपि नमस्कारः कार्य्यः।
शम्भोः पशुपतेरग्रे दण्डवद् यः पतेद्भुवि।
पतन्ति पातकास्तस्य नोत्तिष्ठन्ति कदाचन *॥

इति विशेषोक्तेः।

* नो तिष्ठन्ति सदा नव। इति नपुस्तके पाठः।

तथा —

## तीर्थे प्रतिग्रहादिनिवृत्तिरपि कार्य्या ।

———

जीवनार्थं कृतं तीर्थं जीवनार्थं कृतं व्रतम् ।
असत्या (श्च)च कृता वाणी तथा पैशुन्यवादि(नः)नी ।
न तीर्थे प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ।
तीर्थे प्रतिग्रहोयस्तु तीर्थविक्रयएव सः ।
विक्रीतायां तु गङ्गायां विक्रीतः स्याज्जनार्दनः ।
जनार्दने तु विक्रीते विक्रीतं स्याज्जगत्त्रयम् ।
यस्तु लोभाद्द्विजः (क्षेत्रे) तीर्थे प्रतिग्रहरुचिर्भवेत् ।
नैव तस्य परोलोको नायं लोकोदुरात्मनः ।
गङ्गा गया कुरुक्षेत्रे तीर्थे चामरकण्टके ।
स्वदद्दाति दारिद्र्यं गृह्णन् गृह्णाति भारत ॥
महादानानि ये विप्रा गृह्णन्ति ज्ञानदुर्बलाः ।
कृत्वास्ते द्विजरूपेण जायन्ते ब्रह्मराक्षसाः ।
न वेदबलमाश्रित्य प्रतिग्रहरुचिर्भवेत् ।
अज्ञानाद्वा प्रमादाद्वा जायन्ते नरकालयः ।

इति पाद्मोक्तेः ।

तथा —

> स्थितो वै नृपतेर्द्वारि न कुर्य्याद्वेदविक्रयम् ।
> हत्वा गावं परं मांसं भक्षयीत द्विजाधमः ।
> अथ चेत् प्रतिगृह्णाति ब्राह्मणोऽप्यतिवर्षितः ।
> दद्यांशमार्जितं दद्यादेवं तत्र प्रहीयते ।

इति संग्रहोक्तेश्च ।

> आर्जितं अर्जितसम्बन्धिनम् * ।
> तीर्थवासिनस्तु विशेष उक्तः पाद्मे पञ्चमाध्याये ।
> गृही चेद्धर्मनिरतो वह्निरर्जितवित्तभुक् ।
> व्यवहा (?) री च योग्योऽत्र गृह्णीयाद्विमलं वसु ॥

इति

भक्त्यातिथ्यं तु चेत्थम् ।

> न काष्ठे विद्यते देवो न शिलायां कदाचन ।
> भावे हि विद्यते देवस्तस्माद् भावं समाश्रयेत् ॥

इति स्मृतेः ।

तथा —

> पुण्यक्षेत्राभिगमनं पुण्यतीर्थनिषेवणम् ।

* पाद्मेऽपि —
अन्यत्र यत्कृतं पापं तत्तीर्थे याति लाघवम् ।
न तीर्थकृतमन्यत्र क्वचित् पापं व्यपोहति ।
इति

यज्ञो वा विविधो ब्रह्मंस्त्यक्त्वाचारं न रक्षति ।

देवलः —

न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतम् ।
नान्यत् प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ।
यत्र स्नानेषु यत्तीर्थं नगरं ग्राममथापि वा ।
तद्ध्यायेन्मनसा चैव नान्यत्तीर्थं विचिन्तयेत् ॥

अन्यदिति गङ्गातिरिक्ततीर्थविषयम् ।

गङ्गा तु सर्वतीर्थेषु स्मर्तव्या इत्युक्तं स्कान्दे —

स्नानकालेऽन्यतीर्थेषु जप्यते (अप्य) ते जाह्नवी जनैः ।
विना विष्णुपदीं कान्यत् समर्थमघशोधने ॥

इति

कृतं च तीर्थयात्रादिफलं विष्णवे समर्पणीयमित्युक्तं ब्राह्मे ।

यानि यानि च तीर्थानि दानव्रततपांसि च ।
तानि सर्वाणि सिध्यन्ति विष्णोः पादार्पणेन हि ॥
नार्पयन्ति हरौ ये तु पुण्यानि स्वकृतानि वै ।
तानि निष्फलतां यान्ति श्रमएव फलं भवेत् ।

तथा —

तीर्थसेवा सदा कार्या मनुष्यैः पुण्यकामुकैः ।
सेवितेऽपि सदा तीर्थे यत्र म्रियते यदि ।
शुभे देशे कुले धीमान् स भवेद्वेदविद्विजः ।
यात्रार्थं गतेन तु तीर्थे दिनत्रयं वस्तव्यम् ।

तीर्थं समधिगम्याथ उपवासव्रतादियुक् ।
त्रिरात्रोपोषितस्तत्र सर्वपापैः प्रमुच्यते ॥

इति स्मृतेः ।

यत्र तु विशेषतः —

पक्षं वा सप्तरात्रं वा पक्षं मासमथाधिकम् ।
निवसेत्तीर्थदेशे तु यथाकालं नरः सदा ।

इति स्मृतिनियमोऽस्ति तत्र तावन्ति दिनानि वस्तव्यम् ।

---

## अथ प्रतिग्रहमलमूत्रादिविसर्गनिषेधार्थं तीर्थगर्भादिकमुच्यते ।

ब्राह्मे —

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥
न तत्र प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ।

इति

अत्र प्रवाहशब्दो जलावध्युपलक्षकः । तेन पुष्करादौ तडागवाप्यादिरूपे तीर्थे प्रवाहाभावेऽपि जलमवधीकृत्य हस्तचतु-

ष्ट्याभ्यन्तरे निषेधो ज्ञेयः ।

दानधर्म्मेऽपि —

भाद्रकृष्ण (शुक्ल) चतुर्दश्यां * यावदाक्रमते जलम् ।
तावद् गर्भं विजानीयात्तदूर्द्धं तीरमुच्यते ।

तीरावधिश्च ब्राह्मे —

सार्द्धहस्तशतं यावद् गर्भतस्तीरमुच्यते ।
तीराद् गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते ।

गव्यूतिमात्रं तटद्वये प्रत्येकं क्रोशद्वयपरिमितस्थानं क्षेत्रमित्यर्थः

अतएवोक्तं भविष्ये —

गङ्गासीमां न लङ्घन्ति सर्वपापान्यशेषतः ।
दिग्भ्योदश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ।
एकयोजनविस्तीर्णा क्षेत्रसीमा तटद्वये ।

इति

अत्र दानं जपो होमो गङ्गायामेव नान्यथा † ।
पूर्वं पूर्वं प्रशस्तं स्यात् फलातिशयहेतुतः ।
मलमूत्रविसर्गादिपापमेष्वेवमेव तु ।

* भाद्रशुक्लचतुर्दश्यां कदाचिद्वृष्ट्यभावेन जलवृद्ध्यभावेऽपि किञ्चिद्वर्षभाविवृद्धेव लक्षणं ज्ञेयम् ।

† गङ्गायां नान्य संशय इति तीर्थसेतौ पाठः ।

अत्र गर्भे प्रतिपद्धनिषेधः प्रसिद्धसर्वनदीषु । प्रसिद्धतर-गङ्गागण्डक्यादिमहानदीषु तु उभयतः सार्द्धशतहस्तमिते तीरेऽपि निषेध इति शिष्टा भणन्ति । केचे निषेधस्तु गङ्गाविषय एव तत्रैव क्षेत्रकथनात् ।

यत्तु ब्रह्मपुराणे —

यत्र गङ्गा महाराज शम्भुस्तत्र तपोवनम् ।
सिद्धिक्षेत्रं च तज्ज्ञेयं समन्तात्तु त्रियोजनम् * ।

इति त्रियोजनमितस्य सिद्धिक्षेत्रत्वकथनं । तद् गङ्गाक्षेत्र-मरणे फलातिशयप्रतिपादनार्थं । न तु प्रतिपद्धनिषेधार्थम् ।

विपन्नस्तत्र यो मर्त्यो गङ्गायामेव नान्यथा ।

इति तत्प्रकरणात् ।

समन्तात्तु त्रियोजनमित्यत्र समन्तादर्द्धयोजनमिति पाठे तु न कश्चिद्विरोधः ।

---

* एकस्मिन् पाठे सार्द्धयोजनमिति समन्तात्त्रियोजनमित्यस्यार्थः ।

## अथ लिङ्गाद्यर्चने विशेषो निरूप्यते ।

नारदीये —

य: शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः ।
न तस्य निष्कृतिः प्रोक्ता * प्रायश्चित्तायुतैरपि ॥
तथैव शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा ।
स सर्वयातनाभोगी यावदाचन्द्रतारकम् ॥

तत्रैव प्रणम्येत्यर्थः —

पाषण्डपूजितं लिङ्गं नत्वा पाषण्डतां व्रजेत् ।
आभीरपूजितं लिङ्गं नत्वा नरकमश्नुते ।

तथा —

योषिद्भिः पूजितं लिङ्गं विष्णुं वापि नमेत्तु यः ।
स कोटिकुलसंयुक्तो रौरवे नरके वसेत् † ।
तदेतत् सर्वमिदानीन्तनप्रतिष्ठितलिङ्गादिविषयम् ॥

न तु पुराणप्रसिद्धमहिमलिङ्गादिविषयम् ।

यदाप्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।
तदा प्रभृति शूद्रश्च योषिद्वा नैव संस्पृशेत् ॥

इति शिवपुराणोक्तेः ।

---

* निष्कृतिर्यस्ति इति तीर्थसेतौ पाठः ।

† आकल्प रौरवे वसेत् इति क्वचित् पाठः ।

अतएव स्कान्दे नारीलिङ्गानि प्रशस्तीत्तम् ।

अदृश्यान्यपि (लिङ्गानि) दृश्यानि दुरवस्थान्यपि प्रिये ।
मन्नान्यपिच कालेन तानि पूज्यानि सुन्दरि ॥

दुरवस्थानि स्त्रीशूद्रादिपूजितानि ।

अस्पृश्यस्पृष्टानीति कश्चित् ।

तथा —

अन्योऽपि विशेषस्तत्रैव ।
शूद्रोवाऽनुपनीतोवा स्त्रियोवा पतितोऽपि वा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥
महातीर्थस्य गमनमुपवासव्रतानि च ।
संवत्सरं न कुर्वीत महागुरुनिपातने ॥

तथा —

तीर्थस्नानं महादानं पराचं तिलतर्पणम् :
अब्दमेकं न कुर्व्वीत महागुरुनिपातने ॥

पराचं तद्भोजनमित्यर्थः ।

तथा —

वपनं मैथुनं तीर्थं वर्जयेद् गुर्व्विणीपतिः ।
श्राद्धं च सप्तमात् मासादूर्द्धं (ना) वान्यत्र वेदवित् ।
अत्र श्राद्धं श्राद्धभोजनम् ।

### अत्र ग्रहणादौ प्रतिप्रसव उक्तः ।

तथाहि लल्लः —

उपप्लवे शीतलभानुभान्वो-
रर्कोदये वा कपिलाख्यषष्ठ्याम् ।
सुरासुरेज्यास्तमयेऽपि तीर्थे
यात्राविधिः संक्रमणेऽपि शस्तः ।

इति

उपप्लवोग्रहणम् गुरुशुक्रास्तमयश्च निषिद्धकालोपलक्षक-त्वात् मलमासगुर्वादिनिपातसिंहगुर्वादिकालान्तरेऽपि ग्रहणादौ च न निषेध इत्यवगन्तव्यम् ।

केचिदस्थिक्षेपार्थयात्रायाम् आद्यवर्षेऽपि न दोष इत्याहुः ।

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमाब्देऽपि कुर्वीत सपिण्डीकरणे कृते ॥

इति स्मृतेः ।

तथा —

उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् ।
विप्रैः संपादितं यस्य सम्पन्नं तस्य तत् फलम् ।

अन्यच्च —

अम्बुमध्ये गवां गोष्ठे तीर्थेष्वपि च पर्वसु ।
राहोर्दर्शनकाले च सूतकं नैव विद्यते ॥

सूतकमिति मृतकस्यापि उपलक्षकम् ।

इदं च तीर्थगमनस्य गमनप्रकाशनार्थं दानादिविषये द्रष्टव्यम् ।

तथा —

गृहे दशगुणं दानं गोष्ठे शतगुणं (कृतम्) भवेत् ।
पुण्यतीर्थेषु साहस्रमनन्तं शिवसन्निधौ ॥

तथा —

येषु तीर्थेषु ये देवा येषु तीर्थेषु ये द्विजाः ।
येषु तीर्थेषु यत्तोयं विचिकित्सेत तत्र तु ।
एतेषु उपहतेष्वपि न विचिकित्सा कार्येत्यर्थः ।

तथा —

न देवः पर्वताग्रेषु न देवः शिवसद्मनि ।
देवश्चिदानन्दमयो (दिवि) हृदि भावेन दृश्यते ।

तथा —

यत्र यत्र दृढा भक्ति र्यदा यस्य महात्मनः ।
तत्र तस्य महादेवः प्रसाद मधिगच्छति ।

इत्यादयः प्रकीर्णधर्माः ।

एवं यावदुक्तप्रकारेण तीर्थयात्रां कृत्वा स्वापाराम्तरागार-
ंरण अभ्युपेत्य पुनर्गणेशादीन् सम्पूज्य पित्रुद्देशेन श्राद्धं कृत्वा
साधून् विप्रांश्च वित्तादिना सन्तोष्य कृतकृत्यो भवेत् ।

तदुक्तं स्कान्दे —

प्रत्यागतश्चापि पुनस्तथैव
देवान् पितॄन् ब्राह्मणान् पूजयेच ।

एवं कृते स्नान तीर्थादि यदुक्तं
फलं तत् स्यान्नात्र संदिग्धमस्ति ॥

इति श्रीमन्नागदेवभट्टात्मजश्रीमदनन्तभट्टविरचिते-
विधानपारिजाते तीर्थयात्राविधानं समाप्तम् ॥

---

## अथ प्रसङ्गादभ्यङ्गकालः प्रस्तूयते ।

---

तत्र हेमाद्रौ पराशरः —

नन्दे सोमे बुधेऽभ्यङ्गो भूतपर्वाष्टमीर्विना ।
व्यतीपातं संक्रमं च व्रतश्राद्धाहमेव च ॥
नैमित्तिकविशेषेण निषिद्धेऽपि समाचरेत् ।

रत्नमालायामपि —

रविस्तापं कान्तिं वितरति शशी भूमितनयो
मृतिं लक्ष्मीं चान्द्रः सुरपतिगुरुर्वित्तहरणम् ।
विपत्तिं दैत्यानां गुरुरखिलभोगानुभवनं

नृणां तैलाभ्यङ्गात् रुणदि कुरुते सूर्यतनयः ॥

बौधायनो नवम्यामपि तैलाभ्यङ्गं निषेधति ।

यथा —

अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषतः ।
तैलाभ्यङ्गं वर्जयेत्तु पर्वस्वपि तथैव च ॥

अस्य प्रतिप्रसवः स्मृत्यन्तरे —

रवौ पुष्पं गुरौ दूर्वां भौमवारे च मृत्तिकाम् ।
भार्गवे गोमयं क्षिप्त्वा वारदोषं न विन्दति ॥

तैले इतिशेषः । तैलं चात्र तिलोद्भवमेव । न कुसुम्भाद्युद्भवम् । तिलस्य विकारस्तैलमिति पाणिनिस्मरणात् । तेन अन्यत्र न निषेधः ।

यथोक्तं प्रचेतसा —

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥
तैलाभ्यङ्गनिषेधे तु तिलतैलं निषिध्यते ।
अभ्यङ्गस्य निषेधे तु सार्षपादेरपीष्यते ।

निषेध इत्यर्थः ।

अयं तिथिस्तात्कालिकी निषेधविषयिणीति वेदितव्यम् ।

तथाच स्मृत्यन्तरम् —

उत्पत्तौ च विपत्तौ च मैथुने दन्तधावने ।

पञ्चाङ्गेषूदधिस्नाने *तिथिस्तात्कालिकी स्मृता ।

इति

इति तैलाभ्यङ्गकालनिर्णयविधानम् ।

---

## अथ उष्णोदकस्नानकालः ।

---

नित्यमुष्णोदकस्नानं काम्य (नित्य)नैमित्तिकादृते ।
आपः स्वभावतोमेध्याः किं पुनर्वह्निना युताः ।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा ॥

इति

काम्यनैमित्तिकयोस्तु गर्गः —

कुर्य्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।
नित्यं यादृच्छिकं चैव यथारुचि समाचरेत् ॥

इति

---

* पञ्चाङ्गेषु दधिस्नाने इति गपुस्तके पाठः ।

## अथ आमलकस्नानकालः।



तत्र व्यासः —

श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः।
सप्तमीं नवमीं चैव पर्वकालं विवर्जयेत्॥

षट्त्रिंशन्मतेऽपि —

सप्तम्यां नवम्यां च संक्रान्तौ रविवासरे।
चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत्।
तुष्टस्त्वामलकैर्विष्णुरेकादश्यां विशेषतः।
कार्त्तिकादिविशेषेषु एकादश्यां समाचरेत्।

इति

## अथ तिलकल्कस्नानकालः।



षट्त्रिंशन्मते —

सप्तम्याममायां च संक्रान्तिव्यतिपातिषु।
धनपुत्रकलत्रार्थी तिलकल्कं न संस्पृशेत्॥

पुरा मकरसंक्रान्तौ * यावत् पौषसितं तिथिः ।
कार्य्यमेव न सन्देहो रविवारादिकेष्वपि ॥

इति

## अथ नूतनवस्त्रपरिधानकालः ।

तत्र श्रीपतिः —

मार्त्तण्डे च धनं भ्रमः शशधरे क्लेशः सदा † भूमिजे
वस्त्रं लाभकरं बुधे सुरगुरौ विद्यागमः सम्पदः ।
नानायोगरतिः प्रमोदवनिताशय्यादिलाभो भृगौ
हीनः प्राक्तनरोगवांश्च मनुजोऽप्यत्राम्बरं सूर्य्यजे ॥

अन्यत्रापि —

मघानुराधवसुतिष्यविशाखहस्त
चित्रोत्तराश्विपवनादितिरेवतीषु ।
जन्मर्क्षजीवबुधशुक्रदिने (विधू)त्सवादौ
धार्य्यं नवं वसनमीश्वरविप्रतुष्ट्यै ॥

---

* पुरेत्यत्र तुलेति पाठं युक्तं मन्यामहे ।
† क्लेशो भयमिति गपुस्तके पाठः ।

तथा —

रोहिणीषु करपञ्चकेऽश्विभे
ध्रुवोत्तरेऽपि च पुनर्वसुद्वये * ।
रेवतीषु वसुदेवते † च भे
नव्यवस्त्रपरिधानमिष्यते ‡ ॥

तथा —

वैधृतौ च व्यतीपाते भद्रायामपि सर्वदा ।
नववस्त्रपरीधानं नेष्यते पर्वणि तथा ॥

तथा —

जीर्णं रवौ सततमम्बुभिरार्द्रमिन्दौ
भौमे शुचे बुधदिने तु भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय
मन्दे मलाय च नवाम्बरधारणं स्यात् ॥

* करपञ्चके हस्तचित्रास्वातिविशाखानुराधासु ।
ध्रुवे उत्तरत्रये उत्तरफल्गुन्युत्तराषाढोत्तरभाद्रपदीविषये ।

† वसुदेवते धनिष्ठायाम् ।

‡ दीयते ज्ञानममलं क्षीयते पापसञ्चयः ।
तेन दीक्षेति सा प्रोक्ता पापकृन्तनतः क्रिया ।
इति दीक्षायामुक्तविचक्षणादृष्टमेव सा सर्वैः कार्येति प्रतीयते ।

## अथ दीक्षाकालः ।

कालोत्तरे —

शरद्वसन्तयोर्योगो दीक्षा * कर्मविधौ स्मृतः ।
तयोरसम्भवे वर्षा विनाऽन्यत्रापि शस्यते ॥
पूर्वाषाढाख्यनक्षत्रे आषाढे मार्गशीर्षके * ।
दीक्षां न कारयेद्धीमानन्यमासेषु कारयेत् ॥
पवित्रकृतिथिश्चापि दीक्षाकर्मविधौ वरा ।
कार्त्तिक्यां शुभनक्षत्रे वैशाख्यां राहुदर्शने ।
शुभनक्षत्रयोगेषु विषुवेषूत्सवेषु च ॥
अयनेषु च सर्वेषु मन्त्रदीक्षा शुभप्रदा ।

तन्त्रान्तरे —

रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत् किल ।
आयुरङ्गारको हन्ति तत्र दीक्षां विवर्जयेत् ।
बुधे सौन्दर्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ।

इति ।

---

* अत्र ज्ञानं स्यात् कार्त्तिके पौषे मार्गशीर्षे तथा भवेत् ।
इति वचने सत्यपि मार्गशीर्षे निषेधः कथमिति दुर्बोधम् ।

रत्नावल्यां —

चतुर्थीं नवमीं षष्ठीमष्टमीं च चतुर्दशीम् ।
पौर्णमासीं विना शेषा हिता मन्त्रे मुमुक्षुषु ॥

नक्षत्राण्यपि तत्रैव —

पौष्णं रोहिण्यथादित्यं श्रवणं चाश्विनो तथा ।
सावित्रं त्वाष्ट्रवायव्ये नैर्ऋतं मैत्रमेव च ।
तिष्यं चित्रोत्तराद्रा च शिष्यस्य च त्रिजन्मभम् ।
नक्षत्राणि प्रशस्तानि दीक्षाकर्मसु सुव्रत ।

इति

तथा —

यातिथिर्यस्य देवस्य तत्तिथौ तन्मनुग्रहः ।
तां तां तिथिं समालोच्य तद्भक्तांस्तत्र दीक्षयेत् ।
सद्गुरुलाभे न तिथ्यादिनियमः ।

तदुक्तं तत्त्वसागरे —

तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणां तु सक्तत् सङ्ग उपस्थिते ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुसारतः ।
न तिथिर्न व्रतं होमोन स्नानं न जपक्रिया ।
दीक्षायाः कारणं किन्तु यथेच्छातोगुरुर्वशेत् ।
स्वेच्छावाप्ते तु सद्गुरौ इति च पाठः ।

तथा —

शुक्लपक्षे हरेर्दीक्षा सदर्क्षां संक्रमेऽपि च।
ग्रहणे शीतगोर्भानोः सद्गुरोरागमे तथा।

इति पञ्चरात्रे।

इति दीक्षाकालविधानम्।

---

## अथ गृहारम्भकालः।

---

चैत्रे शोकाकुलो भर्त्ता वैशाखे बन्धुनान्वितः।
ज्येष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ *।
श्रावणे धनवृद्धिः स्यान्नभस्ये † प्रवसेद् गृही।
कलहश्चाश्विने मासि भृत्यानश्यन्ति कार्त्तिके।
मार्गशीर्षे धनप्राप्तिः सहस्ये चाप्यसङ्कटः।
माघे भवेदग्निभयं फाल्गुने श्रीरनुत्तमा।

---

* शुचौ आषाढे।
† नभस्ये भाद्रपदे।

गृहारम्भे फलं चैतच्चैत्रादिषु यथाक्रमम् ।

इति

विश्वकर्मोत्तरे तु —

मकरस्थे कुम्भगे भानौ सिंहगे कर्कगे तथा ।
पूर्वास्यं पश्चिमास्यं च तदा गेहं प्रकल्पयेत् ॥

रत्नमालायामपि —

कर्कनक्रहरिकुम्भगतेऽर्के
पूर्वपश्चिममुखानि गृहाणि ।
तौलिमेषवृषवृश्चिकयाते
दक्षिणोत्तरमुखानि च तानि ॥

इति

नक्षत्राणि ज्योतिर्निबन्धे —

ध्रुवाणि भानि शस्तानि ब्राह्मं मैत्रं तथा ।
वायव्यं वैष्णवं पौष्णं पुष्यं सावित्रमेव च * ॥

इति

विष्णुधर्मोत्तरे —

स्थिरे लग्ने स्थिरांशे च कर्तुश्चोपचयान्विते ।
गृहारम्भः प्रशस्तः स्याद्दिवसे चोत्तरायणे ॥

* त्रीणि उत्तराणि रोहिणी च ध्रुवाणि । ब्राह्मम् अभिजित् । मैत्रं अनुराधा । वायव्यं स्वाती । वैष्णवं श्रवणा । पौष्णं रेवती । सावित्रम् उत्तर-फल्गुनीहस्तयोरन्यतरत् ।

यस्य सौम्यग्रहाः केन्द्रे त्रिकोणे चाथ भार्गवः ।
पापास्तेऽपचयस्थाने तस्य सद्मनिवेशनम् ॥

इति

त्रिषड्केकादशदशमानि उपचयस्थानानि ।
अथोपचयसंज्ञा स्यात्त्रिलाभरिपुकर्मणाम् ।

इति वचनात् ।

विश्वकर्ममते —

कन्याप्राप्ते रवौ सम्यङ्नारभेत गृहं सुधीः ।
धनुःस्थिते रवौ कार्यं नैव गेहं कदाचन ।

तथा —

यदा भानुस्तु मीनस्थस्तदा गेहं न कारयेत् ।
मिथुनस्थोयदा भानुस्तदा वेश्म न कारयेत् ।
अस्तं गते गुरौ शुक्रे गृहारम्भो न शस्यते ।
प्रासादे चैवमेव स्याद्वापीकूपेषु चैव हि ।

शालाविधिस्तु तत्तद्ग्रन्थादवगन्तव्यः । ग्रन्थभूयस्त्वभिया नेह-प्रपञ्च्यते ।

प्राचीसाधनसिद्धान्ते —

इष्टेऽह्नि सुसमीकृतक्षितिगते केन्द्रस्थशङ्कोः क्रमाद्
भायंत्र विशत्यपैति च यतस्ते पश्चिमैन्द्र्यौ दिशौ ।
तत्कालापमजीवयोस्तु विवराद् भाकर्णमित्याहता

वास्तुमुक्तं नारदीये —

प्लचोदुम्बरचूताख्या निम्बस्नुहिविभीतकाः।
दुग्धाःकण्टकिनो वृक्षा वटाश्वत्थकपित्थकाः।
आगस्तिशिग्रुवालाख्यासिन्तीनीकाश्च निन्दिताः।
अन्ये च गृहनिर्माणे वर्जनीयाः सदा द्रुमाः।

तथा —

प्राचीद्वारे धनावाप्तिर्दक्षिणे पुत्रशोकदम्।
सौभाग्यं पश्चिमे द्वारे सौम्यद्वारेऽर्थसम्पदः।
नवभागं गृहे कुर्यात् पञ्चभागं च दक्षिणे।
त्रिभागं वामतः कृत्वा शेषद्वारं प्रकल्पयेत्।

वृद्धनारदः —

स्नानागारं दिशि प्राच्यामाग्नेय्यां पचनालयम्।
याम्यायां शयनागारं नैरृत्यां वस्त्रमन्दिरम्।
ऐशान्यां देवतागारमिति गेहविदो विदुः।
अत्र गृहवास्तुलेखनपूजावलिदानादिकं कर्त्तव्यं।
तत् समग्रं चतुर्थस्तबके लिङ्गप्रतिष्ठाविधाने द्रष्टव्यमित्युप
रम्यते।

## अथ देवताप्रतिष्ठाकालः।

विष्णुधर्म्मोत्तरे —

चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा।
माघे वा सर्वदेवानां * प्रतिष्ठा शुभदा भवेत्।

भुजबलभीमे —

युगादावयने पुण्ये कर्त्तव्या विषुवद्दये।
चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्वसु।
या तिथिर्यस्य देवस्य तस्यां वा तस्य कारयेत्।

इति

तथा —

शुक्लपक्षः प्रतिष्ठायां प्रशस्तः सर्वदैवते।
कृष्णपक्षत्रिभागे तु प्रथमे स्याच्छुभावहा।
मध्या द्वितीयभागे तु तृतीये कर्त्तृनाशनी॥
एवमेव हि शुक्लस्य पक्षे व्यत्यास इष्यते।

विष्णुधर्म्मोत्तरे —

तेजस्विनो सूर्य्यदिने चन्द्रे क्षेमावहा भवेत्।

---

* माघे वा फाल्गुने वापि चैत्रवैशाखयोरपि।
ज्येष्ठाषाढयोर्वापि इति प्रतिष्ठातत्त्वे पाठः।

भौमेऽग्निना प्रदह्येत बुधे न (नि) धनदा भवेत् ।
गुरुणा गुणदा नित्यं लोकानन्दकरी सिते ।
आचन्द्रार्कं स्थिरा सौरे प्रतिष्ठा समुदाहृता ॥

इति

तथा तत्रैव —

दृढायुर्धनदा स्फीता तथा प्रतिपदि स्मृता ।
द्वितीयायां धनोपेता तृतीयायां वरप्रदा ।
चतुर्थ्यां नाशमाप्नोति पञ्चम्यां श्रीयुता तथा ।
षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां भोगनाशनी ।
अष्टम्यां धान्यबहुला नवम्यां तु विनश्यति ।
भद्रकाल्याः कृता तत्र कर्त्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा कृता ।
एकादश्यां तथैवोक्ता द्वादश्यां सर्वकामदा ।
त्रयोदश्यामपि तथा चतुर्दश्यां विनश्यति ।
कृष्णपक्षे पञ्चदश्यां कर्त्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामप्रदा भवेत् ।

इति

नक्षत्राणि मात्स्ये —

आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।
ज्येष्ठाश्रवणरोहिण्यः पूर्वा भाद्रपदा तथा ।
हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा ।

अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते।
द्वे आषाढ़े पूर्वाषाढ़ोत्तराषाढ़े।
उत्तरात्रयमुत्तरफल्गुनी उत्तराषाढ़ा, उत्तरभाद्रपदा च।

तथा —

वैधृतौ व्यतिपाते च भद्रायां च दिनक्षये।
चन्द्रताराबलाभावे प्रतिष्ठां न समाचरेत्।

राशिफलमपि विष्णुधर्मोत्तरे —

जन्मराश्युदये कर्त्तुः क्षिप्रं नाशकरी भवेत्।
द्वितीये धननाशाय तृतीये कर्त्तृवृद्धिदा।
चतुर्थे स्वजनाशाय पञ्चमे व्याधिदा भवेत्।
षष्ठे शत्रुविनाशाय सप्तमे धननाशनी।
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशनी।
दशमे कर्म्मणां हानिः लाभे * लाभकरी भवेत्।
द्वादशे तु भयाय स्यात् प्रतिष्ठा मनुजैः कृता।
जन्मलग्नोदये शस्ता धनधान्यकरी भवेत्॥

इति

तथा -

रविर्दशत्रिषट्संस्थो राहुस्त्रिदशसंस्थितः।
त्रिषट्स्थानगताः शस्ता मन्दाङ्गारककेतवः।

* लाभे एकादशे।

शुभाः क्रूराश्च पापाश्च सर्वे एकादशस्थिताः ।
यतीनां सर्वकालेषु लिङ्गस्यारोपणं शुभम् ।
शुक्लपक्षे स्थिरे लग्ने हरिः स्थाप्यो नरैः सदा ।
मातृभैरववाराह नरसिंहत्रिविक्रमाः ।
महिषासुरहन्त्र्याश्च स्थाप्या वै दक्षिणायने ॥

इति

## अथ वापीकूपतडागादिप्रतिष्ठाकालः ।

---

भविष्यपुराणे —

तस्मिन् सलिलसम्पूर्णे * कार्त्तिके च विशेषतः ।
तडागस्य विधिः कार्य्यः स्थिरनक्षत्रयोगतः ॥

इति

वह्निपुराणे —

वापीकूपतडागानां तस्मिन् काले विधिः स्मृतः ।
सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ।

---

* तस्मिन् तडागे इत्यर्थः सलिलसम्पूर्णे इत्यनेन हेमाद्र्यादौ पञ्चमास
प्रतिष्ठा न भवतीति प्रतीयते

कर्कटे पुत्रलाभाय सौख्यं तु मकरे भवेत्।
मीने यशोऽर्थलाभश्च कुम्भे च सुबहूदकम्।
वृषे च मिथुने वृश्चिके च जलं भवेत्।
पितृहमिथ कन्यायां तुलायां शोच याम्यती।
सिंहमेषधनुर्नाम्नं लक्षणाय (लक्षण) हिज यच्छति॥

इति

बहूदके वाप्यादौ तु कालनियमो नास्तीत्युक्तं

भविष्योत्तरे —

मुनयः केचिदिच्छन्ति ग्रतीते चोत्तरायणे।
न कालनियमस्तत्र प्रमाणमखिलं यतः॥
तस्मिन् सलिलसम्पूर्णं इति पूर्वोक्तेश्च।
तद्विधानं तु चतुर्थस्तबके द्रष्टव्यम्।



## अथ अङ्कुरार्पणाधिवासनकालः।

विष्णुधर्मोत्तरे —

सायं च प्रातर्होमान् रक्षासूत्रप्रबन्धनम्।
स्नापनं प्रोक्षणं चैव गर्भन्यासं तथैव च।

अधिवासा (नि) दिवसांषि मध्यरात्रे तु कारयेत्।
रात्रावेके विशेषेण सर्वदेवक्रियार्थकम्।
कुर्य्यात् सर्वं महासवं तथाऽशुभनिवृत्तये॥

इति पवित्रार्पणाधिवासनकालः।

अथ गर्भाधानादिषोडशकर्मकालास्तत्तत्प्रकरणे द्रष्टव्याः।
इह विस्तरभीत्या पुनर्नोच्यन्ते।

---

## अथ श्रीविष्णुपूजाकालः।

नारदीये —

प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत्।
यथा सन्ध्या तथा नित्या देवपूजा स्मृता बुधैः।
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशवम्।
मध्याह्ने चैव सायं च पुष्पाञ्जलिमपि क्षिपेत्।
मध्याह्ने वा विस्तरेण संक्षेपेणाथवा हरिम्।
सम्पूज्य भोजनं कुर्य्यादन्यथा नरकं व्रजेत्॥

इति

## अथ देवताविशेषे कालविशेषः ।



भविष्यपुराणे —

प्रतिपत् पावकी प्रोक्ता द्वितीया शमनस्य च ।
तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः ।
पञ्चमी समसप्तेस्तु षष्ठमूर्त्तेस्तथाष्टमी ।
नवमी योगिनीनां तु दशमी तु दिशामपि ।
एकादशी धनेशस्य द्वादशी चक्रधारिणः ।
त्रयोदशीत्वनङ्गस्य भूतेशस्य चतुर्द्दशी ।
पौर्णमासी प्रजेशस्य पितृणां दर्शउच्यते ॥

इति

## अथ नक्षत्रविशेषे पूजाविशेषः ।

देवीपुराणे —

अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः ।
कालनिर्णयदीपिकायाम् अश्विनी

अग्नी कालानलो चैव ब्रह्मेन्दुश्चापि शङ्करः ।
अदितिश्चापि पितरो भगार्य्यमदिवाकराः ।
त्वष्टाऽनिलेन्द्राग्निमित्रा इन्द्रो रक्षःपतिर्जलम् ।
विश्वे हरिर्वसु जलपश्चैकचरणाः क्रमात् ।
अहिर्बुध्न्यकपूषाख्या * अश्विन्यादिष्विमान् यजेत् ॥

इति

## अथ नामसङ्कीर्त्तनकालः ।

---

मार्कण्डेयपुराणे —

चक्रिणं हलिनं चैव शार्ङ्गिणं गदिनं तथा ।
मोक्षार्थी प्रजपेद्राजन् दिक्षु प्राच्यादिषु (स्मरेत) क्रमात् ।
व्यवहारेऽजितं चैव मत्स्यकूर्म्मौ जले स्मरेत् ।
आजिष्णुमग्निजभये संग्रामे त्वपराजितम् ।
नेत्रबाधे हृषीकेशमौषधे चाच्युतं जपेत् ।
तार्क्ष्यध्वजानुस्मरणादापदो मुच्यते नरः ।
ज्वरदुष्टे शिरोरोगे विषवीर्य्ये च दारुणे ।

---

* अहिर्बुध्न्य इत्यत्र अहिरबुध्न्येति कुत्रचित् निबन्धेषु पाठः ।

ग्रहनक्षत्रपीड़ासु देवबाधादिकेष्वपि ।
दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसङ्कटे ।
अन्धकारे तथा घोरे नारसिंहेति कीर्त्तयेत् ।
उत्थाने कीर्त्तयेद्विष्णुं प्रस्वापे माधवं नरः ।
भोजने चैव गोविन्दं सर्व्वत्र मधुसूदनम् ।
नारायणं सर्व्वकालं क्षुतप्रस्खलनादिषु ।
स्नाने दानेऽर्चने होमे प्रणिपाते प्रदक्षिणे ।
कीर्त्तयेद्वासुदेवं च अनुक्तेष्वपि माधवम् ।
आलोड्य सर्व्वशास्त्राणि विचार्य्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।
सर्व्वाणि नामानि हि तस्य राजन्
सर्व्वार्थसिद्ध्यै हि भवन्ति पुंसाम् ।
तथाप्यभीष्टं खलु दैवतानां
सर्व्वेषु कार्य्येषु जपन्तु भक्त्या ॥
अनेकेषु निबन्धेषु यावानर्थ उदीरितः ।
स सर्व्वः संगृहीतोऽत्र विद्वज्जनमुदे मया ।
अम्बा भागीरथी यस्य नागदेवः पिता सुधीः ।
तेनानन्तेन रचितः कालनिर्णयसंग्रहः ।
अनेन प्रीयतां देवो लक्ष्मीशः सर्व्वदा मम ।
यस्य प्रसादाद्ब्रह्माद्याः सिद्धिमीयन्ति सर्व्वदा ॥
अनेन ग्रन्थदीपेन स्वसन्देहात्मकं तमः ।

निरस्य कर्म्म कुर्वन्तु निर्भया शान्तिसंसदि ॥

इति श्रीमन्नागदेवभट्टात्मजेन श्रीमदनन्तभट्टेन विरचिते विधानपारिजाताख्यनिबन्धे कालनिर्णयविधानानि समाप्तानि ।

